



अनुमानजागदीश्यां

# सामान्यलक्षणाप्रकरणम्

श्रीकाशिकानन्दस्वामिकृतया

तत्त्वप्रदीपाख्य(काशिकानन्दी)व्याख्यया

सहितम्



प्रकाशनस्थानम्

श्रीदक्षिणामूर्त्तिमठ, मिश्रपोखरा, बनारस।

सं० २००६ वि०

श्रावणः

महामहोपाध्यायश्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामणौ

# सामान्यलक्षणाप्रकरणम्



महामहोपाध्यायश्रीरघुनाथशिरोमणिकृतया दीधित्या
श्रीमन्महामहोपाध्यायजगदीशतर्कालङ्कारकृतया जागदीशीतिविख्यातया
दीधितिप्रकाशाख्यव्याख्यया
श्रीमत्परमहंसपरिव्राजकाचार्यश्रीनृसिंहगिरिस्वामिपादशिष्यश्रीकाशिकानन्दस्वामि-
विरचितया जागदीशीव्याख्यात्मिकया काशिकानन्दीत्यपरपर्यायया
तत्त्वप्रदीपाभिधया विवृत्या मणिदीपिन्या परिशिष्टादिना च

समुद्भासितम्





राजकीयसंस्कृतमहाविद्यालयीयन्यायविभागप्रधानाध्यापकेन न्यायाचार्येण विद्वद्वर-
श्रीकेशवद्विवेदिना भूमिकादिभिरुपस्कृतम्



तच्च काश्यां
मिश्रपोखरास्थितश्रीदक्षिणामूर्त्तिमठाधीश्वरेण प्रकाशितम्



प्रथमसंस्करणम् १००० ]   सं० २००६ वि०   [ मूल्यम् ४॥)

## वक्तव्यं किंचिद् ।

—:❁:—

शिवदत्तचरणयुग्मं प्रणिपत्याभ्यन्तरीयतिमिरहरम् ।
सामान्यलक्षणायाः किमपि च वक्तव्यमाचक्षे ॥ १ ॥

परमशमकरं परमार्थतत्त्वचिन्तनरतानां, तुहिनगिरिसरूपं शैशवशेमुषीकाणां, मधुररससरालफलतुलितञ्च सूक्ष्मतमधिषणाजुषां, पदार्थतत्त्वबोधनसमर्थं न्यायशास्त्रमिति नैव तिरोहितं महितमतीनाम् । एतदधि च भाष्यवर्त्तिकाव्यतिरिक्ता अपि निबन्धाः सिन्धव इवातिगभीरा गिरय इव च दुरतिचराः कुण्ठितनयनैरिव बालैर्मलिनतया गगनवदनुकल्पिता अपि विदुषां मनोहरा विराजन्ते शतशः, येषां शिरोमणिरिव तमोऽपसरणिर्दिनमणिरिव च तत्त्वचिन्तामणिर्नाम निबन्धो नितरां विद्वन्मानसकमलमनवरतमुल्लासयति; यदुपरि दीधितिनाम्नी विद्वन्मूर्धमणेः रघुनाथतार्किकशिरोमणेर्विवृतिर्देदीप्यमाना वर्त्तते; यां कर्कशतर्कशिलाशयस्फोरणप्रवणाः जगदीशतर्कालङ्कारप्रमुखा विपश्चिदपश्चिमा व्याकुर्वत बहुविधं; यत्र चेदं सामान्यलक्षणाभिधमापाततः सरलमिव भासमानमपि दुरूहाशयतयाऽतिशयमतिपाटवभाजामपि मतिकुण्ठनकरणम्प्रकरणम् ।

### सामान्यलक्षणायाः स्वरूपम्—

सामान्यलक्षणा नाम सन्निकर्षविशेषश्चक्षुरादिभिर्घटादीनां प्रत्यक्षजनने संयोगादिरिव व्यापारतया कारणीभूतः । नयनादिकं हि कलशादिभिः सह संयोगादिरूपसन्निकर्षमवाप्नुवत्सम्मुखगतकलशादिकमध्यक्षयति, सामान्यलक्षणाभिधं सन्निकर्षमुपेत्य तु असम्मुखीनं कालान्तरीयदेशान्तरीयमपि कलशादिकमिति विशेषः । अत्र च प्राचीनास्तार्किकाश्चक्षुरादिसम्बद्धचाक्षुषप्रकारतापन्नकलशत्वादिकं सन्निकर्षः, स च समवायादिना सकलकलशादिषु वर्त्तमानः सकलकलशभासक इति ; नव्याश्च स्वप्रकारीभूतकलशत्वाद्याश्रयविषयतासंसर्गेण चक्षुरादिसम्बद्धविशेष्यककलशत्वादिप्रकारकचाक्षुषादिकं, स्वविषयीभूतकलशत्वाद्याश्रयविषयतासम्बन्धेन कलशत्वादिज्ञानमेव वा सन्निकर्षः, सोऽपि तथा सकलकलशगतस्तदीयभासक इति वदन्ति ।

### सामान्यलक्षणाऽभ्युपगमबीजम्—

सामान्यलक्षणाभ्युपगमे च बीजं बहुधा बहुभिरुपवर्णितम् । तत्र केचन महानसीयधूमधूमध्वजयोरवलोकनसमनन्तरं सामान्यतो निखिधूमानलयोर्व्याप्यव्यापकभावावधारणं भवतीति तदनुरोधेन सामान्यलक्षणा उपेया । अत एव शैलोपरि धूममवलोकमानमानवोऽनलं तस्मिन्ननुमिनोति । अन्यथा प्रावगतधूमपावकयोः पूर्वमननुभवात्तयोर्व्याप्यव्यापक-

भावानवगाहनेन तदनुमितिर्दु रुपपादा भवेद् । सामान्यलक्षणोपगमे च महानसीयधूम-धूमध्वजयोरवलोकनसमकालमेवाखिलधूमानलसमवगमादचलगतधूमपावकीयव्याप्यव्याप-कभावोऽपि सुगम इति नानुपपत्तिरित्यभिदधति । मणिकृतस्तु महानसीयधूमनिरीक्षणो-त्तरक्षणं क्वचन जायमानज्वलनानैकान्तिकभावकोटिकधूमधर्मिकविचिकित्सा लोकानामानु-भविकी न सामान्यलक्षणाप्रत्यासत्तिमृते उपपत्तिमुपेतुमर्हति । गृह्यमाणधूमे दहनसम्बन्धा-वगमाददृश्यमानधूमस्य चाज्ञानादुभयत्रापि संशयस्याऽसंभावितत्वादित्याचक्षते । एवं केचन घटादिसामान्याभावानुभवार्थम् ; अपरे तमसः साक्षात्कारार्थम् ; इतरे प्रागभावा-नुभवोपपत्त्यर्थम् ; अन्ये गोत्वत्वादेर्ज्ञानार्थं ; परे चानागतपाकसुखादिविषयकाभिलाषो-पपत्तये सामान्यलक्षणोपगन्तव्येति वदन्ति । तेषामाशयः—भूतले कलशो नास्तीत्यादिप्रत्ययं सकलकलशानां प्रतियोगितामवगाहते । यत्किंचित्कलशमात्रप्रतियोगित्वावगाहने कलश-वत्यपि यत्किंचित्कलशान्तरविरहसद्भावेन कलशो नास्तीति प्रत्ययोदयापत्तेः । एवं यावत्ते-जोऽभावसमुदायस्वरूपतिमिरसाक्षात्कारो यावत्तेजोज्ञानं विना न संभवितुमर्हति । एवं प्राग-भावानुभवो घटो भविष्यतीत्याद्याकारको न भाविघटबोधमन्तरोपपद्यते । तथा गोत्वत्वं गवेतरा-वृत्तित्वसहितसकलगोवृत्तित्वात्मकं निखिलगोज्ञानं विना कथं स्यात् । अनागतपाकसुखादि-विषयकाभिलाषोऽपि नाऽनागततद्विषयकज्ञानेन विना भवितुमर्ह इति सर्वत्राऽसन्निकृष्टकल-शादिज्ञानस्योपायान्तरमन्तरा दुर्वचतया सामान्यलक्षणा स्वीकरणीयेति ।

## सामान्यलक्षणाविषये दीधितिकृतां मतम्—

दीधितिकृतस्तु सामान्यलक्षणायाः सन्निकर्षतां नोररीकृतवन्तः । तथा हि वह्निव्याप्य-तायाः सकलधूमगताया एकतया महानसीयधूमेऽवलोकितव्याप्यतैव पर्वतगतधूमेऽप्यव-स्थितेति न तदवगमनाय सामान्यलक्षणाया उपयोगः । नापि सामान्याभावभानाय । सामान्यारूपेण यत्किंचित्प्रतियोगिनो ज्ञानादेव तत्संभवात् । यत्रैकोऽपि कलशो भूतले तत्राखण्डसामान्याभावाऽभावारूढत्वाज्ञानस्य सामान्याभावभानप्रतिरोधित्वाच्च न कलश-सामान्याभावानुभवापत्तिः । अन्धकारोऽपि न तेजोऽभावसमुदायरूपोऽपि तु महाप्रभा-सामान्याभावादिस्वरूप एव । स च सामान्याभावाभिहितसरणिमेवानुसरति । प्रागभावस्तु मानाभावान्नाभ्युपगम्यत एव । गोत्वत्वं तु गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकतासहित-गवेतराऽसमवेतत्वाद्यात्मकमेव तत्र तत्र व्याप्यतावच्छेदकादिकं संभवति, न तु निखिल-गोघटितम् । सिद्धे एव पाकसुखादौ पाकत्वसुखत्वादिना इच्छा । कथमन्यथाऽनधिगत-रमणीमरणस्य स्वीयरमणीविलोकनाभिलाषा । अनागततदवलोकनाऽप्रसिद्ध्या सिद्धे एव तदवलोकनेऽभिलाषाया अनन्यगतिकतयोपेतव्यत्वात् । वस्तुतश्चायं कालः सुखोत्पादकालीन-ध्वंसप्रतियोगी ईदृशकालत्वादित्याद्यनुमानादित एव भाविसुखादिज्ञानं सुवचम् । अनुमितौ पक्षधर्मताबलादनागतादिविषयस्यापि भानोपगमाद् । धूमधर्मिकवह्निव्यभिचारसंशयोपपत्तये मणिकारादयः सामान्यलक्षणाया अपेक्षेति यदाचक्षते, ततः कस्यारिचदापादयितुमशक्यतया तदपि नादरणीयमेव । एतद्धूमत्वेन धूमे वह्निव्याप्यताऽवगमे तस्य धूमत्वेन धूमे वह्नि-व्यभिचारसंशयाऽविरोधित्वात् । धूमत्वेन धूमे वह्निव्याप्यताग्रहणे चासिद्ध एव संशय इति ।

## सामान्यलक्षणायां तत्त्वप्रदीप(काशिकानन्दी)कृन्मतम्

तत्त्वप्रदीपकारास्तु चिन्तामणिकृदभिहितां संशयानुपपत्तिमवलम्ब्यैव सामान्यलक्षणां साधयन्ति । तथा हि धूमान्तरस्यात्यन्तमज्ञाने एतत्त्वमहानसीयत्वादौ व्यावर्त्तकत्वज्ञानाऽसंभवाद् व्यावर्त्तकत्वेनाज्ञायमानधर्मस्य चोपलक्षणतयैव भानाद् धूमत्वावच्छेदेनैव सर्वत्र-व्याप्तिज्ञानात् संशयो दुरुपपाद एव । कथमन्यथा धूमाः प्रमेया इति ज्ञानवतः प्रमेयधूमो वह्निव्याप्य इति निश्चयोत्तरं धूमो वह्निव्यभिचारी न वेति संशयो नोदेति । न च व्यापकत्वेन गृहीतधर्मस्यैवोपलक्षणतया मानात्प्रमेयत्वादेस्तथाभानं न तु महानसीयत्वादेः, महानसीयत्वादौ धूमत्वव्यापकत्वानवगमादिति युक्तम् । महानसीयत्वादौ धूमत्वव्यापकता-ग्रहस्यैव दुर्वारत्वात् । व्यभिचाराऽग्रहसहचारग्रहयोस्तत्र सत्त्वात् । सामान्यलक्षणावादिनां तु धूमत्वेनोपस्थितापूर्वधूमेषु महानसीयत्वाभावसंशयादितो महानसीयत्वे धूमत्वव्यभिचार-संशयाद्युदयान्न धूमत्वव्यापकताग्रहसंभव इति नोपलक्षणतया महानसीयत्वादिभानमिति संशय उपपद्यत इति । अनुमानादिना सर्वत्रापूर्वधूमाद्युपस्थितौ मानाभाव इत्येतदीयाशयः ।

### प्रासङ्गिकम्—

प्रसङ्गादत्र ज्ञानलक्षणाप्रत्यासत्तिरपि निरूपिता । सा च सुरभि चन्दनमित्यादिसौरभत्वादिप्रकारकचन्दनादिविशेष्यकचाक्षुषे चक्षुरसन्निकृष्टसौरभत्वादिभानप्रयोजिका । न हि सौरभत्वभानं सामान्यलक्षणया, सौरभत्वत्वादिज्ञानात्मकतद्विरहादिति । एवं प्रसङ्गात् प्रागभावनिरासादिकमपि कृतमिति कृतमिहाधिकविस्तरेण ग्रन्थत एवाधिकस्यावगन्तव्यत्वादिति ।

### ग्रन्थकृतां संक्षिप्तपरिचयः—

महामहोपाध्यायश्रीमद्गङ्गेशोपाध्याया मिथिलादेशीयदरभङ्गामण्डलान्तरङ्गकोरान-नामग्रामं द्वादशशताब्द्याश्चरमभागे त्रयोदशशताब्दीयादिमभागे वा स्वीयजनुषाऽभूषयन्निति तीतिहासगवेषणचणानां संवादः । न्यायवैशेषिकशास्त्रमहार्णवकर्णधारैरेभिर्भाष्यवार्त्तिकादि-निबन्धसिन्धुनिर्मंथनसमुद्धृतेयं भावुकमानससदनतमोपहरणी तत्त्वचिन्तामणिर्यदीयाः शतकल्पा व्याख्या भूमण्डलविख्याता अद्यावधि आख्यायन्ते ।

ईस्वीय १४७७ तमेऽब्दे वङ्गदेशीयनदियाशान्तिपुरं स्वीयजन्मनाऽलंकरिष्णूनां पण्डितकुलमण्डनायितानां महामहोपाध्यायश्रीरघुनाथतार्किकशिरोमणीनां पुरतस्तदानीं नापरो विद्वत्प्रवरपदवीधरो बभूवेत्यैतिह्यविदां प्रवादः । एतावदेवालं तदीयवैदुष्यप्रचयपरिचयायेति किमिहाधिकया वाचा । बौद्धाधिकारे, किरणावलीप्रकाशे, न्यायलीलावतीप्रकाशे, खण्डनखण्डखाद्ये चैभिर्दीधितिनाम्नी विवृतिरकारि । पदार्थतत्त्वनिरूपणादयः स्वतन्त्र-निबन्धाश्च निरमीयन्त । एतेषां लेखनशैली अतीव संक्षिप्तेति सर्वेऽप्येतदीयग्रन्था अतिदुरूहतामापन्नाः । यदुक्तं प्रामाण्यवादारम्भादौ गदाधरभट्टाचार्यैः—"संक्षिप्तोक्त्यतिदक्ष-दीधितिकृतः" इत्यादि "अतिदुर्बोधगिरः शिरोमणे" रित्यादि च ।

इमां चातिदुरूहाशयां दीधितिं दीधितिप्रकाशाख्यया व्याख्यया जागदीशीतिविख्यातयोपबृंहु: श्रीमन्महामहोपाध्यायजगदीशतर्कालङ्काराः । एतेऽपि वङ्गदेशे लब्धजन्मानः १६३५ परिमिते इसवीयाब्दे दीधितिं व्याकुर्षतेत्यैतिहासिकानाम्मतम् । चिन्तामणिदीधितिप्रकाशः ( जागदीशी ) चिन्तामणिमयूखः, न्यायादर्शः, शब्दशक्तिप्रकाशिका, तर्कामृतम्, पदार्थतत्त्वनिरूपणम् ( द्रव्यभाष्यटीका ) न्यायलीलावतीदीधितिव्याख्या चैभिर्विहिता ।

एतेषामपि लेखनं प्रायशो दीधितिकाराणामिवातिसंक्षिप्तमपि अतिगभीरार्थमिति न नव्यन्यायार्णवनिमज्जनरतविद्वज्जनतिरोहितम् । परमद्यावधि तदीयचिन्तामणिदीधितिविवृतिग्रन्थग्रन्थिविभेदनकरी नाकारि काचन विस्तृता विवृतिः केनापि सामस्त्येन येन विदुषामपि मतिस्खलनमिव स्थलविशेषेषु समुपलभ्यते यत्रापि दार्शनिकविचारपरिपूरिते सामान्यलक्षणाभिधे प्रकृतग्रन्थेऽधिकतरम् ।

तमिमं सामान्यलक्षणाग्रन्थं स्थलविशेषग्रन्थिकुण्ठीकृतमेधाविमतिपाटवमवकलय्य भावुककुलमौलिमण्डनायितेन श्रीशारदासमुपासनाऽऽसादितशेमुषीसमुपार्जितसर्वतन्त्रस्वातन्त्र्येण स्वयमेव नव्यन्यायशास्त्रपर्यालोडनपरिप्राप्तपाण्डित्यप्रकर्षेण परमहंसपरिव्राजकश्रीकाशिकानन्दस्वामिमहानुभावेन तत्त्वप्रदीपापरपर्याया काशिकानन्दीत्यन्वर्थनाम्नी व्याख्या प्रणीता, या भवतां पुरस्तादियमुपतिष्ठते । एतेन श्रीस्वामिमहानुभावेन न केवलं सामान्यलक्षणाग्रन्थस्यैव किन्तु समस्तानुमानगादाधरीग्रन्थस्यैव सामान्यलक्षणाव्याख्येव विविधवैदुष्यबोधकनवनवायमानानल्पकल्पनां जुषमाणा व्याख्या विहिता वर्त्तते; तथा प्रामाण्यवादशक्तिवाद-व्युत्पत्तिवादानां, जागदीश्यां व्याप्त्यनुगमकेवलान्वयिप्रकरणयोश्च विशदा विद्वन्मनोरञ्जनी विवृतिर्विहिताऽस्ति । एवं वेदान्ते प्राधान्यमुपगते चित्सुखीग्रन्थेऽपि चेतश्चमत्कृतिकारिणी इदानीं टिप्पणीरूपा कालान्तरे चैधिष्यमाणा विवरणी विरचिता वरीवर्ति । सामग्रीविरहात्सांप्रतमप्रकाशिता अप्येताः मन्ये श्रीभगवद्विश्वेश्वरकृपाशक्तिमासाद्य सत्यवसरे प्राकाश्यमुपगता अन्तेवासिनिवहमुपकरिष्यन्ति विद्वन्मानससरोजं समुल्लासयिष्यन्ति चेति—

वाराणसी
श्रावणी
संवत् २००९

विदुषामनुचरः
**केशवद्विवेदी**
राजकीयसंस्कृतमहाविद्यालयीयन्यायप्रधानाध्यापकः

# विनयप्रकाशनम्



अजीवयद्दुष्कलिदावपावकोच्छ्रयच्छिखामूर्च्छितशाखमाश्रयम् ।
जनस्य तापाकुलितस्य विश्रमा-ऽ(ऽ)गमं यदीया विमला सरस्वती ॥१॥

प्रधावते दुस्तरपङ्कपङ्किलं मनःशिलाखण्डमखण्डवाहिनी ।
अशेषतापं शमयत्युपेयुषां शुभा यदीया विमला सरस्वती ॥२॥

नयत्यजस्रं परिशुद्धजीवनं धृतात्मनां क्लेशविनाशनक्षमम् ।
निरर्गलैतिर्विषयेषु दुर्गमेष्वसौ यदीया विमला सरस्वती ॥३॥

समश्नुवानं जगतीतलेऽखिले स्वसौरभेणैव सतां सचेतसाम् ।
अलौकिकीं सन्तनुते निरन्तरं मुदं यदीयं परमं यशःसुमम् ॥४॥

यदीयकारुण्यलवादवाप्तसन्मतिप्रकर्षा जनहर्षभूमयः ।
सुधीवराः शास्त्रधुरंधरा धराभुजान्तरेऽस्मिञ्शतशश्चकासति ॥५॥

अन्तेवसन्तो निवसन्ति धन्याः श्रीदक्षिणामूर्त्तिमठे यदीये ।
गीर्वाणगोरक्षणपुण्यभाजस्तपोधनाः यत्करुणाविशेषात् ॥६॥

विजयन्तेऽनन्तश्रीभूषितचरणा नृसिंहयतिपादाः ।
श्रोत्रिय-सन्निष्ठ-परम—हंसपरिव्राजकाचार्याः ॥७॥

येषामेव सतीर्थ्या विद्यासंरक्षणे परमदक्षाः ।
विजयन्ते श्रीमन्तश्चात्मानन्दाभिधा यमिनः ॥८॥

येषामनुज्ञयेयं मुद्रणमापादिता कृतिः कृतिनाम् ।
प्रकटयति विनयभावं तेषु कमपि काशिकानन्दः ॥९॥




येषामपारकरुणापारावाराणां संसारदावानलशमनैकनिपुणवाणीसुधासार-
जलधराणां कारुण्यपीयूषकणाभिषेचनपरिपल्लविता विद्यावल्ली
येयमद्य प्रफुल्लितकुसुमा समुन्नमति यत्किंचिन्मात्रमेवापि;
तेषां श्रोत्रियब्रह्मनिष्ठानां श्रीमत्परमहंसपरिव्रा-
जकाचार्यानन्तश्रीविभूषितमहामण्डलेश्वर-
श्रीनृसिंहगिरिस्वामिपूज्यपादानां
करपल्लवयोरिदं तदीयं प्रथमकुसुमं
सादरमुपहरति
भवतां चरणरजोनुचारी
काशिकानन्दः

पूज्यपादश्रोत्रियब्रह्मनिष्ठश्रीमत्परमहंसपरिव्राजकाचार्य-

महामण्डलेश्वरश्री १००८नृसिंहगिरिस्वामिपादाः



अद्वैतं दुरितार्दने द्वयमपि प्रत्यन्नतो यत्पदं सत्यश्चापि विमोहचौर्यचतुरा वाचो यदीयास्तथा ।
दत्ताशेषजनाभयोऽपि निरतः संसारनिःशेषणे यः सोयं यतिभूपतिर्विजयते श्रीमन्नृसिंहाभिधः ॥१॥

भवद्वितीर्णैर्भवदोषमोषै— रनुग्रहैरेष यदग्रहीषम् ।
तदर्पयेऽहं हृतदर्पमेतत्कृतिस्वरूपं भवतां कराब्जे ॥२॥

इयं भवन्तं हि भवत्कृपेङ्गिताऽऽहितेहते नन्दयितुं यदद्य तत् ।
असंशयं शैवलिनी समीहते महाम्बुधिं नन्दयितुं तदम्बुजा ॥३॥

तथापि कारुण्यसरस्वतोऽद— स्सरस्वतीयार्पणकैतवेन ।
करोमि किञ्चिज्जगतो हृदञ्चि क्षमाधरः कौतुकमभ्युदञ्चि ॥४॥




## मौलं शुद्धिपत्रम्

—:०✽०:—

| अशुद्धं | शुद्धं | पृ० | प० | अशुद्धं | शुद्धं | पृ० | प० |
|---|---|---|---|---|---|---|---|
| ाषण | विशेषण | १३ | ४ | तर्कस्य | तर्कितस्य | २०३ | १० |
| त्व | न्यवत्त्व | २६ | ८ | वा | वा | २०६ | ३ |
| । | सत्त्व | ३२ | ६ | पक्षः | पक्षेः | ,, | ६ |
| ा | सत्त्या | ,, | ११ | नङ्यति | नङ्क्ष्यति | २१२ | ८ |
|  | वत्त्व | ३३ | ६ | गिकाभाव | गिकमभाव | २१५ | २ |
| ा | सत्त्वा | ३६ | ६ | त्यभा | स्यभा | २२० | १० |
| क्तिघ | व्यक्तिर्घ | ३८ | २ | भावा | भावा | २२५ | ७ |
|  | घंट | ४३ | ४ | विन | विन | २२८ | १० |
|  | ज्ञान | ५५ | ३ | प्रतिकार | प्रतीकार | २३९ | ९ |
|  | वत्त्वे | ५६ | ५ | वम्ध | बन्ध | २३२ | ८ |
|  | वत्त्व | ६० | २ | स्वमेव | स्वयमेव | २३५ | ३ |
|  | ,, | ,, | ८ | क्षण | क्षणवृत्ति | २३७ | ७ |
|  | सत्त्वे | ,, | ७ | द्वितीय | द्वितीयादि | २४३ | ५ |
| ाय | सामान्य | ६६ | ३ | क्षणिक | क्षणिकस्य | २४६ | ४ |
| म् | तत्त्वम् | ९६ | २ | लक्षण | क्षणलक्षण | २५७ | १० |
| द्रय | येन्द्रिय | १२३ | ३ | पूर्वत्वोक्तौ | पूर्वत्वनिरुक्तौ | २५८ | ३ |
|  | दण्ड | १२६ | ११ | श्वदव | श्यदव | २६१ | ५ |
|  | घट | १३१ | १० | रणोति | रणोत्विति | २६३ | ४ |
|  | स्यात् | १३४ | १ | सत्त्वे | सत्त्वेच | २६३ | ६ |
| यात | जानीयात् | १३५ | २ | पटो | तत्पटो | २६९ | २ |
|  | सर्वं | १५४ | ४ | लघी | लघी | २७७ | ४ |
|  | तत्तत्पुरु | १६७ | ४ | दानीं | दानीमपि | २८२ | ७ |
|  | ,, | १७८ | २ | यिनः | यिनस्तन्निष्ठैकत्वस्य वा उत्पत्तिदशायामपि तत्तन्निस्त्वाद्युत्पत्तिप्रसङ्गेन चरमस्य समवायिनः | २८३ | ८ |
|  | त्वाद्यव | ,, | ३ |  |  |  |  |
|  | भावा | १८५ | ५ |  |  |  |  |
|  | तायां | १८६ | ८ |  |  |  |  |
| ा | विशेष्य | १९० | २ | त्वस्य | त्वस्यैव | २८४ | ३ |
| व | प्रागभाव | २०० | २ | पुमरि | पुनरि | २८८ | २ |

| अशुद्धं | शुद्धं | पृ० | पं० |
|---|---|---|---|
| काय | कार्यं | २८८ | ४ |
| संयो | घटीयसंयो | २८९ | ६ |
| कस्प्यते | कल्प्यते | २९२ | २ |
| षणा | षाणा | २९४ | ५ |

| अशुद्धं | शुद्धं | पृ० |
|---|---|---|
| भावती | भवती | ३०७ |
| मात्रस्य | कारतामात्रस्य | ३१३ |
| घर्मि | धर्मि | ३२२ |
| वत | वर्त्तं | ३३५ |

---

## काशिकानन्द्यामवश्यशोधनीयाः केचन पाठाः

| अशुद्धं | शुद्धं | पृ० | पं० |
|---|---|---|---|
| करणं | करणं च | ३ | ३ |
| त्वात् | त्वात्, अग्निमूलस्वार-स्याच्च | ३ | ५ |
| अभ्रान्तेत्यादिगोलकान्तर्गतपाठः संपातायातः | | ३ | ११ |
| सिद्धान्तैः | सिद्धान्ते | ३ | १२ |
| रणायाः | रणयाः | ७ | ५ |
| न्ताभाव | न्ताभावप्रतियोगितानवच्छेदक-साध्यतावच्छेदक | ३१ | १३ |
| चतुर्थं | चतुर्थादि | ४५ | ३१ |
| क्षणाधिक | कतिपयक्षणाधिक | " | ३३ |
| केचित्त्वित्यादि ( पृ. ६७. १७ ) असंभवादि-त्यन्तः ( पृ. ६७. २३ ) पाठः सम्पातायातः। | | | |
| न्यायाः | भिन्नायाः | ७७ | ३० |

| अशुद्धं | शुद्धं | पृ० |
|---|---|---|
| चार | चारज्ञान | १४६ |
| मेव | एव | १५७ |
| वर्त्तं | एकत्र वर्त्तं | १८५ |
| प्रयोजक | प्रतियोगिक | १९२ |
| प्रतीतिर्न | प्रतीतिर्न स्याद्, अन पाणामभावत्वकल्पने गौरवं च | २१ |
| धर्मं | धर्मः, एवमभावाधिकरणकाम धिकरणस्वरूपतायामिव गौ किंचित्करम् | २१८ |
| क्षणत्वमित्यादि आवश्यकत्वाच्चे-त्यन्तं सम्पातपतितम् | | २४७ |
| ध्वंसोऽपि | ध्वंसस्यापि | २४९ |
| भावत्वं | भाववत्त्वं | २५० |
| करण | करणाधिकरण | २५६ |
| किन्तु प्रत्यासत्ति | किन्तु परमत | ३२१ |

---

ॐ

श्रीगणाधिपतये नमः

# अनुमानजागदीश्याम्

# सामान्यलक्षणाप्रकरणम्

काशिकानन्दी(तत्त्वप्रदीप)युतम् ।



❀ सामान्यलक्षणाचिन्तामणिः ❀

## व्याप्तिग्रहश्च सामान्यलक्षणाप्र—

---

❀ सामान्यलक्षणादीधितिः ❀

प्रसङ्गात् सामान्यलक्षणां व्यवस्थापयितुमाह व्याप्तिग्रहश्चेति ।

❀ सामान्यलक्षणाजागदीशी ❀

व्यवस्थापयितुमिति । अस्य सन्निकर्षत्वेनेत्यादिः ।

❀ सामान्यलक्षणाकाशिकानन्दी ❀

पितरं फणिकन्धरं विलोक्य प्रसुवोऽहिं कुतुकाद् गले चिकीर्षुम् ।
पृथुकं नतशुण्डमण्डिताम्बा—ऽऽनतकण्ठं गजतुण्डमीडयेतम् ॥१॥

अर्थान् समूढमुकुराभिहताहणीव, सर्वान् विभासयति संतमसप्रविष्टान् ।
गुह्यांश्च या गुरुवचोभिहता सती सा सारस्वती हृदि सदा सुषमा ममास्ताम् ॥२॥

यदीयवाङ्निर्झरिणी समुज्झय-त्युपेतचेतःकलुषाण्यशेषतः ।
तमः समुद्धूय ददातु सद्धियं नृसिंहसंज्ञो यतिवासवः स वः ॥३॥

प्रणतगुरुपदद्वन्द्वः यतिकुलमुकुलोऽथ काशिकानन्दः ।
गहनन्यायवनसृतिं तनुते सामान्यलक्षणाविवृतिम् ॥४॥

व्याप्त्यनुगमसमनन्तरं सामान्यलक्षणानिरूपणे का संगतिरिति शिष्यविविदिषामुदेष्यन्तीं परिजिहीर्षुस्तत्संगतिं प्रदर्शयन्मूलकारचिकीर्षितमाह दीधितौ प्रसङ्गादित्यादि । सामान्यलक्षणाप्रत्यासत्त्या सर्वोपसंहारादित्यनेन स्मृतायास्तस्याः संप्रत्युपेक्षानर्हत्वदित्यर्थः । ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः । सामान्यलक्षणामिति । सन्निकर्षत्वेनेति शेषः । द्वितीयार्थविशेष्यत्वान्वयिप्रकारत्वं धात्वर्थैकदेशज्ञानान्वयि प्रकारित्वं वा तृतीयार्थः । द्वितीयपक्षे सामान्यलक्षणाविशेष्यकत्वावच्छेदेन सन्निकर्षत्वप्रकारत्वान्वयो बोध्यः । व्यवस्थापयितुमिति । व्यवस्थापनं च प्रकृतधात्वर्थतावच्छेदकज्ञानविषयत्वेन वक्तृतात्पर्य

❀ मणिदीपिनी ❀

नमः कस्मैचिदस्मै स्तान्निरस्तमहिषौजसे ।
आनादिस्यूतचेतस्यतमोवभ्रासितेजसे ॥१॥

# त्यासत्त्या सकलधूमादिविषयकः ।

✽ काशिकानन्दी ✽

विषयसमानविषयकज्ञानविरोधिज्ञानधर्मिकाऽप्रामाण्यग्राहकव्यापारपूर्वकज्ञानानुकूलव्यापारः सामानविषयकत्वान्तमुपलक्षणविषयानुगमकम् । इच्छाप्रयोज्यत्वं तुमुनर्थः । आहेत्य ब्रूञ्धातोर्ज्ञानानुकूलव्यापारोऽर्थः । तथा च प्रसङ्गज्ञानजन्यजिज्ञासाधीनः, सन्निकर्षत्व निष्ठप्रकारतानिरूपितसामान्यलक्षणानिष्ठविशेष्यताकज्ञानविरोधिज्ञानधर्मिकाऽप्रामाण्यग्राहक व्यापारपूर्वको यः सन्निकर्षत्वनिष्ठप्रकारतानिरूपितसामान्यलक्षणानिष्ठविशेष्यताकज्ञाना कूलव्यापारः तद्विषयकेच्छाप्रयोज्यज्ञानानुकूलव्याप्तिग्रहश्चेत्यादिग्रन्थाभिन्नव्यापारानुकूल वर्त्तमानकालीनकृतिमान् मूलकार इति बोधः ।

यद्वा ज्ञानविशिष्टव्यापारो व्यवस्थापनम् । वैशिष्ट्यं च स्वविरोधिज्ञानधर्मिका प्रामाण्यग्राहकव्यापारपूर्वकत्व-स्वजनकत्वोभयसम्बन्धेन । धात्वर्थतावच्छेदकज्ञाने सन्निक स्वनिष्ठप्रकारतानिरूपितसामान्यलक्षणानिष्ठविशेष्यताकत्वस्याऽन्वयादेव सन्निकर्षत्वनि प्रकारतानिरूपितसामान्यलक्षणानिष्ठविशेष्यताकज्ञानविरोधिज्ञानधर्मिकाऽप्रामाण्यग्राहकव्या पारपूर्वकत्वसन्निकर्षत्वनिष्ठप्रकारतानिरूपितसामान्यलक्षणानिष्ठविशेष्यताकज्ञानजनकत्वयो र्व्यापारे लाभसंभवात् । एवं च सन्निकर्षत्वादीनां द्विधा भानमपि न कर्त्तव्यम् । अन्य यथोक्तमिति बोध्यम् ।

केचित्तु व्यवस्थापनं नाम प्रमाणत्त्वेन निरूपणम् । प्रकृतधात्वर्थतावच्छेदकप्रम निरूपितत्त्वेन वक्तृतात्पर्यविषयत्त्वोपलक्षितविषयताक प्रमा करणोपन्यासपूर्वकनिरूपणमि यावदिति वदन्ति ।

ननु सामान्यलक्षणापदं सामान्यस्वरूपार्थकं सामान्यज्ञानार्थकं वेत्यग्रे वक्ष्यति । सामान्यस्वरूपस्य तज्ज्ञानस्य च मीमांसकादिभिरप्यभ्युपगमाद् व्यर्थोऽयं तद्व्यवस्थाप यास इत्याशङ्कयाह जागदीश्यां—सन्निकर्षत्त्वेनेत्यादिरिति । तथा च सामान्य क्षणायाः सन्निकर्षत्त्वमेव व्यवस्थापनीयमित्यदोष इति भावः ।

✽ मणिदीपिनी ✽

सामान्यलक्षणाप्रत्यासत्त्या = सामान्यलक्षणाख्यसन्निकर्षेण : सकलधूमा विषयकः = सकलधूमादिनिष्ठविषयतानिरूपकः । प्रत्यासत्त्येति तृतीयार्थप्रयोज्यत्वस्य धूमादिनिष्ठविषयतायामन्वयः । तथा च सामान्यलक्षणाख्याऽलौकिकसन्निकर्षप्रयोज्य सकलधूमादिनिष्ठविषयताको व्याप्तिग्रह इत्यर्थः । न च धूमादिनिष्ठमुख्यविशे तायाः सामान्यलक्षणाप्रयोज्यत्वकल्पे व्याप्तिग्रहनिरूपितधूमादिनिष्ठप्रकारताद्यात्म विशेष्यतायाः कथं सामान्यलक्षणाप्रयोज्यत्वमिति वाच्यम्, तत्कल्पेऽपि ज्ञानलक्षण सम्पादनद्वारा सामान्यलक्षणायाः प्रयोजकत्वसम्भवादिति भावः ।

अत्रेदं बोध्यम् । व्याप्तिग्रहश्चेत्यादिवदन्तीत्यन्तग्रन्थः धूमादिनिष्ठव ह्व्या व्याप्तीनां नानात्वमित्यभिप्रायेण व्याप्तेरैक्ये । सामान्यलक्षणाया व्याप्तिग्रहार्थ

❀ काशिकानन्दी ❀

समानाधिकरणयोरेव वह्निधूमाद्योर्व्याप्तिरित्यन्ये मन्यन्ते । धूमादिसमानाधिकरणाऽन्योन्याभावप्रतियोगितानवच्छेदकवह्न्यादिसामानाधिकरण्यं व्याप्तिरित्यभिप्रायेण व्याप्तिग्रहश्चेत्यादिमूलम् । "उक्तव्याप्तिप्रकारेष्वन्योन्याभावगर्भैवव्याप्ति" रित्येतदनन्तरोत्थितत्वात् । अत्र च सामान्यलक्षणाविरहे महानसीयवह्निधूमादिमात्रं पश्यतो महानसीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकमहानसीयवह्निसामानाधिकरण्यस्यैव महानसीयधूमे ग्रहसंभवेन पश्चात् पर्वते धूमदर्शनेऽपि गृहीतव्याप्तेः स्मरणेऽपि च तस्यानुमितिर्न स्यात् । पर्वतीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकपर्वतीयवह्निसामानाधिकरण्यस्य प्रागग्रहात् । गृहीतस्य च महानसीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकमहानसीयवह्निसामानाधिकरण्यस्य पर्वतीयधूमे विरहेण अभ्रान्तपुरुषस्य तद्विशिष्टवैशिष्ट्यावगाहिज्ञानाऽसंभवात् । ( अभ्रान्तपुरुषस्य तत्रानुमित्युत्पादानुरोधेन व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयातिरिक्तस्यैव वाऽनुमितिहेतुत्वं सिद्ध्येत् ) । एवं च व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयस्यानुमितिहेतुत्वमिति सिद्धान्तेः पर्वतीयधूमगतव्याप्तिग्रहार्थं सामान्यलक्षणाऽङ्गीकरणीया । तदङ्गीकारे हि महानसीयधूमे व्याप्तिग्रहकाले एव पर्वतीयधूमगतव्याप्तेरपि ग्रहणेन पर्वतीयधूमदर्शने सति तत्स्मरणपूर्वकं पर्वते व्याप्तिविशिष्टवैशिष्ट्यावगाहिग्रहः संभवतीत्यनुमितिरुपपद्यते व्याप्तिविशिष्टवैशिष्ट्यावगाहिग्रहस्यानुमितिहेतुत्वं च । तथाहि—महानसे धूमदर्शनोत्तरं धूमसमानाधिकरणान्योन्याभावप्रतियोगितान-

❀ मणिदीपिनी ❀

पयोगस्य समानाधिकरणयोरेव व्याप्तिरिति दीधितिं व्याचक्षाणेन जगदीशेन स्वयमभिधानात् । एवं च सामान्यलक्षणाया अनुपगमे पर्वतीयधूमवह्न्यादेरग्रहेण पर्वतीयधूमनिष्ठस्य पर्वतीयवह्निसामानाधिकरण्यस्याग्रहेण परामर्शायोगादनुमितिर्न स्यादिति वदन्तीत्यन्तग्रन्थार्थः । व्याप्तेरैक्याद् महानसे गृहीताया व्याप्तेः पर्वतीयधूमेऽपि सत्वात्परामर्शानुमिती सुवचे इति न सामान्यलक्षणोपयोग इति "तदपरे न मन्यन्त" इत्यादिग्रन्थार्थः । व्याख्यास्यति च दीधितिकारः—धूमेत्याद्यारभ्य "एकैव च सा सर्वं धूमसाधारणीतिभाव" इति । तद्ग्रन्थस्यैव एका व्याप्तिरित्यर्थं इति आशयवान् जगदीशोऽपि वक्ष्यति—"भावार्थमाह—धूमेत्यादीति ।" अत्र चार्थपदोपादानाद् एका व्याप्तिरितिमतमवलम्ब्य "तदपरेनमन्यन्त" इत्यादिग्रन्थोऽवश्यंवक्तव्य-इति दीधित्याशय इति कथनमयुक्तमेव । एवं च तस्य ग्रन्थस्य एका व्याप्तिरित्येतत्परत्वेऽर्थात्पूर्वग्रन्थस्य नानाव्याप्त्यभिप्रायेण प्रवृत्तत्वं लभ्यते । नचाऽसमानाधिकरणयोरपि व्याप्तिपक्षे महानसीयवह्निव्याप्तिः धूमे व्याप्त्यैक्यं विना न संभवति महानसीयवह्निसामामानाधिकरण्यस्य पर्वतीयधूमे विरहादिति दीधितिकारमते कथं व्याप्तिनानात्वाभिप्रायेण ग्रन्थसंगतिरिति वाच्यम् । दीधितिकारमतेऽपि वदन्तीत्यन्तग्रन्थः समानाधिकरणयोरेव व्याप्तिरित्यभिप्रायेणैव । अत एव केचित्तु इति अस्वरसकथनावसरे "किंचास्तु सामानाधिकरणयोरेवव्याप्तिरिति" स्वीकरिष्यति । दीधितिका-

## ❀ काशिकानन्दी ❀

वच्छेदकवह्निसामानाधिकरण्यवान् धूम इत्याकारिका धूमत्वेन महानसीयधूमं वह्नित्वादिना महानसीयवह्न्यादिकं चाऽवगाहमाना व्याप्तिधीरुत्पजायते। ततश्च धूमत्वसामान्यलक्षणया निखिलतादृशसामानाधिकरण्यानां ग्रहो भवति। सखण्डे चाऽखण्डमेव परम्परया सम्बद्धं प्रत्यासत्तिरिति वक्ष्यमाणतया स्वाश्रयसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसामानाधिकरण्यत्वसम्बन्धेन धूमत्वस्य प्रत्यासत्तित्वात्। निरुक्तसामानाधिकरण्यज्ञानस्य प्रत्यासत्तित्वेऽपि परम्परायाः कारणतावच्छेदकत्वमग्रे स्फुटीभविष्यति। अत्र चोक्तपरम्परासम्बन्धेन धूमत्वादिसामान्यलक्षणया निखिलतादृशसामानाधिकरण्यानां प्रत्यक्षकालेऽसन्निकृष्टधूमादीनां तत्र भानार्थं धूमत्वेन निखिलधूमानामधिकरणत्वेन निखिलाधिकरणानां वृत्तित्वत्वभेदत्वादिना निखिलवृत्तित्वभेदादीनां चोपस्थितिरावश्यकी। अन्यथा निखिलसामानाधिकरण्येषु सन्निकृष्टधूमादेरेव भाने तस्य भ्रमत्वापत्तेः। तद्व्यक्त्यभाववति तद्व्यक्तिमत्वप्रतीतेर्भ्रमत्वात्। एवंच धूमत्वादिना निखिलधूमादीनां प्रत्यक्षार्थमपि सामान्यलक्षणाप्रत्यासत्तिरपेक्षिता। नच धूमत्वादिना निखिलधूमादीनामुपस्थितावपि कस्य धूमस्य कुत्राधिकरणे भानमित्यत्र नियामकाभावेन सर्वस्यैव धूमस्य सर्वस्मिन्नेवाधिकरणे भानं स्यादिति त्वन्मतेऽपि भ्रमत्वं दुर्वारमेवेति वाच्यम्। अन्यधूमस्याऽन्यत्र भानं प्रति दोषस्यापि प्रयोजकतया तद्विरहादेव तथा भानाऽप्रसक्तेः। नच

## ❀ मणिदीपिनी ❀

स्मतेऽपि तत्स्वीकारावश्यक्याद् येनोपायेन दीधितिकृन्मते दोषवारणं तेनैवास्माकमपीति पूर्वपक्षे किंचेति स ग्रन्थः। एतेन "समानाधिकरणयोरेव व्याप्तिरितिपक्षे" इति पक्षपदोपादानासंगतिप्रसङ्गोऽपि निरस्तः। समानाधिकरणयोरेव व्याप्तिरितिमते व्याप्त्यैक्यमते च प्रसङ्ग एव संगतिरिति दीधितिकाराशयात्।

केचित्तु व्याप्तिग्रहश्चेत्यादिग्रन्थोऽपि एका व्याप्तिरित्यभिप्रायेणैव। तथा यद्धर्मिणि व्याप्तिग्रहस्तस्य पक्षवृत्तित्वज्ञानादेवानुमितिः अन्यथा धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञानादनुमित्यापत्तेः। न 'काव्याप्तिरिति मते वह्निसमानधिकरणधूमत्वमेव व्याप्तिःतस्या रासभे विरहान्न दोष इति वाच्यम्। वह्न्यधिकरणवृत्तित्वस्य वृत्तिभेदव्यभेदेन व्याप्त्यैक्योपपत्तेर्धूमत्वस्याऽप्रवेशात्। एवं च सामान्यलक्षणाया अनुपगमे पर्वतीयधूमे व्याप्त्यग्रहात्पर्वते वह्न्यनुमितिर्न स्यादिति वदन्तीत्यन्तग्रन्थार्थः। यद्रूपावच्छेदेन व्याप्तिर्गृहीता तद्रूपावच्छिन्नस्य पक्षवृत्तित्वज्ञानमेवानुमितिकारणम्। धूमव्यापकवह्निसमानाधिकरणद्रव्यवान् पर्वत इति ज्ञानेऽप्यनुमित्यनुदयात्। महानसे धूमत्वावच्छिन्ने व्याप्तिर्गृहीता। तदवच्छिन्ने पर्वतवृत्तित्वज्ञानं च सुलभमिति सामान्यलक्षणाया अनुपयोगादिति तथाहीत्यादिमध्यर्थः। तद्वक्ष्यति—व्याप्त्यनुभवेत्यादि एकप्रकारकत्वेनानुमितिहेतुत्वादित्यादि च मणाविति वदन्ति।

## ❀ काशिकानन्दी ❀

धूमत्वादिना निखिलधूमाद्युपस्थितावपि तस्य तस्य तत्तदधिकरणे भाने प्रयोजक विरहात् कथं विशिष्टबोधनिर्वाह इति वाच्यम् । असंसर्गाग्रहस्यैव विशिष्टभानप्रयोजकतया तदनुपपत्तेरभावात् । मूले—धूमादीत्यत्रादिपदं च अधिकरणत्ववृत्तितात्वभेदत्वादिना निखिलाधिकरणवृत्तित्वभेदादिपरिग्रहार्थम् ।

यत्तु मूले सकलधूमादिविषयक इत्यस्य धूमनिष्ठसकलव्याप्तिविषयक इत्यर्थः पूर्वं पर्वतीयधूमग्रहेऽपि तन्निष्ठव्याप्त्यग्रहे तत्र व्याप्त्यवगाहिप्रमाया अबाधितव्याप्त्युपनायकविरहेणाऽसंभवात् तन्निष्ठव्याप्तिग्रहे पूर्वं तदग्रहेऽपि लौकिकसन्निकर्षादिबलात्तस्मिन् भासमाने उपनायकसत्त्वेन तत्र व्याप्त्युपनीतभानसंभवात् सकलधूमविषयकत्वस्याऽकिंचित्करत्वाद् इति गदाधरमतं तन्न चारुतरम् । उक्तक्रमेण निखिलधूमाद्यग्रहे पर्वतीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकपर्वतीयवह्निसामानाधिकरण्यत्वस्य पर्वतीयधूमनिष्ठवृत्तितायां ग्रहाऽसंभवात् । महानसीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकमहानसीयवह्निसामानाधिकरण्यत्वस्य तत्र भाने तस्य भ्रमत्वापत्तेः । नच वृत्तितात्वेनोपस्थितनिखिलवृत्तितासु महानसीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकमहानसीयवह्न्यधिकरणनिरूपितत्वस्यावगाहनेऽपि न तस्य भ्रमत्वम् । धूमत्वादिनैव महानसीयधूमादीनां ग्रहणात् तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नप्रकारकनिश्चयस्यैव भ्रमत्वात् । धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्न्यधिकरणनिरूपितत्वत्वावच्छिन्नाभावस्य च पर्वतीयधूमादिनिष्ठवृत्तितायां विरहात् । वह्निसामानाधिकरण्यत्वेनोपस्थितनिखिलवह्निसामानाधिकरण्येषु वह्न्यंशे महानसीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य वा धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वत्वेन भानमिति वाच्यम् । एवं सति सामान्यलक्षणाया एवात्रानावश्यकताप्रसङ्गात् । महानसीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकमहानसीयवह्निसामानाधिकरण्यस्य धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसामानाधिकरण्यत्वेनैवावगाहनेन पर्वतीयधूमे तादृशधर्मावच्छिन्नाभाववत्त्वविरहेण तत्र तादृशधर्मावच्छिन्नप्रतीतेरभ्रमतया अभ्रान्तपुरुषस्यापि सामान्यलक्षणां विना व्याप्तिविशिष्टवैशिष्ट्यावगाहिप्रमासंभवात् ।

गदाधरभट्टाचार्यास्तु हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति मतमालम्ब्य सकलधूमादिविषयक इत्यस्य धूमनिष्ठसकलव्याप्तिविषयक इत्यर्थं व्याचख्युः । तथाहि—महानसीयधूमे वह्नित्वावच्छिन्नसामानाधिकरण्यग्रहानन्तरं वह्नित्वावच्छिन्नसामानाधिकरण्यत्वेन निखिलतादृशसामानाधिकरण्यानां ग्रहो भवति । तत्र च वह्नित्वेनाधिकरणत्वादिना चोपस्थितानां निखिलवह्न्यादीनां भानं भवति । वह्नित्वांशे च महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेद-

## ❀ काशिकानन्दी ❀

कत्वं लौकिकसंनिकर्षवशाद् गृह्यते। नहि तत्र धूमत्वेन निखिलधूमानामुपस्थित्यपेक्षा वह्नित्वस्य निखिलवह्न्यावेकतया महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वेन महानसीयवह्नौ गृहितस्यैव तस्य पर्वतीयवह्नावपि वह्नित्वेन गृहीते ग्रहणसंभवात्। तावता तस्य भ्रमत्वाभावात्। तथा च पर्वतीयधूमदर्शनोत्तरं प्राग् गृहीतस्य महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य पर्वतीयधूमेऽबाधितस्योपनयसंभवाद् व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वेनानुमितिहेतुत्वमव्याहतमेव। न च समानाधिकरणयोरेव व्याप्तिरिति मते धूमसमानाधिकरणात्यन्ताभावाऽप्रतियोगिवह्निसामानाधिकरण्यमेव व्याप्तिः, न तु तादृशप्रतियोगितानवच्छेदकवह्नित्वघटितम्। चालनीन्यायेन महानसीयधूमाधिकरणे पर्वतीयवह्निव्यक्त्यादेरभावोपादानेऽपि दोषाभावात्। सामान्यतो वह्निधूमाद्योरेकव्याप्तिविरहेण महानसीयवह्निधूमाद्योरेव व्याप्यव्यापकतया पर्वतीयवह्निव्यक्त्यादेरभावोपादानस्येष्टत्वादिति वाच्यम्। विशिष्टाभावोभयाभावादिकमादाय दोषवारणायानवच्छेदकपर्यन्तअयणावश्यकत्वात्। साध्यतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वादिप्रवेशे गौरवात्। न च वह्नित्वावच्छिन्नसामानाधिकरण्यस्य महानसीयधूमे पर्वतीयधूमेऽपि च सत्त्वात् समानाधिकरणयोरेव व्याप्तिरिति पक्षभङ्ग इति वाच्यम्। वह्नित्वावच्छिन्नतत्तद्वह्न्यादिसामानाधिकरण्यस्य तत्तद्धूमे एव सत्त्वात्। एवं च धूमत्वेन निखिलधूमादीनामुपस्थितेरनपेक्षितत्वेन तदर्थं सामान्यलक्षणोपपादनमयुक्तमिति तेषामाशयः। तत्पुनः "एतेन धूलीपटले धूमत्वभ्रमे" इत्याद्यग्रिमदीधितिं संजिगमयिषुभिरन्योन्याभावघटितव्याप्त्यवष्टम्भनावश्यकतया यथाश्रुतमूलार्थपरित्यागस्यानुचिततया च नास्माभिराद्दृतमिति ध्येयम्।

नचान्योन्याभावघटितव्याप्तिपक्षेऽपि विशिष्टावच्छिन्नभेदादिकमादाय दोषवारणाय साध्यतावच्छेदकघटितमेव लक्षणं निष्कर्षणीयमिति वाच्यम्। यतः महानसीयत्वविशिष्टवह्निमान्नेतिभेदं पर्वते आदाय न दोषप्रसक्तिः सामान्यतो वह्निधूमयोरेकव्याप्तेरभावात् महानसीयधूमाधिकरणे च तादृशभेदाभावात्। नच पूर्वक्षणवृत्तित्वविशिष्टमहानसीयवह्निमान्नेति भेदमादाय दोषः। भेदस्य व्याप्यवृत्तितया पूर्वक्षणवृत्तित्वविशिष्टवह्नेस्तत्र सत्त्वे तादृशवह्निमद्भेदस्य तत्राऽसंभवात्। वह्निजलोभयवान्नेत्यादिभेदस्तु दूरनिरस्तः। वह्निजलोभयाद्यधिकरणाऽप्रसिद्धेः। प्रतियोग्यवृत्तित्वस्य भेदविशेषणाच्च वह्निमज्जलोभयं नेत्यादिभेदव्युदासः साध्यादिभेदेन व्याप्तिभेदाद् गुणवान् द्रव्यत्वादित्यादौ व्याप्त्यन्तरोपगमे क्षत्यभावः।

ननु धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्न्यादिसामानाधिकरण्यमात्रस्य व्याप्तित्वे धूमो महानसीयवह्नेर्व्याप्य इति व्यवहारापत्तिः। महानसीयधूमसमाना

## ❀ काशिकानन्दी ❀

विकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य महानसीयवह्नौ सत्त्वात् । नच धूमपदस्य धूमत्वावच्छिन्ननिरूपितत्वार्थकतया महानसे इव पर्वतेऽपि धूमत्वावच्छिन्ननिरूपिताधिकरणतासत्त्वेन तत्रैव महानसीयवह्निमद्भेदमादाय न तादृशव्यवहारापत्तिरिति वाच्यम् । समानाधिकरणयोरेव व्याप्तिरिति मते धूमत्वावच्छिन्ननिरूपिताया महानसपर्वतादिसाधारणाया एकस्या अधिकरणताया विरहात् । धूमो वह्नेर्व्याप्य इति व्यवहारविलोपप्रसङ्गाच्च । एवं च व्यवहारोपपत्तय एव साध्यतावच्छेदकघटितलक्षणं वक्तव्यम् । तथा च सति वह्निपदस्य वह्नित्वार्थकतया षष्ठ्या निष्ठत्वार्थकतया व्याप्य इत्यत्र व्याप्नोतेः प्रथमाविभक्तिप्रकृत्यर्थान्वितसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वार्थकतया यत्प्रत्ययस्य आश्रयाश्रयाधिकरणनिरूपितवृत्तित्वार्थकतया च वह्नित्वनिष्ठं यत् धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वं तदाश्रयाश्रयसमानाधिकरणो धूम इत्यन्वयबोधान्न धूमो वह्नेर्व्याप्य इति व्यवहारानुपपत्तिः । धूमो महानसीयवह्नेर्व्याप्य इति तु न व्यवहारः । महानसीयवह्नित्वनिष्ठं यद् धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वं तदाश्रयाश्रयसामानाधिकरणो धूम इत्याकारान्वयबोधस्यैव तत्र कर्त्तव्यतया तादृशप्रत्ययस्य भ्रमत्वनियमेनाऽभ्रान्तपुरुषस्य तादृशव्यवहाराऽसंभवदिति चेन्न । धूमो महानसीयवह्नेर्व्याप्यः वह्नेर्व्याप्य इत्यादौ धूमादिपदस्य सकलधूमाद्यर्थकत्वम् । एवंच सकलधूमानां स्वस्वाधिकरणवृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वस्य तादृशवाक्येन वह्नौ बोधनेन एक धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्यापि महानसीयवह्न्यादौ विरहे तादृशवाक्यस्याप्रामाण्यं स्यात् । पर्वतीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य च महानसीयवह्नौ विरहेण धूमो महानसीयवह्नेर्व्याप्य इति वाक्यस्याऽप्रामाण्यम् । धूमो वह्नेर्व्याप्य इत्यत्र वह्निसामान्यान्तर्गतपर्वतीयवह्नौ पर्वतीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वसत्त्वान्नायोग्यता । अत एव सर्वैर्ब्राह्मणैर्यवाश्छिद्यन्त इत्यादौ एकब्राह्मणकर्तृकच्छेदनस्य यवे बाधेऽपि तादृशवाक्यस्याऽप्रामाण्यम् । एवं सर्वैर्ब्राह्मणैर्यवच्छेदने तदानीं तत्तद्ब्राह्मणकर्तृकच्छेदनस्यापरापरयवे विरहेऽपि यवत्वावच्छिन्ने तत्तद्यवे सत्त्वमात्रादेव यथा सर्वैर्ब्राह्मणैर्यवाश्छिद्यन्त इति व्यवहारोपपत्तिस्तथा तत्तद्धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्याऽपरापरवह्नौ विरहेऽपि वह्नित्वावच्छिन्ने तत्तद्वह्नौ तत्सत्त्वमादायैव धूमो वह्नेर्व्याप्य इति व्यवहारोपपत्तिः । प्रतियोगितानवच्छेदकवह्नित्वघटितव्याप्तिमतेऽपि यत्किंचिद्धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वं महानसीयवह्नित्व आदाय धूमो महानसीयवह्नेर्व्याप्य इति व्यवहारवारणाय धूमपदस्य निखिलधूमार्थकत्वमावश्यकमेव । धूमत्वावच्छिन्नाधिकरणताया एकस्याः समानाधिकरणयोरेव व्याप्तिरितिमते विरहात् । नहि यत्किंचित्पर्वतीयादिधूमसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वमादाय तादृशव्यवहारवारणसंभवः । यत्किंचिद्घटे नीलत्वविरहेऽपि अत्र नीला घटा इत्यादिव्यवहारवद् योग्यताबलान्महानसीयधूमस्यैवान्वयादिति दिक् ।

❀ दीधितिः ❀

केचित्तु समानाधिकरणयोरेव व्याप्तिरिति पक्षे पर्वतीयधूमे वह्निव्याप्तिविशिष्टधीर्न पर्वतीयवह्निव्याप्तिग्रहं विना स च न सामान्यलक्षणां विनेति कथितव्याप्तिविशिष्टेत्या

❀ जागदीशी ❀

तेन ज्ञातसामान्यस्य सामान्यज्ञानस्य वा सर्वसम्मतत्त्वान्नाऽसंगतिः।

समानाधिकरणवृत्तिधूमत्त्वादेर्व्याप्तित्वे धूमान्तरे गृहीतस्य तस्यैवो नीततया पर्वतीयवह्नेरग्रहेऽपि तदीयधूमे परामर्शसंभवादाह समानाधि करणयोरेवेति। पक्षे = मते। सचेति। पर्वतीयवह्निव्याप्तिग्रहश्चेत्यर्थः लक्षणेति। अस्यानुमितीत्यादिः।

❀ काशिकानन्दी ❀

एवंच सामानाधिकरणयोरेव व्याप्तिरिति मते वक्ष्यमाणरीत्योपोद्घातोऽपि संग संभवतीत्याशयवतां केषांचिन्मतमाह—दीधितौ केचित्त्विति।

दीधितौ—समानाधिकरणयोरेवेति। निखिलवह्निनिरूपिता निखिलधूमनि न काच न व्याप्तिः। तथा सति महानसीयवह्निव्याप्तेः पर्वतीयधूमादावपि सत्त्वप्रसङ्गे पर्वतीयधूमो महानसीयवह्नेर्व्याप्य इति व्यवहारापत्तेरिति समानाधिकरणयोरेव व्याप्तिरि वदतामाशयः। वह्नित्वेन महानसीयवह्निनिरूपितव्याप्तिरपि पर्वतीयधूमे इष्टैव पर्वतीयधू महानसीयवह्नेर्व्याप्य इति तु न व्यवहारः। महानसीयवह्निपदस्य महानसीयवह्नित्वा कतया षष्ठ्या निष्ठत्वार्थकतया व्याप्यपदार्थघटकव्याप्तेश्च पर्वतीयधूमसमानाधिकरणाभा प्रतियोगितानवच्छेदकत्वार्थकतया यत्प्रत्ययस्य आश्रयावच्छिन्नसामानाधिकरण्यार्थक च महानसीयवह्नित्वनिष्ठं यत् पर्वतीयधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदक तदाश्रयावच्छिन्नसमानाधिकरणो धूम इत्यन्वयबोधात्तस्य च भ्रमतया भ्रमजनकताह वाक्यस्याऽभ्रान्तपुरुषकृतत्त्वाऽसंभवादिति एका व्याप्तिरिति वदतामाशयः। दीधितौ- व्याप्तिरिति। व्याप्यव्यापकभाव इत्यर्थः तेन व्याप्तेरुभयनिष्ठत्त्वविरहेऽपि न क्षतिः।

जागदीश्यां समानाधिकरणवृत्तीति। धूमव्यापकवह्निसमानाधिकरणवृ त्यर्थः। धूमत्त्वादेरित्यादिपदेन घटादिव्यापकद्रव्यादिसमानाधिकरणघटत्त्वादेः परिग्रहः धूमान्तरे = महानसीयधूमादौ। तस्यैवेति। तदीयधूमे परामर्शसंभवादिति योजना तस्य = समानाधिकरणवृत्तिधूमत्त्वस्य। तदीयधूमे = पर्वतीयधूमे। परामर्शसंभवात् भानसंभवात्। उपनीततया परामर्शसंभवादिति सम्बन्धात्। समानाधिकरणयोरेवेती एवं चात्र मते सामानाधिकरण्यमात्रं व्याप्तिरिति पर्वतीयवह्नेरग्रहे पर्वतीयधूमनिष्ठव्याप्ति ग्रहेण परामर्शसंभवात्सामान्यलक्षणाया आवश्यकत्वमिति शेषः।

दीधितौ—व्याप्तिविशिष्टेति। व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्त्वावच्छिन्नवि जनकतानिरूपितजन्यतावद्ज्ञानत्त्वमनुमितेर्लक्षणम्।

❀ दीधितिः ❀

लक्षणोपोद्धातोऽपीत्याहुः ।

❀ जागदीशी ❀

उपोद्धात इति । व्याप्तिग्रहस्य, प्रकृतस्य सिद्ध्यर्थं चिन्तनीयत्वादित्यर्थः ।

❀ काशिकानन्दी ❀

व्याप्तिग्रहस्येति । अनुमितिजनकतायां व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नत्वप्रयोजकीभूतस्य धूमादिनिष्ठनिखिलव्याप्तिविषयकग्रहस्येत्यर्थः । चिन्तनीयत्वादिति । अयमर्थः—व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजनकताकजन्यतावच्छेदकज्ञानत्वात्मकानुमितिलक्षणं सामान्यलक्षणायाःस्वीकारे एव संभवति । तदस्वीकारे समानाधिकरणयोरेव व्याप्तिरिति मते सत्तावान् द्रव्यत्वादित्यादौ सत्ताव्याप्यद्रव्यत्ववानित्याद्याकारकव्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयसंभवेऽपि पर्वतो वह्निमान् धूमादित्यादौ तदसंभवात् पर्वतीयवह्निव्याप्तेः पर्वतीयधूमे प्रागग्रहात् । महानसीयवह्निव्याप्तेः महानसीयधूमे गृहीतायाः स्मरणसंभवेऽपि तस्याः पर्वतीयधूमे विरहेणाऽभ्रान्तपुरुषस्य तत्र तद्वैशिष्ट्यावगाहिग्रहाऽसंभवात् । एवं चाऽभ्रान्तपुरुषस्यापि तत्रानुमित्युत्पादानुरोधेन व्याप्तिस्मृतित्वेन पक्षधर्मताज्ञानत्वेन च कारणत्वद्वयं, गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनाऽनुगतकारणत्वमेव वाऽगत्या स्वीकार्यम् । न तु व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वेन । महानसीयधूमे धूमत्वेनैव व्याप्तेर्गृहीततया गृह्यमाणव्याप्यतावच्छेदकत्वं धूमत्वेऽक्षतमेवेति नानुपपत्तिः । एवंच व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकज्ञानत्वस्यैकव्यक्तिहेतुकानुमितौ कथंचित्संभवेऽपि नानाव्यक्तिहेतुकानुमितौ सर्वत्र तदसंभवेन व्याप्तिविशिष्टवैशिष्ट्येत्यादेरनुमितिसामान्यलक्षणत्वं न संभवत्येव । सामान्यलक्षणायाःसत्त्वे तु वह्निव्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वादिना अनुगतकारणतासंभवेन उक्तागतिकगत्यनाश्रयणाद् लाघवाच्च तेनैव कारणत्वसिद्धौ व्याप्तिविशिष्टेत्यादिलक्षणमपि निर्वहतीति भवति व्याप्तिग्रहस्य प्रकृतस्य सिद्ध्यर्थं चिन्तनीयत्वमिति ।

व्याप्तिग्रहे प्रकृतत्वाभिधानं तु लक्षणगतं तदादायैवेति तु विभावनीयम् । एवंच लक्षणघटकीभूतानुमितिकारणत्वनिष्ठ—व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नत्वसिद्धिप्रयोजकसामान्यलक्षणाप्रत्यासत्तेः लक्षणसिद्धिप्रयोजकत्वमपि सुतरामेवेति न लक्षणोपोद्धातत्वानुपपत्तिः ।

यद्यपि व्याप्तित्वस्यानुगतस्य दुर्वचतया व्याप्तिविशिष्टेत्याद्यनुमितिसामान्यलक्षणं न संभवति । यत्किंचिदनुमितिलक्षणत्वं तु विनापि सामान्यलक्षणां निर्वहति । एकव्यक्तिहेतुकस्थले व्याप्तिविशिष्टेत्यादिलक्षणस्यानुमितौ गमनसंभवात् । नापि धूमहेतुकवह्न्यनुमितिपरत्वं तादृशलक्षणस्येत्यपि युक्तम् । तथा सति द्रव्यत्वहेतुकसत्त्वादिसाध्यकानुमितिं व्याप्तिविशिष्टेत्यादिलक्षणेन संगृह्णीयेत्याद्युत्तरग्रन्थविरोधात् । तादृशलक्षणस्य निखिलानुमितौ गमनेन स्वन्मतानुसारिधूमलिङ्गकवह्न्यनुमित्यात्मकलक्ष्यातिरिक्तेऽपि तल्लक्षणगमनात् । तथापि

❀ जागदीशी ❀

अपिना प्रसङ्गस्यापि तथात्त्वं सूच्यते ।

व्यापकसामानाधिकरण्यमात्रं रासभादिसाधारणतया न व्याप्तिः । साध निष्ठस्य तादृशसामानाधिकरण्यस्य व्याप्तित्वे विशिष्टसत्त्वव्यापकद्रव्यत्व सामानाधिकरण्यवतः सत्त्वमात्रस्य गुणादौ परामर्शात् तत्र द्रव्यत्वा मित्यापत्तिः ।

किं चाऽस्तु समानाधिकरणयोरेव व्याप्तिः । तथापि द्रव्यत्त्वादिहेतुक त्त्वादिसाध्यकानुमितिं व्याप्तिविशिष्टेत्यादिलक्षणेन संगृह्य तद्वृत्तिजा सत्त्वस्य वह्न्याद्यनुमित्यादावपि नेतव्यत्त्वान्नोपोद्घातः संभवतीत्यस्वर केचिदित्युक्त्वा सूचितः ।

❀ काशिकानन्दी ❀

शब्दैक्यस्याप्युपादेयतया व्याप्तिविशिष्टेत्यादेरनुमितिसामान्यलक्षणत्त्वमपि युक्तमेवेति उ द्घातसंगतिरपि संभवतीत्यभिप्रायः । यद्वा जात्यघटितलक्षणस्य तत्तदनुमितिरेव लक्ष्या यत्किंचिदनुमितिलक्षणोपोद्घातताविरहेऽपि धूमलिङ्गकवह्न्यनुमितिलक्षणोपोद्घातता सा न्यलक्षणाया अक्षतैवेति भावः । तथात्त्वं = संगतित्त्वम् ।

व्यापकेति । धूमादीत्यादिः । मात्रमिति । न व्याप्तिरित्यन्वयः । रासभादिस धारणतयेति । वह्न्यधिकरणे पर्वतादौ विचरति रासभादावपि तादृशवह्निसामानाधिकरण संभावादिति भावः । साधननिष्ठस्य = धूमादिनिष्ठस्य । तादृशसामानाधिकरण्यस्य व्यापकसामानाधिकरण्यस्य । विशिष्टसत्त्वेति । गुणकर्मान्यत्त्वविशिष्टसत्त्वेत्यर्थः । सत्त्व मात्रस्येति । विशिष्टसत्त्वात्मकसाधनाऽभिन्नस्येति शेषः । एवंच साधननिष्ठत्वम तादृशसामानाधिकरण्ये सम्पन्नमिति भावः । परामर्शादिति । विशिष्टसत्त्वव्यापकद्रव्य समानाधिकरणसत्तावान् गुण इत्याकारकात्परामर्शादित्यर्थः । तत्र = गुणादौ । द्रव्यत्त्व नुमित्यापत्तिः = द्रव्यत्त्वानुमितेः प्रमात्त्वापत्तिः । परामर्शस्य प्रमात्त्वादिति भावः । तु विशिष्टसत्त्वव्यापकीभूतद्रव्यत्त्वसमानाधिकरणविशिष्टसत्तावत्त्वनिश्चयस्यैवानुमितिहेतुत्व यथाश्रुतमेव सम्यगित्याहुः ।

ननु द्रव्यं विशिष्टसत्त्वादित्यादौ विशिष्टसत्त्वव्यापकीभूतद्रव्यत्त्वसमानाधिकरणवि ष्टसत्तात्त्वस्य व्याप्तित्वमस्तु । हेतोरेकव्यक्तित्त्वेन समानाधिकरणयोरेवव्याप्ति तिसिद्धान्तभङ्गाभावात् । वह्निमान् धूमादित्याद्यनेकव्यक्तिहेतुकस्थले तु न तादृ सामानाधिकरण्यवद्वृत्तिधूमत्त्वादिकं हेतुः । तथा सति तादृशधूमत्त्वस्य निखिलधूमवृत्तित्वे समानाधिकरणयोरेव व्याप्तिरिति नियमभङ्गप्रसङ्गात् । किन्तु साधननिष्ठं तादृशसामान धिकरण्यमेव । एवंच नोक्तदोषाणामवकाश इत्याशङ्क्याह — किं चास्तु समानाधिक रणयोरेव व्याप्तिरिति । द्रव्यत्त्वादिहेतुकेति । सत्तावान् द्रव्यत्त्वादित्यादाविति भावः अनुमितिमिति । संगृह्येत्यन्वयः । तद्वृत्तिजातिमत्त्वस्य = द्रव्यत्त्वादिहेतुकसत्त्वादि साध्यकानुमितिवृत्तिजातिमत्त्वस्य । वह्न्याद्यनुमितावपि नेतव्यत्त्वादिति । सत्ताव

❁ दीधितिः ❁

**अत्र च सामान्यं लक्षणं स्वरूपं यस्या इत्यर्थे सामान्यमेव प्रत्या-**

❁ जागदीशी ❁

विशेषणतारूपाया अतिरिक्तरूपायाश्च द्विविधायाः प्रत्यासत्तेर्मूलकृताऽभिधानादुभयत्रैव सामान्यलक्षणाशब्दं व्युत्पादयति अत्रचेति।

यद्यपि सामान्यं च तल्लक्षणं चेति कर्मधारयस्यैव सम्यक्त्वे बहुव्रीहिरनुचितः। तथापि कर्मधारये लक्षणपदस्यानुपसर्जनत्वे सामान्यलक्षणा प्रत्यासत्तिरिति प्रयोगो न स्यात्। प्रत्युत सामान्यलक्षणं प्रत्यासत्तिरित्येव स्यात्। लक्षणशब्दस्याऽजहल्लिङ्गत्वाद्। अतो बहुव्रीहिरादृत इति भावः।

❁ काशिकानन्दी ❁

द्रव्यात्त्वादित्याद्येकव्यक्तिहेतुकस्थले हेतोरैक्याद् व्याप्तेरैक्येन सामान्यलक्षणाविरहेऽपि प्रागगृहीतायास्तस्याः घटाद्यात्मकपक्षवृत्तितया ज्ञातद्रव्यत्वादौ उपनीततया प्रत्यक्षादिनैव वा ग्रहसंभवात्तत्र व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानत्वस्यानुमितौ सत्त्वात्तादृशानुमितेस्तादृशजन्यतावज्ज्ञानपदेन वक्तुं शक्यतया जातिघटितं व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानवृत्तिप्रत्यक्षाऽवृत्तिजातिमत्त्वमिति, सत्ताव्याप्तिविशिष्टद्रव्यत्ववैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानवृत्तिप्रत्यक्षाऽवृत्तिजातिमत्त्वमिति वाऽनुमितिसामान्यलक्षणं सुवचमेवेति नानुमितिलक्षणसिद्ध्यर्थं सामान्यलक्षणाया आवश्यकत्वम्। न च सामान्यलक्षणाविरहे एकव्यक्तिहेतुकस्थलेऽपि अनुमितिजनकतायां व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नत्वदौर्लभ्यमेव। अनुगतस्य गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्यैवानुमितिकारणतासिद्धेरिति वाच्यम्। सत्ताव्याप्यद्रव्यत्ववानित्याकारकपरामर्शोत्तरमपि अनुमित्युत्पादेन परामर्शस्यापि तत्र कारणत्वाऽक्षतेः। किं च द्रव्यत्वत्वेन द्रव्यत्वस्य यत्र न भानं किन्तु सत्ताव्याप्यत्वेनैव तत्रापि सत्ताव्याप्यवानित्याकारकपरामर्शादनुमितेरानुभविकतया सर्वत्र गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनानुमितिकारणत्वं न संभवति। एवं च सत्ताव्याप्यवानित्याकारकपरामर्शत्वावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमेवानुमितिसामान्यलक्षणं सुवचमिति नोपोद्घातः संभवतीति भावः। एतच्च मूलकारीयानुमितिलक्षणाक्षरस्वारस्याद्यै। यांकांचिदनुमितिव्यक्तिमादाय तदृशव्यक्तिवृत्तिप्रत्यक्षाऽवृत्तिजातिमत्वस्य लक्षणत्वे तु नोपोद्घातवार्त्तापीति ध्येयम्।

**विशेषणतारूपायाः**=घटत्वाद्यात्मिकायाः। **अतिरिक्तरूपायाः**=घटत्वादिज्ञानात्मिकायाः **उभयत्रैव**=घटत्वात्मिकायां घटत्वज्ञानात्मिकायां च।

**कर्मधारये**=सामान्यं च तल्लक्षणं चेति कर्मधारये। **अनुपसर्जनत्वे**=अनुपसर्जनत्वेन। **बहुव्रीहिरादृत** इति। बहुव्रीहौ तु लक्षणशब्दस्य प्रत्यासत्त्युपसर्जनतया प्रत्यासत्तिसमानलिङ्गकत्वम्। वस्तुतस्तु लक्षधातोः स्वार्थण्यन्तात् कर्त्तरि युच् बाहुलकात्।

कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमि-
तिः। सा चेन्द्रियसम्बद्धविशेषणता,

❀ दीधितिः ❀

सत्तिः। सामान्यं लक्षणं निरूपकं यस्या इत्यर्थे तु तज्ज्ञानम्। तत्रा-
माह साचेति।

❀ जागदीशी ❀

निरूपकमिति। विषयतया निरूपकमित्यर्थः।

केचित्तु—ननु ज्ञातसामान्यं सामान्यज्ञानं वाऽस्तु सामान्यलक्षणा तस्यास्तु प्रत्यसत्तित्त्वं कुतः? षोढा गणितप्रत्यासत्त्यनन्तर्गतत्वाद्- अत उक्तं सा चेति। तथा च तस्या विशेषणतायामेव निवेशान्न गणित-

❀ काशिकानन्दी ❀

भावेच। आद्ये च सामान्यं च सा लक्षणा चेति विग्रहः। लक्षणा च ज्ञा- जनिका। द्वितीये सामान्यस्य लक्षणेति विग्रहः। लक्षणा चात्र ज्ञान- अन्यथा सामान्यलक्षणाप्रत्यासत्त्येति मूलप्रयोगोऽसंगतःस्यात्। "पुंवत् कर्मधारये" सूत्रेण सामान्यलक्षणा च सा प्रत्यासत्तिरिति समासे पुंवत्त्वापत्तेः। तथा च साम- लक्षणप्रत्यासत्त्येति दीर्घाघटितप्रयोगःस्यात्। समासाभावे तु सामान्यलक्षणया प्रत्य- त्त्येति स्यात्। अस्माकं तु "ण्यासश्रन्थोयुच्" इति सूत्रविहितयुजन्तलक्षणाशब्दस्य नि- स्त्रीत्वाददोषः। न च सामान्यलक्षणप्रत्यासत्त्येति दीर्घाऽघटितप्रयोगस्यापि दर्शनात्त- बहुव्रीहिरादरणीय इति वाच्यम्। तस्य सामान्यं च तल्लक्षणं चेत्यादिविग्रहेणैवोप- संभवात्। एवं स्थिते बहुव्रीहेः संभवाभिप्रायेण तस्य प्रदर्शनमिति विभावनीयम्।

चिन्तामणिमन्यथा व्याचक्षाणानां मतमाह—केचित्त्विति। तस्यास्तु=साम- लक्षणायास्तु। षोढेति। संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवाय-समवाय-समवेतसम- विशेषणविशेष्यभावभेदेनेत्यादिः।

तस्याः=सामान्यलक्षणायाः। विशेषणतायामेवेति। षड्विधप्रत्यासत्त्यन्त-

❀ मणिदीपिनी ❀

अन्यथा=सकलधूमद्यविषयकत्वे। पर्वतीयधूमे व्याप्त्यग्रहे इति। पर्वती- धूमविषयकव्याप्तिग्रहाभावे इत्यर्थः। पर्वतीयधूमघटितव्याप्तेरग्रहादिति भाव- तस्मात्=पर्वतीयधूमाद्। अनुमितिरिति। उत्पद्यतामिति शेषः। पर्वतीयधू- वह्न्यनुमितौ पर्वतीयधूमघटितव्याप्तिग्रहस्य कारणत्वादिति भावः। भ्रान्तपुरुष- महानसीयधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकमहानसीयवह्निसामा-

❀ दीधितिः ❀

इन्द्रियेण सम्बद्धं धूमादि, तस्य विशेषणं=तद्विशेष्यकज्ञानप्रकारो धूमत्वादिरित्यर्थः।

विशेषणतेत्यत्र भावार्थो न विवक्षितः।

❀ जागदीशी ❀

न्तर्भाव इति। षड्विधगणनस्य लौकिकप्रत्यासत्तिपरतया सामान्यलक्षणाया-स्तदनन्तर्भावेऽपि न क्षतिरित्याशयेनोक्त मतिरिक्तैवेति। गणितषड्विधप्रत्यासत्त्यतिरिक्तैव वेति तदर्थ इति मूलं व्याचक्रुः।

नन्विन्द्रियसम्बद्धविशेषणत्वं यदीन्द्रियसम्बद्धवृत्तित्वं तदा धूमत्वस्येन्द्रियसम्बद्धवाष्पादिधर्मत्वाभावात् ताद्रूप्येण वाष्पग्रहात् सकलधूमप्रत्यक्षं न स्यादतो व्याचष्टे तद्विशेष्यकेति। तत्प्रकारकतदाश्रयप्रत्यक्षं प्रति इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्नतद्रूपत्वेन हेतुत्वमित्याविष्कर्त्तुमाह— धूमत्वादिरिति।

प्रकारतापर्यवसितविशेषणताया धूमत्वादिसामान्यस्वरूपत्वाऽसंभवादाह विशेषणतेत्यत्रेति।

❀ काशिकानन्दी ❀

यामिति शेषः। तदनन्तर्भावेऽपि=षड्विधप्रत्यासत्त्यनन्तर्भावेऽपि। नक्षतिरिति। अस्या अलौकिकत्वादिति भावः। तदर्थः=अतिरिक्तैवेत्यस्यार्थः। अत्र चाभावीयविशेषणताया एव षोढा गणितान्तर्गतत्वात् सामान्यलक्षणायास्तदन्तर्गतत्वाशङ्कैव निरास्पदा। न च विशेषणतामात्रं सन्निकर्ष इति वाच्यम् एवं सति कालिकादिसम्बन्धस्यापि प्रत्यासत्तित्वापत्तेरित्यस्वरसः केचिदित्यनेन सूचितः।

वाष्पादिधर्मत्वाभावात्=वाष्पादिवृत्तित्वाभावात्। ताद्रूप्येण=धूमत्वरूपेण। वाष्पग्रहात्=धूमइत्याकारकवाष्पभ्रमात्। नस्यादिति। इष्ट च तत्रापि निखिलधूमप्रत्यक्षम्। फलस्याग्रे दीधितौ वक्ष्यमाणत्वात्। इन्द्रियसम्बद्धवाष्पविशेष्यकज्ञानप्रकारत्वं तु धूमत्वेऽक्षतमेव। तत्प्रकारकेति। धूमत्वघटत्वादितत्तद्धर्मान् प्रवेश्य विशिष्यैव कार्यकारणभावो वाच्यः स चाग्रेव्यक्तीभविष्यतीति भावः।

विशेषणताया विशेषणस्वरूपत्वे, लक्षणया वा विशेषणतापदस्य धूमत्वाद्यर्थकत्वे विशेषणतापदबोध्यत्वं धूमत्वादिसामान्यस्याक्षतमेवेत्यतो विशेषणं प्रकारतापर्यवसितेति। स्वरूपत्वाऽसंभवादिति। धूमत्वादिवृत्तीनां प्रकारत्वादीनां धूमत्वादिस्वरूप-

❀ मणिदीपिनी ❀

धिकरण्यस्य पर्वतीयधूमे उपनीततया भानेनानुमितिसंभवेऽपि अभ्रान्तपुरुषीयानुमितिः कथमिति तत्त्वम्।

२

## ❀ जागदीशी ❀

यद्यपि भावार्थस्य विवक्षायामपि न क्षतिः। सन्निकृष्टधूमधर्मिकज्ञानप्रकारतापन्नधूमत्वादेरिव धूमत्वादिनिष्ठायाः सन्निकृष्टधर्मिकज्ञानप्रकारताया अपि स्वाश्रयवत्त्वरूपपरम्परासम्बन्धेन धूमत्वादिप्रकारकधूमत्वाद्याश्रयप्रत्यक्षं प्रति हेतुत्त्वस्य सुवचत्त्वात्। तथापि "सामान्यस्य हि प्रत्यासत्तित्त्वं लाघवात्, न तु सामान्यतया ज्ञातस्ये" त्यादिमूलग्रन्थमनुरुध्यैव भावप्रत्ययस्यार्थः परित्यक्त इति ध्येयम्।

ननु भावार्थाविवक्षायां सा चेत्यनेन सार्द्धमिन्द्रियसम्बद्धविशेषणपदार्थस्याऽभेदान्वयो न स्यात् तन्नियामकस्य समानविभक्तिकत्त्वादेस्तत्राऽसत्वात्,

## ❀ काशिकानन्दी ❀

स्वानङ्गीकारादित्यर्थः। धूमत्वादिनिष्ठाया इति। तेन तादृशप्रकारतात्त्वेन धर्मान्तरनिष्ठप्रकारताया अन्यत्र अपि सत्त्वेऽपि न दोषः। धूमत्वनिष्ठत्त्वतादृशप्रकारतात्त्वोभयावच्छिन्नाधेयतानिरूपकाधिकरणाश्रयत्त्वस्यैव संसर्गत्वादिति भावः। स्वाश्रयवत्त्वेति। स्वं धूमत्वादिसामान्यनिष्ठं प्रकारत्त्वं तदाश्रयो धूमत्त्वादिः, तद्वत्त्वं धूमादौ। अनुरुध्यैवेति अन्यथा सामान्यस्यैव हि प्रत्यासत्तित्त्वमितिग्रन्थोऽलग्नकः स्यात्। प्रकारताया एव प्रत्यासत्तित्त्वेन धूमत्त्वाद्यात्मकसामान्यस्य प्रत्यासत्तित्त्वाभावात्।

ननु प्रकारत्त्वमपि सामान्यमेव। जात्यात्मकसामान्यमात्रग्रहणस्याग्रे निरसनीयत्त्वात् न च धूमत्त्वाद्येकव्यक्तिमात्रवृत्तिप्रकारत्त्वादेः समानानां भावः सामान्यमिति व्युत्पत्तिलभ्यसामान्यत्त्वमपि नास्ति। घटवानित्याकारकालौकिकप्रत्यक्षं प्रति घटत्त्वावच्छिन्नाया एव प्रकारताया निरुक्तसामान्यात्मिकायाः प्रत्यासत्तित्त्वसंभवात्तदनुरोधेनैव सामान्यस्य प्रत्यासत्तित्त्वमिति मूलं प्रवृत्तमिति च न युक्तम्। धूमत्त्वादिनिष्ठप्रकारताया असंग्रहप्रसङ्गादिति वाच्यम्। स्वाश्रयवत्त्वसम्बन्धेन धूमत्त्वादिनिष्ठप्रकारताया अपि अनेकधूमनिष्ठायाः सामान्यत्त्वसंभवात्। वस्तुतश्च समानानां भावः सामान्यमित्यपि नेहाभिप्रेतम्। तद्व्यक्तित्वादेरपि तद्व्यक्तित्त्वेन व्यक्त्यन्तरभ्रमकाले सामान्यत्त्वादिति चेद् एवं तर्हि लाघवादिति पदमनुरुध्य धूमत्त्वादेः प्रत्यासत्तित्त्वमिति गृहाण। स्वाश्रयवत्त्वसम्बन्धेन प्रकारतायाःकारणत्त्वापेक्षया समवायादिना धूमत्त्वादेः कारणतायां लाघवात्

वस्तुतस्तु प्रकारताया एव सामान्यत्त्वे तादृशसामान्यज्ञानविरहणोऽपि घटत्त्वादिनिखिलघटविषयकप्रत्यक्षात् तदनुपपत्तेरेव संभवे, लाघवेन सामान्यतया ज्ञातस्य प्रत्यासत्तित्त्वविरहकथनं मूलकृतोऽसंगतं स्यादिति धूमत्त्वादिरेव सामान्यं मूलकृदभिमतमित्यभिसन्धिः।

तत्र = भावप्रत्ययं वर्जयित्वाऽवशिष्टविशेषणेत्यत्र। असत्त्वादिति। विशेषणपदोत्तरमेव समानविभक्तेः सत्त्वात्। न च तत्रापि विभक्तिर्नास्ति लुप्तत्त्वादिति वाच्यम् विशेषणवाचकपदप्रकृतिकत्त्वेनानुसन्धीयमानविभक्तिसजातीयविभक्तिप्रकृतित्त्वेनानुसन्धीयमानत्त्वस्य समानविभक्तिकत्त्वपदेन विवक्षणात्।

❈ दीधितिः ❈

तत्र विशेषणत्त्वं यस्या इति बहुव्रीहिर्वा । सम्बद्धपदस्यैव वा

❈ जागदीशी ❈

सुरूपा देवतेत्यादिवत् कथंचित् समर्थनेऽपि भावप्रत्ययस्य वैयर्थ्यापत्तिरेवेत्यत आह — तत्रविशेषणत्त्वमिति ।

व्यधिकरणबहुव्रीहेः सर्वत्र व्युत्पन्नैरस्वीकारादाह-सम्बद्धपदस्यैववेति ।

[ केचित्तु ] नन्विद्रियसम्बद्धे विशेषणत्त्वं यस्या इति बहुव्रीहौ तादृशसंस्कारादिप्रकारतामादायातिप्रसङ्गः प्रकारतार्थकस्य विशेषणताशब्दस्य ज्ञानप्रकारतापरतायामाधुनिकलक्षणापत्तिरित्यत आह सम्बद्धपदस्येत्यपि

❈ काशिकानन्दी ❈

ननु विशेषणतेत्यत्र स्वार्थे तल्प्रत्यय इति न किंमप्यनुपपन्नमिति शङ्कते—सुरूपेति । ननु स्वार्थे तल् कुत्र दृष्टोऽत आह—देवतेति । कथंचिदिति । विशेषणपदात् स्वार्थे तल्विधायकानुशासनाभावादिति भावः । भावप्रत्ययस्य = स्वार्थप्रत्ययस्य । वैयर्थ्यपत्ते-रिति । इन्द्रियसम्बद्धविशेषणमित्येतावतैवोपपत्तौ अननुशासितप्रत्ययान्तप्रयोगस्यानुचितत्त्वादिति भावः ।

तादृशसंस्कारेति । इन्द्रियसम्बद्धविशेष्यकसंस्कारेत्यर्थः । अतिप्रसङ्ग इति । धूम इत्याकारकचाक्षुषकाले इन्द्रियसम्बद्धधूमादिविशेष्यकसंस्कारीयप्रकारताया द्रव्यत्त्वादावपि संभवेन तदानीं द्रव्यत्त्वेन निखिलद्रव्याणामपि प्रत्यक्षापत्तिरित्यर्थः । आधुनिकलक्षणेति । निरूढलक्षणा तु न दोषावहेत्यत उक्तमाधुनिकेति । प्रकारतायां = प्रकारतार्थकत्त्वे ।

अत्र इन्द्रियसम्बद्धत्त्वं न सामान्यतः इन्द्रियानुयोगिकसम्बन्धप्रतियोगित्त्वमतिप्रसक्तेः । किन्तु इन्द्रियानुयोगिको यःस्वसम्बद्धानुयोगिकज्ञानप्रकरतात्मकसम्बन्धस्तत्प्रतियोगित्त्वमिति तादृशार्थे आधुनिकलक्षणा दुर्वारा । न च स्वसम्बद्धविशेष्यकज्ञानप्रकारत्त्वात्मकसम्बन्धेनेति पदमध्याहार्यम् । इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतेति वदतामपि यथाकथंचित्संबन्धेनेन्द्रियसम्बद्धग्रहणेऽतिप्रसक्तेस्तन्मते संयुक्तसमवायाद्यन्यतमसम्बन्धेन सम्बद्धस्यैव वक्तव्यत्त्वादिति वाच्यम् । संयोगाद्यन्यतमसम्बन्धेन स्वसम्बद्धविशेष्यकज्ञानप्रकारतासम्बन्धेनेति शब्दः सिद्धान्तिना अध्याहार्यः परेण तु संयोगाद्यन्यतमसम्बन्धेनेत्येतावन्मात्रमध्याहार्यं ज्ञानप्रकारत्त्वादेर्लक्षणालभ्यत्त्वादिति गौरवमुभयमतेऽपि समानमेव । पूर्वकल्पवादिनः लक्षणापत्तिः, परस्य तु अधिकशब्दाध्याहारापत्तिरिति । एतेन उत्तरकल्पे सम्बद्धपदस्य स्वसम्बद्धविशेष्यकज्ञानप्रकारतासम्बन्धेन सम्बद्धे लक्षणास्वीकारेऽपि एकस्यैव सम्बद्धपदस्य लाक्षणिकत्त्वम् । पूर्वकल्पे तु सम्बद्धपदस्य संयोगाद्यन्यतमसम्बन्धेन सम्बद्धे लक्षणा विशेषणतापदस्य ज्ञानप्रकारतायां लक्षणेत्येवं पदद्वये लक्षणापत्तिरित्युत्तरकल्पाश्रयणं युक्तमित्यपि परास्तम् । पूर्वकल्पेऽपि सम्बद्धपदस्यैव समवायाद्यन्यतमसम्बन्धेन स्वसम्बद्धविशेष्यकज्ञानीयविशेष्यतानिरूपिते लक्षणाया वक्तुं शक्यतया विशेषणतापदस्य लाक्षणिक-

❀ दीधितिः ❀

परम्परासम्बद्धः, तत्सम्बद्धविशेष्यकज्ञानप्रकारोऽर्थः। तथा च सै विशेषणतेत्यर्थः।

अत्र च बहिरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तत्तदिन्द्रिय जन्यत्वं च नियामकम्।

❀ जागदीशी ❀

वदन्ति।

अत्रचेति। इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यमित्यत्र चेत् र्थः। तत्तदिन्द्रियजन्यत्वमिति। तत्तदिन्द्रियप्रयोज्यं चाक्षुषत्वादिवैजात्य त्यर्थः। यथाश्रुते चक्षुर्जन्यज्ञानत्वादेः कारणतावच्छेदकत्वे गौरवापत्तेरि ध्येयम्। नियामकं कारणतावच्छेदकतया प्रयोजकम्। तथा च तत्पुरुषी धूमत्वप्रकारकचाक्षुषत्वावच्छिन्नं प्रति तत्पुरुषीयचक्षुःसन्निकृष्टधर्मि

❀ काशिकानन्दी ❀

त्वानावश्यकत्वाच्चेति। तस्मात् व्यधिकरणबहुव्रीहेः सर्वत्राऽसाधुत्वमभिमत्यैवोक्त कल्पानुसरणं युज्यत इति वदन्तीत्युक्तम्।

दीधितौ—परम्परासम्बद्ध इति। सम्बद्धघटकसम्बन्धः परम्परासम्बन्ध एव न सम्बन्धसामान्यमिति भावः। कोऽसौ परम्परासम्बन्ध इत्यत आह—तत्सम्बद्धेति तथा च स्वसम्बद्धविशेष्यकज्ञानप्रकारत्वं परम्परासम्बन्ध इति भावः। नन्वेवं विशेषण पदवैयर्थ्यमत आह—तथाचेति। विशेषणतापदं सम्बन्धार्थकम्। कालिकविशेषण दैशिकविशेषणतेत्येवं तान्त्रिकैर्व्यवहारादिति भावः।

वैजात्यमिति। एतेनात्र लाघवं सूचितम्। चाक्षुषत्वादिकं हि जातिविशेष इतिभाव 'धूमत्वादिः' इत्यनेन सूचितं कार्यकारणभावं स्फुटयति—तथाचेति। अत्र च यत्किंचित्पुरु यचक्षुःसन्निकृष्टधर्मिकचाक्षुषप्रकारतापन्नधूमत्वादेर्हेतुत्वे एकपुरुषीयचक्षुःसन्निकृष्टधर्मि चाक्षुषप्रकारतापन्नधूमत्वकाले पुरुषसामान्यस्यैव निखिलधूमविषयकचाक्षुषापत्तिःस्यात् पुरुषसामान्यचक्षुः सन्निकृष्टधर्मिकचाक्षुषप्रकारतापन्नधूमत्वस्य हेतुत्वे युगपन्निखिलपुरु चक्षुः सन्निकृष्टधर्मिकचाक्षुषप्रकारतापन्नधूमत्वादेरसंभवेन कस्यापि धूमत्वप्रकारकनिखि धूमविशेष्यकचाक्षुषं न स्यादतः कार्यकारणभावावच्छेदककोट्योस्तत्पुरुषीयत्वनिवेशः तत्रापि कारणतावच्छेदककोटौ प्रथमतत्पुरुषीयत्वाऽनिवेशे यत्र प्रथमं तत्पुरुषीयचक्षुःसन्नि र्षवशाचदीयधूमत्वप्रकारकचाक्षुषमुत्पन्नं तदानीमेव तत्पुरुषीयचक्षुस्सन्निकर्षनाशः पुरुष न्तरीयचक्षुःसन्निकर्षश्च जातः, तत्र तत्पुरुषस्य धूमत्वेन निखिलधूमप्रत्यक्षापत्ति स्तन्निवेशः। न च तत्पुरुषस्य तत्र धूमत्वप्रकारकनिखिलधूमप्रत्यक्षं भवत्विति वाच्यम् तथा सति तादृशधूमत्वप्रकारकनिखिलधूमचाक्षुषस्यापि स्वोत्तरचाक्षुषं प्रति हेतुत्व ततश्चाक्षुषधाराया अनुभवविरुद्धाया आपत्तेः। तन्निवेशे च तत्पुरुषीयचक्षुः सन्निकर्ष

❀ जागदीशी ❀

तत्पुरुषीयचाक्षुषप्रकारतापन्नधूमत्त्वं हेतुः ।

❀ काशिकानन्दी ❀

तदानीं विनष्टतया तत्पुरुषीयचक्षुःसन्निकृष्टत्वविशिष्टधर्मिकतदीयचाक्षुषप्रकारतापन्न-धूमत्त्वस्य तदानीं विरहेणादोषः । एवं द्वितीयतत्पुरुषीयत्त्वाऽनिवेशे तत्पुरुषीयचक्षुः सन्निकर्षोत्पत्तिकाले एव पुरुषान्तरस्य यत्र धूमत्त्वप्रकारकचाक्षुषसत्त्वं तत्र तत्पुरुषस्य धूमत्त्वेन निखिलधूमप्रत्यक्षापत्तिः । तन्निवेशे च तत्पुरुषीयचक्षुःसन्निकर्षस्य धूमे सत्त्वेऽपि तदीयचाक्षुषप्रकारताया धूमत्त्वे विरहान्न दोषः । न च विशिष्टज्ञानं प्रति विशेषणज्ञानस्या-त्मनिष्ठप्रत्यासत्त्या कारणतया तद्विरहादेव नोक्तदोषप्रसङ्ग इति द्वितीयतत्पुरुषीयत्वनिवेशोऽनर्थक इति वाच्यम् । यत्पुरुषस्य धूमत्त्वविषयकस्मरणकाले चक्षुर्धूमसन्निकर्षोत्पत्तिः पुरुषान्तरीयधूमचाक्षुषं च तत्रैवोत्तरक्षणे तत्पुरुषीयचाक्षुषापत्तेः । विशिष्टप्रत्यक्षं प्रति विशेषणप्रत्यक्षत्त्वेन तु न कारणत्त्वम् । सुरभिचन्दनमित्यादौ सौरभाद्युपनीतभानस्थले व्यभिचारात् ।

द्रव्यत्त्वेन निखिलद्रव्यप्रत्यक्षकाले धूमस्यापि विशेष्यत्त्वात् तत्पुरुषीयतद्धर्माश्रयविशे-ष्यकप्रत्यक्षत्त्वमात्रस्य कार्यतावच्छेदकत्त्वे पूर्वं चक्षुःसन्निकृष्टधर्मिकचक्षुप्रकारता-पन्नधूमत्त्वविरहाद् व्यभिचारः स्यादिति कार्यकारणभावावच्छेदककोटौ धूमत्त्वादित-त्तत्सामान्यस्य प्रवेशः । न च तत्पुरुषीयतद्धर्माश्रयमात्रविशेष्यकप्रत्यक्षं प्रत्येव कारण-तायाः कल्पनान्नोक्तदोषः । उक्तप्रत्यक्षस्य धूमत्त्वाश्रयातिरिक्तघटादिविशेष्यता-मप्यवगाहमानत्त्वादिति वाच्यम् । "घटा द्रव्याणिचे" त्याकारकप्रत्यक्षं प्रति चक्षुःसन्नि-कृष्टधर्मिकचाक्षुषप्रकारतापन्नघटत्त्वादेः कारणत्त्वानापत्तेः । घट इत्याकारकज्ञानोत्तरजाय-मानघटत्त्वप्रकारकनिखिलघटविशेष्यकप्रत्यक्षस्य कम्बुग्रीवादिमत्त्वाश्रयमात्रविशेष्यकतया तत्पूर्वं च निरुक्तचाक्षुषप्रकारातापन्नकम्बुग्रीवादिमत्त्वविरहेण व्यभिचारानुद्धाराच्च ।

ननु धूमत्त्वेन यत्किंचिद्धूमविषयकलौकिकप्रत्यक्षमेव यत्र द्रव्यत्त्वेन निखिलद्रव्यविष-यकाऽलौकिकप्रत्यक्षं तत्र धूमत्त्वप्रकारकचाक्षुषस्याऽलौकिकमुख्यविशेष्यतासम्बन्धेन धूमा-दावपि सत्त्वात् तत्पूर्वं च धूमत्त्वप्रकारकचाक्षुषस्याजातत्त्वेन निरुक्तप्रकारतापन्नधूमत्त्व-विरहाद् व्यभिचार इति चेन्न । धूमत्त्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः कार्यतावच्छेदक सम्बन्धत्त्वात् । उक्तस्थले च धूमनिष्ठाऽलौकिमुख्यविशेष्यता न धूमत्त्वनिष्ठप्रकारतानिरूपिता किन्तु द्रव्यत्त्वनिष्ठप्रकारतानिरूपितेत्यदोषः ।

न च यत्र घटत्त्वप्रकारकज्ञानमेव धूमत्त्वनिर्विकल्पकं तदुत्तरजायमानघटत्त्वप्रकारक-निखिलघटविशेष्यकाऽलौकिकज्ञानं च घटांशे धूमत्त्वोपनीतं तत्र व्यभिचारः । धूमत्त्वनिष्ठ-प्रकारतानिरूपितविशेष्यताया घटे सत्त्वात्तस्याश्चालौकिकत्त्वात्, तत्पूर्वं च धूमत्त्वप्रकारक-ज्ञानविरहादिति वाच्यम् । तत्राऽसन्निकृष्टघटादौ धूमत्त्वाद्युपनीतभानानभ्युपगमात् । ज्ञानल-क्षणाया धूमत्त्वाद्युपनीतभानजनने विशेष्यभासकसामग्र्याः सहकारित्त्वकल्पनाया आवश्य-कत्त्वेन तत्रैव लौकिकप्रत्यक्षसामग्र्या एव तथात्त्वोपगमात् । नचैवं सुरभिचन्दनमित्यादौ

## ❀ काशिकानन्दी ❀

सौरभत्वविशिष्टसौरभोपनीतभानस्थले सौरभत्वभानं न स्यात्। सौरत्वांशे सौरभस्य विशेष्यत्वात् तद्भासकलौकिकसामग्र्या विरहादिति वाच्यम्। ज्ञानलक्षणाप्रयोज्यविषयत्वान्यविशेष्यताप्रयोजकलौकिकसामग्र्या एव सहकारित्वोपगमात्। सौरभनिष्ठा विशेष्यता हि न ज्ञानलक्षणाप्रयोज्यविषयत्वान्या, सौरभनिष्ठप्रकारतायाः ज्ञानलक्षणाप्रयोज्यत्वात्। विशेष्यतायाश्च जगदीशमते तादृशप्रकारत्वाऽभिन्नत्वात्।

यत्तु तद्धर्माश्रयमात्रनिष्ठालौकिकमुख्यविशेष्यतासम्बन्धेन तद्धर्मप्रकारकप्रत्यक्षं प्रत्येव सामान्यलक्षणायाः कारणत्वान्न असन्निकृष्टघटांशे धूमत्वोपनीतभानेऽपि क्षतिः। एवं धूमत्वनिष्ठप्रकारतानिरूपितत्वप्रवेशोऽप्यनावश्यक इति तदसत्। यत्र घटत्वप्रकारकप्राथमिकसविकल्पकमेव कम्बुग्रीवादिमत्त्वादिनिर्विकल्पकं तदुत्तरं घटत्वेन निखिलघटप्रत्यक्षं घटांशे कम्बुग्रीवादिमत्त्वोपनीतभानं च तत्र कम्बुग्रीवादिमत्त्वधर्माश्रयमात्रनिष्ठाऽलौकिकमुख्यविशेष्यताया घटे सत्त्वात्तत्पूर्वं च कम्बुग्रीवादिमत्त्वप्रकारकज्ञानविरहात्तत्रैव व्यभिचारस्य दुरुद्धरत्वात्। घटस्य कम्बुग्रीवादिमत्त्वाश्रयमात्रनिष्ठविशेष्यतावत्त्वात्। एतेन धूमत्वादिनिष्ठप्रकारतानिरूपितत्वप्रवेशवैफल्यमपि प्रत्युक्तम्। यत्र घटत्वेन निखिलघटप्रत्यक्षमेव कम्बुग्रीवादिमत्त्वप्रकारकलौकिकं तत्र व्यभिचारात्। एवं सति स्वाश्रयमात्रनिष्ठत्वनिवेशो विफल एव। न च धूमत्वप्रकारकधूमविशेष्यकज्ञानोत्तरं धूमत्वेन घटादिविशेष्यकमपि अलौकिकप्रत्यक्षं कुतो नोत्पद्यते? तादृशप्रत्ययोत्पादे धूमत्वनिष्ठप्रकारतानिरूपितविशेष्यताया घटेऽपि संभवात् तस्माद् धूमत्वाश्रयमात्रनिष्ठविशेष्यताप्रयोजकत्वमेव धूमत्वसामान्यलक्षणाया इति वाच्यम्। तच्च धूमत्वाश्रयत्वस्य कार्यतावच्छेदककोटौ प्रवेशसत्त्वे एवोपपद्यत इति वाच्यम् घटे धूमत्वनिष्ठप्रकारतानिरूपितालौकिकविशेष्यताप्रयोजकस्य समवायेन धूमत्वस्य विरहादेव तदापत्त्यसंभवात्। धूमत्वादिना घटादिप्रत्यक्षस्थले व्यभिचारस्तु न शङ्क्यः। घटे तत्र लौकिकविशेष्यताविरहात्। धूमत्वेन घटोपनीतस्थलेऽपि मुख्यविशेष्यताया घटे विरहात्।

विनश्यदवस्थचक्षुःसन्निकर्षजनितधूमत्वप्रकारकलौकिकप्रत्यक्षोत्तरं निखिलधूमविषयकाऽलौकिकप्रत्यक्षापत्तिरित्युक्तदोष एव चक्षुः सन्निकृष्टत्वाऽप्रवेशेऽपि।

केचित्तु चक्षुः सन्निकृष्टत्वविशेषणं न देयम्। अत एव प्रथमतत्पुरुषीयत्वनिवेशोऽप्यफलः। नचैवं विनश्यदवस्थसन्निकर्षजनितलौकिकधूमत्वप्रकारकचाक्षुषोत्तरं निखिलधूमप्रत्यक्षापत्तिरित्युक्तदोष इति वाच्यम्। धूमत्वप्रकारकचाक्षुषसामग्र्यास्तदानीं विरहादेव तदापत्त्यसंभवात्। चक्षुःसन्निकर्षादेर्लौकिकाऽलौकिकचाक्षुषसाधारणकारणत्वादित्याहुस्तदसत्। यत्र बाष्पेण सह चक्षुः सन्निकर्षोत्तरं बाष्पे धूमत्वप्रकारकं भ्रमात्मकं प्रत्यक्षं तत्कालमेव च बाष्पचक्षुः संयोगनाशो धूमचक्षुःसंयोगश्च तत्र चाक्षुषप्रकारतापन्नधूमत्वसत्त्वाद् द्वितीयक्षणे धूमत्वेन निखिलधूमप्रत्यक्षापत्तेः। धूमत्वप्रकारकधूमविशेष्यकलौकिकप्रत्यक्षस्य तत्र जायमानतया तदनुरोधेन चक्षुः सन्निकर्षादिरूपसामग्र्यास्तत्र वक्तव्यत्वात्। तदीयचक्षुःसन्निकृष्टधर्मिकतदीयचाक्षुषप्रकारतापन्नधूमत्वस्य हेतुत्वोक्तौ तु तत्र क्षणविलम्बेनैव धूमत्वेन निखिलधूमप्रत्यक्षं भवेत्। बाष्पविशेष्यकधूमत्वप्रकारकचाक्षुषस्य तदीयचक्षुः

## ❀ जागदीशी ❀

तत्र तु कार्यस्य अलौकिकं मुख्यविशेष्यत्त्वं कारणस्य तु समवायः प्रत्यासत्तिः। तेन प्राथमिकधूमत्त्वविशिष्टचाक्षुषे धूमकालीनोऽयं घट इत्यादिधूमोपनीतचाक्षुषे वा न व्यभिचारः। एवं घटत्त्वादिसामान्यमन्तर्भाव्यापि बोध्यम्।

## ❀ काशिकानन्दी ❀

सन्निकृष्टधर्मिकत्त्वविरहात्। चक्षुःसन्निकृष्टधूमधर्मिकधूमत्त्वप्रकारकचाक्षुषस्य तु सन्निकर्षद्वीतीयक्षणे निर्विकल्पके सति तदनन्तरमेवास्मन्मते संभवात्। चक्षुःसन्निकृष्टधर्मिकत्त्वं हि चक्षुःसन्निकृष्टनिष्ठविशेष्यतानिरूपितत्वम्। न च क्षणविलम्बः शपथनिर्णेय इति वाच्यम्। एतस्य मूलकृता स्वयमेवाग्रे वक्ष्यमाणतया अस्य कल्पस्य एकक्षणविलम्बेनैव प्रत्यक्षं जायत इत्यभिप्रायेणैव प्रवृत्तत्त्वात्। अन्यथा चाक्षुषप्रकारतापन्नेत्यत्र प्रकारतात्त्वेन तत्प्रवेशनार्थोऽपि कुतो न निरस्त इत्यलम्।

कालान्तरीयतत्पुरुषीयचक्षुःसन्निकृष्टधर्मिकचाक्षुषप्रकारत्त्वोपलक्षितधूमत्त्वस्याधुनापि सत्त्वादधुनापि तत्पुरुषस्य धूमत्त्वेन निखिलधूमप्रत्यक्षापत्तिरतः प्रकारतापन्ने त्युक्तम् प्रकारताविशिष्टेत्यर्थकम्। एवं च तादृशप्रकारतोपलक्षितधूमत्त्वस्य तदानीं सत्त्वेऽपि तादृशप्रकारताविशिष्टस्य तदानीं विरहान्न दोषः। तत्पुरुषीयत्वक्सन्निकृष्टधर्मिकस्पार्शनप्रकारतापन्नधूमत्त्वेन धूमत्त्वप्रकारकनिखिलधूमविशेष्यकचाक्षुषं मा भूदिति कार्यकारणतावच्छेदककोटौ चाक्षुषत्त्वनिवेशः।

ननु धूमत्त्वप्रकारकचाक्षुषमात्मनि, धूमत्वं च धूमे इति व्यधिकरणयोस्तयोः कथं कार्यकारणभाव इत्यत आह तत्र तु इति। अलौलिकं मुख्यविशेष्यत्त्वमिति। प्रत्यासत्तिरित्यन्वयः। प्रथमं चक्षुरादिसन्निकर्षः, ततो धूमधूमत्त्वयोर्निर्विकल्पकं, ततो धूम इत्याकारकं धूमत्त्वप्रकारकं चाक्षुषं, ततो धूमत्त्वेन निखिलधूमप्रत्यक्षं तत्र तृतीयक्षणोत्पन्नलौकिकप्रत्यक्षस्यापि विशेष्यतासम्बन्धेन धूमे सत्त्वात्, तत्पूर्वं च धूमत्त्वप्रकारकचाक्षुषविरहाद् व्यभिचारः स्यादिति अलौकिकत्वस्य विशेष्यत्त्वविशेषणमित्याह तेनेति। चाक्षुषे इति। न व्यभिचार इत्यन्वयः। प्राथमिकं = लौकिकसविकल्पकम्। विशेष्यतायां मुख्यत्त्वविशेषणफलयाह धूमकालीन इति। अत्र ज्ञानलक्षणया घटांशे धूमस्य भानमिति अलौकिकविशेष्यत्वं धूमेऽस्ति। किन्तु मुख्यत्त्वं विशेष्यतायां नास्ति। घटे एव मुख्यविशेष्यतायाः सत्त्वात्। प्रकारतान्यविशेष्यत्त्वं हि तत्। धूमे या धूमत्त्वनिरूपिता विशेष्यता सा घटनिरूपितप्रकारतैवेति न तस्या मुख्यत्त्वम्। एवं च धूमस्य तदानीं चक्षुरसन्निकृष्टतया तादृशधर्मिकचाक्षुषप्रकारतापन्नधूमत्त्वस्य प्रागसत्त्वेऽपि न व्यभिचार इति भावः। धूमत्त्वनिष्ठप्रकारतानिरूपितालौकिमुख्यविशेष्यतायाः प्रत्यासत्तित्त्वमिति तु फलितम्। तेन धूमत्त्वेन निखिलधूमप्रत्यक्षमेव कम्बुग्रीवादिमत्त्वोपनीतविषयकं तत्र न दोषः। एवं चैतल्लाभार्थमेव धूमत्त्वप्रकारकेत्युक्तं न तु कार्यतावच्छेदकधर्मकोटौ तदन्तर्भाव इति ध्येयम्। अन्तर्भाव्यापीति। एवं तत्पुरुषीयसुरभित्त्वप्रकारकघ्राणजत्त्वावच्छि-

❀ जागदीशी ❀

कारणतावच्छेदकविशिष्टस्य अव्यवहितपूर्वत्वापेक्षणाच्च न कालान्तरीयचक्षुः संयोगादिकमादायातिप्रसङ्गः।

न च लौकिकसन्निकर्षस्य नानात्वात् संयोगाद्येकतरस्य निवेशेऽन्यजायमानप्रत्यक्षस्थले व्यभिचार इति वाच्यम्। चक्षुर्निष्ठलौकिकचाक्षुषजनकताघटकसम्बन्धत्वेन चक्षुर्लौकिकसन्निकर्षमात्रस्यैव प्रविष्टत्वादिति।

❀ काशिकानन्दी ❀

त्वं प्रति तदीयघ्राणेन्द्रियसन्निकृष्टघ्राणजप्रकारतापन्नसुरभित्वं हेतुरित्याद्यप्यूह्यम्।

कालान्तरीयचक्षुःसंयोगोपलक्षितधर्मिकचाक्षुषप्रकारताविशिष्टस्य कालान्तरीय चक्षुःसंयुक्तधर्मिकचाक्षुषप्रकारतोपलक्षितस्य च धूमत्वस्य अधुनापि तत्पुरुषस्य संभवादतिप्रसङ्गोऽत आह कारणतावच्छेदकविशिष्टेति।

संयोगाद्येकतरस्य निवेशे इति। चक्षुः सम्बद्धेत्यत्र सम्बद्धत्वघटकतया संयोगाद्येकतरस्यैव सम्बन्धस्य प्रवेशे इत्यर्थः। अन्यतः=संयुक्तसमवायादितः। प्रत्यक्षस्थले=रूपत्वादिना निखिलरूपादिप्रत्यक्षस्थले। व्यभिचार इति। तत्र संयोगेन चक्षुः सम्बद्धविशेष्यकचाक्षुषप्रकारतापन्नरूपत्वादेर्विरहादिति भावः। न च रूपत्वप्रकारकचाक्षुष प्रति संयुक्तसमवायसम्बन्धेन चक्षुःसम्बद्धविशेष्यकचाक्षुषप्रकारतापन्नरूपत्वस्य कारणत्वोक्तौ न दोषः। कार्यकारणतावच्छेदककोटौ तत्तद्धर्मस्य विशिष्य निवेशस्यावश्यकत्वेनानन्तकार्यकारणभावस्य सर्वैरेवाङ्गीकरणीयत्वादिति वाच्यम्। एवं सति चक्षुः संयुक्ते घटे यस्य रूपत्वभ्रमः, तस्य तदुत्तरं रूपत्वेन निखिलरूपप्रत्यक्षानापत्तेः संयुक्तसमवायसम्बन्धेन चक्षुःसम्बद्धधर्मिकचाक्षुषप्रकारतापन्नरूपत्वस्य तत्र विरहाद्।

चक्षुर्निष्ठेति। चक्षुर्निष्ठा या लौकिकचाक्षुषजनकता, तद्घटकसम्बन्धत्वेनेत्यर्थः। संयोग—संयुक्तसमवायाद्याश्च तथाविधाः सम्बन्धाः। रूपत्वेन रूपप्रत्यक्षकाले रूपत्वे घटभ्रमस्थले च संयुक्तसमवायेन संयोगेन च चक्षुः सम्बद्धविशेष्यकचाक्षुषप्रकारतापन्नतायाः रूपत्वे सत्त्वाददोषः। चक्षुर्लौकिकसन्निकर्षमात्रस्यैवेति। घ्राणादिलौकिकसन्निकर्षत्वेनानुगमाऽसंभवाच्चक्षुरिति। एवं च चक्षुर्निष्ठलौकिकचाक्षुषजनकताघटकसम्बन्धेन चक्षुःसम्बद्धविशेष्यकचाक्षुषप्रकारतापन्नत्वं फलितम्। संयोगत्वेन रूपेण त्वक्संयोगस्यापि चाक्षुषजनकताघटकत्वाद् विनश्यदवस्थचक्षुः संयोगजनितधूमत्वादिप्रकारक त्वग्धूमसंयोगकालीनचाक्षुषोत्तरं धूमत्वेन निखिलधूमप्रत्यक्षापत्तिवारणाय चक्षुः सम्बद्धे त्युक्तम्।

आलोकसंयोगादिनिष्ठरूपचाक्षुषजनकताघटकत्वसमवायिसमवेतत्वादिसम्बन्धेन चक्षुः सम्बद्धत्वं द्रव्यत्वादौ वर्त्तते चक्षुःसमवायिनि तेजःपामाणौ द्रव्यत्वसत्त्वात्। तथा च विनश्यदवस्थचक्षुःसन्निकर्षजनितजातित्वप्रकारकचाक्षुषोत्तरं जातित्वेन निखिलजातीनां चाक्षुषापत्तिः। चक्षुः समवायिसमवेतद्रव्यत्वधर्मिकचाक्षुषप्रकारतापन्नजातित्वस्य तत्र सत्त्वादतः चक्षुर्निष्ठेति जनकताविशेषणम्।

## ❀ काशिकानन्दी ❀

ननु लौकिकश्रौत्रप्रत्यक्षजनकताघटकसम्बन्धः समवायः समवेतसमवायश्च । एवं च यत्र शब्दसमवेतसत्ताया जातित्वेन श्रौत्रप्रत्यक्षं शब्दविगमप्रयुक्तसन्निकर्षविगमश्च तदनन्तरं जातित्वेन निखिलजातिश्रौत्रप्रत्यक्षापत्तिः । श्रोत्रेऽपि सत्तायाः सत्त्वेन श्रौत्रजनकतावच्छेदकसमवायेन श्रोत्रसम्बद्धसत्ताधर्मिकश्रौत्रप्रकारतापन्नजातित्वस्य तत्र सत्त्वादिति चेन्न । शब्दवृत्तित्वविशिष्टसमवेतत्वस्य स्वसमवेतशब्दसमवेतत्वादेश्चैव श्रौत्रप्रत्यक्षजनकतावच्छेदकत्वोपगमात् । अन्यथा लौकिकप्रत्यक्षस्यापि तत्र दुर्वारता स्यात् । एवं च शब्दवृत्तित्वविशिष्टसमवेतत्वसम्बन्धेन श्रोत्रसम्बद्धत्वस्य सत्तायां विरहान्नोक्तदोषावकाशः ।

ननु चक्षुः संयुक्तघटादिसमवेतद्रव्यत्वस्य जातित्वेन प्रत्यक्षकाले सन्निकर्षविगमस्तदुत्तरमपि जातित्वेन निखिलजातिप्रत्यक्षं स्यात् । चक्षुःसंयुक्ताऽऽकाशादिसमवेतद्रव्यत्वधर्मिकचाक्षुषप्रकारतापन्नजातित्वस्य सत्त्वादिति चेन्न, न हि संयुक्तसमवायमात्रस्य तादृशसमवायत्वेन चाक्षुषजनकताघटकत्वम् तथा सति घटगतमहत्त्वोद्भूतरूपादिकं समवायिसमवेतत्वादिसम्बन्धेन द्रव्यत्वादावादायाकाशादावपि द्रव्यत्वादिलौकिकचाक्षुषापत्तेः । किन्तु महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नचक्षुःसंयुक्तसमवायादिरेव । आकाशस्य चक्षुःसंयुक्तत्वेऽपि महत्त्वावच्छिन्नत्वोद्भूतरूपावच्छिन्नत्वयोस्तत्र विरहेणादोषः । एवं च चक्षुःसंयुक्ताकाशादिसमवेतद्रव्यत्वधर्मिकचाक्षुषप्रकारतापन्नजातित्वमादाय नोक्तस्थले जातित्वेन निखिलजातिप्रत्यक्षम् । महत्त्वाद्यवच्छिन्नचक्षुः संयुक्तसमवेतधर्मिकचाक्षुषप्रकारतापन्नजातित्वविरहात् । न च महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नचक्षुःसंयुक्तसमवायस्य व्यापारविधया हेतुत्वेनैवाकाशे द्रव्यत्वचाक्षुषापत्तिवारणसंभवेन चक्षुर्निष्ठजनकतायां महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नचक्षुः संयुक्तसमवेतत्वत्वादिनाऽवच्छेदकत्वं न कल्प्यते किन्तु संयुक्तसमवेतत्वत्वादिनैवेति उक्तदोषतादवस्थ्यमेवेति वाच्यम् । यतः चक्षुर्निष्ठेत्यादिजगदीशग्रन्थः संयुक्तसमवायादेर्व्यापारत्वं नास्तीत्यभिप्रायेणैव प्रवृत्तः । अन्यथा चाक्षुषजनकताश्रयसम्बन्धत्वेनैवसंयोगादीनामनुगमसंभवेनावच्छेदकत्वनिवेशानावश्यकत्वप्रसङ्गात् । चक्षुर्मनःसंयोगादेरेव सर्वत्र व्यापारतासंभवः । किं च विनिगमनाविरहेण संयुक्तसमवायत्वेन व्यापारता, महत्त्वाद्यवच्छिन्नसंयुक्तसमवायत्वेन संसर्गतेत्येव किं न स्यात् । किं च कारणतावच्छेदकधर्मकोटौ महत्त्वाद्यवच्छिन्नत्वप्रवेशे उपस्थितिगौरवात् कारणतावच्छेदकसंसर्गतावच्छेदककोटावेव तत्प्रवेशः ।

नन्वेवमपि द्रव्यत्वेन निखिलद्रव्यप्रत्यक्षकाले यत्र चक्षुःसन्निकर्षविगमस्तत्र तदुत्तरमपि द्रव्यत्वेन निखिलद्रव्यप्रत्यक्षं स्यात् । चक्षुः संयुक्ताऽऽकाशविशेष्यकचाक्षुषप्रकारतापन्नद्रव्यत्वसत्त्वात् । न हि महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नचक्षुःसंयुक्तत्वं चाक्षुषजनकताघटकसम्बन्धः । महत्त्वादेः कारणान्तरत्वेनैवातिप्रसङ्गभङ्गेन महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नसंयुक्तत्वादेः कारणतावच्छेदकसंसर्गत्वे मानाभावादिति चेन्न, निरुक्तचाक्षुषजनकताघटकसम्बन्धेन चक्षुःसम्बद्धयोग्यविशेष्यकचाक्षुषप्रकारतापन्नधूमत्वादेः कारण-

## ❁ काशिकानन्दी ❁

स्वोक्तया दोषाभावत्। आकाशस्य चक्षुःसंयुक्तत्वेऽपि तस्य योग्यत्वविरहात्। संयुक्तयोग्यविशेष्यकत्वं च चक्षुःसंयोगाधिकरणीभूता या योग्यव्यक्तिस्तन्निष्ठविशे कत्वम्। न तु चक्षुः संयुक्तवृत्तित्वे सति योग्यवृत्तिर्योग्यमात्रवृत्तिर्वा या विशेष्यता रूवकत्वमिति नोक्तदोषतादवस्थ्यम्। न वा द्रव्यत्वेन निखिलद्रव्यप्रत्यक्षोत्तरं पुन नुपपत्तिः।

ननु यत्र चक्षुःसंयुक्तघटसमवेतद्रव्यत्वादेर्जातित्वेन प्रत्यक्षोत्पत्तिकाले चक्षु संयोगविगमप्रयुक्तसन्निकर्षविगमस्तदानीमेव च पटेन सह चक्षुःसंयोगस्तत्र चक्षुः पटसमवेतद्रव्यत्वविशेष्यकचाक्षुषप्रकारतापन्नजातित्वमादाय जातित्वेन निखिल प्रत्यक्षापत्तिः। वस्तुतस्तत्र क्षणविलम्बेनैव तादृशचाक्षुषेण भवितव्यत्वादिति चेन्न, विलम्बं विनैव तत्र चाक्षुषोत्पादेऽपि क्षतिविरहात्। यदि च तत्र क्षणविलम्बेनैव त्वेन निखिलजातिप्रत्यक्षमित्याग्रहस्तदा स्वप्रयोज्यविशेष्यताख्यविषयताकालीनो यः निष्ठलौकिकचाक्षुषजनकताघटकसम्बन्धस्तेन सम्बन्धेन चक्षुः सम्बद्धत्वं विवक्षणीयम्। पक्षे चक्षुःसम्बद्धस्य योग्यत्वं न वक्तव्यम्। चक्षुराकाशसंयोगप्रयोज्यविशे एवाऽप्रसिद्धेः। नचैवं चक्षुर्निष्ठेति विशेषणं व्यर्थम्। स्वसमवायिचक्षुरवयवसमवे प्रयोज्यविशेष्यत्वाऽप्रसिद्ध्यैवादोषादिति वाच्यम्। द्रव्यत्वेन निखिलद्रव्यप्रत्यक्ष यत्र चक्षुःसंयोगविगमस्तदुत्तरं द्रव्यत्वेन निखिलद्रव्यप्रत्यक्षापत्तेः। आलोकसं समवायेन चाक्षुषजनकतया चाक्षुषजनकतावच्छेदकसमवायसम्बन्धेन चक्षुर्विशिष्टस्या विशेष्यकचाक्षुषप्रकारतापन्नद्रव्यत्वसत्वात्। समवायस्यैकतया चक्षुःसमवायाऽ लोकसंयोगीयसमवायप्रयोज्यविशेष्यतायास्तदानीं सत्वाद्।

अथ लौकिकपदं किमुपात्तम्। चक्षुर्निष्ठचाक्षुषजनकतावच्छेदकसम्बन्धत्वेनैव मसंभवात्।

यत्तु कालिकेन चक्षुष्मानितिप्रत्यक्षोत्तरं कालिकेन चक्षुषा निखिलचक्षुष्मतां प्र भवतीति तदनुरोधेन कालिकस्यापि चक्षुर्निष्ठचाक्षुषजनकतावच्छेदकसम्बन्धत्व सिद्ध एवं च धूमत्वादिना धूमादिविषयकचाक्षुषकाले यत्र चक्षुर्धूमसंयोगविगमस्तत्र तदुत्त धूमत्वेन निखिलधूमप्रत्यक्षं स्यात्। कालिकेन चक्षुः सम्बद्धताया धूमेऽक्षततया तद चाक्षुषप्रकारतापन्नत्वस्य धूमत्वे सत्वादिति लौकिकपदम्। तदुपादाने कालिकस्य लौ चाक्षुषजनकताघटकत्वविरहेणादोषादिति।

तदसत्। सखण्डभूते चक्षुषि परम्परासम्बद्धस्य चक्षुष्ट्वस्यैव चक्षुष्मतां प्रत्यक्षजन चक्षुषि जनकताविरहेणैवोक्तदोषाऽप्रसक्तेः। न च तद्व्यक्तित्वेन चक्षुर्व्यक्तेः कालि वैशिष्ट्यस्य यत्र प्रत्यक्षं तत्र लाघवात् चक्षुष एव कारणत्वं नतु चक्षुष्ट्वस्य तद्व्यक्ति वेति कालिकस्यापि कारणतावच्छेदकत्वं स्यादिति वाच्यम्। तादृशचक्षुर्व्यक्तेर्नाशान निखिलचक्षुष्मतां प्रत्यक्षानुपपत्तेः। तदनुरोधेन स्वाश्रयतद्व्यक्तेः कालिकेनाधिक निष्ठविशेष्यतासम्बन्धेन चक्षुष्ट्वस्यैव कारणताया वक्तव्यतया सर्वत्रैव लाघवात् कालि

## ❀ काशिकानन्दी ❀

चक्षुर्विशिष्टालौकिकप्रत्यक्षं प्रति स्वाश्रयतद्व्यक्त्यधिकरणनिष्ठविशेष्यतासम्बन्धेन चक्षुष्ट्वस्यानुगतकारणतायाः सिद्धेः।

यदपि—कालिकसम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति कालिकसम्बन्धेन चक्षुष्ट्वेन सामान्यतः कार्यकारणभावः। न च कालिकसम्बन्धान्तर्भावेण कार्यकारणभावे मानाभाव इति वाच्यम्। संयोगसंयुक्तसमवायादीनां सम्बन्धानामननुगततया चाक्षुषत्वेन चक्षुष्ट्वेनानुगतकार्यकारणभावालाभात्। न च समवायसम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति स्वसंयुक्तमनःसंयुक्तत्वसम्बन्धेन चक्षुष्ट्वेनानुगतकार्यकारणभावसंभव इति वाच्यम्। आत्मनां विभुत्वेन एकपुरुषीयचक्षुः संयुक्तमनः संयोगस्य पुरुषान्तरेऽपि सत्त्वेन चक्षुर्विहीनस्य पुरुषान्तरस्यापि चाक्षुषप्रसङ्गात्, स्वसंयुक्तमनःसयोगत्वादिना कारणतावच्छेदकत्वे गौरवाद्, विनिगमनाविरहेणापि कालिकेन कार्यकारणभावसिद्धेश्च। एवं च कालिकस्यापि चाक्षुषजनकतावच्छेदकतया विनश्यदवस्थचक्षुः संयोगजनितधूमत्वप्रकारकचाक्षुषोत्तरं धूमत्वेन निखिलधूमप्रत्यक्षापत्तिः, कालिकेन चक्षुर्विशिष्टधूमधर्मिकज्ञानप्रकारतापन्नधूमत्वस्य तत्राक्षतत्वादतो लौकिकपदम्। न च कालिकेन लौकिकचाक्षुषत्वावच्छिन्नं प्रत्यपि कालिकेन चक्षुष्ट्वेन हेतुतया तद्दोषतादवस्थ्यमिति वाच्यम्। लाघवेन चाक्षुषत्वस्यैव कार्यतावच्छेदकतया लौकिकचाक्षुषत्वस्य कार्यतानवच्छेदकतयैव दोषाभावात्। चक्षुर्निष्ठलौकिकचाक्षुषत्वावच्छिन्नजन्यतानिरूपितजनकताया एव प्रवेशात्। न चैवं चक्षुर्निष्ठलौकिकविषयत्वावच्छिन्नजन्यतानिरूपितजनकताघटकसम्बन्धत्वेनैवानुगमसंभवेन चाक्षुषपदमनर्थकमिति वाच्यम्। लौकिकविषयताकप्रत्यक्षं प्रति तादात्म्येन विषयस्य विषयत्वेन हेतुतया तादात्म्यस्य लौकिकविषयत्वावच्छिन्नजन्यतानिरूपितजनकताघटकसम्बन्धतया द्रव्यत्वप्रकारकसामान्यलक्षणाजन्यचाक्षुषोत्तरं चक्षुः संयोगनाशेऽपि द्रव्यत्वप्रकारकचाक्षुषापत्तेः। तादात्म्यसम्बन्धेन चक्षुर्विशिष्टचक्षुर्निष्ठविशेष्यतानिरूपितचाक्षुषप्रकारतापन्नद्रव्यत्वसत्त्वात्। चक्षुषोऽपि द्रव्यतया द्रव्यत्वेन निखिलद्रव्यप्रत्यक्षीयविशेष्यतायाश्चक्षुष्यपि सत्वाद्। न च चाक्षुषपदनिवेशेऽपि कथं दोषवारणं, लौकिकचाक्षुषत्वावच्छिन्नं प्रत्यपि विषयस्य तादात्म्येन हेतुत्वादिति वाच्यम्। लाघवेन लौकिकविषयत्वस्यैव कार्यतावच्छेदकत्वात्। अन्यथा स्पार्शनत्वादिकमादाय नाना कार्यकारणभावप्रसङ्गात्। न च ततोऽपि लाघवात्प्रत्यक्षत्वं जन्यप्रत्यक्षत्वं वा तादात्म्यावच्छिन्नविषयत्वावच्छिन्नजनकताकजन्यतावच्छेदकं न तु लौकिकविषयत्वमिति वाच्यम्। तथा सति विनष्टघटाद्युपनीतप्रत्यक्षानुपपत्तेरिति मतम्।

तदप्यसत्। कालिकेन चाक्षुषत्वावच्छिन्नं प्रति कालिकेन चक्षुषः कारणत्वे मानाभावात्। तथा सति विनिगमनाविरहेण घटादेरपि कालिकेन तत्कारणतापत्तेः। अपि च जन्यप्रत्यक्षत्वस्यैव कार्यतावच्छेदकत्वसंभवेन चाक्षुषत्वस्पार्शनत्वादिकमादाय नानाकार्यकारणभावकल्पने गौरवम्। किं च जन्यद्रव्यानधिकरणाद्यात्मकप्रलयपूर्वमन्तिमचक्षुषो द्रव्यान्तरेण संयोगः, उत्तरकालं चाक्षुषोत्पत्तिः चक्षुर्नाशश्च तत्र व्यभिचारः। कालिकेन

❀ काशिकानन्दी ❀

चाक्षुषाधिकरणतत्कालोत्पन्नक्रियादौ कालिकेन चक्षुषो विरहात्। सर्वेषां चक्षुषां तद् नाशात्। चक्षुषो निमित्तकारणतया चाक्षुषोत्पत्तिकाले चक्षुर्विरहेऽपि चाक्षुषोत्प संभवात्। विनश्यदवस्थचक्षुः संयोगेनैव विनश्यदवस्थचक्षुषाऽपि चाक्षुषजनने बाध भावादिति चेत्।

अत्र ब्रूमः। घटकपदार्थानां जन्यत्वामादाय इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारत्व त्वादिसामान्यलक्षणाया व्यापारतया करणत्वं चक्षुरादीनामेव। तेषां च कारणत्वं स युक्तविशेष्यकज्ञानप्रकारतापन्नद्रव्यत्वादिमत्त्वसम्बन्धेन। एवं च चाक्षुषजनकताव दकसम्बन्धत्वस्य स्वसंयुक्तविशेष्यकचाक्षुषप्रकारतापन्नद्रव्यत्वादावपि सत्वाद्। विनश्यदवस्थचक्षुर्घटसंयोगेन घटत्वप्रकारकचाक्षुषमुत्पादितं तदानीमेव अविनश्यदवस्थपटचक्षुःसंयोगप्रयुक्तद्रव्यत्वप्रकारकपटविशेष्यकचाक्षुषप्रयुक्तनिखिलद्रव्यवि यकाऽलौकिकप्रत्यक्षमुत्पन्नं तत्र तदुत्तरं घटत्वेन निखिलघटप्रत्यक्षापत्ति चक्षुःसंयुक्तपटविशेष्यकचाक्षुप्रकारतापन्नद्रव्यत्ववत्त्वसम्बन्धेन चक्षुर्विशिष्टो घटस्तद्विशेष्यकचाक्षुषप्रकारतापन्नघटत्वस्य तदानीं सत्वात्। लौकिकपदोपादाने तु निरु परम्पराया लौकिकचाक्षुषजनकताघटकत्वं नास्तीति न दोषः। न चोक्तसम्बन्धेन चक्षु कारणत्वे मनःसंयोगस्यैव व्यापारत्वसंभवात् चक्षुःसम्बद्धविशेष्यकज्ञानप्रकारताप धूमत्वादेः कुतो व्यापारत्वमङ्गीक्रियत इति वाच्यम् संयुक्तसमवायादिवदस्यापि व्यापार संभवात्। मिश्राणां मते संयोगादेरिव सामान्यलक्षणाप्रत्यासत्तेरपि इन्द्रियादिनिष्ठका तावच्छेदकसम्बन्धत्वाच्चेति।

चाक्षुषादौ लौकिकत्वं चाखण्डधर्मविशेषः। न तु संयोगाद्यन्यतमजन्यत्वम्। अन गमात्। अन्यतमत्वस्यानुगतत्वे तेनैवानुगमसंभवे लौकिकचाक्षुषजनकतावच्छेदकसम्ब त्वेनानुगमवैफल्यात्। नापि लौकिकसन्निकर्षप्रयोज्यत्वं चाक्षुषादौ लौकिकत्वम्। सन्नि लौकिकत्वाऽनिर्वचनात्। तथा च लौकिकप्रत्यक्षजनकत्वमेव सन्निकर्षे लौकिकत्व साक्षात्करोमीतिप्रतीतिप्रयोजकविषयताकत्वं वा चाक्षुषादौ लौकिकत्वम्। लौकिकविषय वच्छिन्नजन्यतायाः प्रवेशाच्च न सुरभिचन्दनमित्यादिचन्दनलौकिकचाक्षुषीयसौरभादिवि त्वावच्छिन्ननिरूपितजनकतावच्छेदकसम्बन्धमादाय दोषः।

ननु चाक्षुषपदं किमर्थम्। न च लौकिकप्रत्यक्षत्वावच्छिन्नं प्रति विषयस्य तादात्म्ये हेतुतया द्रव्यत्वेनाखिलद्रव्यप्रत्यक्षोत्तरं विगतचक्षुःसन्निकर्षपुरुषस्य पुनर्द्रव्यत्वेनाखि द्रव्यप्रत्यक्षापत्तिः। तादात्म्येन चक्षुर्विशिष्टचक्षुर्विशेष्यकचाक्षुषप्रकारतापन्नद्रव्यत्वसत्वात् विषयत्वेन रूपेण चक्षुष्यपि लौकिकचाक्षुषजनकतासत्त्वे बाधकाभावादिति वाच्य विषयत्वस्य विषयस्वरूपत्वे तस्यानन्ततया चक्षुरन्तर्भावेण कारणतायां मानाभावात् चक्षुषोऽतीन्द्रियत्वेन लौकिकचाक्षुषस्य विषयतया तत्राऽभावात्। विषयतात्वेनानुगमे स्वप्रयोज्यविषयताकालीनत्वनिवेशपक्षे चक्षुस्तादात्म्यप्रयोज्यविशेष्यत्वाऽप्रसिद्धेश्चेति चेद

अत्राहुः। लौकिकप्रत्यक्षत्वादिकं न चक्षुरादिकार्यतावच्छेदकं त्वगिन्द्रीयादि

❀ जागदीशी ❀

केचित्तु चक्षुःसंयुक्तविशेष्यकचाक्षुषाऽव्यवहितोत्तरचाक्षुषत्वावच्छिन्नं प्रति तादृशचाक्षुषप्रकारतापन्नधूमत्ववत्त्वेन हेतुत्वम् । तेन चक्षुर्निष्ठतादृशजनकताया असत्त्वेऽपि न क्षतिरिति वदन्ति ।

न चैवमपि पुष्पादौ सौरभत्वभ्रमाज्जायमानस्य चाक्षुषस्य सौरभमुख्यविशेष्यकत्वं स्यात् । तथा च बहिरिन्द्रियाणां स्वायोग्यमात्रनिष्ठमुख्यविशेष्यताकज्ञानाऽजनकत्वनियमो भज्येतेति वाच्यम् ।

❀ काशिकानन्दी ❀

प्रत्यक्षे व्यभिचारात् । अतश्चाक्षुषत्वप्रवेशः । न च लौकिकचाक्षुषत्वमपि न कार्यतावच्छेदकं किन्तु चाक्षुषत्वमेव चक्षुःकार्यतावच्छेदकमिति वाच्यम् । संयोगाद्यन्यतमसम्बन्धेन चक्षुष्ट्वेन, लौकिकचाक्षुषत्वेनापि कार्यकारणभावस्वीकारादिति । मतान्तरं तु केचित्त्वित्यादिना स्वयमेवानुपदं वक्ष्यति ।

परे तु चक्षुःसम्बद्धविशेष्यकचाक्षुषप्रकारत्वं नाम चक्षुःसम्बन्धविशिष्टविशेष्यतानिरूपितचाक्षुषप्रकारत्वम् । वैशिष्ट्यं च स्वप्रयोज्यत्व,-स्वसामानाधिकरण्य,-स्वकालीनत्वैतत्त्रितयसम्बन्धेन । एवं च लौकिकादिपदमुपलक्षणमात्रम् । विनश्यदवस्थघटचक्षुःसंयोगजनितघटत्वप्रकारकचाक्षुषस्य द्रव्यत्वसामान्यलक्षणाजन्यज्ञानविषयपटचक्षुःसंयोगकालीनस्य स्वसंयुक्तपटविशेष्यकज्ञानप्रकारतापन्नद्रव्यत्ववत्वसम्बन्धेन चक्षुः सम्बद्धनिष्ठविशेष्यताकत्वेपि घटत्वप्रकारतानिरूपितविशेष्यताया निरुक्तत्रितयसम्बन्धेन चक्षुः संयोगवैशिष्ट्यविरहेणैवादोषादिति परिष्कुर्वन्ति ।

तादृशचाक्षुषेति । चक्षुःसंयुक्तविशेष्यकचाक्षुषेत्यर्थः । हेतुत्वमिति । एवं चक्षुःसंयुक्तसमवेतविशेष्यकचाक्षुषाऽव्यवहितोत्तरचाक्षुषत्वाद्यवच्छिन्नं प्रति तादृशचाक्षुषप्रकारतापन्नरूपत्ववत्त्वादिना हेतुत्वं द्रष्टव्यम् । तादृशजनकतायाः=लौकिकचक्षुषत्वावच्छिन्नजन्यतानिरूपितचक्षुर्निष्ठजनकतायाः । असत्त्वेऽपीति । लौकिकचाक्षुषत्वं न कार्यतावच्छेदकम् । किन्तु चाक्षुषत्वमात्रं चक्षुष्ट्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकम् । अलौकिकप्रत्यक्षेऽपि चक्षुषः करणत्वादिति भावः । संयोगसंयुक्तसमवायाद्यन्यतमसम्बन्धावच्छिन्नाया लौकिकचाक्षुषत्वावच्छिन्नजन्यतानिरूपितजनकतायाश्चाक्षुषि स्वीकारे क्षतिविरहादाह—वदन्तीति ।

सौरभत्वभ्रमादिति । इदं सौरभमित्याकारकभ्रमादित्यर्थः । सौरभमुख्यविशेष्यकत्वं स्यादिति । चक्षुःसम्बद्धपुष्पविशेष्यकचाक्षुषप्रकारतापन्नसौरभत्वस्य सौरभनिष्ठमुख्यविशेष्यताप्रयोजकत्वादिति भावः । इष्टापत्तिमाशङ्क्याह— तथाचेति । स्वाऽयोग्येति । स्वं—चक्षुरादि । तदयोग्यं--सौरभादि । तन्मात्रनिष्ठमुख्यविशेष्यताकज्ञानं— सौरभ-

## ❀ काशिकानन्दी ❀

मिति सौरभाणीति वाऽऽकारकम् । स्वयोग्यत्वं च स्वप्रयोज्यलौकिकविषयताश्रयत्वम्
यद्वा सावयवावयवकद्रव्यत्व-तादृशद्रव्यरूपत्वाद्यन्यतमत्त्वादिकमेव चक्षुरादियोग्यत्वं वाच्यं
अन्यथा उत्पन्नविनष्टद्रव्यादेः चक्षुःप्रयोज्यलौकिकाऽविषयतया योग्यत्वं न स्यात्
तदयोग्यताया इष्टत्वे तु प्रागुक्तमपि युक्तम् ।

स्वयोग्यमुख्यविशेष्यकज्ञानजनकत्वनियमः स्वयोग्यमात्रनिष्ठमुख्यविशेष्यताकज्ञान
जनकत्वनियमो वा बहिरिन्द्रियाणां न संभवति । उत्पन्नशिशोर्द्वितीयक्षणे एव
चक्षुर्ध्वंसस्तत्र व्यभिचारात् । तदीयचक्षुषा स्वयोग्यमुख्यविशेष्यकज्ञानाऽजननात् ।
तादृशनियमस्य सौरभाणीत्याद्याकारकचाक्षुषोत्पादस्वीकारेऽपि भङ्गाऽभावेन प्रकृता
नुपयोगित्वं चेत्यतो नञ्द्वयप्रवेशः । प्रमेयाणीत्याद्याकारकनिखिलप्रमेयविषय
काऽलौकिकचाक्षुषस्य चक्षुरयोग्यरसादिमुख्यविशेष्यताकत्वाद् व्यभिचार इति मात्र
पदम् ! मात्रपदाघटितपाठस्यापि तद्घटितपाठार्थं एव तात्पर्यं द्रष्टव्यम् । तथा
स्वयोग्याऽवृत्तित्वे सति स्वायोग्यवृत्तिर्या मुख्यविशेष्यता तादृशविशेष्यताकज्ञाना
जनकत्वं बहिरिन्द्रियाणामिति फलितम् । प्रमेयाणीत्याद्याकारकचाक्षुषस्य स्वाऽयोग्य
गन्धादिमुख्यविशेष्यकत्वेऽपि स्वयोग्ये घटादावपि तदीयमुख्यविशेष्यतायाः सत्त्वाददोषः
प्रमेयाणीत्याद्याकारकज्ञानीयनिखिलप्रमेयनिष्ठा एकैव विशेष्यता न तु नाना तथा च
तदीयगन्धादिनिष्ठविशेष्यतायाश्चक्षुरयोग्यमात्रनिष्ठतया उक्तनियमस्याऽप्रतिष्ठापत्तेः
यदि च विषयभेदेन विशेष्यताया भेदाङ्गीकर्तृमतेन प्रमेयाणीत्याकारकप्रत्यक्षे तादृशनियमे
व्यभिचारो दोष एवेत्युच्यते तदा स्वयोग्याऽवृत्तित्वे सति स्वायोग्यवृत्तिविशेष्यताकज्ञान
जनकत्वं नाम स्वयोग्यवृत्तिविशेष्यताप्रयोजकतानिरूपितप्रयोज्यताविरहवती या स्वा
योग्यवृत्तिमुख्यविशेष्यता तादृशविशेष्यताकज्ञानाऽजनकत्वं विवक्षणीयम् । प्रमेयाणीत्या
कारकज्ञानीयाया गन्धादिनिष्ठाया घटादिनिष्ठायाश्च प्रयोजकं न भिन्नमिति तादृशाज
नकत्वं सुघटम् । "सौरभाणि चन्दनं चेत्याकारकज्ञानीयसौरभनिष्ठविशेष्यतायाश्चन्दन
विशेष्यता प्रयोजकप्रयोज्यत्वविरहान्न तादृशं चाक्षुषम् । प्रकारताभेदेन विशेष्यता
भेदोऽङ्गीकार्यः । अन्यथा विशेष्यताया विशेष्यस्वरूपत्वेन विशेष्यभेदेनैव
इत्यङ्गीकारे प्रमेयाणि सौरभं चेत्याकारकसमूहालम्बनाङ्गीकारापत्तेः । सौरभनिष्ठायाः सौरभ
निरूपितायाः प्रमेयत्वसामान्यलक्षणाप्रयोज्याऽभिन्नत्वात् । प्रकारताऽपि न प्रकारभेदमात्रेण
भिन्ना । किन्तु सावच्छिन्नत्वनिरवच्छिन्नत्वाभ्यामपि । अन्यथा प्रमेयवन्ति सौरभं चेत्या
रकज्ञानस्वीकारापातात् । मुख्यविशेष्यताप्रयोजकत्वं च मुख्यविशेष्यतात्वावच्छिन्नप्रयो
ज्यतानिरूपितप्रयोजकत्वं तेन यत्किंचित्प्रयोजकमादाय न सौरभाणीत्याकारकचाक्षुषापत्तिः
तादृशप्रयोजकत्वं च सामान्यलक्षणाया एव । अथवा मुख्यविशेष्यताप्रयोजक
सामान्यलक्षणाप्रयोज्यताविरह एव विशेष्यतायां प्रवेशनीयः । तेन नव्यमतेऽप्यव्या
प्तिरिति ध्येयम् ।

❀ दीधितिः ❀

एवं चाणुत्वेन यत्किञ्चिदणूपस्थितावपि सकलाणुगोचरो

❀ जागदीशी ❀

सामान्यभेदेन कार्यकारणभावभेदात् चाक्षुषस्थले सौरभत्वाद्यन्तर्भावेण हेतुत्वस्यैवाऽकल्पनात्, चाक्षुषस्य सौरभमुख्यविशेष्यकत्वाऽसंभवात् । एवं स्पार्शनादावप्यूह्यमिति संक्षेपः ।

बहिःपर्यन्तस्य फलमाह एवंचेति । प्रथमं सकलाणूपस्थितौ ज्ञान लक्षणैव संभवत्यत उक्तं यत्किञ्चिदिति । अणूपस्थितावपीति ।

❀ काशिकानन्दी ❀

सामान्यभेदेन = धूमत्वघटत्वादिरूपसामान्यभेदेन । कार्यकारणभावभेदादिति । धूमत्वादेः कार्यकारणभावावच्छेदककोटौ प्रवेशादिति भावः । अकल्पनादिति । तत्पुरुषीयसौरभत्वप्रकारकघ्राणजत्वावच्छिन्नं प्रत्येव घ्राणेन्द्रियसन्निकृष्टघ्राणजप्रकारतापन्नसौरभत्वेन चैत्र कारणत्वमुच्यते, न तु तत्पुरुषीयसौरभत्वप्रकारकचाक्षुषत्वावच्छिन्नं प्रतीति भावः । स्पार्शनादावपीति । अलौकिकमुख्यविशेष्यतासम्बन्धेन घटत्वादिप्रकारकस्पार्शनत्वाद्यवच्छिन्नं प्रत्यपीत्यर्थः । ऊह्यमिति । तत्पुरुषीयत्वगादिसन्निकृष्टधर्मिकतदीयस्पार्शनादिप्रकारतापन्नघटत्वादेः कारणत्वमूह्यमित्यर्थः ।

बहिः पर्यन्तेति । बहिरिन्द्रियस्य लौकिकः सम्बन्ध इत्यत्रेत्यादिः । चाक्षुषत्वादिप्रवेशफलमाहेति यावत् । ज्ञानलक्षणैवेति । तदनन्तरं जायमानसकलाणुगोचरमानसप्रत्यक्षे प्रत्यासत्तिरिति शेषः ।

इदन्त्ववधातव्यम् । ज्ञानलक्षणैवेत्यादिजगदीशग्रन्थः प्राचामनुरोधेन । स्वमते सामान्यलक्षणाविरहेऽणुत्वेन निखिलाणूपस्थितावपि ज्ञानलक्षणया निखिलाणुगोचरमानसाऽसंभवात् । तत्प्रकारकप्रत्यक्षं प्रत्येव तद्विषयकज्ञानत्वेन हेतुताया अग्रे वक्ष्यमाणत्वात् । अणव इत्याकारकज्ञानस्य बाधनिर्णयाऽप्रतिबध्यत्वेन असंसर्गाऽग्रहवशादपि तथा मानसासंभवादिति ।

दीधितौ—अणुत्वेनेति सावधारणम् । तेन द्रव्यत्वेन सकलाणुगोचरोपस्थितिसत्त्वेऽणुत्वसामान्यलक्षणया निखिलाणूपस्थित्यस्वीकारेऽपि ज्ञानलक्षणया निखिलाणूनां मानसप्रत्यक्षे भानसंभवेऽपि न क्षतिरिति केचित् । अत्राहुः । अणुत्वेन निखिलाणूपस्थितिसत्त्वे अणुत्वेन यत्किञ्चिदणूपस्थितिध्रौव्येण यत्किञ्चित्पदस्य निखिलाणूपस्थित्यव्यावर्त्तकतया तदुपादानानर्थक्यं स्यात् । तस्माद् यत्किञ्चिदणूपस्थितावित्यस्याणवन्तरानुपस्थितिकालीनयत्किञ्चिदणूपस्थितावित्यर्थो वाच्यः । तत्र चाणुत्वेनेत्यन्वेति । तथा चाणवन्तरानुपस्थितिकालीनाणुत्वप्रकारकयत्किञ्चिदणूपस्थितावित्यर्थलाभेन द्रव्यत्वेन निखिलाणूपस्थितिसत्त्वे तथाविधाणूपस्थितेरसंभवेनैवादोषादिति । अत्र पूर्वपक्षिण

❀ दीधितिः ❀

मानसो बोध इति वदन्ति।

❀ जागदीशी ❀

अपिना घटत्वेन यत्किञ्चिद्घटोपस्थित्यादेःपरिग्रहः, अतो न न्यूनत्वम्। मानसो बोध इति। तथा चाऽलौकिकमुख्यविशेष्यतया तत्प्रकारकमानसप्रत्यक्षं प्रति ज्ञानप्रकारतापन्नत्वेनैव हेतुत्वमिति भावः। वदन्तीत्य-

❀ काशिकानन्दी ❀

आशयः—सर्वं वाक्यं सावधारणमिति न्यायेन अणुत्वेन यत्किञ्चिदणुमात्रोपस्थितिकाले इत्यर्थलाभात् अणुत्वेनाणवन्तरोपस्थितिविरहकालीनाणुत्वप्रकारकयत्किञ्चिदणूपस्थितिकाले इत्यर्थं स्यैव तादृशवाक्यतो लाभसंभवाद् द्रव्यत्वेन निखिलाणूपस्थितिकालेऽपि निरुक्ताव अणुत्वेन यत्किञ्चिदणूपस्थितेः अविरुद्धत्वमिति। उत्तरपक्षिणामाशयः सावधारणवाक्यार्थस्य लक्षणां विनाऽसंभवाद् अणुत्वेन यत्किञ्चिदणूपस्थितावित्यस्य अणुत्वप्रकारकाणवन्तरोपस्थित्यसमानकालीनाणुत्वप्रकारकाणूपस्थितावित्यर्थे लक्षणास्वीकारापेक्षया अणवन्तरानुपस्थितिकालीनाणुत्वप्रकारकयत्किञ्चिदणूपस्थितावित्यर्थे लक्षणास्वीकार एव श्रेयानिति।

अतो न न्यूनत्वमिति। न च घटत्वेन यत्किञ्चिद्घटोपस्थितिः घटत्वेन यत्किञ्चिद्घटप्रत्यक्षपूर्विका। तथा च तदानीमेव घटत्वेन निखिलघटप्रत्यक्षसंभवात् तज्जनितस्मरणोपनयेनैव मानसे निखिलघटमानसंभव इति शङ्क्यम्। यत्र शब्दादिना विनश्यदवस्थचक्षुःसंयोगादिना वा घटत्वेन यत्किञ्चिद्घटविषयकज्ञानं जनितं न तु सर्वघटविषयकं ज्ञानं कदापि तत्पुरुषस्योत्पन्नं तदीयघटत्वप्रकारकनिखिलघटविषयकमानसप्रत्यक्षानुपपत्तेरेव दुर्वारत्वात्।

इन्द्रियसन्निकृष्टत्वाद्यप्रवेशेन कार्यकारणभावमाह—तथाचेति। तत्प्रकारकेति। अणुत्वघटत्वादिप्रकारकेत्यर्थः। ज्ञानप्रकारतापन्नत्वेनैवेति। एवकारेण इन्द्रियसन्निकृष्टत्वादिप्रवेशव्युदासः।

घटत्वेन यत्किंचिद्घटोपस्थित्युत्तरजायमाननिखिलघटविषयकमानसस्य प्रागनुपस्थितेऽपि सत्त्वात्, तत्पूर्वं च तद्विषयकज्ञानविरहाद् व्यभिचारवारणाय कार्यतावच्छेदककोटौ तत्प्रकारकत्वम्। पूर्वं ज्ञानादिप्रकारकज्ञानविरहेऽपि घटमहं जानामीत्याद्याकारकज्ञानप्रकारकमानसादलौकिकेति। समवायेन घटत्वप्रकारकज्ञानोत्तरं सम्बन्धान्तरेण घटत्वप्रकारकभूतलादिमुख्यविशेष्यकमानसवारणाय समवायादितत्तत्सम्बन्धस्य कारणतावच्छेदकत्वाच्यम्। तथा सति अलौकिकविषयतया घटत्वप्रकारकमानसस्य घटत्वेऽपि सत्वात् तत्र समवायेन घटत्वविरहाद् व्यभिचार इति विशेष्यताप्रवेशः समवायावच्छिन्नघटत्वप्रकारतानिरूपितविशेष्यतार्थकः। यत्किंचिद्घटतदधिकरणावगाहि 'घटवानि' ति ज्ञानो-

❀ दीधितिः ❀

एतेन धूलीपटले धूमत्वभ्रमे तत्र च वह्निव्याप्तिग्रहे तत्राऽसता धूमत्वेन धूमेषु व्याप्त्यग्रहाद् धूमदर्शनाद् वह्न्यनुमितिर्न स्यात् ।

❀ जागदीशी ❀

स्वरसः । तद्बीजं तु लाघवात् तत्प्रकारकज्ञानत्वेन तद्विषयकज्ञानत्वेन वा तत्प्रकारकतदाश्रयप्रत्यक्षे हेतुत्वं, न तु तदिन्द्रियजन्यत्वादिकं नियामकम् । इन्द्रियभेदेन कार्यकारणभावकल्पने च गौरवात् । तत्तदिन्द्रियकरणकसामान्यवत्त्वबोधसामग्र्याः सहकारित्वोपगमादेवातिप्रसङ्गभङ्गादित्यादिकं नव्यमते व्यक्तीभविष्यति ।

एतेनेति । परास्तमित्यनेनान्वयः । एतेन = इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्नस्य प्रत्यासत्तित्वविवक्षणेन । विशेषणतापदस्येन्द्रियसम्बद्धसमवेतातादात्म्यधर्मार्थकत्वे दोषमाह– धूलीत्यादि । धूमदर्शनादिति । अस्य

❀ काशिकानन्दी ❀

निखिलघटतदधिकरणयोरवगाहि 'घटवन्ती'तिमानसानभ्युपगमान्मुख्येति । प्रागनुपस्थितघटस्य प्रकारत्वायोगोऽत्र युक्तिः ।

तत्प्रकारकेति । अत्र मते निर्विकल्पकोत्तरं सविकल्पके सति तदुत्तरमलौकिकप्रत्यक्षम् । तद्विषयकज्ञानत्वेनेति मते निर्विकल्पकोत्तरजायमानप्रत्यक्षमपि घटत्वादिना निखिलघटविषयकं भवतीति विशेषः । अत्र मते प्राथमिकसविकल्पकं प्रति तद्विषयकत्वेन अलौकिकं प्रति तत्प्रकारकत्वेन हेतुत्वमित्येवं कार्यकारणभावद्वयमपि नास्ति । पूर्वकल्पे दोषान्तरं तु नव्यमतव्याख्यानावसरे स्वयं वक्ष्यति ।

वस्तुतस्तु ज्ञानप्रकारतापन्नधूमत्वादिकं ज्ञानविषयतापन्नधूमत्वादिकं वा हेतुरिति युक्तं वक्तुम् । सामान्यस्य प्रत्यासत्तित्वमिति कल्पस्यैव प्रकृतत्वादिति विभावनीयम् ।

ननु तत्प्रकारकतदाश्रयप्रत्यक्षं प्रति तद्विषयकज्ञानत्वादिनैव हेतुत्वे यत्राऽसन्निकृष्टघटत्वविषयकस्मरणं तत्र तदुत्तरं घटत्वेन निखिलघटविषयकप्रत्यक्षापत्तिरित्यत आह— तत्तदिन्द्रियेति । तत्तच्चक्षुरादीन्द्रियकरणको यो घटत्वाद्यात्मकसामान्यवत्त्वबोधः चाक्षुषाद्यात्मकः तत्सामग्र्या इत्यर्थः । न केवलं घटत्वज्ञानमेव घटत्वप्रकारकतदाश्रयप्रत्यक्षे हेतुः । अपि तु तत्तदिन्द्रियसन्निकर्षादिरपि । घटत्वप्रकारकलौकिकप्रत्यक्षे तस्य नियतत्वादत्रापि तत्सहकारित्वोपगमादिति भावः ।

दीधितौ—एतेनेति । तत्र च = धूलिपटले च । वह्निव्याप्तिग्रहे = धूलिपटलसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसामानाधिकरण्यात्मकवह्निव्याप्तिग्रहे । तत्रासता = धूलीपटलेऽविद्यमानेन । धूमत्वेन धूमेषु व्याप्त्यग्रहाद् = धूमत्वेन धूमघटितानां धूमनिष्ठनिखिलव्याप्तीनामग्रहात् । यद्वा—तत्राऽसता = धूलीपटलसमाना-

❀ दीधितिः ❀

हेत्वभावेन परामर्शानुत्पादात् ।

❀ जागदीशी ❀

पक्षे इत्यादिः । हेत्वभावेन = धूमधर्मिकव्याप्तिग्रहात्मकहेतोरभावेन ।

❀ काशिकानन्दी ❀

धिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसामानाधिकरण्यात्मकव्याप्तौ ताहशसामा धिकरण्यत्वात्मकपरम्परासम्बन्धेनावर्त्तमानेन । धूमत्वेनेति । अस्य व्याप्त्यग्रहादि व्याप्तिपदार्थेऽन्वयः । धूमेषु व्याप्त्यग्रहात् = धूमनिष्ठानां व्याप्तीनामग्रहात् । व्या न्योन्याभावघटिता । धूमदर्शनादिति । पर्वतादाविति शेषः । तदपि उभयान्वयि । वह्न्य नुमितिर्नस्यादिति । अभ्रान्तस्येत्यादिः ।

जागदीश्यां—धूमधर्मिकेति । धूमधर्मिकस्य धूमसमानाधिकरणान्योन्याभावप्रति गितानवच्छेदकवह्निसामानाधिकरण्यग्रहात्मकस्य अनुमितिहेतोर्व्याप्तिग्रहस्याभावेनेत्यर्थः अत्र दीधितौ धूमेष्वित्यस्य धूमघटितेत्यर्थकत्वे तदुपादानमावश्यकम् । अन्यथा तु धूमे ति दीधितिः धूमधर्मिकेति टीका च वस्तुगतिमनुरुध्य नेया ।

अयमत्राभिप्रायः—धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसा नाधिकरण्यात्मिका व्याप्तिरेवानुमितिहेतुरित्यभिप्रायक एवायं ग्रन्थः । तद्बी प्रागभिधानात् । एवं च धूलीपटले धूमत्वभ्रमे सति धूमत्वेन निखिलधूमान ग्रहे धूलीपटलसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसामानाधिकरण्यग्रहे धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसामानाधिकरण्यात्मकव्याप्तेरग्र पश्चाद् दृश्यमानधूमे तदुपनीतभानासंभवेनानुमितिर्न स्यात् । धूमविरहस्थलीयधूलीप समानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसामानाधिकरण्यस्य धूमेऽभावा न च अधिकरणत्व-वृत्तित्वादिभिरुपस्थितनिखिलाधिकरणवृत्त्याद्यन्तःपातिधूमेषु धूली गृहीतधूमत्वस्याऽसंसर्गाग्रहवशाद् भाने सति तत्तद्धूमघटितनिखिलव्याप्तिग्रहणं सुघटमे वाच्यम् । अधिकरणत्वेनोपस्थितेषु धूमत्वस्य निर्धर्मितावच्छेदककतया असंसर्गाग्रहवशा भानस्यासंभवाद् धूमात्मकमधिकरणमित्याद्याकारिकैव धूमत्वप्रकारिका प्रतीतिःस्या एवं च धूमात्मकाधिकरणाश्रयवृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकवह्निसामानाधि रण्यग्रहेऽपि अनुमितिहेतुभूतधूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्नि मानाधिकरणो धूम इत्याकारकव्याप्तिग्रहविरहेणानुमितिर्न संभाविता । किं च अधिकर त्वेनोपस्थिते धूमत्वस्यासंसर्गाग्रहवशाद् भानोपगमे धूमात्मकाधिकरणाधिकरणवृत्त्य न्याभावेत्याद्याकारकव्याप्तिग्रहोपगमे च एकरूपेणोपस्थितपदार्थानामसंसर्गाग्रहवश विशेषणविशेष्यविधया भानस्य अनुभवविरुद्धस्य कल्पनं स्यात् । न हि घटत्वादि निखिलघटानामुपस्थित्यनन्तरमसंसर्गाग्रहवशेन "घटवान् घट" इत्याद्याकारि

❀ दीधितिः ❀

किं च धर्मिणि दोषवशान्नयनेनाऽगृह्यमाणेन स्मरणप्र-

❀ जागदीशी ❀

ज्ञाने तदिन्द्रियजन्यत्वस्यानुक्तौ दोषमाह—धर्मिणीति । धर्मिणि योग्य-सन्निकर्षसत्त्वे धर्मस्य चाक्षुषो दुर्निवार इत्यत उक्तं दोषवशादिति । बाष्पत्वादिभ्रमजनकदोषवशाद् धूमत्वाद्यग्रहसंभवादिति भावः । स्मरणप्र-

❀ काशिकानन्दी ❀

प्रतीतिःकस्यचिदनुभवपथमधिरोहति । अन्यथा घटोपर्यपि घटान्तरसंभवेन "घटवान् घटः," "घटवद्घटवान् घटः" इत्याद्याकारिकाःप्रतीतयोऽसंसर्गाग्रहवशाज्जायेरन् । एवं चाधिक-रणत्वेनोपस्थितेषु धूमत्वस्याऽसंसर्गाग्रहशाद् भानोपगमे तस्यैव तेनैव रूपेण प्रकारतया विशेष्यतया भानं दुरुपपादमेव । एवं वृत्तित्वादिना उपस्थितेष्वपि । तत्रापि परम्परया एकरूपोपस्थितयोःप्रकारविशेष्यभावाभ्यां भानस्य स्वीकर्त्तव्यतापत्तेः ।

यत्तु अत्यन्ताभावघटितव्यामेरपि धूमत्वेन धूमघटितत्वाद् धूमसमानाधिकरणा-त्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य प्रागग्रहेण पश्चाद् धूमदर्शनेन वह्न्यनुमितिर्न स्यादिति व्याख्यानम् । तन्मन्दम् । धूलीपटलसमाना-धिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य धूमे वर्त्तमानस्य ग्रहादपि वह्न्यनुमितेःसंभवात् । धूमत्वावाच्छिन्नप्रकारतानिरूपिता-धिकरणत्वावच्छिन्नप्रकारतानिरूपितवृत्तितात्वावच्छिन्नप्रकारतानिरूपितात्यन्ताभावत्वा-वच्छिन्नप्रकारतानिरूपितप्रतियोगित्वप्रकारतानिरूपितावच्छेदकत्वप्रकारतानिरूपिताभावप्रकार-तानिरूपितवह्नित्वप्रकारतानिरूपितावच्छिन्नसामानाधिकरण्यप्रकारतानिरूपितधूमत्वावच्छिन्न-प्रकारताकज्ञानत्वेनैव परामर्शस्यानुमितिहेतुत्वात् । धूलीपटलांशे धूमत्वस्य भ्रमात्मिकाया एव व्याप्तिबुद्धेरुदयेऽपि क्षत्यभावात् । धूमत्वेन धूलीपटलावगाहिव्याप्ति-ज्ञानोत्तरोपनयस्य तदंशे भ्रमात्मकत्वं वा धूमांशे धूमत्वावगाहित्वं वेति निश्चेतुमशक्य-त्वात् । अन्योन्याभावघटितव्याप्त्युपादाने तु धूलीपटलसमानाधिकरणभेदप्रतियोगितान-वच्छेदकवह्निविशेषसामानाधिकरण्यस्य धूमे विरहाद् धूलीपटलांशमात्रे धूमत्वभ्रमवतोऽपि तादृशव्याप्त्युपनीतभानं दुर्घटमेव । अधिकं तु प्रागुक्तम् ।

तदिन्द्रियजन्यत्वस्य = चाक्षुषत्वादेः । धर्मिणि = धूमादौ । धर्मस्य = धूमत्वादेः । दीधितौ धर्मिणीत्यादि । यत्र धूमेन सह इन्द्रियसन्निकर्षोऽस्ति किन्तु दोषवशाद् धूमत्वादिविषयकज्ञानं नोत्पन्नं, धूमत्वादिविषयकस्मरणं तु जातं तत्रापीन्द्रियसम्बद्धधूमा-दिविशेष्यकस्मरणात्मकज्ञानप्रकारीभूतधूमत्वादिसत्त्वेन तेन रूपेण निखिलधूमविषयका-लौकिकचाक्षुषापत्तिः स्यात् । अतः इन्द्रियसम्बद्धविशेष्यज्ञानं चाक्षुषाद्यात्मकं वक्तव्यम् । एवं च धूमादिना इन्द्रियसन्निकर्षस्य धूमत्वप्रकारकस्मरणस्य च सत्वेऽपि चाक्षुषविरहेण

## ❀ दीधितिः ❀

कारीभवता सामान्येन, गृह्यमाणेन वा लौकिकसन्निकर्षविगमे चाक्षुषज्ञानापत्तिरिति परास्तम्। सामान्यं च सखण्डा—

## ❀ जागदीशी ❀

कारीभवतेत्यनेन ज्ञानप्रकारत्वमाविष्कृतम्। सामान्येनेति। अस्य चाक्षु ज्ञानोत्पत्तिरित्यग्रेतनेन सम्बन्धः। लौकिकसम्बन्धस्यानपेक्षणे दोषमाह गृह्यमाणेन वेति। धर्मिणि नयनेन गृह्यमाणेन वा सामान्येनेत्यर्थः। लौकिकसन्निकर्षविगमेऽपि क्षणमात्रं चाक्षुषोत्पत्ताविष्टापत्तिरिति वाच्य तथा सति तादृशचाक्षुषात्मकस्यैव कारणस्य सत्वादुत्तरोत्तरं सामान्यज याश्चाक्षुषधारायाःप्रसङ्गादिति भावः।

ननु सामान्यस्य हि प्रत्यासत्तित्वे घटशून्यत्वादिप्रत्यासत्त्या तदाश्रयप्र न स्यात्। घटशून्यत्वादेः सामान्यत्वाभावाद् अत आह सामान्यं चे सामान्यलक्षणेत्यत्र सामान्यपदार्थश्चेत्यर्थः। सखण्डं=स्वरूपतो ज्ञानप्रका

## ❀ काशिकानन्दी ❀

न धूमत्वेन निखिलधूमप्रत्यक्षापत्तिः। गृह्यमाणेनेत्यादि। यत्र प्रथमं चक्षुःसन्नि धूमत्वप्रकारकचाक्षुषं ततोऽलौकिप्रत्यक्षं चक्षुःसंयोगनाशश्च, प्राथमिकसविकल्पककाले तन्नाशः तत्रापि स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वादिरूपालौकिकसन्नि चक्षुःसम्बद्धत्वस्य धूमादावक्षततया तद्विशेष्यकज्ञानप्रकारतापन्नधूमत्वेन नि धूमप्रत्यक्षापत्तिः स्याद्। लौकिकपदोपादाने च नोक्तदोषः।

तादृशचाक्षुषात्मकस्यैव=अलौकिकचाक्षुषात्मकस्यैव। कारणसत्वादिति। वाहिकालौकिचाक्षुषानुरोधेन तस्यापि कारणत्वात्, लौकिकत्वस्य कारणतावच्छेदकचा त्वादिविशेषणत्वे च तुल्यगौरवतया आक्षेपायोगाच्चेति भावः।

सामान्यस्य=जात्यात्मकसामान्यस्य। एवमुत्तरत्र। घटशून्यत्वादिप्रत्यासत्त्या घटाभावादिप्रत्यासत्त्या। न च घटवत्त्वप्रत्यासत्त्येत्येव वक्तव्यम्। घटवत्त्वस्यापि जा विरहादिति घटशून्यत्वपर्यन्तानुधावनमयुक्तमिति वाच्यम्। सखण्डे चाखण्डमित्यग्रे व्यतया तत्रापि परम्परासम्बद्धस्य घटत्वस्य प्रत्यासत्त्या तस्य जातित्वरूपसामान्यत्वा घटशून्यत्वं तु प्रत्यासत्तिरिति वक्ष्यति। तदाश्रयेति। घटाभावाश्रयीभूतभूतलादी सर्वत्र सामान्यपदार्थस्य द्वैविध्याभावादाह—सामान्यलक्षणेत्यत्रेति। घटकत्वं प्रत्ययार्थः। तस्य च सामान्यपदार्थेत्यत्र सामान्यपदेऽन्वयः। न च घटत्वाद्यात्मकसाम घटाभावाद्यात्मकसामान्यस्य वा एकैकैव विधेति कथं सामान्यस्य द्वैविध्यमिति वाच्यम्। न्यपदार्थत्वं घटत्वे घटाभावे चेति सामान्यपदार्थत्वेन रूपेण घटत्वादेरपि द्वैविध्ये

❀ दीधितिः ❀

खण्डभेदेन द्वेधा । सखण्डे चाखण्डमेव—

❀ जागदीशी ❀

भिन्नम् । अखण्डं=स्वरूपतः प्रकारीभूतम् । द्वेधेति । तथा च तत्र सामान्यपदं मात्रपरमिति भावः ।

ननु घटत्वप्रकारेणैकघटवत्ताप्रकारकप्रत्यक्षोत्तरं घटवत्त्वप्रत्यासत्त्या सर्वस्य घटवतः प्रत्यक्षं न स्याद् इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्न-घटव्यक्तेः घटान्तरवत्यसत्त्वादत आह सखण्डे चेति । कचिदित्यादिः । तेन

❀ काशिकानन्दी ❀

नावात् । प्रकारीभूतभिन्नमिति । घटाभावादीति शेषः । प्रकारीभूतमिति । घटत्वादीति शेषः । तत्र=सामान्यलक्षणेत्यत्र । समानानां भाव इति व्युत्पत्तिलभ्य-सामान्यत्वस्यापि तद्व्यक्तित्वादिसामान्ये वक्ष्यमाणे विरहादाह—धर्ममात्रपरमिति । एक-घटवत्तेति । सकलघटवत्ताप्रत्यक्षं तत्तदधिकरणे भ्रमात्मकमेवेत्यत एकेत्युक्तम् । एतेन घट-वत्ताप्रत्यक्षे घटत्वप्रकारकप्रत्यक्षस्य पूर्वमावश्यकतया तदानीं सामान्यलक्षणया निखिलघट-ज्ञानसंभवात्तदुत्तरं घटान्तरवतोऽपि प्रत्यक्षं सुघटमेवेति परास्तम् । इन्द्रियसम्बद्धविशेष्यक-ज्ञानप्रकारताया निखिलघटे विरहात् । अभ्रान्तस्य तत्तदधिकरणे निखिलघटभानायोगात् । न च घटत्वावच्छिन्ना निखिलघटनिष्ठा एकैव प्रकारतेति घटवानित्याकारप्रत्यक्षे निखिलघटे प्रकारतासत्त्वान्न दोषः । घटत्वेन रूपेण निखिलघटभानस्य भ्रमत्वाभावादिति वाच्यम् । तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वेन तस्यापि भ्रमत्ववारणायोगात् । न च तदभाववत्त्वं यदि तद्व्यक्तिप्रतियोगिकाभाववत्त्वं तदा विशिष्टाभावोभयाभावादिकमा-दाय सर्वस्यापि ज्ञानस्य भ्रमत्वापत्तिः । यदि च तद्धर्मावच्छिन्नाभाववत्त्वं तदा घटत्वावच्छि-न्नाभावस्य भूतले विरहेण घटत्वेनापरघटस्य तत्तदधिकरणे भानेऽपि न भ्रमत्वप्रसक्तिरिति वाच्यम् । तद्व्यक्तित्वावच्छिन्नाभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं भ्रम-त्वमित्युपगमात् ।

ननु गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रत्ययस्य प्रमात्वापत्तिवारणाय प्रकार-ताविशिष्टप्रकारताकज्ञानत्वमेव भ्रमत्वं वक्तव्यम् । वैशिष्ट्यं च स्वावच्छेदकावच्छिन्नाभाव-वन्निष्ठविशेष्यतानिरूपितत्वसम्बन्धेनेति घटत्वेन घटान्तरस्य तत्र भानेऽपि न भ्रमत्वापत्तिः । एवं चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्नघटान्तरवत्त्वेन घटान्तरवतोऽपि प्रत्यक्षसंभवाद् यर्थो घटत्वस्य परम्परासम्बद्धस्य प्रत्यासत्तित्वाभ्युपगम इति चेद् ?

न, प्रकारताविशिष्टप्रकारताकज्ञानत्वं भ्रमत्वमित्यभिप्रायेणैतादृग्ग्रन्थप्रवृत्तेः । वै०स्ववि-शिष्टप्रतियोगिताकाभाववन्निष्ठविशेष्यतानिरूपितत्व-स्वतादात्म्योभयसम्बन्धेन । वै०स्वावच्छेद-कावच्छिन्नत्व-स्वावच्छिन्नत्वोभयसम्बन्धेन । प्रकारता च प्रकारभेदेन भिन्ना । तथा च घटा-न्तरस्य तत्तदधिकरणे भाने भ्रमत्वं स्यादेव ।

❀ दीधितिः ❀

परम्परया सम्बद्धं प्रत्यासत्तिः ।

❀ जागदीशी ❀

घटशून्यत्वादिसखण्डस्य स्वयमेव प्रत्यासत्तित्वेऽपि न क्षतिः । परम्परा तथा च चक्षुःसन्निकृष्टविशेष्यकचाक्षुषप्रकारतावच्छेदकीभूतघटत्व घटत्वावच्छिन्नप्रकारताकचाक्षुषं प्रति हेतुः । अत्रापि कार्यस्यालौकिकमु विशेष्यत्वं कारणस्य तु स्वाश्रयवत्त्वं प्रत्यासत्तिः । न च पूर्वानुपस्थितघ न्तरस्य तादृशचाक्षुषे प्रकारत्वायोग इति वाच्यम् । घटत्वसामान्यलक्षण सकलघटस्योपस्थितिदशायामेव तत्संभवात् । एवं दण्डिमत्त्वादिसाम

❀ काशिकानन्दी ❀

यद्वा घटस्य प्रत्यासत्तित्वेऽतीतानागतघटवतां प्रत्यक्षं न स्यात् । कारणीभूतघ हात् । एकघटवत्तेति च तत्संभवाभिप्रायेणोक्तिः । एवं च प्रकारभेदेन प्रकारताभे पगममते भ्रमत्वस्योक्तरूपतानुपगममते चापि घटत्वस्य परम्परासम्बद्धस्य प्रत्यास मावश्यकम् ।

घटशून्यत्वादिसखण्डस्येति । जात्यखण्डोपाध्यतिरिक्तस्य तस्य स्वरूपतो प्रकारीभूतभिन्नत्वादिति भावः ।

वक्ष्यमाणदोषान्निष्कर्षमाह—तथाचेति । चक्षुःसन्निकृष्टभूतलादिविशेष्यकचाक्षुष प्रकारतायामवच्छेदकघटत्वमित्यर्थः । हेतुरिति । वक्ष्यमाणसम्बन्धेन प्रत्यक्षस्य घट च भूतलवर्त्तित्वादिति । अलौकिकं मुख्यविशेष्यत्वमिति । स्वीयघटत्वावच्छि प्रकारतानिरूपितालौकिकमुख्यविशेष्यतासम्बन्धेन चाक्षुषं प्रतीति तु पर्यवसितार्थः । न प्रागुक्तानां दोषाणामवसरः । पूर्वानुपस्थितघटान्तरस्येति । एकस्यैव दृष्टत्वादिति भावः । तादृशचाक्षुषे=घटवन्तीत्याकारकालौकिकचाक्षुषे । तत्संभ दिति । घटान्तरस्य प्रकारत्वसंभवादित्यर्थः ।

ननु यत्किंचिद्घटस्य वा घटसामान्यस्य वा घटान्तरवति भानम् । आद्ये त्रिवि नाविरहः । घटसामान्यभानसामग्रीसत्त्वात् । द्वितीये तादृशप्रत्यक्षस्य भ्रमत्वापत्ति नं च तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नप्रकारताकज्ञानस्यैव भ्रमतया नोक्तभ्र भ्रमत्वापत्तिरिति वाच्यम् । एवं सति एकस्यैव घटस्य घटत्वेन निखिलघटवति भानोप ऽपि क्षतिविरहादेतावत्प्रयासवैफल्यात् । न च वह्निमत्त्वेन निखिलवह्निमतां भानकालेऽ स्थितवह्न्यन्तराभाने तत्र व्यापकत्वाऽग्रहाद् महानसीयवह्निसामानाधिकरण्यस्य पर्वतीयधूमादावभावादनुमितिर्न स्यादिति वाच्यम् । तदर्थं वह्नित्वेन निखिलवह्नि भानस्य तत्रावश्यकत्वेऽपि वह्निमत्त्वेन वह्निमतां प्रत्यक्षे निखिलवह्निभानस्यानुपयुक्तत्वात् वह्नित्वेन महानसीयवह्निसामानाधिकरण्यस्य पर्वतीयधूमेऽवगाहिनो ज्ञानस्योक्तभ्रमत्व भावेन तत्रापि पर्वतीयवह्निभानस्यानुपयुक्तत्वाच्च । अनुमितौ पक्षधर्मताबला

❀ जागदीशी ❀

स्थलेऽपि तादृशचाक्षुषप्रकारतावच्छेदकतावच्छेदकं दण्डत्वादिकमेव कारणमिति द्रष्टव्यम् ।

❀ काशिकानन्दी ❀

पर्वतीयवह्निमानसंभवात् अनुमितौ पर्वतीयवह्निमानार्थं तदित्यस्यापि वक्तुमशक्यत्वात् । स्वातन्त्र्येण वह्नित्वेन निखिलवह्निज्ञानस्य प्रयोजकत्वसंभवेन वह्निमतां प्रत्यक्षे निखिलवह्निमानानावश्यक्याच्चेतिचेन्न । घटान्तरवति यो घटो वर्त्तते तस्यैव घटवतां प्रत्यक्षे घटान्तरवति तस्मिन् भानं नतु निखिलघटस्य । न च प्रयोजकविशेषण सर्वे घटाः सर्वस्मिन् घटाधिकरणे भासेरन्निति वाच्यम् । प्रत्येकस्मिन् अधिकरणे सकलघटवत्त्वावगाहिज्ञानस्य भ्रमतया तत्प्रयोजकदोषविरहादेव तादृशापत्त्यसंभवात् । भ्रमं प्रति दोषस्यापि प्रयोजकत्वात् ।

**सकलघटस्योपस्थितिदशायामिति** (पृ० ३४) सकलघटोपस्थितिपूर्वकस्थल इत्यर्थः ।

**केचित्तु** मुख्यविशेष्यताप्रकारतयोः प्रयोजकसमवधाने तत्र प्रकारतैव । घटमानयेत्यादौ घटादिमुख्यविशेष्यताप्रयोजकघटादिपदसत्त्वेऽपि घटादीनां प्रकारत्वदर्शनात् । एवं च प्रकृते घटत्वेन निखिलघटानां घटवतां च प्रत्यक्षकाले पूर्वमसंसर्गाग्रहात्मकघटप्रकारताप्रयोजकसद्भावेन युगपदेव घटवत्सु घटानां प्रकारतया भानम् । विशेषणतावच्छेदकप्रकारकज्ञानस्यैव विशिष्टवैशिष्ट्यावगाहिज्ञानहेतुत्वं न तु विशेषणज्ञानस्येति पूर्वानुपस्थितघटस्यापि तत्काले घटत्वेनोपस्थितस्य प्रकारतया भाने बाधकाभावादित्याशयेन सकलघटोपस्थितिपूर्वकस्थले इत्यनुक्त्वा सकलघटोपस्थितिदशायामित्युक्तमिति वदन्ति ।

**तदसत्** । घटादिपदानां घटादिमुख्यविशेष्यताकशाब्दत्वकार्यतावच्छेदककत्वविरहेण घटमानयेत्यादौ घटादौ मुख्यविशेष्यताविरहेऽपि सामान्यलक्षणाया अलौकिकमुख्यविशेष्यताकार्यतावच्छेदककतया घटत्वेन निखिलघटालौकिकप्रत्यक्षस्य घटमुख्यविशेष्यतावश्यकत्वात् तस्य प्रकारत्वासंभवात् ।

**परे तु** घटवानित्याकारप्रत्यक्षोत्तरमेव घटा घटवन्तश्चेत्याकारकसमूहालम्बनज्ञानमुत्पद्यत इत्याशयेन सकलघटोपस्थितिदशायामित्युक्तम् । असंसर्गाग्रहवशाद् सामान्यलक्षणया समुपस्थितघटानां प्रकारतया भानसंभवात् । समूहालम्बने घटस्य मुख्यविशेष्यतयापि भानादेव सामान्यलक्षणाकार्यत्वस्याप्युपपत्तेरिति वदन्ति । तन्न । घटवन्त इति प्रत्यक्षस्य बाधनिर्णयाऽप्रतिबध्यत्वात् ।

**तादृशेति** । चक्षुः सम्बद्धविशेष्यकेत्यर्थः । **दण्डत्वादिकमेवेति** । स्वाश्रयाश्रयवत्त्वसम्बन्धेनेति शेषः । **कारणमिति** । दण्डत्वावच्छिन्नावच्छेदकताकप्रकारताकप्रत्यक्षं प्रतीत्यादिः । तथा च स्वीयदण्डत्वावच्छिन्नावच्छेदकताकप्रकारताकालौकिकमुख्यविशेष्यतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति स्वाश्रयाश्रयवत्त्वसम्बन्धेनचक्षुःसंबद्धविशेष्यतानिरूपितचाक्षुषप्रकारतावच्छेदकतावच्छेदकदण्डत्वं हेतुः ।

## ❀ जागदीशी ❀

एतेन परम्परासम्बन्धेन ज्ञातस्य घटत्वादेः प्रत्यासत्तित्वे 'घटत्ववदि' व फलं स्याद, न तु घटवदि त्याकारकं, स्वप्रकारकप्रत्यक्षं प्रत्येव सामा हेतुत्वादिति परास्तम् ।

ननु चक्षुःसंयुक्तधर्मिणि चक्षुषा समवायेन गृह्यमाणस्य घटत्वादेः कालि दिसम्बन्धेन कालादावपि सत्वात् --

## ❀ काशिकानन्दी ❀

व्याख्यायाः प्रयोजनमाह—एतेनेति । घटत्वाद्यवच्छिन्नप्रकारताकप्रत्यक्षं इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतावच्छेदकघटत्वादेः कारणत्वस्वीकारेणेत्यर्थः । पर सम्बन्धेन ज्ञातस्येति । इन्द्रियसम्बद्धभूतलादिविशेष्यक "घटत्ववद्भूतलमि" त्याका ज्ञानीयस्वाश्रयवत्वादिसम्बन्धावच्छिन्नप्रकारताश्रयस्येत्यर्थः । प्रत्यासत्तित्वे=प्रत्यक्ष घटत्ववदित्येवेति । स्वाश्रयाश्रयत्वसम्बन्धेन घटत्ववदित्याकारकमेवेत्यर्थः । स वत्वसम्बन्धेन घटत्वादेरपि स्वरूपतो भानोपगमात् स्वरूपतो घटत्वप्रकारकज्ञानानु र्नाभिहितेति द्रष्टव्यम् ।

स्वप्रकारकप्रत्यक्षं प्रत्येवेति । एवकारेण स्वाश्रयादिप्रकारकप्रत्यक्षव्यु नः वैतादृशनियमस्वीकारे इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतावच्छेदकस्य कारणतो घटवद्भूतलमित्याकारता ज्ञानस्य दुरुपपादा स्वाश्रयीभूतघटस्यापि तत्र प्रकारत्वात् । घटत्वावच्छिन्नप्रकारताकचाक्षुषत्वस्य कार्यतावच्छेदकत्वाभ्युपगमादेव घटस्य प्रकारत इति वाच्यम् । एवं सति इन्द्रियसम्बद्धे परम्परया प्रकारतापन्नस्य घटत्वस्यापि वच्छिप्रकारताकार्यतावच्छेदकत्वाङ्गीकारेणैव तन्निर्वाहादिति चेन्न । परम्पराश्र घटत्वमात्रप्रकारकघटत्ववद्भूतलमिति प्रत्यक्षत्वस्यापि तत्कार्यतावच्छेदकताया अ न्तव्यतया घटवद्भूतलमित्याकारकप्रत्यक्षोत्तरं घटत्ववदभूतलं घटवद्भूतलमित्याद्या भयप्रकारकालौकिकप्रत्यक्षस्य नियमत उत्पादापत्तेः । न चेन्द्रियसम्बद्धविशेष्यकज्ञा तावच्छेदक घटत्वादेः घटत्वावच्छिन्नप्रकारताकप्रत्यक्षं प्रति कारणत्वोक्तावपि घटव मित्याकारकप्राथमिकप्रत्यक्षकाले इन्द्रियसम्बद्धविशेष्यकज्ञानीयपरम्परासम्बन्धावच्छि प्रकारतापन्नघटत्वसत्वेन निरुक्तोभयाकारप्रत्यक्षस्य दुर्वारत्वमेव । यदि च इन्द्रिय विशेष्यकज्ञानप्रकारतानवच्छेदकत्वं इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्न कारण दीयते तदा घटवद्भूतलमितिज्ञानोत्तरमस्माकमपि न घटत्ववन्ति भूतलानीति प्रत्यक्ष रिति वाच्यम् । यत्र स्वाश्रयाश्रयत्वसम्बन्धेन घटत्ववद्भूतलमित्याकारकमेव प्रा प्रत्यक्षं तदुत्तरमेव निरुक्तोभयाकारालौकिकापत्तेर्दुरुद्धरत्वाद् इन्द्रियसम्बद्धविशेष्य प्रकारतावच्छेदकतापन्नघटत्वादेः घटवन्तीत्याकारप्रत्यक्षकारणताया अवश्यं वाच्यत्वा

धर्मिणि=घटादौ । कालिकादीति । आदिना स्ववृत्तिप्रमेयत्ववत्वादिप कालादावविति । आदिना जगतः परिग्रहः ।

❀ दीधितिः ❀

येन सम्बन्धेन चेन्द्रियसम्बद्धे सामान्यं ज्ञायते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिरिति।

❀ जागदीशी ❀

तन्मुख्यविशेष्यकमपि समवायसम्बन्धावच्छिन्नघटत्वप्रकारकचाक्षुषं स्यादत आह येन चेति। प्रत्यासत्तिः=प्रत्यक्ष जनिका। इतीति।

❀ काशिकानन्दी ❀

केचित्तु स्ववृत्तिप्रमेयत्ववत्त्वादेर्वृत्त्यनियामकतया न तदुपन्यासः। न चैवं धनी चैत्र इत्यादिज्ञानोत्तरं धनेन निखिलधनिनां प्रत्यक्षं न स्यादिति वाच्यम्। धनसम्बन्धित्वेनैव निखिलधनिनामलौकिकप्रत्यक्षसंभवात्। आदिपदग्राह्यं तु दैशिकसम्बन्धो दिक् चेति वदन्ति। तच्चिन्त्यम्।

तन्मुख्यविशेष्यकमपि=कालादिमुख्यविशेष्यकमपि। समवायसम्बन्धावच्छिन्नेति ननु तन्मुख्यविशेष्यकमपि घटत्वप्रकारकचाक्षुषं स्यादित्येव वक्तव्ये समवायसम्बन्धावच्छिन्नघटत्वप्रकारकचाक्षुषापादनं सन्दर्भविरुद्धं,समवायेनेव कालिकेनावच्छिन्नघटत्वप्रकारकचाक्षुषस्याप्यापत्तिसंभवात्। न च कालमुख्यविशेष्यककालिकसम्बन्धावच्छिन्नघटत्वप्रकारकचाक्षुषं चेष्टमेवेति वाच्यम्। समवायावच्छिन्नघटत्वप्रकारताकचाक्षुषोत्तरं कालिकेन घटत्वप्रकारकालौकिकस्योत्पत्तावित्यापत्त्यसंभवात्। अन्यथाऽविशेषेणाबाधितनिखिलसंसर्गैर्घटत्वप्रकारकप्रत्यक्षस्वीकारापातादिति चेन्न। तेन सम्बन्धेन तत्प्रकारकचाक्षुषत्वावच्छिन्नं प्रति तेन सम्बन्धेन इन्द्रियसम्बद्धप्रकारतापन्नस्य कारणत्वोक्तथा उक्तदोषवारणसंभवात्। समवायेन घटत्वप्रकारकप्रत्यक्षकाले कालिकेन तत्प्रकारकज्ञानविरहेण कालिकेन तत्प्रकारकप्रत्यक्षापत्तिविरहात्।

यद्यपि कालादौ समवायेन घटत्वप्रकारकप्रत्यक्षस्य भ्रमतया तज्जनकदोषविरहादेव नापत्त्यसंभवः। यत्र च दोषसमवधानं तत्र कालमुख्यविशेष्यकलौकिकस्यावश्यंभावितयाऽलौकिकस्यापि स्वीकारे क्षतिविरह एव। न च कालादेर्लौकिकप्रत्यक्षजनकसामग्रीविरहस्थले एवापत्तिरिति वाच्यम्। दोषाणामननुगततया तत्र दोषाऽकल्पनेनैवापत्त्यसंभवात्।

तथापि दूरत्वाद्यात्मकोऽनुगतः कश्चित्को दोषविशेषस्तादृशदोषसमवधाने आपत्तिर्भवत्येव। न च कालस्याचाक्षुषतया न तत्र घटत्वप्रकारकचाक्षुषजनकदोषकल्पनासम्भव इति वाच्यम्। कर्मात्मककालस्य चाक्षुषतया तद्विशेष्यकभ्रमजनकदोषकल्पनसंभवादित्यवधेयम्।

ननु संसर्गस्यैवं नियन्त्रणेऽपि समवायेन घटत्वस्य घटे चाक्षुषानन्तरं समवायेन घटत्वाधिकरणस्य कालिकेन घटत्वप्रकारेण चाक्षुषं स्यात्। न च येन सम्बन्धेन घटत्वादेरिन्द्रियसम्बद्धे प्रकारत्वं तेनैव तत्प्रकारकप्रत्यक्षं प्रत्येव कारणत्वोक्तया न दोष इति वाच्यम्। तथा सति घटवद्भूतलमित्यादिप्रत्यक्षे स्वाश्रयाश्रयत्वसम्बन्धेन हेतुत्वानापत्तेरतो

❀ दीधितिः ❀

ननु यत्र नानाधिकरणप्रत्यासन्न एकव्यक्तिघटा

❀ जागदीशी ❀

तथा चालौकिकमुख्यविशेष्यतया समवायादिसम्बन्धावच्छिन्नघटत्व प्रकारकचाक्षुषं प्रति समवायसम्बन्धावच्छिन्नचाक्षुषप्रकारतापन्नघटत्वं समवायेनैव हेतुरतो नातिप्रसङ्ग इति भावः।

अखण्डसामान्यव्यक्त्यभिप्रायेण शङ्कते नन्विति। सामान्यतासम र्थमाह नानेति। नानाधिकरणविशेष्यकप्रत्यक्षप्रकार इत्यर्थः। एतेनैक वृत्तिधर्मस्यापि स्वाश्रयप्रत्यक्षं प्रति हेतुत्वादिदं व्यर्थम्, अन्यथा ताद्रूप्ये वस्त्वन्तरे व्याप्तिभ्रमोत्तरं तद्विशिष्टस्य पक्षधर्मताग्रहादनुमित्यनुदयापत्ते परास्तम्। एकव्यक्तिरित्यनेनाखण्डत्वसूचनम्।

पदार्थस्य द्वैविध्याद् भावात्मकं सामान्यमुक्त्वाऽभावात्मकं तदाह

❀ काशिकानन्दी ❀

विशिष्य कार्यकारणभावमाह—तथाचेति। समवायादिसम्बन्धेत्यादि। एवं घ इत्यादिप्रत्यक्षस्थलेऽपि विशिष्यैव कार्यकारणभावो वक्तव्य इति न दोष इति भावः।

वक्ष्यमाणदोषाद् व्याचष्टे—नानेति। व्याख्याबीजमाह—एतेनेति। एक त्रवृत्तिधर्मस्यापीति। तद्धूमत्वादेरिति शेषः। स्वाश्रयप्रत्यक्षं = स्वाश्रयालौकिक क्षम्। इदं = नानाधिकरणेति विशेषणम्। नानाधिकरणवृत्तिधर्मस्यैव प्रत्यासत्त्व भ्युपगमस्य नानाधिकरणपदसार्थक्योपपादने दोषमाह—अन्यथेति। ताद्रूप्येण = त मत्वादिरूपेण। वस्त्वन्तरे = धूलीपटलादौ। व्याप्तिभ्रमोत्तरं = वह्न्यादिनि व्याप्तिभ्रमोत्तरम्। तद्विशिष्टस्य = व्याप्तिविशिष्टस्य। अनुदयापत्तेरिति। यत्र धू पटलादावयं तद्धूम इत्याकारकभ्रमानन्तरं वह्निव्याप्यस्तद्धूम इत्याकारकव्याप्तिनि स्तदुत्तरं वास्तविकं तद्धूमं पर्वतादौ दृष्ट्वा पूर्वगृहीतव्याप्तिस्मरणपूर्वकं व्याप्तिविशिष्टवैशिष्ट्य गाहिज्ञानात् पर्वते वह्न्यनुमितिस्तत्र तदनुपपत्तिः, वस्तुतस्तद्धूमत्वस्य नानाधि प्रत्यासन्नताविरहेण तेन तद्धूमानुपस्थितौ तत्र तद्घटिताया वा व्याप्तेरग्रहादिति भा परास्तमिति। तद्धूमत्वस्य नानाधिकरणकत्वविरहेऽपि धूलीपटलतद्धूमाद्यात्मकना धिकरणविशेष्यकप्रत्यक्षप्रकारतायाः सत्वादिति भावः। न चैवं सर्वासामेव व्यक्तीनां न धिकरणविशेष्यकप्रत्यक्षप्रकारतासंभवेन नानाधिकरणप्रत्यासन्नत्वविशेषणवैयर्थ्यमेव दुरुद्धरमिति वाच्यम्। यादृशैकव्यक्तिगतधर्मविशेषस्य भ्रमः कुत्रापि कस्यापि न जातस्त नानाधिकरणविशेष्यकप्रत्यक्षप्रकारत्वविरहेण तद्व्यावर्त्तकतया तत्सार्थक्यात्। नाना करणविशेष्यकप्रत्यक्षकारणमित्यर्थ इति क्वचित्पाठः सोऽप्युक्तदिशैव व्याख्येयः।

द्वैविध्यादिति। भावाभावभेदेनेत्यादिः। तदाह = सामान्यमाह। घटः तत्प्रागभा

❀ दीधितिः ❀

तत्प्रागभावादिर्वा अनित्यः प्रत्यासत्तिः तत्र तदभावदशायां तदा प्रत्यासत्त्या तज्ज्ञानानुदयप्रसङ्ग इति चेद्? न, तत्रापि तद्व्यक्तिद्वारा

❀ जागदीशी ❀

तत्प्रागभावादिर्वेति। अनित्य इति। नित्यत्वे तु कार्यकालेऽपि सत्त्वात्तस्य कारणत्वमव्याहतमेव स्यादिति भावः।

तादृशघटादिकं नाखण्डसामान्यं किन्तु सखण्डमेवेत्याशयेन सिद्धान्तयति तत्रापीति। न च तद्व्यक्तौ घटत्वाद्यग्रहेऽपि तद्व्यक्तिप्रकारेण

❀ काशिकानन्दी ❀

कपालद्वये वर्त्तत इति उभयोरपि नानाधिकरणप्रत्यासन्नत्वम् बोध्यम्। कार्यकाले = प्रत्यक्षकाले।

किन्तु सखण्डमेवेत्याशयेनेति। यद्यपि यावतामाश्रयाणां भानं येन सामान्येनोपपाद्यं तावद्वृत्तित्वे सति तावद्वृत्तितावच्छेदकधर्मवत्त्वं तस्य सखण्डत्वं, न च प्रमेयत्वादिकमादाय सर्वत्रैव विशेष्यदलसंभवेन तदुपादानानर्थक्यं, दण्डिमानित्यादौ विशेष्यदलासत्त्वापत्त्या सखण्डत्वानुपपत्तिश्चेति वाच्यम्। सामान्यलक्षणाजन्यज्ञानत्वेनाभिमते मुख्यप्रकारताश्रयो येन सम्बन्धेन मुख्यविशेष्यतानिरूपितप्रकारताश्रये वर्त्तते तत्सम्बन्धावच्छिन्ना या तन्निष्ठवृत्तितावच्छेदकता तदाश्रयधर्मवत्त्वस्य वक्तव्यत्वाद्। एवमखण्डत्वं तावद्व्यक्तिवृत्तित्वमिति शक्यते व्याख्यातुम्। एवं च सखण्डे चाखण्डमिति दीधितौ क्वचिदिति न पूरणीयम्। एवं नानाधिकरणप्रत्यासन्न इति दीधितेर्यथाश्रुतार्थ एव साधुः। नानाऽधिकरणाऽप्रत्यासन्नस्य संयोगादिना घटादेःसामान्यतास्थलेऽखण्डस्य घटत्वादेरेव प्रत्यासत्तितया उक्ततया पुनःशङ्कानुदयेन नानाधिकरणप्रत्यासन्नैकव्यक्त्यात्मकाखण्डस्थले एव शङ्कासंभवात्। सखण्डस्थलमात्रे न परम्परासम्बद्धस्य प्रत्यासत्तित्वं, किन्तु क्वचिदखण्डस्थलेऽपीत्येवंपरतया नन्वित्यादि घटत्वादेरेव प्रत्यासत्तित्वादित्यन्तग्रन्थश्च सुव्याख्यानः। एकव्यक्तिरित्यनेन नाखण्डत्वसूचनमात्रमपि तु अखण्डत्वाभिधानमेवेति उक्तरूपेण क्लिष्टार्थकल्पनं जगदीशस्यायुक्तमेव। न च सखण्डं सावच्छिन्नमित्येवं स्वीकारे सखण्डस्थल एव परम्परया सम्बद्धस्य प्रत्यासत्तित्वमिति नियमलाघवं मतान्तरे तु नैतत्संगच्छते। तथा च व्युत्पादनसरलसरणिसमाश्रयणान्नायुक्तं जगदीशव्याख्यानमिति वाच्यम्। मतान्तरेऽपि साक्षात्प्रत्यासत्तित्वमखण्डस्यैवेति नियमलाघवसत्त्वाद्। जगदीशमते घटशून्यत्वादेः सखण्डतया साक्षात्प्रत्यासत्तितया च तादृशनियमस्य वक्तुमशक्यत्वात्। तथापि एवं प्रकारेणापि दीधितिर्योजयितुं शक्येत्यालोच्यैवं व्याख्यातं जगदीशेन। गदाधरभट्टाचार्यास्तु यथाश्रुतमनुसृत्यैव पुनर्व्याख्यातवन्त इति विवेकिभिरनुद्रष्टव्यम्।

दीधितौ तद्व्यक्तिद्वारा = घटव्यक्तिद्वारा घटप्रागभावव्यक्तिद्वारा च। नच घट-

❀ दीधितिः ❀

प्रत्यासन्नस्य घटत्वादेरेव प्रत्यासत्तित्वात् ।

❀ जागदीशी ❀

तदाश्रयप्रत्यक्षोत्पत्त्या नेदं युक्तमिति वाच्यम् । जातीतरस्य किंचिदवच्छि
प्रकारतानियमेन तद्घटादेः स्वरूपतः प्रकारत्वायोगात् । तद्व्यक्तित्वस्
तद्व्यक्तितादात्म्यविशिष्टसमवायसम्बन्धेन घटत्वादिमत्तायामेव पर्यव
नात् । न च तथापि घटत्वादिसामान्यस्य तदानीं सत्त्वेऽपि तद्व्यक्तिस्वरू
सम्बन्धस्यासत्त्वात् तद्व्यक्तिद्वारा तस्य कारणत्वं दुर्घटमिति वाच्
अलौकिकमुख्यविशेष्यतासम्बन्धेन तद्घटव्यक्तित्वावच्छिन्नप्रकारकच
प्रति चक्षुःसम्बद्धविशेष्यकचाक्षुषप्रकारतावच्छेदकीभूततद्व्यक्तित्वस्य
यवन्निष्ठविशेष्यतासम्बन्धेन हेतुत्वात् ।

❀ काशिकानन्दी ❀

प्रागभावस्य कारणतावच्छेदकसंसर्गकोटौ प्रवेशो नावश्यकः । घटप्रागभावाधिकरणे घ
स्वाश्रयघटव्यक्तिमत्त्वादिसम्बन्धेनैव प्रत्यासत्तितासंभवादिति वाच्यम् । येन सम्बन्धेन
सम्बद्धे सामान्यं ज्ञायते तेनैवाधिकरणानां प्रत्यासत्तिरित्युक्ततया घटप्रागभाव
ज्ञाने घटत्वस्य स्वाश्रयघटवत्त्वसम्बन्धेन प्रकारताविरहेण तस्य कारणतावच्छेदक
त्वानुपपत्तेः ।

तदाश्रयेति । तद्व्यक्त्याश्रयेत्यर्थः । इदं = घटत्वस्य परम्परासम्बद्धस्य प्रत्यासत्ति
जातीतरस्य = जात्यखण्डोपाधीतरस्य । ननु तद्व्यक्तित्वेन घटनिष्ठप्रकारताभ्युपगमे
क्तनियमोपपत्तौ घटत्वस्य प्रकारतावच्छेदकतया भानस्वीकारोऽयुक्तः । तथा च घट
ज्ञातस्य प्रत्यासत्तित्वकथनं दीधितिकारस्यायुक्तमत आह—तद्व्यक्तित्वस्यापि
तादात्म्यविशिष्टेति । वैशिष्ट्यं सामानाधिकरण्येन । पर्यवसानादिति । तादृश
घटत्वादिमत्ताया एव तद्व्यक्तित्वव्यवहारप्रयोजकत्वादिति भावः । तद्व्यक्तिद्वारा
सन्नस्येति दीधितेः तद्व्यक्तिरूपसम्बन्धेन सम्बद्धस्येत्यर्थमालोच्याशङ्कते—नचेति । घट
दिसामान्यस्येति । तद्व्यक्तित्वस्वरूपस्येति शेषः । तदानीं = घटादिविरह
तस्य = घटत्वादेः । दुर्घटमिति । निष्प्रतियोगिकायास्तद्व्यक्तेः कथंचन सम्बन्ध
गमेऽपि "भक्षितेऽपि लशुन" इति न्यायकवलितत्वमेवेति भावः । तद्व्यक्तिद्वारे
तद्व्यक्तिस्वरूपसम्बन्धेनेत्यर्थः, किन्तु तद्व्यक्तिघटितसम्बन्धेनेत्यर्थः । स च सम्बन्ध
क्तिविरहकालेऽपि संभवतीत्याशयेन समाधत्ते—अलौकिकेत्यादि । कार्यकारण
नानात्वाद् घटवानित्याद्याकारकज्ञानस्थले स्वाश्रयाश्रयत्वादेः कारणतावच्छेदकसम्बन्ध
अत तद्विरहे क्षतिविरह इति सूचयन्नाह—तद्घटव्यक्तित्वेति । स्वाश्रयेति । स्वा
च तद्व्यक्तितादात्म्यविशिष्टसमवायेन बोध्यम् । तेन न निखिलघटवतां प्रत्यक्षा
तादृशव्यक्तित्वस्य स्वाश्रयवन्निष्ठविशेष्यतासम्बन्धेन हेतुत्वमनुक्त्वा स्वाश्रयाश्रय

## ❀ काशिकानन्दी ❀

चेदुच्येत तदा तद्व्यक्त्याश्रयत्वस्य कपालादौ तद्व्यक्तिविरहकाले विरहाद् व्यभिचारः स्यादतो विशेष्यतापर्यन्तम् । विशेष्यता तु या काचन सर्वदा तत्र सुलभैव ।

ननु स्वाश्रयत्वन्निष्ठविशेष्यतापर्यन्तगमनावश्यकत्वे तद्व्यक्तितादात्म्यविशिष्टसमवायेन घटत्ववत्त्वस्य तद्व्यक्तितास्वरूपत्वं कुतोऽभ्युपगम्यते । तस्य घटत्वस्वरूपताविरहेऽपि स्वरूपसम्बन्धविशेषाद्यात्मकतद्व्यक्तित्वस्य स्वरूपेण स्वाश्रयत्वघटितनिरुक्तविशेष्यतासम्बन्धेन अधुनापि कपाले संभवात् तत एव व्यभिचारवारणात् । कुतस्तरां वा तद्व्यक्तित्वपर्यन्तगमनम् । तद्व्यक्तेरेव प्रत्यासत्तितायाः सुवचत्वाद् । न चानुभवानुरोधेन वस्तुगतिमनुरुध्य तद्व्यक्तितादात्म्यविशिष्टसमवायसम्बन्धेन घटत्ववत्त्वस्य तद्व्यक्तित्वस्वरूपता उक्तेति वाच्यम् । घटत्वादिरूपेण तद्व्यक्तेरग्रहदशायामपि इयं काचन व्यक्तिरित्येवंविधज्ञानस्य सर्वजनानुभवसिद्धतया घटत्वाद्यग्रहकालेऽपि तद्व्यक्तित्वेन तद्विशिष्टप्रत्यक्षसत्त्वेन प्रत्युत तव मतस्यैवानुभवविरुद्धत्वादिति चेद् ?

न, इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतात्मककारणतावच्छेदकविशिष्टस्य कार्याऽव्यवहितपूर्वसत्त्वापेक्षणेन तद्व्यक्तेः कार्याऽव्यवहितपूर्वमविद्यमानायाः कारणत्वायोगात् । अत एव न तद्व्यक्तित्वस्य स्वरूपसम्बन्धविशेषाद्यात्मकस्यापि कारणत्वसंभवः । तस्य तद्व्यक्तिस्वरूपत्वे तद्व्यक्तया समं तद्व्यक्तित्वस्यापि नाशेन कार्याऽव्यवहितपूर्वमनवस्थायित्वात् । एवमनभ्युपगमे दोषस्य प्रागेव दर्शितत्वात् । एतेन तद्व्यक्तितादात्म्यविशिष्टसमवायेन घटत्वादिमत्त्वं तेन घटत्वाधिकरणत्वमेव जगदीशाभिमतं तथा च तद्व्यक्तित्वस्य स्वरूपेण वृत्तित्वप्रवादोऽप्युपपद्यत इति परास्तम् । तद्व्यक्तिविरहकाले तद्व्यक्तितादात्म्यविशिष्टसमवायेन घटत्वाधिकरणताया अपि विरहेण कारणविरहापत्तेः । अत एव तद्व्यक्तितादात्म्यविशिष्टघटत्वस्यैव तद्व्यक्तित्वात्मकत्वमपि नोक्तम् । न च कारणतावच्छेदकस्यैवाऽव्यवहितपूर्वं सत्त्वमपेक्षितम् । तत एव घटत्वाद्यज्ञानदशायां घटत्वादिप्रकारेण निखिलघटादिप्रत्यक्षापत्तिरूपप्रागभिहितदोषवारणसंभवात् । एवं च तद्व्यक्तेरत्र विरहेऽपि इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतात्मककारणतावच्छेदकस्यात्र सत्त्वादेव न दोष इति वाच्यम् । कार्याऽव्यवहितपूर्ववर्त्तिन एव कारणतया तद्व्यक्त्यादेः पूर्वमसत्त्वे तस्य कारणताया एव दुर्घटत्वात् । स्याच्चान्यथासिद्धत्वमेव तस्य । तादृशप्रकारताया एवावश्यक्लृप्तनियतपूर्ववर्त्तित्वात् । न च तादृशप्रकारताया एव तद्व्यस्तु कारणत्वं परम्परासम्बन्धेनेति वाच्यम् । तस्य प्रकारान्तरत्वेऽपि सुवचत्वात् । ततोऽपि लघुभूततद्व्यक्तिज्ञानस्यैव कारणताया अग्रे वक्ष्यमाणत्वाच्चेति दिक् ।

ननु घटत्वस्य स्वाश्रयाश्रयतद्व्यक्तित्वसम्बन्धेनैव कारणत्वमास्तां, किं विशेष्यताप्रवेशेन । तादृशकपालव्यक्तित्वस्य घटविरहकालेऽपि कपाले सत्त्वात् । न च घटत्वाश्रयाधिकरणे व्यक्तिग्रहणेऽपरव्यक्तौ व्यभिचारः तत्रापि प्रत्यक्षसत्त्वात् कारणस्य च विरहादिति वाच्यम् । निरुक्तसमवायेन स्वाश्रयाधिकरणानि यावन्ति व्यक्तयस्तत्प्रतियोगिकभेदकूटानाधिकरणत्वस्य

❀ काशिकानन्दी ❀

वक्तव्यत्वात् । नचैवं सति गौरवम् । तथाप्रवेशापेक्षया विशेष्यतानिवेशस्यैव लघुत्वादिति वाच्यम् । विशेष्यतानिवेशेऽपि उक्तनिवेशस्यावश्यकत्वात् । अन्यथा द्रव्यमित्याद्याकारके द्रव्यावगाहिज्ञानीयविशेष्यताया अपि तद्व्यक्तित्वाश्रयाधिकरणकपालनिष्ठतया तामा घटादौ कार्योत्पादापत्तेः । एवं च त्वयापि तद्व्यक्तित्वाश्रयाधिकरणमात्रनिष्ठत्वं विशेष्य निवेशनीयम् । मात्रत्वं चोक्तार्थे एव पर्यवस्यति । न च स्वाश्रयाधिकरणत्वविशिष्टवि त्वमेव कारणतावच्छेदकसंसर्ग इति न दोष इति वाच्यम् । स्वाश्रयाधिकरणत्वस्योपलक्ष उक्तदोषतादवस्थ्यात् । विशेषणत्वे च तद्व्यक्तिविरहकाले तदधिकरणत्वस्याप्यसत्त्वेन त शिष्टविशेष्यतायाः कारणतावच्छेदकसम्बन्धत्वे तद्व्यक्तिविरहकालेऽलौकिकप्रत्यक्षानाप न च स्वाश्रयाधिकरणत्वं व्याप्यवृत्त्येव । तथा च तद्व्यक्तिविरहकालेऽपि तद्व्यक्त्यधि करणत्वं तत्रादृतमेवेति वाच्यम् । तथा सति तद्व्यक्त्यधिकरणत्वस्यैव कारणतावच्छे सम्बन्धत्वसंभवे तद्विशिष्टविशेष्यतापर्यन्तगमनानर्थक्यस्य दुरुद्धरत्वापत्तेरिति चेद् ?

न, उक्त प्रकारेण स्वाश्रयाधिकरणतत्तद्व्यक्तिभेदकूटानधिकरणत्वस्य कारणताव दकसम्बन्धत्वे भेदानां विशेषणविशेष्यभावव्यत्यासेनाननुगमापत्तेः । महागौरवापत्ते न च विशेष्यत्वप्रवेशे कथमेतद्दोषवारणमिति वाच्यम् । यतः स्वाश्रयाधिकरणनिष्ठं स्वाश्रयाधिकरणान्याऽवृत्तिविशेष्यत्वं स्वाश्रयाधिकरणानि यावत्यो व्यक्तयस्तद्भेदकू टवृत्तिविशेष्यत्वं वा तस्य कारणतावच्छेदकसम्बन्धतायाम् अवृत्तित्वान्तस्य विशेष्यद पातिन उपलक्षणमात्रत्वात् । तादृशं च विशेष्यत्वं स्वाश्रयाधिकरणमात्रनिष्ठविशेष्य शेष एव । अस्तु वा स्वाश्रयाधिकरणनिष्ठं यत्स्वावच्छिन्नप्रकारतानिरूपितविशे तस्यैव प्रत्यासत्तित्वम् । धूमीयविशेष्यतामादाय दोषवारणाय विशेषणदलम् । ए नोपलक्षणत्वेऽनन्तविशेष्यतानामननुगमरूपो दोषः । न च स्वाश्रयाधिकरणत्वाव च्छिन्नप्रतियोगिताकभेदावच्छिन्नान्यत्वस्य प्रत्यासत्तित्वोक्त्या नास्माकमननुगमदोष इति विशे ष्यताप्रवेशो न कर्तव्य इति वाच्यम् । अधिकरणभेदेनाधिकरणताया भेदोपगमे वक्तुमशक्यत्वात् । भेदस्याऽव्याप्यवृत्तित्वे व्यभिचारस्य दुर्वारत्वाच्च । एतेन स्वाश्र करणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदानधिकरणत्वनिवेशेऽप्यवि रः । न च तद्व्यक्तित्वेन कपालघटोभयावगाहिभ्रमस्यापि स्वाश्रयाधिकरणवृत्तिस्व प्रकारतानिरूपितविशेष्यताकतया घटवर्त्तिनीं तादृशविशेष्यतामादाय तत्रापि तद्व्यक्त्य लौकिकप्रत्यक्षापत्तिरिति वाच्यम् । प्रमीयप्रकारताया एव विवक्षितत्वात् । स्वाश्रयाधि निष्ठत्वस्य तल्लाभार्थत्वात् । तत्र विशेष्यताद्वयस्यैव स्वीकाराच्च । यादृशघटाधिक कपालविशेषो यदा न कस्यापि पुंसो ज्ञानविषयस्तत्रापि ईश्वरीयज्ञानविशेष्यत्वं तत्राश्रय अपरकपाले तद्व्यक्तिज्ञानोत्तरं कपालद्वयस्य प्रत्यक्षं सुघटमेव । अस्तु वा स्वाश्र करणत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितनित्यज्ञानीयविशेष्यताया एव कारणताव दकसंसर्गत्वम् । तेन स्वनिष्ठावच्छेदकतायाः स्वावच्छिन्नप्रकारतायाश्च सम्बन्धनियन्त्रण

❀ जागदीशी ❀

सर्वत्रान्ततो नित्यज्ञानीयतादृशविशेष्यतामादायैव कारणत्वसंभवाद्। एतल्लाभार्थमेव तद्व्यक्तिद्वारेत्यत्र द्वारपदोपन्यासादिति भावः।

जातीतरस्यापि स्वरूपतः प्रकारत्वोपगमे तु तत्तदनित्यघटादिव्यक्तेर्घटं-

❀ काशिकानन्दी ❀

मपि न गौरवम्। नित्यत्वप्रवेशाद् भ्रमव्युदासः। अन्ततः = विशेष्यतान्तराऽलाभे। यादृशनष्टव्यक्तीयसकलाश्रया यदा न कस्यापि जीवस्य ज्ञानविषयस्तत्र विशेष्यतान्तरेण निर्वाहासंभवेऽपीति यावत्। तादृशविशेष्यतां = तद्व्यक्तित्वाश्रयाधिकरणनिष्ठविशेष्यताम्। कारणत्वसंभवादिति। तद्व्यक्तित्वादेरित्यादिः। स्वाश्रयाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितनित्यज्ञानीयविशेष्यताया एव कारणतावच्छेदकसंसर्गत्वोपगमे तु— अन्ततः = विशेष्यतान्तरेणानिर्वाहे तद्व्युदासेन। नित्यज्ञानीयतादृशविशेष्यतामादायैव = स्वाश्रयाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितनित्यज्ञानीयविशेष्यतायाः संसर्गत्वमादृत्यैवेत्यर्थः। आदायेत्यस्यावच्छिन्नत्वं वार्थः। तथा च तादृशविशेष्यतात्मकसंसर्गावच्छिन्नकारणत्वसंभवादित्यर्थः। एतल्लाभार्थमेव = एतादृशपरम्परायाः कारणतावच्छेदकसंसर्गत्वलाभार्थमेव। द्वारपदोपन्यासादिति। अन्यथा तद्व्यक्तिमात्रस्यैव सम्बन्धत्वेन दीधिकाराभिमतत्वे तद्व्यक्त्या प्रत्यासन्नस्येत्येव ब्रूयादिति भावः। एवं च तादृशपरम्पराघटकसमवायविशेष्यतादीनां सप्रतियोगिकतया तस्य सम्बन्धत्वनिर्वाहोऽपीति ध्येयम्।

जातीतरस्येति। जात्यखण्डोपाधीतरस्येत्यर्थः। स्वरूपत इत्यादि। न च तद्व्यक्तेरपि तद्व्यक्तित्वेन भानान्न स्वरूपतस्तत्रापि भानमिति स्वरूपत इत्याद्यभिधानमयुक्तमिति वाच्यम्। तद्व्यक्तित्वादेः तद्व्यक्तिस्वरूपानतिरेकाद्। वक्ष्यति च घटत्वाद्यज्ञानदशायामिति। एवं च घटत्वाद्यज्ञानदशायां ज्ञानप्रकारतापन्नायास्तद्व्यक्तेस्तद्व्यक्तित्वस्य वा कारणत्वं वाच्यम्। तदुभयमपि न कार्यनियतपूर्ववर्त्तीति तस्य कारणत्वं दुर्घटमेवेति भावः।

केचित्तु दीधितौ तद्व्यक्तिद्वारा = तद्व्यक्तिघटितपरम्परासंबन्धेन। एवकारेण तद्व्यक्तेस्तद्व्यक्तित्वस्य च व्युदासः। एवं च स्वाश्रयतद्व्यक्त्यधिकरणत्व—स्वाश्रयतद्व्यक्तिप्रतियोगिकप्रागभावाधिकरणत्वादिसम्बन्धेन घटत्वादेः प्रत्यासत्तित्वादिति दीधित्यर्थः। न च स्वाश्रयतद्व्यक्त्यधिकरणत्वविरहकाले कारणतावच्छेदकसंसर्गविरहेण तेन सम्बन्धेन कारणत्वानुपपत्तिरिति वाच्यम्। प्रतियोगिवैयधिकरण्यघटितकारणतायास्तत्राक्षतेः। कारणतावच्छेदकसंसर्गस्याऽव्यवहितपूर्वमनपेक्षणात्।

ननु यत्र घटत्वादेर्न प्रकारतावच्छेदकतया भानं किन्तु तद्व्यक्तित्वस्यैवेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतावच्छेदकत्वं तत्र तद्व्यक्तित्वस्य तद्व्यक्तेर्वा पूर्वमसत्त्वेन तत्रैव निखिलतद्व्यक्त्यधिकरणभानाऽलाभ इत्याशयेनाह एतदस्वरसेनैव वेतीति व्याचक्रुः।

# अतिरिक्तैव वा, तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसन्नि- कर्षस्य हेतुत्वेनानागतादौ संयोगादेरभावादि- वदन्ति।

---

❀ दीधितिः ❀

एतदस्वरसेनैव वा द्वितीयं पक्षमाह अतिरिक्तैव वेति। अति-

❀ जागदीशी ❀

त्वाद्यज्ञानदशायां प्रत्यासत्तित्वं दुर्घटमेवेत्यत आह एतदिति। द्वितीयमि- ति। सामान्यं लक्षणं विषयतया निरूपकं यस्या इति व्युत्पत्तिलभ्यं सामान्य- ज्ञानात्मकं पक्षमित्यर्थः। षट्पदार्थातिरिक्तस्यानुपगमात्, सामान्यातिरि- मात्रस्य प्रत्यासत्तित्वे तु सामान्यस्याज्ञानदशायामपि तदाश्रयस्य प्रत्यक्षप्रसङ्गा

❀ काशिकानन्दी ❀

मूले अतिरिक्तैव वेत्यस्य सामान्यातिरिक्तैव वेत्यर्थः। सा च सामान्यातिरि- नाम अवशिष्टषट्पदार्थान्तर्गता वा तद्बहिर्भूता वा इति विकल्पयन्नुभयमपि निरस्यति- षट्पदार्थातिरिक्तस्येत्यादि। सामान्यातिरिक्तस्येति प्रकृतम्। सामान्यातिरि- प्रत्यासत्तित्वेन मूलकाराभिमता इतरषट्पदार्थबहिर्भूतेति न शक्यं वक्तुं, तथाविधप- र्थानुपगमादिति समुदितार्थः।

केचित्तु षट्पदार्थातिरिक्तस्येति। वैशेषिकैरिति शेषः। नैयायिकैश्च सप्तपदार्थाति- क्तस्यानुपगमादित्यपि बोध्यमिति व्याकुर्वते।

सामान्यातिरिक्तस्य षट्पदार्थान्तःपातिन एव प्रत्यासत्तित्वमिति नोक्तानुपग- प्रयुक्तदोषावसर इत्यत्राह– सामान्यातिरिक्तमात्रस्येति। सामान्यस्य = घटत्वादेः तदाश्रयस्य = घटत्वाद्याश्रयस्य। प्रत्यक्षप्रसङ्गादिति। न च प्रागभिहितक्रमे

❀ मणिदीपिनी ❀

अतिरिक्तेति। सेत्यनुषज्यते। सामान्यज्ञानातिरिक्तेत्यर्थः। ननु यत्किञ्चिद्धूमादि- सन्निकर्षोत्तरं विनापि सामान्यलक्षणां सर्वे धूमा भासन्तां तत्राह—तद्विशेष्यकेति धूमादिविशेष्यकेत्यर्थः। तदिन्द्रियसन्निकर्षस्य = धूमादिना सहेन्द्रियसन्निकर्षस्य हेतुत्वेनेति। अन्यथाऽविशेषेण सर्वस्यापि प्रत्यक्षं स्यादिति भावः। अनागतादा- विति। आदिना विनष्टस्य असन्निकृष्टवर्त्तमानस्य च परिग्रहः। संयोगादेरिति आदिना संयुक्तसमवायसंयुक्तसमवेतसमवायाद्युपग्रहः।

❀ दीधितिः ❀

रिक्ता = इन्द्रियसम्बद्धे तादृशसामान्यज्ञानात्मिका ।

❀ जागदीशी ❀

व्याचष्टे इन्द्रियसम्बद्ध इति । तादृशेति । तदिन्द्रियजन्येत्यर्थः। तथा च तत्पुरुषीयघटत्वादिप्रकारकचाक्षुषत्वावच्छिन्नं प्रति तदीयचक्षुः सन्निकृष्टविशेष्यकतदीयघटत्वादिप्रकारकचाक्षुषत्वेन हेतुत्त्वम्। अत्रापि कल्पे कार्यस्यालौकिकमुख्यविशेष्यत्त्वमेव प्रत्यासत्तिः। कारणस्य तु स्वप्रकारीभूतसामान्या-

❀ काशिकानन्दः ❀

घटघटत्त्वादीनां सर्वेषामेव सामान्यतया तदतिरिक्ताऽप्रसिद्धिः। परमाणुगगनादीनामपि कालिकेन वृत्तिमतां सामान्यत्त्वाद्वतेः। सम्बन्धान्तरेणाऽवृत्तिमतां तेषां सामान्यातिरिक्तत्वमिति स्वीकारेऽपि तेन सम्बन्धेन तेषां कुत्राप्यवर्त्तमानतया सामान्याज्ञानदशायां तदाश्रयप्रत्यक्षस्य दूरनिरस्तत्त्वादिति वाच्यम्। जात्यात्मकसामान्याभिप्रायेणैतदुक्तेः।

अत्र तदिन्द्रियजन्यत्त्वप्रवेशे गौरवम्, एकपुरुषीयचक्षुःसन्निकृष्टविशेष्यकपुरुषान्तरीयघटत्त्वप्रकारकचाक्षुषेण सन्निकर्षविहीनस्य पुरुषान्तरस्य घटत्त्वप्रकारेण निखिलघटप्रत्यक्षापत्तिः, तत्पुरुषीयचक्षुःसन्निकृष्टधर्मिकपुरुषान्तरीयचाक्षुषज्ञानेन तत्पुरुषस्यापि तथापत्तिः, तत्पुरुषीयचक्षुः सन्निकृष्टविशेष्यकतदीयघटत्त्वप्रकारकचाक्षुषेण घटत्त्वप्रकारकनिखिलघटादिप्रत्यक्षापत्तिश्चेति कार्यकारणभावं विशिष्य दर्शयति—तथाचेति। अधिकं प्रागुक्तदिशा ज्ञेयम्। अत्र कल्पे विशेषमाह—कारणस्य तु इति। स्वप्रकारीभूतेति स्वम्—इन्द्रियसम्बद्धविशेष्यकघटत्त्वादिप्रकारकचाक्षुषं कारणत्वेनाभिमतम्। तत्प्रकारीभूतसामान्यं—घटत्त्वादि। तदाश्रयत्त्वं घटेषु। अनित्यव्यक्तीनां प्रत्यासत्तित्वानुरोधेन विशेष्यत्त्वपर्यन्तम्। कारणस्येव कारणतावच्छेदकसम्बन्धस्यापि अव्यवहितपूर्वमपेक्षेति हृदयम्। स्वीयप्रकारतासमनियतप्रकारतानिरूपितनित्यज्ञानीयविशेष्यत्त्वमिति यावत्। तेन धूम इत्याकारकज्ञानस्यापि स्वप्रकारीभूतसामान्याश्रयनिष्ठं यद् द्रव्यमित्याद्याकारकज्ञानीयविशेष्यत्वं तेन घटादावपि सत्त्वेऽपि न व्यतिरेकव्यभिचारः। विशेष्यताया विशेष्यभेदेन भिन्नत्त्वमिति, दोषात्मककारणान्तरविरहादेव न व्यभिचार इति वा विभाव्यते तदा तु यथाश्रुतमेव युक्तम्।

ननु धूमत्त्वप्रकारकज्ञानमेव यत्र घटत्त्वनिर्विकल्पकं तदुत्तरजायमान "धूमाः घटाश्च" इत्याकारकघटत्वप्रकारकचाक्षुषस्यालौकिकमुख्यविशेष्यतासम्बन्धेन धूमे सत्त्वात् तत्पूर्वं च घटत्त्वप्रकारकचाक्षुषविरहाद् व्यभिचारः। न च प्रकारतायामलौकिकत्वं वक्तव्यमित्यदोष इति वाच्यम्। एवमपि धूमत्वेन निखिलधूमं घटत्वेन निखिलघटं चावगाहमान "धूमा घटाश्चे"ति ज्ञाने व्यभिचारात्। घटत्त्वप्रकारकचाक्षुषस्य अलौकिकमुख्यविशेष्यतासम्बन्धेन धूमेऽपि सत्त्वात् तत्र च स्वप्रकारीभूतघटत्त्वाश्रयनिष्ठविशेष्यतासम्बन्धेन घटत्वज्ञानस्य पूर्वं विरहात्। न च घटत्त्वादिप्रकारकालौकिकप्रत्यक्षे घटत्वाद्याश्रयनिष्ठालौकिक-

❀ काशिकानन्दी ❀

मुख्यविशेष्यत्वमेव प्रत्यासत्तिः कार्यतावच्छेदिका । तथा च धूमे अलौकिकमुख्यविशेष्य- सद्भावेऽपि घटत्वाश्रयनिष्ठालौकिकमुख्यविशेष्यताविरहान्न व्यभिचार इति वाच्यम् । द्रव्य- प्रकारकनिखिलद्रव्यालौकिकप्रत्यक्षमेव यत्र घटत्वोपनीतपदार्थान्तरभानं तत्रैव व्यभिचारा- न च स्वाश्रयमात्रनिष्ठं मुख्यविशेष्यत्वं निवेश्यमिति वाच्यम् । घटत्वेन निखिलघटालौ- प्रत्यक्षमेव यत्र द्रव्यत्वोपनीतपदार्थान्तरभानात्मकं तत्र व्यभिचारात् । द्रव्यत्वप्रकारक- विनापि द्रव्यत्वज्ञानमात्रात्तदुपनीतभानसंभवेन तादृशस्थले कारणविरहात् । न च स्वा- मात्रनिष्ठत्वं नाम स्वाश्रयेतराऽवृत्तित्वे सति निखिलस्वाश्रयवृत्तित्वमिति नोक्तदोष- वाच्यम् । प्रमेयत्वादिप्रत्यासत्तिस्थले स्वाश्रयेतराऽप्रसिद्धेः । अनित्यप्रत्यासत्त्यादावनु- स्वसमनियतत्वस्य निवेशयितुमशक्यत्वात् । घटत्वेन निखिलघटावगाहि अलौकिकप्रत्यक्ष- मेव यत्र कम्बुग्रीवादिमत्त्वोपनीतभानं तत्र व्यभिचारस्य दुर्वारत्वाच्चेति चेत् ?

न, घटत्वादिनिष्ठप्रकारतानिरूपितालौकिकमुख्यविशेष्यतायाः प्रत्यासत्तित्वोप- दोषाभावात् । न चैवमपि द्रव्यत्वेन निखिलद्रव्यप्रत्यक्षमेवासन्निकृष्टघटे घटत्वोप- भानात्मकं तत्र व्यभिचारः । तत्रासन्निकृष्टघटे घटत्वनिष्ठप्रकारतानिरूपितालौकिकमु- विशेष्यताया एव वक्तव्यत्वादिति वाच्यम् । असन्निकृष्टघटादौ घटत्वाद्युपनीतमाना- पगमात् । उपनीतभाने विशेष्यप्रत्यक्षसामग्र्याः सहकारित्वे कल्पनीये विशेष्यलौ- प्रत्यक्षसामग्र्या एव कारणत्वाङ्गीकारात् । न चैवं घटो द्रव्यमित्याद्याकारकमानसोप- भानं न स्यादिति वाच्यम् । घटत्वादिचाक्षुषाद्युपनीतभाने एवोक्तनियमात् ।

ननु द्रव्यत्वेन निखिलद्रव्यमानसमेव यत्र घटांशे घटत्वोपनीतभानात्मकं तत्र व्य- चारो दुरुद्धरः । न च तत्र विशेष्यतान्तरप्रयोजकविरहेण द्रव्यत्वनिष्ठप्रकारतानिरू- विशेष्यतैव घटत्वनिष्ठप्रकारतानिरूपितापि वक्तव्या । नच तत्संभवति । पटादा- तादृशविशेष्यतायाः सत्त्वात्तत्र च घटत्वप्रकारतानिरूपितत्वोपगमे तस्य भ्रमत्वा- भ्रमत्वप्रयोजकदोषविरहादेव च तादृशज्ञानस्य वक्तुमशक्यत्वादिति शङ्क्यम् । एवं घटत्वेन निखिलघटप्रत्यक्षमेव घटांशे द्रव्यत्वोपनीतभानं यथा द्रव्याणीत्याकारकमानसं व्यभिचारस्य दुरुद्धरत्वादिति चेत् ?

न, एतत्कल्पद्वये घटांशे द्रव्यत्वोपनीतभानस्य घटमहं जानामीत्याकारकघटप्रकारक- ननियततया प्रकारतात्मकविशेष्यतायामेवोपनीतद्रव्यत्वस्य प्रकारत्वाद् द्रव्यत्वनिष्ठप्रकार- निरूपितमुख्यविशेष्यताया विरहेण दोषाभावादिति दिक् ।

अत्र केचित् । समवायघटितसामानाधिकरण्यप्रत्यासत्त्यैव निर्वाहसंभवे गुरुतरकार्य- रणतावच्छेदकसम्बन्धप्रवेशोऽयुक्त इति । तन्न । घटत्वप्रकारकप्रत्यक्षत्वस्य कार्यतावच्छे- दकत्वे प्राथमिकसविकल्पके अलौकिकघटत्वप्रकारकप्रत्यक्षत्वस्य तथात्वेऽपि घट- पटभ्रमे व्यभिचारः । अलौकिकविशेष्यतानिरूपितप्रकारताकप्रत्यक्षत्वस्य, अलौकिकमु- विशेष्यतानिरूपितघटत्वप्रकारताकप्रत्यक्षत्वस्य वा कार्यतावच्छेदकत्वोपगमेऽपि घटत्वप्र- कचाक्षुषोत्तरजायमानप्रत्यक्षस्य पटादिमुख्यविशेष्यकत्वापत्तिः । घटनिष्ठालौकिकमुख्य-

❀ जागदीशी ❀

श्रयनिष्ठविशेष्यत्त्वं तथेति न तत्तदनित्यव्यक्तिमत्त्वस्यासत्त्वदशयां तया प्रत्यासत्त्या तदाश्रयस्य प्रत्यक्षानुपपत्तिः ।

यत्तु स्वप्रकारीभूतसामान्यवदन्याऽवृत्तिभेदवत्त्वमेव सर्वत्र कारणताघटकः सम्बन्धः । तत्तदनित्यघटादेरसत्त्वदशायामपि तद्वदन्यावृत्तेस्तत्तत्कपालान्यतरत्त्वरूपभेदस्य सत्त्वादिति । तन्न । स्मृतिविषयत्त्वाद्यनित्यप्रत्यासत्तिस्थले तद्वदन्याऽप्रसिद्धेः । स्मृतिविषयत्त्वादेः केवलान्वयित्त्वादिति ध्येयम् ।

❀ काशिकानन्दी ❀

शेष्यत्वघटितस्य तथात्त्वे घटभेदेन कार्यतावच्छेदकानन्त्यापत्तिः । एवं विधगुरुभूतकार्यतावच्छेदकधर्मस्वीकारापेक्षया उक्तप्रकारेण लघुधर्मस्य कार्यतावच्छेदकत्त्वौचित्याच्चेति ।

तथा = प्रत्यासत्तिः । अनित्यव्यक्तीति । घटतत्प्रागभावादीत्यर्थः । असत्त्वदशायां = नाशदशायाम् । तया = अनित्यव्यक्त्यात्मिकया । तदाश्रयस्य = कपालादेः । न प्रत्यक्षानुपपत्तिरिति योजना । व्यक्तेस्तदानीमसत्त्वेऽपि तत्प्रकारकचाक्षुषादेस्तदानीमक्षतेरिति भावः ।

स्वप्रकारीभूतेति । स्वं—सामान्यप्रकारकचाक्षुषम् । तत्प्रकारीभूतसामान्यम्—अनित्यघटव्यक्त्यादिकमपि । तद्वान्—कपालादिः । ततोऽन्यः—पटादिनिखिलं जगत् । तदवृत्तिभेदः—कपालद्वयादिभेदद्वयावच्छिन्नप्रतियोगिताकभेदः । कपालद्वयभिन्ने कपालभेदनैयत्येन कपालद्वयभेदावच्छिन्नभेदस्य कपालद्वयभिन्नेऽसंभवात् । तादृशभेदश्च कपालद्वयादौ ।

इदन्तु बोध्यम् । एतन्मते प्रागुक्तकल्पेऽपि एवं विधसम्बन्ध एव कारणताघटकः । इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्नाया अनित्यव्यक्तेः स्वाश्रयान्याऽवृत्तिभेदवत्त्वसम्बन्धेन कपालद्वये सर्वदा संभवात् । न चैवं पूर्वकल्पपरित्यागोऽनुचित इति वाच्यम् । कारणस्याऽव्यवहितपूर्वमपेक्षणेन तदसंभवेन द्वितीयकल्पस्याश्रयणीयत्त्वात् । अनित्यव्यक्तिस्थले घटत्त्वादेः प्रत्यासत्तित्त्वे स्वाश्रयतद्व्यक्तिमदन्याऽवृत्तिभेदवत्त्वं वा पूर्वकल्पे एतन्मते कारणताघटकसम्बन्ध इति ।

तत्तत्कपालान्यतरत्वरूपभेदस्येति । पटादिभेदस्तु घटादिव्यक्तिमदन्यस्मिन् पर्वतादौ वर्त्तत इति तदुपेक्षा ।

स्मृतिविषयत्त्वेति । अयं स्मृतिविषय इति प्रत्यक्षानन्तरं यत्र स्मृतिविषयत्त्वेन निखिलप्रत्यक्षं तादृशस्थल इत्यर्थः । तद्वदन्येति । स्मृतिविषयत्त्ववदन्येत्यर्थः । अप्रसिद्धेरिति । ननु घटवद्भूतलमित्यादिप्रत्यक्षानन्तरनिखिलघटवद्भूतलप्रत्यक्षानुरोधेन स्वप्रकारतावच्छेदकधर्मावच्छिन्नाश्रयत्त्वस्य कारणताघटकत्त्वं वक्तव्यम् । न च तत्रापि स्वप्रकारतावच्छेदकधर्मावच्छिन्नवदन्यावृत्तिभेदपर्यन्तगमनमावश्यकम् । गौरवात् । तथा च नाना-

## ❀ जागदीशी ❀

तत्प्रकारकतदाश्रयप्रत्यक्षे तस्य ज्ञानमात्रं हेतुः। न तु ज्ञानस्य तत्तदिन्द्रियजन्यत्वं तत्तदिन्द्रियसम्बद्धविशेष्यकत्वं वा तन्त्रम्। चक्षुरादीन्द्रियभेदेन पुरुषाणां द्विधा निवेशेन च हेतुत्वकल्पने गौरवात्। स्मरणाद्यात्मकसामान्यज्ञानदशायां च तदाश्रयस्य प्रत्यक्षमन्ततो मानसात्मकमुत्पद्यत एव। प्राच्यैरपि क्षणविलम्बेन तस्यो-

## ❀ काशिकानन्दी ❀

व्यक्तिस्थले तादृशसम्बन्धस्य नियतत्वे स्मृतिविषयत्वानामपि नानात्वेन स्वप्रकारतावच्छेदकस्मृतिविषयतात्वावच्छिन्नवत्त्वस्यैव कारणताघटकतया कथमप्रसिद्धिः। न च स्मृतिविषयत्वस्य कादाचित्कतया उक्तव्यभिचार एवेति शङ्क्यम्। यस्य कस्यचित्स्मृतिविषयत्वस्य सर्वदैव जगति संभवात्। ब्रह्माण्डे जीवानामानन्त्यादिति चेन्न। यत्किंचित्स्मृतिविषयत्वेन जगत्प्रत्यक्षस्थले एवाऽप्रसिद्धिदोषस्य वक्तव्यत्वात्। यत्किंचित्त्वं विषयत्वविशेषणम्। तत्र हि तद्वदन्याऽवृत्तिभेद एव तथाविधसंसर्गः।

अथैवमपि अनित्यव्यक्तिपर्यन्तगमनमनर्थकम्। ईश्वरज्ञानीयविषयत्वाद्यात्मकनित्यव्यक्तिस्थलेऽपि तद्वदन्याऽप्रसिद्धिसंभवादिति चेद् ?

न, तत्र स्वप्रकारीभूतसामान्याश्रयत्वमात्रस्य कारणताघटकत्वोपगमात्। नचैवं "यत्तु" मतोपन्यासममये 'सर्वत्र' इति कथनमसंगतम्। नित्यव्यक्तिस्थले तद्वदन्याऽवृत्तिभेदस्य कारणतानवच्छेदकत्वादिति वाच्यम्। अनित्यव्यक्तिप्रत्यासत्तिस्थले सर्वत्रेति तदर्थात्। न च स्वाश्रयान्यवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वमेव स्वाश्रयान्याऽवृत्तित्वं भेदविशेषणीभूतमिति नोक्ताप्रसिद्धिदोषः, केवलान्वयिस्थले व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकस्तादृशाभावः प्रसिद्ध इति वाच्यम्। वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावानुपगमादिति।

नव्यमतं व्याकुरुते—तत्प्रकारकेति। घटत्वादिप्रकारकघटादिप्रत्यक्ष इत्यर्थः। तस्य=घटत्वादेः। विषयित्वं षष्ठ्यर्थः। ज्ञानमात्रमिति। मात्रपदव्यवच्छेद्यमाह—नत्विति। तन्त्रं=कारणतावच्छेदककोटिप्रविष्टम्। पुरुषाणां द्विधेति। तत्पुरुषीयचक्षुः सन्निकृष्टेति तदीयचाक्षुषेति च पुरुषाणां द्विधा प्रवेशेनेत्यर्थः। नन्वेवं घटत्वादीनां स्मरणादपि निखिलघटप्रत्यक्षं स्यादित्याशङ्कामिष्टापत्त्या परिहरति—स्मरणेति। नष्टेऽपि घटे तत्स्मरणेन कपालानां यथा प्रत्यक्षं तथात्रापीति भावः। तदाश्रयस्य=सामान्याश्रयस्य। अन्तत इति। बाह्यप्रत्यक्षहेतुभूतचक्षुःसन्निकर्षादिविरहे सत्यपीत्यर्थः। तस्य=मानसप्रत्यक्षस्य। क्षणविलम्बेनेति। घटत्वस्मरणोत्तरं तस्य ज्ञानांशे उपनीततया अथ घटांशे वा यथार्थज्ञाने सति घटत्वेन निखिलघटानां प्रत्यक्षं प्राचीनानामपीति भावः। यद्वा—तस्य=तदाश्रयप्रत्यक्षस्य। क्षणविलम्बेनेति। घटत्वादिनिर्विकल्पकोत्तरं सविकल्पकज्ञानपुरःसरं तृतीयक्षणे घटत्वेन निखिलघटप्रत्यक्षस्य प्राचीनैरप्यभ्युपेयत्वादि-

❀ दीधितिः ❀

अतीताद्यनुरोधात् सामान्यज्ञानं प्रत्यासत्तिः ।

❀ जागदीशी ❀

पेयत्त्वादित्याशयवतां नव्यानां मतमुत्थापयति अतीतेत्यादिना ।

नन्तु यदि लाघवानुरोधादिन्द्रियसम्बद्धविशेष्यकत्त्वादेः परित्यागः तदा सामान्यस्यैव प्रत्यासत्तित्त्वं युक्तमिति । स्वरूपतः सामान्यस्य हेतुत्त्वापेक्षया सामान्यज्ञानहेतुत्त्वे गौरवात् । न च घटेतराऽवृत्तित्त्वविशिष्टसकलघटवृत्तित्त्वरूपघटत्वत्वादिना हेतुत्वापेक्षया घटत्वत्वाद्यघटितघटत्वज्ञानस्य हेतुत्वं लघु इति वाच्यम् । घटत्वादिसामान्यस्य तत्तद्व्यक्तित्वेनैव हेतुत्वसंभवाद्, घटत्वाज्ञानदशायां विशेषणज्ञानविरहेणैवापत्त्यसंभवादित्यत आह—अतीताद्यनुरोधादिति । आदिनाऽनागतादेः परिग्रहः । इदञ्चातीतानागततत्तदनित्यव्यक्त्याश्रयप्रत्यक्षानुरोधादिति तदर्थः । तथाचातीतानागतसामान्याश्रयप्रत्यक्षे सामान्यस्य व्यभिचारेण हेतुत्वासंभवात् तज्ज्ञानस्य हेतुत्वमादृतमिति भावः ।

❀ काशिकानन्दी ❀

भावः । तात्पर्यबलादन्ततो मानसात्मकमित्येतन्न तत्पदेन परामृश्यते । अतीतेत्यादिनेति । इति तु नव्या इत्यन्तेनेति शेषः । अतीताद्यनुरोधादिति पदस्य व्यावृत्तिमाह—नन्विति । परित्याग इति । क्रियत इति शेषः । सामान्यस्यैवेति । एवकारेण सामान्यज्ञानव्यवच्छेदः । युक्तमितीति । अत्र हेतुः—स्वरूपत इति । ज्ञाननिरपेक्षस्य, ज्ञानाघटितस्येति वार्थः । वृत्तित्वरूपेति । एतदन्तं निखिलघटानां कारणतावच्छेदककुक्षिप्रवेशेन गौरवमिति सूचनाय । लघु इतीति । घटत्त्वज्ञानत्त्वस्य कारणतावच्छेदकत्त्वे लाघवमिति भावः । तत्तद्व्यक्तित्वेनैवेति एवकारेण निखिलघटघटितघटत्त्वत्त्वस्य कारणतावच्छेदकत्वव्युदासः । ननु घटत्त्वमात्रस्य स्वरूपतो हेतुत्त्वे तस्य सर्वदैव सत्त्वात् सर्वदैव घटानां प्रत्यक्षापत्तिरित्यत आह—घटत्वाज्ञानेति । विशेषणज्ञानविरहेण = घट इत्याकारकप्रत्यक्षे विशेषणतया भासमानघटत्त्वविषयकज्ञानविरहेण । आपत्त्यसंभवादिति । विशिष्टज्ञानं प्रति विशेषणज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्त्वाद्, 'घट' इत्याकारकज्ञानस्य च विशिष्टज्ञानात्मकत्त्वात् तत्कारणीभूतघटत्त्वज्ञानस्य प्रागपेक्षणात्, तद्विरहेणैवापत्त्यसंभवादित्यर्थः । इदं चेति । सामान्यज्ञानस्य प्रत्यासत्तित्त्वं चेत्यर्थः । अनागतेति । नवीनघटो भविष्यतीत्यादिज्ञानोत्तरं घटवत्त्वेन यत्र निखिलप्रागभावानां मानसाद्यात्मकप्रत्यक्षं तदनुरोधादिति भावः । सामान्यस्य = घटादेः । तज्ज्ञानस्य = सामान्यज्ञानस्य ।

## ❀ जागदीशी ❀

अत्र कल्पे तत्प्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति निर्विकल्पकादिसाधारण-तद्विषयकज्ञानत्वेनैव हेतुत्वम्। अत्र च कार्यस्य स्वप्रकारीभूततत्तत्सामान्याश्रयनिष्ठविशेष्यत्वं सम्बन्धः।

## ❀ काशिकानन्दी ❀

अत्रकल्पे=नव्यमते। निर्विकल्पके व्यभिचारवारणाय तद्विषयकत्वं परित्यज्य तत्प्रकारकत्वं प्रत्यक्षविशेषणमुक्तम्। निर्विकल्पकादीति। आदिना सविकल्पकस्या-लौकिकप्रत्यक्षस्य च संग्रहः। स्वप्रकारीभूततत्तत्सामान्याश्रयनिष्ठविशेष्यत्वमिति। अत्र विशेष्यतामात्रस्य सम्बन्धत्वोक्तौ 'घटः पटश्चे'त्याकारकसमूहालम्बनज्ञाने व्यभिचारः स्यात्, विशेष्यतासम्बन्धेन घटत्वप्रकारकप्रत्यक्षस्य घटे पटे चैव सत्त्वात्, कारणीभूत-घटत्वज्ञानस्य च स्वविषयीभूतघटत्वादिमद्वृत्तिविषयतासम्बन्धेन पटे विरहात्, अतः निष्ठान्तं तदन्तर्गततत्तत्पदं च। नचैतादृशसम्बन्धस्य कार्यतावच्छेदकत्वे तत्प्रकारकत्वं कार्यतावच्छेदकधर्मकोटौ किमर्थं? तद्विषयकत्वस्यैव प्रवेशयितुं युक्तत्वादिति वाच्यम्। घटत्वनिर्विकल्पकमेव यत्र द्रव्यत्वप्रकारकघटविशेष्यकप्रत्यक्षं तत्र व्यभिचारवारणाय तत्प्रकारकत्वप्रवेशात्। प्रकारतात्वविषयतात्वयोरखण्डधर्मत्वाच्च। स्वप्रकारीभूतसामान्या-श्रयत्वमात्रस्य सम्बन्धत्वोक्तौ नष्टघटादिविषयकज्ञानस्य स्वप्रकारीभूतघटाश्रयत्वसम्बन्धेन तत्काले कपालादौ विरहाद् व्यतिरेकव्यभिचारः स्यात्। अनागतघटाश्रयत्वाऽप्रसिद्धे-रप्रसिद्धसंसर्गेण कार्यत्वानुपपत्तेश्च। अप्रसिद्धधर्मस्य कार्यतावच्छेदकसंसर्गतावच्छेदकत्वेऽपि अप्रसिद्धस्य कार्यतावच्छेदकसंसर्गत्वानभ्युपगमात्। कारणस्य स्वाधिकरणे स्वाऽव्यवहितोत्तरं कार्यतावच्छेदकसम्बन्धेन कार्यवैशिष्ट्यप्रयोजकत्वनियमेन नष्टघटज्ञानादेः कारणतानुपपत्तिप्रसङ्गाच्च। एतेन स्वप्रकारीभूतसामान्याश्रयत्वस्य कार्यतावच्छेदकत्वं, स्वविषयीभूतसामान्याश्रयत्वस्य कारणतावच्छेकत्वं च वक्तव्यमिति न व्यतिरेकव्यभिचार इति निरस्तम्।

अथ "घटा" इत्याकारकज्ञानीयघटत्वाश्रयनिष्ठद्रव्याणीतिज्ञानान्तरीयविशेष्यतासम्बन्धेन तादृशघटत्वप्रकारप्रत्यक्षस्य पटेऽपि सत्त्वात्तत्र व्यभिचारो दुर्वारः। न च स्वप्रकारीभूत-तत्तत्सामान्याश्रयनिष्ठं यत्स्वीयविशेष्यत्वं तस्य प्रत्यासत्तित्वोपगमान्न दोष इति वाच्यम्, एवमपि "घटा द्रव्याणि चे"ति समूहालम्बनज्ञाने व्यभिचारापत्तेः। स्वविषयीभूतघटत्वाश्रय-निष्ठविषयतासम्बन्धेन कारणस्य पटे विरहात्। न च स्वप्रकारीभूतसामान्याश्रयमात्रनिष्ठत्वं वक्तव्यमिति न दोष इति वाच्यम्। यतो घटत्वाश्रयमात्रनिष्ठत्वं यदि घटत्वाश्रयनिखिल-घटवृत्तित्वं तदा उक्तदोष एव। यदि च स्वाश्रयेतराऽवृत्तित्वे सति निखिलस्वाश्रयवृत्तित्वं तदा प्रमेयत्वसामान्यस्थले स्वाश्रयेतराऽप्रसिद्ध्या दोषः। भेदस्याऽव्याप्यवृत्तित्वे अनि-त्यघटव्यक्त्याश्रयेतरत्वस्य कपालादौ सत्त्वेन तत्र दोषप्रसङ्गाच्च। स्वाश्रयी-भूता यावत्यो व्यक्तयस्तत्तद्भेदकूटप्रवेशे महागौरवं दुर्ग्रहत्वं चेति।

## ❀ काशिकानन्दी ❀

मैवम् । स्वप्रकारीभूतसामान्याश्रयनिष्ठं यत् स्वीयप्रकारतानिरूपितविशेष्यत्वं तस्य कार्यतावच्छेदकसम्बन्धत्वात् । घटा द्रव्याणि चेति ज्ञानीयघटत्वनिष्ठप्रकारतानिरूपित-विशेष्यत्वं न पटादौ । न चैवं स्वप्रकारीभूतसामान्याश्रयनिष्ठत्वान्तविशेषणानर्थक्यमिति वाच्यम् । धूमत्वेन धूलीपटलप्रत्यक्षस्य धूमत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन धूलीपटले सत्वात् तत्र च कारणविरहाद् व्यभिचारापत्तेः । न च घटत्वेन घटपटोभय-प्रत्यक्षं तत्र व्यभिचारः । घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः पटेऽपि सत्त्वात्तत्र च कारणविरहादिति वाच्यम् । यतस्तत्र विशेष्यताद्वयमेव । घटनिष्ठं प्रमीयं, पटनिष्ठं च भ्रमीयमिति । न चैवं स्वविषयीभूतसामान्याश्रयनिष्ठं यत् स्वीयविषयतानिरूपितविषयत्वं तस्यैव प्रत्यसत्तित्वसंभवे प्रकारतात्वविशेष्यतात्वाभ्यां विषयत्वप्रवेशोऽनुचित इति वाच्यम् । घटवद् भूतलमिति प्रत्यक्षीयघटनिष्ठविषयतानिरूपितविषयतायाः समवेतत्वसम्बन्धेन घटस्य च घटत्वे सत्त्वेन तत्र कारणविरहेण व्यभिचारापत्तेः । न च संयोगेन घटाश्रयनिष्ठविशेष्यत्व-स्यैवावश्यप्रवेशनीयतया नैष दोष इति वाच्यम् । स्ववृत्तिवाच्यत्ववद्घटत्वत्वादिसम्बन्धेन द्रव्यविशिष्टं यद् घटत्वं तद्विशिष्टत्वेन घटस्य यत्र प्रत्यक्षं तत्र व्यभिचारापत्तेः तत्र समवाय-सम्बन्धेन घटत्वाश्रीभूतं यद् द्रव्यं तन्निष्ठा या घटत्वनिष्ठविशेष्यतानिरूपितद्रव्यसामान्य-निष्ठप्रकारताख्यविषयता तस्याः पटादावपि सत्त्वात्तत्र च कारणविरहात् । न च स्वीयसम-वायसम्बन्धावच्छिन्नघटत्वनिष्ठविषयतानिरूपितविषयत्वप्रवेशान्न दोष इति वाच्यम् । जगदी-शमतेऽन्तराभासमानविषयतयोरैक्येन समवायावच्छिन्नविषयताया विशेष्यतायाश्चैक्यात् । अस्माकं तु स्वीयघटत्वनिष्ठप्रकारतात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावद्विशेष्यताया प्रवेशेन दोषविरहात् । विषयतात्वप्रकारतात्वादेरखण्डधर्मत्वेन गौरवविरहस्य प्रागेवा-वेदितत्वाच्च ।

एवं च स्वप्रकारीभूततत्तत्सामान्याश्रयनिष्ठं यत्स्वीयतत्तत्प्रकारतानिरूपितविशेष्यत्वं तस्य सम्बन्धत्वलाभायैव कार्यतावच्छेदककोटावपि तत्प्रकारकत्वं निवेशितं, न तु कार्य-तावच्छेदककोटावपि तत्प्रविष्टमिति मन्तव्यम् ।

केचित्तु सम्बन्धघटकतया सम्बन्धभानानङ्गीकर्तृमते दोषवारणाय तत्प्रकारकत्वस्य-कार्यतावच्छेदककोटौ प्रवेशः । तथा हि समवायेन घटत्वप्रकारकज्ञानात् कालिकेन घटत्वप्रकारकप्रत्यक्षवारणाय तत्सम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितघटत्वाश्रयनि-ष्ठविशेष्यत्वस्य कार्यतावच्छेदकसम्बन्धत्वं वाच्यम् । तथा च प्रकारतांशे संसर्गघटकतया सम्बन्धावच्छिन्नत्वभानस्वीकारापत्तिः । तत्प्रकारकत्वस्य कार्यतावच्छेदककोटिप्रवेशे च तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेन कारणत्वोक्त्या न दोषसंभावनेत्याहुः ।

तच्चिन्त्यम् । प्रकारतायां सम्बन्धावच्छिन्नत्वाऽदानेऽपि आधेयतायां संसर्ग घटकीभूतायां सम्बन्धावच्छिन्नत्वदानावश्यकत्वात् । अन्यथा यथाकथंचित्सम्बन्धेन स्वविषयीभूतसामान्याश्रयताया जगति सत्त्वेन व्यभिचारापत्तेः । विषयतासम्बन्धेन ईश्वर-

## ❀ काशिकानन्दी ❀

ज्ञानस्य कारणतावादिनामेव विजयापत्तेश्च। स्वप्रकारीभूतसामान्याश्रयनिष्ठत्वान्तवैफल्यापत्तेश्च। तस्याऽव्यावर्त्तकत्वात्। न हि संसर्गघटकाधेयतायां सम्बन्धावच्छिन्नत्वम् सोढुं शक्यं न तु प्रकारतायामिति युक्तिसहम्। न च स्वप्रकारीभूतघटत्वसमावायविशेषत्वैतदुभयस्य संसर्गत्वादाधेयत्वस्य प्रवेशविरहेण न दोष इति वाच्यम्। अनित्यव्यक्तिस्थदोषप्रसङ्गात्।

अथ स्वप्रकारीभूतसामान्याश्रयनिष्ठत्वान्तमुपलक्षणमात्रं न तु संसर्गकोटिप्रविष्टं कार्यताद्यवच्छेदकसम्बन्धाननुगमस्याकिंचित्करत्वात्। तथाचाधेयतायाः सम्बन्धावच्छिन्नत्वेऽपि क्षतिविरहः। कार्यकारणभावस्तु स्वप्रकारीभूतसामान्याश्रयनिष्ठत्वोपलक्षितं स्वीयप्रकारतानिरूपितविशेष्यत्वं तेन सम्बन्धेन तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रत्यक्षावच्छिन्नं प्रति तत्सम्बन्धेन तद्धर्माश्रयवृत्तित्वोपलक्षितविषयतासम्बन्धेन तदितरसम्बन्धावच्छिन्नतन्निष्ठविषयताशालिज्ञानत्वेन हेतुत्वमिति चेद्?

एवं सति प्रकारतानिरूपितत्वान्तस्यापि उपलक्षणविधया प्रवेशयितुं शक्यः प्रकारतायां सम्बन्धावच्छिन्नत्वप्रवेशस्याप्यकिंचित्करतापत्तेः। किं च यत्र समवायेन घटत्वप्रकारकं कालिकेन घटत्वप्रकारकं च 'घटः घटा" इत्याकारकसमूहालम्बनं समवायेन घटत्वाश्रयनिष्ठं यत् कालिकसम्बन्धावच्छिन्नघटत्वप्रकारतानिरूपितविशेष्यत्वं तस्य पटादावपि सत्त्वात् समवायसम्बन्धावच्छिन्नघटत्वप्रकारकप्रत्यक्षस्योक्तसम्बन्धेन पटादौ वर्त्तमानत्वात् समवायेतरसम्बन्धानवच्छिन्नघटत्वज्ञानस्य समावायावच्छिन्नघटत्वाश्रयनिष्ठविषयतासम्बन्धेन पटे विरहाद् व्यभिचारो दुरुद्धर इत्यकामेनापि सम्बन्धेन तदाश्रयनिष्ठस्य तत्सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्य सम्बन्धत्वं वक्तव्यमिति कार्यतावच्छेदककोटौ तत्प्रकारकत्वप्रवेशो विफल एव। न च समवायेन घटत्वप्रत्यक्षकाले कालिकेन घटत्वप्रकारकप्रत्यक्षं न भवतीति वाच्यम्। मानाभावात्। अत एव "अन्यथा पुनरिष्टमेव तदानीं सम्बन्धान्तरेण तदाश्रयप्रत्यक्षम्" इत्यग्रिमजगदीशग्रन्थोऽपि संगच्छत इति। एवं च संसर्गघटकतया संसर्गस्य न भानमिति प्रवादस्य संसर्गावच्छेदकतया संसर्गान्तरस्य न भानमित्येवार्थः। न तु संसर्गघटकप्रकारतादेरवच्छेदकसंसर्गस्य न भानमितीत्यवधेयम्।

वस्तुतस्तु विषयभेदेन विषयताभेदमादृत्य एवंविधकार्यकारणभावो जगदीशेनाभिहितः। एवं च स्वप्रकारीभूतघटत्वाश्रयनिष्ठविशेष्यत्वादेः पटादावसंभवादेव दोषवारणे स्वीयघटत्वप्रकारतानिरूपितविशेष्यत्वपर्यन्ताश्रयणमपि न कर्त्तव्यम्। स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतात्वेनानुगमाच्च नाननुगमो दोषः। तत्रापि स्वप्रकारीभूतत्वान्तमुपलक्षणविधया अभिहितम्। घटत्वाद्याश्रयनिष्ठविशेष्यतात्वेनैव संसर्गत्वात्। कार्यतावच्छेदककोटौ तत्प्रकारकत्वनिवेशेनैव व्यभिचारवारणात्। विशेष्यताया ज्ञानप्रतियोगिकत्वेनैव तस्याः कार्यतावच्छेदकसंसर्गत्वनिर्वाहात्। एवं सति कार्यतावच्छेदककोटौ तत्प्रकारक-

## ❀ काशिकानन्दी ❀

प्रवेशवैयर्थ्यशङ्कापि नास्ति । द्रव्यत्वकम्बुग्रीवादिमत्त्वाद्याश्रयनिष्ठविशेष्यतया घटत्वज्ञानोत्तरप्रत्यक्षस्य घटादावसत्त्वेन द्रव्यत्वादिज्ञानस्य च पूर्वं विरहेण व्यभिचारापत्तेः। स्वप्रकारीभूतेतिजगदीशोक्तिश्च यत्सम्बन्धावच्छिन्ना स्वप्रकारता तत्सम्बन्धावच्छिन्नतत्तत्सामान्याश्रयत्वलाभाय ।

यद्यपि गुरुभूतकार्यतावच्छेदकधर्मप्रवेशापेक्षया गुरुभूतस्य संसर्गत्वस्वीकार उचितस्तथापि घटत्वादेः प्रकारितासम्बन्धेन कार्यतायामवच्छेदकत्वमिति स्वीकारे संसर्गकोटौ प्रकारत्वप्रवेशवादिनां गौरवम् । स्वप्रकारताश्रयघटत्वाश्रयनिष्ठविशेष्यतायाः संसर्गतया प्रकारताया आश्रयत्वस्य अधिकं प्रवेशापत्तेः । अस्माकं प्रकारतायाः कार्यतावच्छेदकतावच्छेदकसंसर्गतया घटत्वनिष्ठत्वं न निवेशनीयं प्रकारतायामिति दिक् ।

इदं तु बोध्यम् । कार्यकारणभावावच्छेदककोटौ तत्पुरुषीयत्वं निवेशनीयम् । अन्यथा एकपुरुषीयतद्विषयकज्ञानात्पुमन्तरस्य तत्प्रकारकप्रत्यक्षोत्पादापत्तेः । न चात्मनिष्ठप्रत्यासत्त्या विशिष्टप्रत्यक्षं प्रति विशेषणज्ञानत्वेन कारणताया आवश्यकतया तद्विरहेणैव नापत्तिरिति वाच्यम् । एवमपि तत्सम्बन्धावच्छिन्नतत्प्रकारप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेन कारणताया अग्रे वक्तव्यतया पुमन्तरसाधारणतद्विषयकज्ञानत्वेन हेतुत्वे पुमन्तरस्य कालिकसम्बन्धावच्छिन्नघटत्वप्रकारकप्रत्यक्षदशायां तत्पुरुषस्यापि समवायेन घटत्वप्रकारकप्रत्यक्षानुदयापत्तेः । न च तत्पुरुषस्य कालिकसम्बन्धानवच्छिन्नतद्विषयकयत्किंचिज्ज्ञानमादायैव तत्प्रकारकप्रत्यक्षोपपत्तिरिति वाच्यम् । एवं सति तत्पुरुषस्य कालिकसम्बन्धमात्रावच्छिन्नतद्विषयकज्ञानदशायां समवायसम्बन्धावच्छिन्नघटत्वप्रकारकप्रत्यक्षोत्पादापत्तेः । पुमन्तरस्य कालिकसम्बन्धानवच्छिन्नतद्विषयकज्ञानस्य तदानीं संभवात् । तस्यापि कारणत्वात् ।

ननु तत्पुरुषीयप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वविरहादेव नोक्तापत्तिः । तत्प्रकारकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे च पुमन्तरस्य तादृशप्रत्यक्षमुत्पद्यत एवेति चेन्न, सामानाधिकरण्यप्रत्यासत्त्या तत्पुरुषे तादृशप्रत्यक्षप्रयोजकतद्विषयकज्ञानसद्भावात् । न च विशिष्टज्ञानकार्यकारणभावस्थले समवायेन तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रत्यक्षं प्रति समवायेन तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेन कारणत्वमास्तां, तत एव कालिकेन घटत्वप्रकारकप्रत्यक्षवतः समवायेन तत्प्रकारकप्रत्यक्षापत्तिविरहादिति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावस्थले सम्बन्धनियन्त्रणं पुरुषनियन्त्रणं च न कर्तव्यमिति वाच्यम् । संयोगेन घटवद्भूतलमित्यादिज्ञानोत्तरं घटकालीनो धूम इत्याद्युपनीतभानोत्पादानुरोधेनात्मनिष्ठप्रत्यासत्त्या कार्यकारणभावस्थले सम्बन्धनियन्त्रणासंभवात् ।

अथ समवायघटितसामानाधिकरण्यप्रत्यासत्त्यैव कार्यकारणभाव आस्तां किं तत्पुरुषीयत्वादिनिवेशनेति चेन्न । घटत्वप्रकारकप्रत्यक्षत्वमात्रस्य कार्यतावच्छेदकत्वे निखिलघटविषयताप्रयोजकविरहेण प्रत्यक्षस्य तदनुपपत्तेः । न च घटविषयकत्वमपि कार्यतावच्छेदकं वक्तव्यमित्यदोष इति वाच्यम् । एकघटविषयकत्वस्य कार्यतावच्छेदकत्वे घटान्तरभानानु-

## ❀ जागदीशी ❀

कारणस्य तु स्वविषयीभूततत्तत्सामान्याश्रयनिष्ठविषयत्वं प्रत्यासत्तिरतो नाति प्रसङ्गः। न चैवं निर्विकल्पकोत्तरं जातस्य घटत्वविशिष्टप्रत्यक्षस्या यावद्घटविषयकत्वापत्तिः। इष्टत्वात्। सामान्यप्रकारकज्ञानत्वेन हेतुत्वोप गमेऽपि निर्विकल्पकतृतीयक्षणे यावद्घटावगाहिप्रत्यक्षोत्पत्त्या क्षणविलम्ब शपथनिर्णेतव्यत्वात्। न च तद्विषयकत्वतत्प्रकारकत्वयोः समशरीरत तद्विषयकत्वेनैव हेतुत्वमित्यत्र विनिगमकाभावः। प्राथमिकतद्विशिष्टप्रत्य

## ❀ काशिकानन्दी ❀

पपत्तेः। निखिलघटविषयकत्वस्य तथात्वे घटत्वप्रकारकैकघटविषयकप्रत्यक्षस्य कदाचि प्यनुत्पादोऽपि स्यात्। अस्मन्मते घटान्तरभासककारणसद्भावेऽपि अदृष्टविशेषादि प्रतिबन्धकाभावविरहेण कदाचिदेकघटविषयकमपि प्रत्यक्षमुपपद्यते। भवन्मते ताद प्रतिबन्धककाले घटप्रत्यक्षमेव नोत्पद्येत। निखिलत्वस्य दुर्वचत्वाच्चेति दिक्।

स्वविषयीभूतेति। अत्रापि स्वविषयीभूतसामान्याश्रयमात्रनिष्ठविषयत्वस्य कारण वच्छेदकत्वं वाच्यम्। अन्यथा घटत्वाद्यश्रयनिष्ठप्रमेयमित्याद्याकारकज्ञानीयविषयत जगति सत्त्वेन व्यतिरेकव्यभिचारः स्यात्। यदि च कारणान्तरविरहादेव नैष दोष विभाव्यते तदापि उक्तसम्बन्धेन ज्ञानस्य केवलान्वयितया तदभावाऽप्रसिद्ध्या कारण दुर्घटमेव। अन्यथा स्ववृत्तिविषयतावत्त्वाद्यात्मकलघुभूतसम्बन्धस्यैव जगद्वृत्तिनः सं एवं विधगुरुभूतसंसर्गस्य कारणतावच्छेदकत्वस्वीकारानौचित्यं स्यात्। यत्र पीतत्वां भ्रमजनकदोषस्य पित्तादेः सद्भावस्तत्र पीताम्बरदर्शनोत्तरं पीतत्वप्रकारेण शङ्खस प्रत्यक्षप्रसङ्गाच्च। शङ्खविषयताप्रयोजकसद्भावादिति ध्येयम्। वस्तुतो विषयताभेदमा कार्यकारणभावान्मात्रपदं न प्रवेश्यम्।

नातिप्रसङ्गः=तत्तत्सामान्यादेः कारणतावच्छेदसंसर्गकोट्यादौ प्रवेशेन घट ज्ञानाद्युत्तरं न पटत्वादिप्रकारकप्रत्यक्षप्रसङ्गः। निर्विकल्पकोत्तरमिति। प्रथमं सन्निक ततो घटघटत्वादिनिर्विकल्पकं, ततः घटत्वप्रकारकं सन्निकृष्टघटविशेष्यकं प्रत्यक्षं, त निखिलघटानां प्रत्यक्षमिति प्राचीनानां प्रक्रिया। तत्र यदि अलौकिकप्रत्यक्षं प्रत घटत्वादिज्ञानमात्रेण हेतुत्वं तदा निर्विकल्पकस्यापि घटत्वविषयकत्वात् प्राथमि सविकल्पककाले एव निखिलघटानां प्रत्यक्षापत्तिरित्याद्येपरतेषाम्। यद्यपि घटत्व दिप्रकारकसविकल्पकोत्तरं घटवानितिज्ञानं ततश्च घटवत्वेन निखिलघट प्रत्यक्षमिति प्राचीनानां प्रक्रियेति सविकल्पकोत्तरमपि घटवत्त्वेन निखिलघटवत्प्रत्यक्षापि संभवतीति निर्विकल्पकोत्तरमित्युक्तेर्न्यूनत्वं, तथापि प्राथमिकतद्विशिष्टप्रत्यक्षानुपपत्ते तद्विषयकत्वेन हेतुताबीजरूपतया अग्रे वक्तव्यतया तदनुरोधेनेहापि निर्विकल्पकोत्तर वद्घटप्रत्यक्षापत्तिमात्रमभिहितमिति द्रष्टव्यम्। न चेति। विनिगमकाभाव इत्यन्वय समशरीरतयेति। विषयतात्वस्येव प्रकारतात्वस्याप्यखण्डधर्मत्वादिति भाव हेतुत्वमिति। न तु तत्प्रकारकत्वेनेति शेषः। प्राथमिकतद्विशिष्टप्रत्यक्षे=घटघटत्वा

## ❀ जागदीशी ❀

सौरभादिविशेष्यकज्ञानोत्तरं जायमाने 'सुरभि चन्दनम्' इत्यादिप्रत्यक्षे, च व्यभिचारादेव तत्प्रकारकज्ञानत्वेन हेतुत्वस्यासंभवात् ।

न च स्वप्रकारीभूततत्तत्सामान्याश्रयनिष्ठालौकिकमुख्यविशेष्यतासम्बन्धेन तत्तत्सामान्यप्रकारकप्रत्यक्षं प्रत्येव तत्तत्सामान्यप्रकारकज्ञानत्वेन हेतुत्वं वाच्यमतो नोक्तदोषः । कार्यतावच्छेदकसम्बन्धस्य गुरुत्वापत्तेः ।

## ❀ काशिकानन्दी ❀

निर्विकल्पकोत्तरजायमानघटत्वादिविशिष्टप्रत्यक्षे । व्यभिचारादित्यन्वयः । विशेष्यतासम्बन्धेन तत्तत्सामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन वा तत्तत्सामान्यप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति तत्तत्सामान्यप्रकारकज्ञानत्वेन कारणत्वे घटघटत्वयोर्निर्विकल्पकोत्तरजायमानघटइत्याकारकप्रत्यक्षे व्यभिचारः । तादृशप्रत्यक्षस्यापि स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन घटे सत्त्वात्तत्र च पूर्वं घटत्वप्रकारकज्ञानविरहादित्यर्थः ।

ननु स्वीयघटत्वनिष्ठालौकिकप्रकारतानिरूपितविशेष्यतासम्बन्धेन, स्वीयघटत्वनिष्ठालौकिकप्रकारतानिरूपितघटत्वाश्रयनिष्ठविशेष्यतासम्बन्धेन वा तत्प्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति तत्प्रकारकज्ञानस्य कारणत्वोक्त्या नायं व्यभिचारः । प्राथमिकसविकल्पकीयघटत्वप्रकारताया अलौकिकत्वविरहात्, सामान्यलक्षणाजन्यज्ञानीयप्रकारतायाश्च अलौकिकत्वाभ्युपगमात्, स्वीयघटत्वप्रकारतानिरूपितालौकिकसंसर्गतानिरूपितविशेष्यत्वं वा संसर्गः इति यदाशङ्क्यते तदाह—सौरभादीति । चन्दने सौरभमित्याकारज्ञानोत्तरमित्यर्थः । अत्र सौरभं विशेष्यं चन्दननिष्ठत्वं विशेषणम् । एतच्च ज्ञानलक्षणासम्पादनायोपन्यस्तम् । सुरभि चन्दनमिति । अत्र चन्दनांशे लौकिकं चाक्षुषं सौरभांशस्योपनीतभानम् । इदं हि सौरभप्रकारकं ज्ञानम् । भवति च सौरभनिष्ठा प्रकारता अलौकिकी किन्तु पूर्वक्षणे सौरभप्रकारकज्ञानं नाभूत् किंतु सौरभविशेष्यकमेवेति व्यभिचार इति भावः । उक्तदोषद्वयं वारयतां मतं निराचष्टे—न चेति । नोक्तदोष इत्यन्वयः । अलौकिकमुख्यविशेष्यतेति । घट इत्याकारकप्राथमिकप्रत्यक्षे सुरभिचन्दनमित्यत्र च घटनिष्ठं चन्दननिष्ठं च विशेष्यत्वं नालौकिकमिति नोभयत्र दोषः । पुरुषवद् भूतलं पुरुषे दण्डश्चेत्याकारकसमूहालम्बनज्ञानोत्तरजायमाने दण्डिमद्भूतलमित्याकारकालौकिकप्रत्यक्षे दण्डनिष्ठप्रकारतानिरूपितालौकिकविशेष्यतायाः पुरुषे वर्त्तमानत्वात्तत्पूर्वं च दण्डप्रकारकज्ञानविरहाद् व्यभिचार स्यादिति मुख्यविशेष्यत्वपर्यन्तम् । न चालौकिकविशेष्यत्वं तत्र न पुरुष इति वाच्यम् । उपनीततया भाने एव तत्सम्भवात् । दण्डवत्त्वेन निखिलपुरुषाणामपि तत्र भानसंभवाच्चालौकिकत्वसंभवात् । इन्द्रियसम्बद्धत्वादेरत्राप्रवेशेन धूमकालीनो घट इत्यादौ न दोषसंभावना येन तत्र दोषवारणं मुख्यत्वप्रवेशस्येति मन्तव्यम् । प्रत्यक्षमिति । अत्र चाक्षुषत्वादिना कार्यताविरहान्न कार्यताधिक्यम् । एवं च नेन्द्रियादिभेदेन कारणानन्त्य-

## ❀ जागदीशी ❀

चन्दने सौरभमित्यादिज्ञानोत्तरं जायमानस्य सुरभिचन्दनमित्येवं सौरभाश्रयस्यविशेष्यकमानसप्रत्यक्षस्य सौरभप्रकारकज्ञानाऽजन्यत्वेन तथापि व्यभिचारतादवस्थ्याच्च। न च तद्विषयकज्ञानत्वेन हेतुत्वे 'घटवदि' त्यादौ संसर्गविधया संयोगज्ञानादपि संयोगवत्वेन तदाश्रयस्य प्रत्यक्षापत्तिरतः तत्प्रकारकज्ञानत्वेनैव हेतुत्वं युक्तमिति वाच्यम्। संयोगविशिष्टबुद्धिसामान्यं प्रति सांसर्गिकान्यसंयोगविषयताकज्ञानत्वेन हेतुतया तद्विरहादेव तत्र 'संयोगवदि' ति ज्ञानासंभवात्। सांसर्गिकसाधारणतद्विषयताकज्ञानत्वेन तद्विशिष्टबुद्धौ हेतुतास्वीकारे तु तवापि तत्र 'संयोगव' दित्याकारकज्ञानोत्पादेन तस्य यावत्संयोगाश्रयविषयकत्वोपगमेऽपि क्षत्यभावात्।

## ❀ काशिकानन्दी ❀

मपि। मानसप्रत्यक्षस्येति। एतेन चन्दननिष्ठविशेष्यताया अलौकिकत्वं सूचितम्। प्राक् तु चन्दनस्य चाक्षुषमभिहितमिति विशेषः। चन्दने सौरभमिति ज्ञानोत्तरं चन्दने सन्निकर्षसत्त्वेऽपि सौरभत्वेन न निखिलचन्दनविषयकचाक्षुषमिति नालौकिकत्वं चन्दनविशेष्यताया इति ब्रुवन्तं प्रति मानसेति। मानसं तु तथाविधमनुभवसिद्धमिति भावः।

केचितु—स्वप्रकारीभूतसामान्याश्रयनिष्ठालौकिकमुख्यविशेष्यतासम्बन्धस्य कार्यतावच्छेदकत्वान्न दोष इति वक्ष्यमाणारुचेराह— सौरभविशेष्यकज्ञानोत्तरमिति ( पृ० ५५) सुरभिचन्दनमित्यादिप्रत्यक्षे = तथाकारकमानसप्रत्यक्षे। प्राथमिकसविकल्पके उक्तदोषद्वयमपनयति—नचेति। एवमपि द्वितीयदोषतादवस्थ्यमित्याशयेनाह—चन्दने सौरभमितीति विवृण्वन्ति। घटवदित्यादौ=घटवदित्याद्याकारके। अभेदः सप्तम्यर्थः। संयोगज्ञानादित्यनेनान्वयः। यद्वा— घटवदित्यादौ=घटवदित्याद्याकारकज्ञाने। संयोगज्ञानादपि= संयोगस्य भानात्ततोऽपि इति योजनीयम्। तत्प्रकारकज्ञानत्वेनैवेति। एवं च घटवदित्याकारकज्ञाने संयोगादेः संसर्गविधयैव भानं, न तु प्रकारविधयेति नास्माकं दोष इति भावः। न च संयोगप्रकारकप्रत्यक्षं प्रति संयोगज्ञानस्य कारणत्वमित्येवं कार्यकारणभावाऽकल्पनादेव नोक्तापत्तिरिति वाच्यम्। तथा सति संयोगप्रकारकज्ञानस्य कदाप्यनुत्पादापत्तेः। सांसर्गिकान्येति। एवं च घटवदितिज्ञानीयसंयोगविषयतायाः सांसर्गिकान्यत्वविरहान्न तदुत्तरं निखिलसंयोगप्रत्यक्षापत्तिरिति भावः। ननु सांसर्गिकान्यत्वनिवेशे गौरवं, तदपेक्षया तत्प्रकारकज्ञानत्वेन कारणताया एव लघुत्वादित्याशङ्कायामेतादृशगौरवं त्वयापि सोढव्यमित्याशयेनाह— सांसर्गिकसाधारणेति। इत्याकारकज्ञानोत्पादेन= इत्याकारकसविकल्पकज्ञानोत्पादेन।

अयमर्थः—विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वं सर्वाभिमतम् तत्र च तद्विशिष्टबुद्धिं प्रति सांसर्गिकसाधारणतन्निष्ठविषयताकज्ञानत्वेन हेतुतास्वीकारे घटवदित्याकारकज्ञानकाले संयोगस्य संसर्गविधया भानात् प्राचीनानामपि उत्तरक्षणे संयोगव-

❀ जागदीशी ❀

वस्तुतस्तु तद्विषयकज्ञानत्वमात्रेण हेतुत्वे समवायेन घटत्वप्रकारकज्ञानात् कालिकसम्बन्धेन तदाश्रयस्य कालादेः प्रत्यक्षापत्त्या तत्सम्बन्धावच्छिन्नतत्प्रकारकतदाश्रयप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतन्निष्ठविषयताकज्ञानत्वेनैव हेतुत्वं वाच्यम्, न तु तत्सम्बन्धावच्छिन्नतत्प्रकारकज्ञानत्वेन, तथा सति 'सुरभि चन्दन' मित्यादिप्रागुक्तमानसोपनीतभाने व्यभिचारभिया तत्तद्बुद्धिभिन्नत्वस्य तत्प्रकारकज्ञानाऽव्यवहितोत्तरत्वस्य वा कार्यतावच्छेदकानुप्रवेशे महागौरवापत्तेः। न चैकसम्बन्धेन तत्प्रकारकप्रत्यक्षदशायां

❀ काशिकानन्दी ❀

दित्याकारकसयोगप्रकारकप्राथमिकसविकल्पकं दुर्वारं स्यात्। एवं च सति तृतीयक्षणे संयोगवत्वेन निखिलसंयोगवतामपि तद् दुरपह्नवमेव तेषां स्यात्। तत्र चेत् प्राचीनैरिष्टापत्तिः क्रियते तदा एकक्षणविलम्बस्य शपथमात्रनिर्णेयत्वमिति दत्तमुत्तरम्। अथोच्यते, एतद्दोषवारणाय संयोगविशिष्टबुद्धिं प्रति सांसर्गिकान्यसंयोगविषयकज्ञानत्वेन कारणत्वं, घटवदिति ज्ञानोत्तरं च न संयोगवदिति बुद्धिः तत एव च न तृतीयक्षणे निखिलसंयोगवतां प्रत्यक्षमिति तदाऽस्मत्तुल्यत्वमपि। तत्र तु प्राथमिकसविकल्पकेऽलौकिके च पृथक्कार्यकारणभाव इति गौरवमपीति।

नव्यमतं परिष्करोति—वस्तुतस्त्विति। तदितरसम्बन्धानवच्छिन्नेति। निर्विकल्पकज्ञानस्य कारणत्वलाभाय नञ्द्वयम्। समवायेन घटत्वप्रकारकज्ञानान्न कालिकेन घटत्वाश्रयकालादिप्रत्यक्षम्। कालिकेतरसमवायावच्छिन्नत्वाद् घटत्वविषयतायाः। व्यभिचारभियेति। चन्दने सौरभमिति ज्ञाने सौरभनिष्ठविषयतायाः किंचित्सम्बन्धानवच्छिन्नत्वादिति भावः। एवं घट इत्याद्याकारप्राथमिकसविकल्पके बोध्यम्। तत्तद्बुद्धिभिन्नत्वस्य=चन्दने सौरभमित्यादिज्ञानोत्तरजायमानसुरभिचन्दनमित्यादिज्ञानभिन्नत्वस्य। ननु चन्दने सौरभं सुरभिचन्दन चेति समूहालम्बनोत्तरसौरभप्रकारकनिखिलचन्दनविषयकस्य कार्यतावच्छेदकानाक्रान्ततापत्तिरत आह—तत्प्रकारकज्ञानाऽव्यवहितोत्तरत्वस्येति। तथा च तस्यापि सौरभप्रकारकज्ञानाऽव्यवहितोत्तरत्वात्तःसंग्रहः। प्राथमिकसविकल्पके दोषवारणं प्रागुक्तदिशा।

यद्वा तत्तद्बुद्धिभिन्नत्वस्य=तत्तद्बुद्धिव्यक्तिभिन्नत्वस्य। एवं च चन्दने सौरभं सुरभि चन्दनं चेति समूहालम्बनोत्तरसौरभप्रकारकनिखिलतदाश्रयविषयकज्ञानस्याप्युत्पत्तिः। तद्बुद्धिव्यक्तिभेदाऽप्रवेशात्। अत्र अनन्तभेदानां कार्यतावच्छेदकत्वे महागौरवं दुर्ज्ञेयता चात आह—तत्प्रकारकेतीति व्याख्येयम्।

एकसम्बन्धेन=समवायाद्यात्मकैकसम्बन्धेन। तत्प्रकारकप्रत्यक्षदशायां=धूमत्वादिप्रकारकप्रत्यक्षदशायाम्। निर्विकल्पकोत्तरजायमानधूमत्वादिप्रकारकलौकिकप्रत्यक्षदशायामिति यावत्। अस्य सम्बन्धान्तरेण तत्प्रकारकप्रत्यक्षे इत्यत्रान्वयः। न तु बाधक-

## ❀ जागदीशी ❀

सम्बन्धान्तरेण तत्प्रकारकप्रत्यक्षे यदि बाधकसंभवः तदा उत्तरकालं सम्बन्धान्तरेण तदाश्रयस्य प्रत्यक्षे स एव प्रतिबन्धकः, अन्यथा पुनरिष्टमेव तदानीं

## ❀ काशिकानन्दी ❀

संभव इत्यत्र। मतान्तरं वक्ष्यामः। सम्बन्धान्तरेण=कालिकादिना। तत्प्रकारकप्रत्यक्षे=धूमत्वादिप्रकारकप्रत्यक्षे। यदि बाधकसंभव इति। अदृष्टविशेषाद्यात्मकबाधकसंभव इत्यर्थः। उत्तरकालं=समवायादिना घटत्वप्रकारकज्ञानोत्तरकालम्। स एव=लौकिकप्रत्यक्षेऽवश्यकल्पनीयादृष्टविशेषादिरेव। अन्यथा=कालिकादिसम्बन्धेन धूमत्वादिप्रकारकलौकिकप्रत्यक्षप्रतिबन्धकासमवधाने। तदानीं=समवायेन धूमत्वादिप्रकारकप्रत्यक्षोत्तरम्। प्रत्यक्षमिष्टमेवेति योजना। लौकिकप्रत्यक्षवदिति भावः।

अयमाशय :—यत्र दण्डपुरुषयोः प्रत्यक्षं यत्र वा घटघटत्वयोर्निर्विकल्पकं तदुत्तरं संयोगेन दण्डस्य, समवायेन घटत्वस्य वा यथा प्रकारत्वावगाहिप्रत्यक्षं तथा कालिकाद्यात्मकाबाधितनिखिलसंसर्गैः दण्डघटत्वादिप्रकारकज्ञान कुतो नोत्पद्यते। अतोऽत्र कश्चन प्रतिबन्धकविशेषो वाच्यः। येन कदाचन समवायेन घटत्वप्रकारकमेव ज्ञानमुत्पद्यते न तु कालिकादिना, कदाचन च कालिकादिनैव घटत्वप्रकारकज्ञानमुत्पद्यते न तु समवायादिनेति नियम उपपद्यते। स च प्रतिबन्धकविशेषः अदृष्टस्वरूपोऽन्यो वेत्यन्यदेतत्। यत्र तु तादृशप्रतिबन्धकविशेषो नास्ति तत्र समवायकालिकादिभिः घटत्वप्रकारकप्रत्यक्षमुत्पद्यत एव। एवं च येन प्रतिबन्धकविशेषेण घटघटत्वादीनां निर्विकल्पकाद्युत्तरं समवायेनैव घटत्वप्रकारकाज्ञानमुत्पन्नं न तु कालिकेनेति उपपन्नं तेनैव प्रतिबन्धकविशेषेण तदुत्तरमपि कालिकसम्बन्धावच्छिन्नघटत्वप्रकारताकालौकिकप्रत्यक्षवारणमपि भविष्यति। यदि चोच्यते निर्विकल्पककाले प्रतिबन्धकविशेषो नास्ति कालिकादिनापि घटत्वप्रकारकप्रत्यक्षमुत्तरक्षणे उत्पद्यत इति तर्हि तदुत्तरमपि तृतीयक्षणे भवतु नाम कालिकादिना घटत्वप्रकारकालौकिकं सर्वसम्मतम्। सम्बन्धं नियम्य कार्यकारणभावकल्पनेऽपि तादृशस्थले कालिकादिना घटत्वप्रकारकालौकिकस्य दुर्वारत्वात्। एवं चेत एवोपपत्तौ तत्सम्बन्धेन तत्प्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेन हेतुत्वमित्येवं सम्बन्धनियन्त्रणेन कार्यकारणभावकल्पनं विफलमेवेति।

केचित्तु तत्प्रकारकप्रत्यक्षदशायामित्यस्य बाधकसंभव इत्यत्रान्वयः। अयं भावः—समवायाद्येकसम्बन्धेन घटत्वादिप्रकारकप्रत्यक्षकालेऽपि पूर्वोत्पन्नघटत्वनिर्विकल्पकस्य द्विक्षणस्थायितया सत्त्वात्तेनैव तृतीयक्षणे कालिकादिना घटत्वप्रकारकबोधापत्तिरिति तदितरसम्बन्धानवच्छिन्नत्वं निवेशयतामपि तत्र प्रतिबन्धकविशेषः कल्प्य इत्याहुः।

तच्चिन्त्यम्। तत्रैव चतुर्थक्षणे कालिकेन घटत्वप्रकारकप्रत्यक्षवारणाय तदितरसम्बन्धानवच्छिन्नत्वनिवेशावश्यकत्वभ्रंशात्। द्वितीयक्षणावश्यकल्पनीयप्रतिबन्धकविशेषस्य क्षणिकस्थितिस्वीकारादुदोष इति चेत्तर्हि प्रथमक्षणेऽपि उक्तयुक्त्या प्रतिबन्धकविशेषस्या-

❀ जागदीशी ❀

सम्बन्धान्तरेण तदाश्रयस्य प्रत्यक्षम्, अतस्तद्विषयकज्ञानत्वेनैव लघुना हेतुत्वं युक्तमिति वाच्यम् । समवायेन घटत्वप्रकारकानुमित्यनन्तरं जातस्य तत्सम्बन्धेन घटत्वाश्रयप्रत्यक्षस्य सम्बन्धान्तरेण तदाश्रयविषयकत्वस्य दुर्वारतापत्तेः । तादृशानुमितिदशायां सम्बन्धान्तरेण घटत्वस्य परामर्शाद्यभावादेव तत्सम्बन्धावच्छिन्नघटत्वप्रकारकज्ञानानुत्पत्त्या तत्र बाधकस्याकल्पनादिति ध्येयम् ।

❀ काशिकानन्दी ❀

वश्यकल्पनीयतया तस्यैव द्वित्रादिक्षणस्थायितास्वीकारेणोपपत्तेरस्मदुक्तेरेव गरीयस्त्वात् । तस्मात्प्रत्यक्षदशायामित्यस्य तत्प्रकारप्रत्यक्षेऽन्वयः ।

तद्विषयकज्ञानत्वेनैवेति । एवकारेण तदितरसम्बन्धानवच्छिन्नत्वनिवेशव्युदासः । अनुमीतीति । "अयं घटः" इत्याद्याकारकानुमितीत्यर्थः, । तत्सम्बन्धेन = समवायसम्बन्धेन । सम्बन्धातरेण = कालिकादिना । तदाश्रयविषयकत्वस्य = घटत्वाश्रयकालादिविषयकतायाः । तादृशानुमितिदशायाम् = अयं घट इत्याद्याकारकसमवायावच्छिन्नघटत्वप्रकारकानुमितिदशायाम् । तत्सम्बन्धावच्छिन्नघटत्वप्रकारकज्ञानानुत्पत्त्येत्यनेनान्वयोऽस्य । अनुत्पत्तौ बीजं— सम्बन्धान्तरेणेत्यादि । सम्बन्धान्तरेण = कालिकादिना । घटत्वस्य परामर्शाद्यभावात् = घटत्वव्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानविरहात् । बाधकस्याकल्पनादिति । कारणाभावकल्पनेनैवोपपत्तेरिति भावः ।

अयमभिसन्धिः—सम्बन्धनियन्त्रणेन तद्विरहेण च कार्यकारणभावमाचक्षाणस्य वादिद्वयस्यापि निर्विकल्पकोत्तरमबाधितनिखिलसंसर्गैः घटत्वादिप्रकारकप्रत्यक्षमापद्यत एवेति तदवरुरुत्सुभ्यां द्वाभ्यामपि गत्यन्तरमपश्यद्भ्यां प्रतिबन्धकविशेषस्याभ्युपगन्तव्यतया तदुत्तरापादानीयसम्बन्धान्तरावच्छिन्नतत्प्रकारताकसाक्षात्कारवारणौपयिकोपायान्तरगवेषणवैफल्येऽपि, समवायेन घटत्वव्याप्यकम्बुग्रीवादिमत्त्वाद्यनुसन्धानसमनन्तरजायमानसमवायसंसर्गकघटत्वप्रकारकघटविशेष्यकानुमाऽनन्तरजन्मनो मानसाद्यात्मकप्रत्यक्षस्य सम्बन्धान्तरेण घटत्वप्रकारकतावारणाय तदितरसम्बन्धानवच्छिन्नतन्निष्ठविषयताशालिज्ञानत्वेन कारणताऽङ्गीकरणीया । तत्रापि समवायावच्छिन्नघटत्वप्रकारकानुमितिरेव कुतो जाता न पुनः सम्बन्धान्तरेणेति तु न शक्या शङ्कितुं, येन सम्बन्धेन परामर्शो व्यापकतां साध्यवर्त्तिनीमुपलभते तेनैवानुमितेरुत्पद्यमानतया सम्बन्धान्तरावच्छिन्नव्यापकतायाः परामर्शेनानवगाहनादेव तादृशशङ्कोत्थानायोगात् । अथ तत्रापि प्रतिबन्धकविशेषकल्पनापटुभिरस्माभिरदृष्टविशेषः कल्प्यत इति न सम्बन्धान्तरेण घटत्वप्रकारकप्रत्यक्षमापद्यत इति चेद् ? नैतदभिधातुं युज्यते । यतोऽदृष्टविशेषादेः प्रतिबन्धकत्वकल्पनस्यागतिकगतित्वात् तदितरसम्बन्धानवच्छिन्नत्वनिवेशनात्मकगत्यन्तरसद्भावकाले तादृशगत्याश्रयणस्यान्याय्यत्वात् । अथ समवायेनैव व्यापकतावगाहिपरामर्शो जातो न तु कालिकेनेत्यत्र को वा नियामकः, यदि चादृष्टविशेषस्तर्हि स एवोत्तरकालं सम्बन्धान्तरेण तत्प्रकारकप्रत्यक्षविरोधनपटीयानिति

❀ दीधितिः ❀

अपेक्षणीयं च तदिन्द्रियकरणक तद्धर्मवत्त्वबोधसामग्र्यन्तरम् । अ

❀ जागदीशी ❀

नन्विन्द्रियभेदेन नानाकार्यकारणभावस्य परित्यागे घटत्वप्रकारो तदाश्रयस्य प्रत्यक्षमेव क्वचित्स्पार्शनं क्वचिच्चाक्षुषं जायत इत्यत्र किं नियाम कमत आह—अपेक्षणीयं चेति । धूमादौ बाष्पत्वादिभ्रमजनकदोषदशा चक्षुःकरणकबोधसामग्रीसत्त्वेऽपि धूमत्वादिप्रकारकं न तदाश्रयस्य चाक्षु जायत इत्यतस्तद्धर्मवत्त्वबोधानुसरणम् । सामग्र्यन्तरमिति । तथा च तत्

❀ काशिकानन्दी ❀

चेन्नैष दोषः । समवायेनैव पूर्वं व्याप्तिग्रहात् । तदानींतनादृष्टविशेषप्रतिबन्धकस्य चिरक पर्यन्तस्वीकारानौचित्यात् । तथा सति तादृशव्यापकत्वज्ञानोत्तरं सम्बन्धान्तरेण प्र प्रकारकज्ञानस्य कदाप्यनुत्पादापत्तेः । तथा च सम्बन्धान्तरेण व्यापकत्वज्ञानं तेन सम्ब नानुमितिश्च नोत्पद्येत ।

तदाश्रयस्य = घटत्वाश्रयस्य । प्रत्यक्षमेवेति । एवकारो भिन्नक्रमः क्वचिद् सम्बध्यते । किं नियामकमिति । धूमत्वविषयकचाक्षुषोत्तरं धूमत्वाश्रयविषयकस्पा कुतो न भवति, एवं धूमत्वविषयकस्पार्शनोत्तरं धूमत्वाश्रयविषयकचाक्षुषं कुतो न भव धूमत्वज्ञानस्य सत्त्वादिति भावः ।

दीधितौ अपेक्षणीयमिति । तद्धर्माश्रयप्रत्यक्षे इति शेषः । सामग्र्यन्तरमि एवं च धूमत्वचाक्षुषात्मकधूमत्वप्रकारकस्पार्शनादिसाधारणप्रत्यक्षकारणसत्त्वेऽपि त्वक्सं कर्षादिघटितसामग्र्यन्तरस्य तदानीमभावादेव नानियम इति भावः ।

ननु तदिन्द्रियकरणकबोधसामग्र्यन्तरमित्येव दीधितिकृता कुतो नाभिहितमत आह धूमादाविति । तदाश्रयस्य = धूमत्वाश्रयस्य । इत्यत इति ।

ननु तदिन्द्रियकरणकबोधसामग्रीमात्राभिधाने यत्र धूमत्वविषयकं स्पार्शनप्र स्मरणं वा धूमेन सह चक्षुःसन्निकर्षश्चेत्येकः कालः, तदुत्तरं धूमत्वेन रूपेण निर्वि धूमविषयकचाक्षुषं स्यात्, प्रथमक्षणे धूमत्वज्ञानस्य तदिन्द्रियकरणकबोधसामग्र सत्त्वात् । तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्रीत्युक्तौ च न तादृशचाक्षुषं धूमत्वचा निर्विकल्पकादेरपि सामग्र्यन्तर्गतत्वात् । वायुप्रभृतिना त्वक्संयोगसत्त्वेऽपि घटवा सत्त्वेऽपि च घटवायुसंयोगसाक्षात्कारानुत्पादेन संयोगचाक्षुषं प्रति संसर्गिद्वयचाक्षु कारणताया अङ्गीकरणीयतया धूमत्ववत्तात्मकसंसर्गचाक्षुषसामग्र्यां धूमत्वादिचाक्षुषस न्तर्गतत्वादिति बाष्पत्वभ्रमजनकदोषदशापर्यन्तगमनमनुचितमिति चेद् ?

न, तद्धर्मवत्त्वं न तद्धर्मसंसर्गो विवक्षितः । किन्तु तद्धर्मनिष्ठप्रकारतानिरूपितवि

❀ दीधितिः ❀

एवान्धतमसे सौदामिनीसम्पातजनितेऽपि द्रव्यप्रत्यक्षे

❀ जागदीशी ❀

शेषसामग्रीत एव चाक्षुषस्पार्शनादिनियम इति भावः। कारणान्तरपर्यन्तापेक्षायाः प्रयोजनमाह अत एवेति। अन्धतमसं=निबिडं तमः। सौदामिनीसम्पातः=तडित्संयोगः। आलोकस्य पश्चादसत्त्वलाभाय सौदामिनी-

❀ काशिकानन्दी ❀

त्वम्। तथा च तद्धर्मनिष्ठप्रकारतानिरूपिततदिन्द्रियप्रयोज्यविशेष्यताकबोधसामग्र्यन्तरमपेक्षणीयमिति समुदितार्थः। अन्यथा धूमे बाष्पत्वादिभ्रमोत्तरं बाष्पत्वेन निखिलबाष्पप्रत्यक्षं न स्यात् बाष्पत्वसंसर्गलौकिकसाक्षात्कारसामग्रीविरहाद्। एवं च धूमत्वस्मरणधूमेन्द्रियसन्निकर्षौ यत्र युगपज्जातौ तत्राप्युत्तरक्षणं धूमत्वेन निखिलधूमप्रत्यक्षं भवत्येव।

यद्यपि यत्र प्रथमं धूमत्वस्मरणं घटेन सह चक्षुःसन्निकर्षश्च उत्तरक्षणं घटघटत्वनिर्विकल्पकं तत्र तृतीयक्षणे धूमप्रत्यक्षापत्तिरिति तद्वारणायैव तद्धर्मवत्त्वानुसरणसाफल्यम्। न च मानसात्मकनिखिलधूमप्रत्यक्षमिष्टमेव तत्रेति वाच्यम्। तथापि चाक्षुषस्यानिष्टत्वात्। तथापि तत्र दोषवारणं तदिन्द्रियकरणकतद्धर्माश्रयविषयकबोधसामग्र्यन्तरापेक्षामात्रेणापि संभवति। न तु तद्धर्मनिष्ठप्रकारतानिरूपितविशेष्यताकबोधसामग्र्यन्तरापेक्षावश्यकमिति भ्रमजनकदोषदशापर्यन्तम्।

वस्तुतस्तु तद्धर्माश्रयबोधसामग्र्यपेक्षणे बाष्पत्वेन धूमभ्रमोत्तरं बाष्पत्वेन निखिलबाष्पालौकिकं नोपपद्येतेति तथाविवक्षणशङ्काया एवासंभवाद् दोषदशापर्यन्तगमनं सुगमतयेत्येव मन्तव्यम्।

सामग्र्यन्तरापेक्षया तत्तदिन्द्रियजन्यत्वादिनिवेशनमेव वरमिति अभिमन्वानं प्राचीनमधिक्षेप्तुं तन्मतेऽपि सामग्र्यन्तरापेक्षां साधयति दीधितौ—अतएवेति। सामग्र्यन्तरापेक्षाया अवश्यस्वीकार्यत्वादेवेत्यर्थः। प्राचीनमतेऽपि तदपेक्षासत्त्वादिति यावत्। दीधितौ—अन्धेत्यादि। यत्र प्रथमं तडित्सम्पातचक्षुर्घटसन्निकर्षौ ततश्च निर्विकल्पकपूर्वकं तृतीयक्षणे घटत्वप्रकारकचाक्षुषं तडित्संयोगनाशश्च तत्र तदुत्तरं नालौकिकं लौकिकं वा चाक्षुषं कस्यचिदभिमतम्। यदि चक्षुःसम्बद्धविशेष्यकचाक्षुषप्रकारतापन्नघटत्वादिमात्रस्य कारणत्वमभिधीयते तदा तडित्संयोगनाशेऽपि इन्द्रियसन्निकर्षादेस्तत्राक्षततया तदानीं घटत्वादिना निखिलघटप्रत्यक्षं दुर्वारमेव स्यात्। न चेष्टापत्तिः। तदानीमपि चक्षुःसन्निकर्षसत्त्वात् तत्सम्बद्धविशेष्यकालौकिकात्मकज्ञानप्रकारतापन्नघटत्वस्य च सत्त्वात्पुनरपि प्रत्यक्षोत्पादापत्तिरित्येवं चाक्षुषधाराप्रसङ्गात्। सामग्र्यन्तरस्य सहकारिकारणत्वोपगमे तु आलोकसंयोगादिघटितसामग्रीविरहादेव नोक्तदोषः। एवं च सामग्र्यन्तरस्य प्राचीनैरपि अलौकिकप्रत्यक्षहेतुत्वे स्वीकार्ये तत एवोपपत्तौ पुनर्व्यर्थमेव तत्तदिन्द्रियजन्यत्वादेर्नियामकत्वकल्पनमिति भावः।

❀ दीधितिः ❀

**चरमं न चाक्षुषो निखिलद्रव्यसाक्षात्कारसन्तान इति तु नव्याः ।**

❀ जागदीशी ❀

पर्यन्तानुसरणम् । चरमं=विद्युत्सम्पातजन्यचाक्षुषोत्तरम् । द्रव्येति, द्रव्यत्व-सामान्यमधिकृत्योक्तम् ।

अत्र दोषविशेषवशात् तमोधर्मिकस्यैव चक्षुःकरणकद्रव्यत्वबत्त्ववोधस्य सामग्रीसत्त्वात्, चरमं निखिलद्रव्यस्य चाक्षुषो दुर्निवार एव । परन्तूक्तस्थले घटत्वादिना घटादेश्चाक्षुषसन्तानवारणार्थमेव सामग्र्यपेक्षा वाच्येति तु विभावनीयम् ।

द्वित्रिचतुःसाक्षात्कारस्योपगमे क्षत्यभावादाह सन्तान इति । तथा च तादृशचाक्षुषधारा अनुभवबाधितेति भावः ।

❀ काशिकानन्दी ❀

पश्चात्=विद्युत्सम्पातजनितप्राथमिकविशिष्टद्रव्यप्रत्यक्षकाले । विद्युत्सम्पातज-न्यचाक्षुषोत्तरं=विद्युत्सम्पातजन्यसविकल्पकचाक्षुषोत्तरम् । ननु रूपत्वादिना निखिल-रूपप्रत्यक्षापत्तिरपि संभवतीति द्रव्यपदोपादानमनुचितमत आह—द्रव्येतीति ।

तमोधर्मीति । तमो द्रव्यमित्याकारकचाक्षुषसामग्रीसत्त्वादित्यर्थः । उक्तस्थले=सौदा-मिनीसम्पातजनितद्रव्यप्रत्यक्षोत्तरम् । विभावनीयमिति । विभावनाबीजन्तु दोषविशेष-विरहकाले "तमो द्रव्यमित्या"त्याकारकनिश्चयासंभवेन तत्रैव दीधितिकृता दोषाभिधानेन सांगत्यविरहात् । न हि तमो द्रव्यमित्याकारकप्रत्यक्षं नियमतो भवतीति शक्यं प्रतिज्ञातुम् घटो द्रव्यमित्याकारप्रत्यक्षोत्तरमपि तमः पश्यतः तमो द्रव्यमित्याकारकप्रतीतेर्नियमत उदा-दस्य कस्याप्यननुभवात् ।

केचित्तु तमो न नीलमित्याकारकनिश्चयवतोऽपि नीलं तम इति प्रात्यक्षिकप्रतीतेः सर्वानुभवसिद्धतया दोषविशेषविरहस्य तत्रासंभवः । एवं च तमो न द्रव्यमिति मानसिक-बाधनिश्चयवतोऽपि नियतदोषवशात्तत्र द्रव्यत्वप्रकारकभ्रमो भवेदेवेति निखिलद्रव्यप्रत्यक्षं तत्र दुर्वारमित्याहुः । तच्चिन्त्यम् ।

द्रव्यत्वेन निखिलद्रव्यप्रत्यक्षे कथंचिदिष्टापत्तिसंभव इत्याशयेनेदमित्यन्ये ।

यत्तु आलोकादिसन्निधानविरहादेव तमसि न द्रव्यत्वप्रत्यक्षसंभवः, किमनुरोधेन निखिलद्रव्यप्रत्यक्षाभ्युपगमसंभव इति ।

तदसत् । आलोकविरहेऽपि तमसि नैल्यभ्रम इव द्रव्यत्वभ्रमस्यापि सुवचत्वात् आलोकनिरपेक्षचक्षुष एव तमोग्राहकतया द्रव्यत्वादेरुपनीततया तत्र भाने आलोका-पेक्षाभावात् ।

तादृशचाक्षुषधारा=द्रव्यत्वादिप्रकारकनिखिलद्रव्यविशेष्यकचाक्षुषधारा ।

❀ जागदीशी ❀

अत्र केचित्। चक्षुरादीन्द्रियान्तर्भावेण सामान्यज्ञानस्याहेतुत्त्वे सौरभत्त्वप्रकारेण यत्किंचित्सौरभज्ञानोत्तरं जायमानस्य "सुरभिचन्दनमि"त्यादिचाक्षुषस्य पूर्वानुपस्थितयावत्सौरभमुख्यविशेष्यकत्वापत्तिः। सामान्यप्रत्यास-

❀ काशिकानन्दी ❀

ननु चक्षुःसम्बद्धविशेष्यकतदीयद्रव्यत्वादिप्रकारकलौकिकज्ञानत्त्वेन कारणत्वोपगमान्न चाक्षुषधारा। न चैवं धारावाहिकालौकिकप्रत्यक्षं न स्यादिति वाच्यम्। अलौकिकप्रत्यक्षकालेऽपि सन्निकृष्टपदार्थे लौकिकसाक्षात्कारस्य समुत्पद्यमानतया तत्र कारणत्त्वाक्षतेः। न च धूलीपटले धूमत्त्वभ्रमेण निखिलधूमप्रत्यक्षं न स्यात्। धूमत्त्वलौकिकप्रत्यक्षस्य तत्र विरहादिति वाच्यम्। धूलीपटलांशे तस्य लौकिकत्त्वाक्षतेः। भवतु वा इन्द्रियसम्बद्धवृत्तिलौकिकविशेष्यतानिरूपितसामान्यप्रकारताकचाक्षुषत्वादिना हेतुत्त्वम्। प्रकारता लौकिकाऽलौकिकसाधारणी गृह्यते। एवं च तडित्सम्पातनाशोत्तरं प्रथमप्रत्यक्षे द्रव्यांशे लौकिकविशेष्यतासत्त्वेऽपि तदुत्तरं लौकिकविशेष्यताप्रयोजकक्लृप्तसामग्र्या विरहेण न चाक्षुषसन्तानापत्तिरिति चेद्?

अत्राहुः, अलौकिकप्रत्यक्षे सन्निकृष्टद्रव्येऽपि लौकिकविषयत्त्वानुपगममते अलौकिकचाक्षुषधारा क्वचिदपि न स्यात्। यद्यप्येवं नव्यमते लौकिकविशेष्यताविलोपादिप्रसङ्गः स्यात्। तथापि कार्यकारणभावे गौरवमस्त्येव। फलमुखं च तद्धर्मवत्त्वबोधसामग्रीकारणताकल्पनगौरवम्। एवं क्रमेण चक्षुःसम्बद्धत्त्वविशेषणस्यापि प्राचां वैयर्थ्यापत्तिश्चेति।

नव्यमतमाक्षिपति—अत्रेति। अहेतुत्त्वे—हेतुत्वाकल्पने। सौरभत्त्वेति। प्रमेयत्त्वादिना सौरभोपस्थित्युत्तरं तेन रूपेण यावत्सौरभमुख्यविशेष्यकत्त्वस्वीकारस्य संभवादित्याशयः। पूर्वानुपस्थितयावत्सौरभमुख्यविशेष्यकत्त्वापत्तिरिति। सुरभि चन्दनं सौरभाणि चेत्याद्याकारकतापत्तिरित्यर्थः।

न च सौरभत्त्वप्रकारकसौरभविशेष्यकप्रत्यक्षप्रयोजकीभूतघ्राणेन्द्रियसन्निकर्षविरहादेव नायं दोष इति वाच्यम्। सौरभविशेष्यकसौरभत्त्वप्रकारकप्रत्यक्षे सर्वत्र घ्राणेन्द्रियसन्निकर्षस्य हेतुत्वाभावात्। तथा सति सुरभिचन्दनमित्याकारकप्रत्यक्षस्याप्यनापत्तेः। तादृशचाक्षुषस्य सौरभत्त्वनिष्ठप्रकारतानिरूपितसौरभविशेष्यताकत्त्वात्। एवं च सौरभलौकिकप्रत्यक्षे एव घ्राणेन्द्रियसन्निकर्षस्य हेतुत्वेनोक्तप्रत्यक्षस्य सौरभमुख्यविशेष्यकत्वापादनसंभवात्।

न च सौरभमुख्यविशेष्यकप्रत्यक्षं प्रत्येव घ्राणेन्द्रियसन्निकर्षस्य हेतुत्त्वम्। विशेष्यता च लौकिकालौकिकसाधारणी। अत एव घ्राणेन्द्रियसन्निकर्षोत्तरं जायमाने सौरभत्वेन निखिलसौरभलौकिकघ्राणजे घ्राणेन्द्रियसन्निकर्षस्य हेतुत्त्वमुपपद्यते। सुरभि चन्दनमिति ज्ञानीया सौरभांशे उपनयप्रयोज्यविषयता हि न मुख्या इति तस्या घ्राणेन्द्रियसन्निकर्षाऽप्रयोज्यत्वान्न व्यभिचारोऽपीति वाच्यम्। एवं सति सुरभि चन्दनमित्याकारकचाक्षुषस्य सौरभांशे लौकिकप्रकारताकत्वापत्तेः। तादृशप्रकारताया घ्राणेन्द्रियाऽप्रयोज्यत्वात्। एवं

❀ काशिकानन्दी ❀

च लौकिकविषयताया एव घ्राणेन्द्रियसन्निकर्षप्रयोज्यत्वमगत्या वाच्यम्। सौरभत्वेन नि- खिलसौरभालौकिकघ्राणजस्थलेऽपि यत्किंचित्सौरभे लौकिकविषयतायाः सत्त्वात्तत्र घ्राणेन्द्रिय- सन्निकर्षापेक्षापि न व्याहता।

न च सौरभमुख्यविशेष्यकलौकिकालौकिकसाधारणप्रत्यक्षे घ्राणेन्द्रियसन्निकर्षाप- पेक्षास्वीकारेण न सुरभि चन्दनमिति प्रत्यक्षस्य सौरभमुख्यविशेष्यकत्वापत्तिः। न लौकिकविषयतात्वेन घ्राणेन्द्रियप्रयोज्यत्वाभ्युपगम इति वाच्यम्। एवं सति सौरभमुख्य- विशेष्यकमानसप्रत्यक्षानापत्तेः। तत्र घ्राणेन्द्रियसन्निकर्षविरहात्।

न च मानसान्यसौरभमुख्यविशेष्यकप्रत्यक्षे एव घ्राणेन्द्रियसन्निकर्षस्य कारण- ब्रूम इति नैव दोष इति वाच्यम्। एवमपि यत्किंचित्सौरभेण सह घ्राणेन्द्रियसन्निक- त्तरजायमाननिखिलसौरभप्रत्यक्षे व्यभिचारप्रसङ्गात्। विशेष्यतासम्बन्धेनासन्निकृष्टसौर- पि तादृशप्रत्यक्षसत्त्वात्तत्र च घ्राणेन्द्रियसन्निकर्षविरहात्। न च यत्किंचिद्घ्राणेन्द्रियसन्नि- एवापेक्षितो न तु निखिलविशेष्यैः सह घ्राणेन्द्रियसन्निकर्ष इति वाच्यम्। एवं स- असुरभिना सह सन्निकर्षकाले सौरभत्वेन निखिलसौरभप्रत्यक्षापत्तेः। तत्रैव सुरभि चन्द- नमिति प्रत्यक्षस्य यावत्सौरभमुख्यविशेष्यकत्वापत्तेः।

ननु प्रत्यक्षं प्रति विषयस्य तत्तद्व्यक्तित्वेनापि हेतुत्वात् तद्व्यक्तिनिष्ठविषयतास- म्बन्धेन गन्धप्रत्यक्षं प्रति तादात्म्येन तद्व्यक्तित्वेन, स्वरूपेण घ्राणेन्द्रियसंयुक्तसमवाय- च हेतुत्वं ब्रूमः। तद्व्यक्तिपदेन घ्राणेन्द्रियसन्निकृष्टयत्किंचिद्व्यक्तिर्ध्रियते। एवं च सौ- भत्वेन निखिलसौरभप्रत्यक्षस्थले यत्किंचित्सौरभे सन्निकर्षसत्त्वान्न व्यभिचारः। प्र- तादृश्याः कस्याश्चिदपि व्यक्तेर्विरहान्न सौरभमुख्याविशेष्यकप्रत्यक्षापत्तिरिति चेद्?

न, तद्व्यक्तिपदेन सर्वत्र एकस्या एव व्यक्तेरुपादाने व्यक्त्यन्तरेण सह सन्निक- घ्राणजप्रत्यक्षे व्यभिचारप्रसङ्गात्। यदि च लौकिकविशेष्यतासम्बन्धेन गन्धप्रत्यक्षं प्र- तद्व्यक्तेः घ्राणेन्द्रियसन्निकर्षस्य च कारणत्वमभिधत्से तदा सुरभिचन्दनमिति प्रत्य- सौरभमुख्यविशेष्यकत्वं दुर्वारमेव। तादृशप्रत्यक्षस्य लौकिकविशेष्यतासम्बन्धेन कुत्रा- सत्त्वेन घ्राणेन्द्रियसन्निकर्षस्याहेतुत्वात्।

ननु स्वीयमुख्यविशेष्यतानिरूपितप्रकारतासम्बन्धेन स्वीयगन्धमात्रनिष्ठमुख्यविशे- तानिरूपितप्रकारतासम्बन्धेन वा गन्धप्रत्यक्षं प्रति घ्राणेन्द्रियसन्निकर्षस्य स्वाश्रयनिष्ठवि- शेष्यतानिरूपितप्रकारतासम्बन्धेन हेतुत्वमिति न दोषः। सौरभत्वेन निखिलसौरभघ्रा- जस्थले उक्तसम्बन्धेन प्रत्यक्षस्य सौरभत्वे सत्त्वात् तत्र च सन्निकृष्टगन्धनिष्ठविशेष्य- निरूपितप्रकारताया अपि सत्त्वात्। सुरभिचन्दनमित्यत्र घ्राणेन्द्रियसन्निकर्षस्य सौरभे विरहान्न तस्य सौरभनिष्ठमुख्यविशेष्यतानिरूपितप्रकारताशालित्वमिति चेद्?

न, सौरभनिष्ठमुख्यविशेष्यतानिरूपितप्रकारताप्रयोजकविरहेऽपि सामान्यलक्षणात्मक- मुख्यविशेष्यताप्रयोजकस्य सद्भावेन तन्मुख्यविशेष्यताया दुर्वारत्वात्। न च कार्यता- च्छेदिका, कार्यतावच्छेदककोटिप्रविष्टा, कार्यतावच्छेदकसंसर्गात्मिका तत्संसर्गकोटिप्रवि-

## ❀ काशिकानन्दी ❀

सर्वाऽपि विषयता कारणप्रयोज्येति कार्यतावच्छेदककोटिप्रविष्टसौरभमुख्यविशेष्यताया अपि घ्राणेन्द्रियसन्निकर्षप्रयोज्यत्वमिति एकप्रयोजकसद्भावेऽपि प्रयोजकान्तरविरहादेव नोक्तापत्तिरिति वाच्यम्। एवमपि असुरभ्यादिना घ्राणेन्द्रियसन्निकर्षादपि सुरभित्वेन निखिलसौरभप्रत्यक्षापत्तेः। कालान्तरीयपुरुषान्तरीयसौरभत्वप्रकारकभ्रमीयविशेष्यतायास्तत्र सत्त्वात् तादृशविशेष्यतानिरूपितप्रकारतायाः सौरभत्वेऽक्षतेः। तत्पुरुषीयतत्कालीनविशेष्यत्वादिकं न निवेशयितुं शक्यम्। प्रत्यक्षपूर्वं विशेष्यताया विरहेण कारणत्वानिर्वाहात्। न च स्वाश्रयनिष्ठत्वमेव कारणतावच्छेदकसम्बन्ध इति वाच्यम्। एवमपि गन्धेन सह सन्निकर्षोत्तरं प्रमेयत्वेन तज्ज्ञाने पश्चात्प्रमेयत्वेन निखिलगन्धमात्रमुख्यविशेष्यकत्वोघापत्तेः। गन्धमात्रनिष्ठमुख्यविशेष्यताप्रयोजकसद्भावात्। न चेष्टापत्तिः। निखिलप्रमेयनिष्ठविशेष्यताप्रयोजकसामान्यलक्षणासद्भावादेव निखिलप्रमेयालौकिकस्याप्युपपत्तेरिति वाच्यम्। एवं सति प्रमेयाणि प्रमेयाणीत्याकारकसमूहालम्बनप्रत्ययोत्पादापत्तेः। मुख्यविशेष्यताद्वयसत्त्वात्। तादृशप्रत्ययस्य च नियमत उत्पादस्यानुभवविरुद्धत्वात्। किं च असुरभिना सह घ्राणेन्द्रियसन्निकर्षोत्तरं प्रमेयत्वादिना सौरभमात्रविशेष्यकप्रत्यक्षापत्तिः। कारणसद्भावात्। किं च सौरभवानित्याकारकसौरभलौकिकविषयताकप्रत्यक्षे कार्यकारणभावान्तरं वक्तव्यम्। तथा च लाघवात् गन्धनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति घ्राणेन्द्रियसन्निकर्षत्वेन हेतुत्वमिति। अत एव असुरभित्वादिना सुरभिप्रत्यक्षस्थलेऽपि कारणसम्पत्तिरिति दिक्।

**परे** तु प्रत्यक्षत्वाद्यवच्छिन्नं प्रति न चक्षुःसन्निकर्षत्वादिना हेतुत्वम्। सत्यपि सन्निकर्षे कदाचिद् घटत्वादिप्रकारकप्रत्यक्षादर्शनात् सन्निकर्षान्तरेण च प्रत्यक्षोत्पत्तिदर्शनात् तत्तत्सन्निकर्षत्वेन विशिष्यैव हेतुत्वम्। तथा च सति कार्यकारणभावे व्यभिचारवारणाय तत्तत्सन्निकर्षाऽव्यवहितोत्तरप्रत्यक्षत्वावच्छिन्नं प्रति तत्तत्सन्निकर्षत्वेन हेतुत्वं सुरभिचन्दनमिति प्रत्यक्षस्य घ्राणेन्द्रिययत्किञ्चित्सन्निकर्षाऽव्यवहितोत्तरत्वविरहान्न तस्य घ्राणेन्द्रियसन्निकर्षप्रयोज्यत्वम्। न च "यद्विशेषयोरिति" न्यायेन घ्राणजत्वेन घ्राणेन्द्रियसन्निकर्षत्वेनापि कारणत्वं सिद्ध्येदिति वाच्यम्। सिद्ध्येन्नाम। न त्वयं साक्षात्कारो घ्राणजः। प्रत्यक्षत्वावच्छिन्नं प्रति तु न घ्राणेन्द्रियसन्निकर्षत्वेन हेतुत्वं व्यभिचारात्। एवं च गन्धमात्रनिष्ठमुख्यविशेष्यत्वादिघटितसंसर्गेण कार्यकारणभावोऽसिद्ध एवेति सुरभिचन्दनमिति चाक्षुषस्य सौरभमुख्यविशेष्यकत्वापत्तिः स्यादेवेत्याहुः।

ननु पूर्वानुपस्थितेति विशेषणं व्यर्थं पूर्वोपस्थितसौरभमुख्यविशेष्यकचाक्षुषस्याप्यापादयितुं शक्यत्वात्। एवं यावत्पदमप्यनर्थकं यत्किंचित्सौरभमुख्यविशेष्यकचाक्षुषस्याप्यनिष्टत्वादिति चेत्। **सत्यम्**। वस्तुगतिमनुरुध्यैवमभिधानात्।

ननु मुख्यविशेष्यतायाः कार्यतावच्छेदककोट्यप्रविष्टतया कथं तदापत्तिः। विशेष्यतामात्रस्य प्रयोज्यत्वे सुरभिचन्दनमिति चाक्षुषे सौरभे सौरभत्वनिरूपितविशेष्यत्वमिष्टमेव। न च प्रयोजकाऽविशेषेण मुख्यविशेष्यत्वमपि कदाचित्स्यादिति वाच्यम्। मुख्यविशेष्यता-

## ❀ जागदीशी ❀

स्तेरविशिष्टत्वात्। न चेष्टापत्तिः। बहिरिन्द्रियस्य स्वायोग्यमात्रनिष्ठमुख्यवि-
शेष्यताकज्ञानाऽजनकत्वनियमात्। अस्मन्मते सौरभत्वसामान्यज्ञान-
सौरभत्वप्रकारकतदाश्रयघ्राणजत्वावच्छिन्नं प्रति तादृशमानसत्वावच्छि-
न्नं प्रत्येव वा विशिष्य हेतुत्वकल्पनान्न तादृशं चाक्षुषमित्याहुः।

तन्न। सौरभमुख्यविशेष्यकज्ञानस्यानुमित्युपमितिशाब्दबोधघ्राणजा-
स्वरूपस्यैव पारमार्थिकतया तन्मुख्यविशेष्यकानुमित्यादिसामग्रीविरहा-
तदानीं तादृशज्ञानोत्पत्त्यसंभवात्।

## ❀ काशिकानन्दी ❀

प्रकारतयोः प्रयोजकसद्भावे प्रकारताया एव प्रसक्तेः। गामानयेत्यादिशब्दजन्ये
गवादिवत्। प्रकृते च सौरभस्य प्रकारताप्रयोजकसद्भावादिति चेत्?

न, सौरभाणां सर्वेषां प्रागनुपस्थितेः सर्वत्र प्रकारताप्रयोजकविरहात्। फलतो मुख्य-
विशेष्यताया आपत्तिर्भवात्। एकैव सा आपाद्यमना विशेष्यतेति ज्ञानस्य समूहालम्बन-
तायामेव तत्संभवतीति उपस्थितसौरभेऽपि मुख्यविशेष्यता आपद्यत एव। समनियतप्रका-
रताविशेष्यतयोरेवावच्छेद्यावच्छेदकभावस्य अभेदस्य वाभ्युपगमात्। एवं चैतदेवाभिसन्धाय
पूर्वानुपस्थितपदं यावत्पदं चोक्तमिति न तदानर्थक्यशङ्कापि। पूर्वोपस्थितत्वे प्रकार-
संभवात्। एकस्यैव सौरभस्य विशेष्यत्वे प्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावा-
संभवेन मुख्यत्वविरहप्रसङ्गाच्च मुख्यविशेष्यत्वापादनायोगादिति ध्येयम्।

यद्यपि घटकालीनो धूम इत्यादावसन्निकृष्टघटमुख्यविशेष्यत्वमप्यापद्यते। तथा-
स्वायोग्येत्यादिवक्ष्यमाणनियमभङ्गाभावात्तदुपेक्षा। उपनीतं विशेषणतयैवेति नियमभङ्ग-
प्रसङ्गस्तु स्वयमग्रे वक्ष्यति।

अविशिष्टत्वात्=अविशेषात्। चाक्षुषादिकं प्रतीत्यादिः। स्वायोग्येति
प्राग् (पृ० २६) व्याख्यातम्। इन्द्रियसम्बद्धविशेष्यतानिरूपितसामान्यप्रकारताकचाक्षुषत्वादि-
हेतुत्वे दोषाभावमाह— अस्मन्मत इति। विशेष्येति। घ्राणेन्द्रियसम्बद्धविशेष्यकसामा-
न्यप्रकारकघ्राणजत्वादिना सौरभघ्राणजप्रत्यक्ष, मानसे च सौरभत्वज्ञानमात्रस्य विशि-
हेतुत्वकल्पनादित्यर्थः। न तादृशं चाक्षुषमिति। सौरभत्वप्रकारकचाक्षुषत्वस्य कार्य-
नवच्छेदकत्वादिति भावः।

सौरभत्वप्रकारकयत्किंचित्सौरभज्ञानात् कीदृशं ज्ञानमापाद्यते। नानुमितिः, व्याप्ति-
नाभावात्। नोपमितिः, सादृश्यज्ञानाभावात्। न शाब्दः, पदज्ञानाभावात्। न घ्राणजं,
घ्राणेन्द्रियसन्निकर्षाभावात्। एतदतिरिक्तज्ञानाऽप्रसिद्धेः कथमापत्तिसंभव इत्याह—
तन्नेति। तन्मुख्यविशेष्यकेति। सौरभमुख्यविशेष्यकेत्यर्थः। तदानीं=सुरभिचन्द-
नमिति प्रत्यक्षकाले। तादृशज्ञानोत्पत्त्यसंभवात्=सौरभमुख्यविशेष्यकज्ञानोत्पत्त्यसं-
भवात्। यद्यपि अनुमित्यादिस्वीकारेऽपि स्वायोग्यमुख्यविशेष्यकज्ञानाऽजनकत्वनिय-

❀ जागदीशी ❀

अनुमित्यादिभिन्नस्य तादृशज्ञानस्यालीकतयाऽऽपादयितुमशक्यत्वात् ।

वस्तुतो मुख्यविशेष्यतासम्बन्धेन सौरभत्वादिप्रकारकचाक्षुषादिकं प्रति तादात्म्येन सौरभत्वादिना गन्धत्वादिना वा प्रतिबन्धकत्वात्तन्निरासः ।

❀ काशिकानन्दी ❀

भङ्गाभावेन तदापादनं न दोषावहं भवितुमर्हति । तथापि सौरभमुख्यविशेष्यकचाक्षुषस्यालीकतां दर्शयितुं संभवज्ज्ञानानामयमुपन्यास इति बोध्यम् ।

ननु सौरभमुख्यविशेष्यकचाक्षुषमस्माभिरापादितं, भवाँस्त्वन्यामेव कथां कथयति अनुमित्यादिकं न भवतीति इत्याशङ्क्याह—अनुमित्यादिभिन्नस्येति । तथा च सौरभमुख्यविशेष्यकचाक्षुषस्यालीकतयैव नापादनसंभव इति भावः ।

ननु सौरभमुख्यविशेष्यकचाक्षुषं भवतु नामालीकम् । न वयं तदापत्तिं ब्रूमः । अपि तु सौरभत्वप्रकारकचाक्षुषस्य सौरभमुख्यविशेष्यकत्वमेवापादयामः । न च सौरभत्वप्रकारकचाक्षुषं सौरभमुख्यविशेष्यकत्वं वाऽप्रसिद्धम् । सुरभि चन्दनमित्याकारकसौरभोपनीत चन्दनविषयकचाक्षुषस्य सौरभं चन्दनमित्याद्याकारकसौरभत्वप्रकारकभ्रमस्य च सौरभत्वप्रकारकचाक्षुषत्वात् । सौरभमित्याकारकघ्राणजे च सौरभमुख्यविशेष्यकत्वप्रसिद्धेरिति कथमापाद्याप्रसिद्ध्या दोषवारणमत आह—वस्तुतस्त्विति ।

केचित्तु—ननु सौरभमुख्यविशेष्यकचाक्षुषाऽप्रसिद्धावपि यत्किंचित्सौरभस्मरणोत्तरं सौरभमुख्यविशेष्यकप्रत्यक्षत्वात्मकसामान्यधर्मावच्छिन्नस्यैवापत्तिसंभवः । इष्टं तु तत्र सौरभप्रकारकप्रत्यक्षमेवेति नेष्टापत्तिः सौरभमुख्यविशेष्यकप्रत्यक्ष इति शङ्कायामाह—वस्तुतस्त्वितीत्याहुः । तन्न । अनुमित्याद्यतिरिक्तस्यासामान्यधर्मावच्छिन्नस्याऽप्रसिद्ध्या पूर्वोक्तयुक्त्यैव तद्वारणसंभवात् । सामान्यधर्मावच्छिन्ने कार्ये जननीये यावद्विशेषसामग्र्यन्यतमापेक्षणाद् सौरभत्वप्रकारकमानसं प्रत्यपि चाक्षुषादिसामग्र्यभावस्य विशिष्य हेतुतया चन्दनचाक्षुषसामग्रीसद्भावकाले कस्या अपि सौरभमुख्यविशेष्यकप्रत्यक्षसामग्र्या असंभवात् ।

सौरभत्वादीत्यादिनाऽसौरभत्वम् । सौरभत्वासौरभत्वाभ्यां प्रतिबन्धकत्वद्वयकल्पने गौरवादाह—गन्धत्वादिनेति । तादात्म्येनेत्यनुषङ्गः । तादात्म्यं तु प्रतिबन्धकतावच्छेदकसम्बन्धः । गन्धत्वादीनां प्रतिबन्धकतावच्छेदकत्वं तु समवायेन बोध्यम् । न च समवायेन गन्धत्वस्यैव प्रतिबन्धकत्वं कुतो नोक्तमिति वाच्यम् । गन्धत्वत्वस्य प्रतिबन्धकतावच्छेदकत्वे गौरवात् । तन्निरासः=सौरभत्वप्रकारकचाक्षुषस्य सौरभमुख्यविशेष्यकत्वापत्तिनिरासः ।

ननु प्रतिबध्यस्य मुख्यविशेष्यतासम्बन्धेन सौरभत्वप्रकारकचाक्षुषस्याऽप्रसिद्धिः । मुख्यत्वादाने तु सुरभि चन्दनमिति चाक्षुषस्याप्यनुत्पादः स्यात् । एवं च प्रतिबध्यप्रतिबन्धकभावानिर्वाहे सुरभिचन्दनमिति प्रत्यक्षस्य सौरभमुख्यविशेष्यकत्वमपि दुर्वारमित्या-

## ❀ जागदीशी ❀

तादृशसम्बन्धेन तथाविधचाक्षुषं तु घटादावेव सौरभत्वस्य भ्रमरूपं सुल
न च सौरभत्वप्रकारकेति व्यर्थम्। प्रमेयत्वादिसामान्यप्रत्यासत्त्या तादृ
सौरभमुख्यविशेष्यकचाक्षुषस्य सर्वसम्मतत्त्वात्। तत्रापि चक्षुर्योग्यमा
विशेष्यकत्वोपगमे तु तन्नोपादेयम्।

न चैवं घटाद्युपनीतचाक्षुषस्यापि घटादिमुख्यविशेष्यकत्वं स्यात्।
कार्यकारणभावस्यैवापादकत्वात्। इष्टापत्तौ चोपनीतं विशेषणतयैव भा
इत्यस्य विरोध इति वाच्यम्। मुख्यविशेष्यतया द्रव्यचाक्षुष
वच्छिन्नं प्रति चक्षुरादिलौकिकसन्निकर्षाभावविशिष्टज्ञानत्वेन वि

## ❀ काशिकानन्दी ❀

शङ्कयाह—तादृशसम्बन्धेनेति। मुख्यविशेष्यतासम्बन्धेनेत्यर्थः। तथाविधचाक्षु
सौरभत्वप्रकारकचाक्षुषम्। भ्रमरूपमिति। "सौरभं घटः" "सुरभिर्घट" इति वा
रकसौरभत्वप्रकारकघटविशेष्यकमित्यर्थः। नचेति। व्यर्थमित्यन्वयः। मुख्यविशे
सम्बन्धेन चाक्षुषं प्रति तादात्म्येन गन्धत्वादिना प्रतिबन्धकतयैव सुरभिचन्दना
चाक्षुषस्य सौरभमुख्यविशेष्यकत्वापत्तिवारणादिति भावः। तादृप्येण = प्रमेयत्वेन रूपे
सौरभमुख्यविशेष्यकचाक्षुषस्येति। प्रमेयत्वप्रकारक"प्रमेयाणी"त्याकारकालौकि
चाक्षुषस्य निखिलप्रमेयमुख्यविशेष्यकतया निखिलान्तःपातिसौरभस्यापि तत्र मुख्यवि
त्वादिति भावः। सर्वसम्मतत्त्वादिति। न च तत्सार्थक्ये चन्दनत्वप्रकारकसौरभमु
विशेष्यकभ्रमात्मकचाक्षुषापत्तिरिति वाच्यम्। आपादकाभावात्। तत्रापि=प्रमे
सामान्यलक्षणोत्थचाक्षुषेऽपि। योग्यमात्रेति। एवं च सौरभस्यायोग्यत्वात् प्रमेया
चाक्षुषे गन्धे मुख्यविशेष्यत्वं नास्त्येवेति भावः। तत् = सौरभत्वप्रकारकेति दलम्।

नन्वेवं क्रमेण सौरभमुख्यविशेष्यकचाक्षुषवारणेऽपि घटत्वेन यत्किंचिद्घटस्म
नन्तरजायमान 'घटकालीनो धूम' इत्यादिचाक्षुषस्य पूर्वानुपस्थितयावद्घटमुख्यविशे
त्वापत्तिर्दुर्वारैव। तत्र प्रतिबध्यप्रतिबन्धकभावस्याप्यसंभवादित्याशङ्कां निराकरो
नचेति। चाक्षुषस्यापीत्यपिकारो न चैवमित्यस्यानन्तरं योज्यः। एवमपि=उक्त
सुरभिचन्दनमिति चाक्षुषस्य सौरभमुख्यविशेष्यकत्ववारणेऽपि। घटाद्युपनीतचाक्षुष
'घटकालीनोधूम' इत्यादेः। उक्तकार्यकारणभावस्य=घटत्वप्रकारकचाक्षुषं
घटत्वज्ञानस्य कारणत्वमिति नव्याभिमतस्य। उपनीतं=ज्ञानेनोपनीतं,—ज्ञानल
प्रत्यासत्तिप्रयोज्यविषयताश्रयीभूतम्। मुख्यविशेष्यतेत्यादि। घटकालीनो धूम इ
घटाद्युपनीतचाक्षुषस्य न घटादिमुख्यविशेष्यकत्वापत्तिः। तथा हि यदि घटादिमुख्यवि
कत्वं तस्य स्यात् तदा मुख्यविशेष्यतासम्बन्धेन तादृशचाक्षुषं घटे वर्तेत। किन्तु
चक्षुर्लौकिकसन्निकर्षाभावविशिष्टज्ञानात्मकप्रतिबन्धकस्याभावो नास्ति। चक्षुःसंनि
भावस्य ज्ञानस्य च घटे सत्वात्। द्रव्यचाक्षुषत्वावच्छिन्नं प्रतीति। अथ चाक्षु

## ❀ काशिकानन्दी ❀

मात्रं प्रतिबध्यतावच्छेदकमस्तु किं द्रव्यचाक्षुषत्वस्य तथात्वस्वीकारेण ? न च चक्षुःसंयोगत्वेन चक्षुःसन्निकर्षाभावस्य प्रवेशे रूपमित्याकारकं रूपमुख्यविशेष्यकं चाक्षुषं न स्यात् । चक्षुःसंयोगस्य समवायेन रूपे विरहसत्त्वादिति वाच्यम् । चक्षुर्निष्ठलौकिकचाक्षुषजनकताघटको यः सम्बन्धस्तेन सम्बन्धेन चक्षुःप्रतियोगिकाभावस्य, स्वरूपसमवायान्तरसम्बन्धेन निरुक्तचाक्षुषजनकतावच्छेदकसम्बन्धत्वावच्छिन्नाभावस्य वा विवक्षणीयत्वादिति चेत् ?

अत्र केचित्, चक्षुर्निष्ठलौकिकचाक्षुषजनकताघटकसम्बन्धेन चक्षुरभावो न निवेशयितुं युज्यते । वृत्त्यनियामकसम्बन्धावच्छिन्नायाः प्रतियोगिताया अनुपगमात् । तेन सम्बन्धेन चक्षुर्विशिष्टान्यत्वनिवेशेन दोषाभावः, वृत्त्यनियामकसम्बन्धावच्छिन्नायाः प्रतियोगितावच्छेदकतायाः सर्वसम्मतत्वादित्यपि न युक्तं वक्तुम् । घटचक्षुःसंयोगविगमोत्तरजायमान 'घटकालीनोधूम' इत्यादिज्ञानस्य घटमुख्यविशेष्यकत्वापत्तेः । भेदस्य व्याप्यवृत्तितया घटस्य चक्षुर्विशिष्टान्यत्वाऽसंभवात् । चक्षुःसंयोगकाले घटस्य चक्षुर्विशिष्टत्वात् । नापि चक्षुर्निष्ठचाक्षुषजनकताघटकसम्बन्धानां स्वरूपसमवायान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावो निवेशयितुं युज्यते । स्वरूपाणामननुगततया एकस्वरूपप्रवेशे स्वरूपान्तरेण तादृशसम्बन्धवतो मुख्यविशेष्यकचाक्षुषानापत्तेः । तावत्स्वरूपाणामन्यतमत्वेन प्रवेशे गौरवापत्तेः । अन्यतमत्वस्याननुगमाच्च । न च चाक्षुषजनकतावच्छेदकसंसर्गतावच्छेदकत्वेन स्वरूपाणामनुगमसंभव इति वाच्यम् । सम्बन्धस्य किंचित्सम्बन्धानवच्छिन्नत्वात् । तस्माद् लाघवेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति समवायेन चक्षुःसंयोगाभावविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वं युक्तमिति वदन्ति ।

तदपरे न मन्यन्ते । चक्षुर्निष्ठलौकिकचाक्षुषजनकतावच्छेदकसंसर्गतावच्छेदकधर्मावच्छिन्ना या लौकिकचाक्षुषजनकता तदवच्छेदकसम्बन्धत्वेन स्वरूपसमवाययोरनुगमसंभवात् । संयोगादीनां चाक्षुषजनकतावच्छेदकसम्बन्धत्वमिव चाक्षुषजनकत्वस्यापि सत्त्वात् । प्रत्यक्षे विषयस्य तादात्म्येन हेतुत्वात् चक्षुःसंयोगमुख्यविशेष्यकत्वं स्यात्, चाक्षुषजनकतावच्छेदकतादात्म्यसम्बन्धेन चक्षुस्संयोगस्य स्वस्मिन् सत्त्वेन तेन सम्बन्धेन स्वाभावविशिष्टज्ञानाभावस्य चक्षुःसंयोगेऽवृत्तेरिति अवच्छिन्नान्तविशेषणं संभवप्रयोजनकम् ।

कालीशङ्करसिद्धान्तवागीशास्तु --यत्र घटत्वप्रकारकस्मरणं घटचक्षुःसंयोगश्च किन्तु नालोकसंयोगः तत्र जायमानघटकालीनभूतलमित्यादिचाक्षुषस्य घटमुख्यविशेष्यकत्वापत्तिवारणाय चक्षुःसन्निकर्षाऽऽलोकसंयोगोभयाभावविशिष्टज्ञानत्वेन प्रतिबन्धकत्वं वाच्यम् । एवं च सति रूपमित्याकारकरूपमुख्यविशेष्यकचाक्षुषानापत्तिः । रूपे आलोकसंयोगस्य समवायेन विरहात्, चक्षुःसन्निकर्षालोकसंयोगोभयाभावसत्त्वेन तद्विशिष्टज्ञानस्य रूपवर्त्तिनः प्रतिबन्धकत्वात् । द्रव्यपदोपादाने च मुख्यविशेष्यतया द्रव्यचाक्षुषत्वावच्छिन्नं प्रतिसमवायेन चक्षुःसंयोगालोकसंयोगाभावाभावविशिष्टज्ञानत्वेनेत्येवं पृथक् पृथक् विशिष्य-प्रतिबन्धकत्वकल्पनान्न दोषः । न चालोकसंयोगनिष्ठचाक्षुषजनकतावच्छेदकसम्बन्धत्वेन

## ✽ काशिकानन्दी ✽

समवायसमवेतसमवायादिकमनुगमय्य तेन सम्बन्धेनालोकवैशिष्ट्यचक्षुःसन्नि
भावस्य प्रवेशान्नायं दोष इति वाच्यम्। यत्र कपाले घटोत्पत्तिद्वितीयक्षणे चक्षुरा
दशायां घटोपनीतघटवत्कपालमित्याकारकचाक्षुषं तस्य घटमुख्यविशेष्यकत्वाच्च।
संयुक्तकपालसमवेतत्वात्सकलचाक्षुषजनकतावच्छेदकसम्बन्धस्य घटे सत्त्वेन तद्विशेष्य
ज्ञानात्मकप्रतिबन्धकस्य तत्र विरहादिति। न च संयुक्तसमवायमात्रस्य न तथात्वं
न्धत्वम्। घटोत्पत्तिक्षणे कपालेन सह चक्षुःसंयोगसत्त्वेन द्वितीयक्षणे घटप्रत्यक्ष
चक्षुःसंयुक्तकपालसमवेतत्वस्य तत्र सत्त्वेन कारणसद्भावात्। यदि च चक्षुः
मवायस्य द्रव्यान्यवर्त्तिन एव चाक्षुषजनकताघटकत्वमिति मन्यते तदा द्वितीयक्षणे किं
संयुक्तसमवायस्यापि घटनिष्ठस्य चाक्षुषजनकताघटकत्वविरहेण चाक्षुषजनकता
म्बन्धाभावस्याक्षतेः प्रतिबन्धकस्योक्तस्थले सत्त्वेनापत्त्ययोग इति वाच्यम्।
रहेणोक्तदोषाभावादित्याहुः।

इदं तु तत्त्वम्, चाक्षुषत्वावच्छिन्नं प्रति उक्तप्रत्यासत्त्या चक्षुःसन्निकर्षा
शिष्टज्ञानमात्रस्य प्रतिबन्धकत्वे चक्षुःसन्निकृष्टान्धतमसप्रविष्टघटोपनीत 'घटवद्भूत
चाक्षुषस्य घटमुख्यविशेष्यकत्वापत्तिरूपोक्तदोषवारणाय आलोकसंयोगचक्षुःसं
भावस्य प्रवेशनीयत्वे प्रतिबध्यतावच्छेदककोटौ द्रव्यत्वाविशेषणे तमोमुख्यविशेष्य
न स्यात्। तमःप्रत्यक्षे आलोकसंयोगस्य हेतुत्वाभावेन तमसि चक्षुःसन्निकर्षे
आलोकसंयोगविरहेण चक्षुःसन्निकर्षालोकसंयोगोभयाभावस्य वर्तमानतया तदु
विशिष्टज्ञानस्य प्रतिबन्धकस्य सत्त्वात्। न चान्धकारातिरिक्तचाक्षुषत्वस्यैव प्रति
वच्छेदकत्वान्न दोष इति वाच्यम्। एवं सति अन्धकारकालीनो घट इति
अन्धकारमुख्यविशेष्यकत्वापत्तेः। एवमन्धकारान्यत्वमिव अन्धकारत्वान्यत्वम्, अ
गताभावान्यत्वादिकमपि प्रतिबध्यतावच्छेदककोटौ प्रवेशनीयमिति प्रतिबध्यताव
गुरुभूतत्वापत्तिः। तेषां विशेषणविशेष्यभावव्यत्यासेन नानाप्रतिबध्यप्रति
भावापत्तिश्च।

यत्तु मुख्यविशेष्यतासम्बन्धेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसन्निकर्ष
संयोगोभयाभावविशिष्टज्ञानत्वेन प्रतिबन्धकत्वमेव न युज्यते वक्तुम्। तथा सति
च तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्यन्तरमित्युक्त्वा तदनपेक्षणे विद्युत्सम्पा
तद्द्रव्यप्रत्यक्षानन्तरं चाक्षुषधारापत्तिकथनं दीधितिकारस्यायुक्तं स्यात्। विद्युत्सम्पात
चक्षुःसन्निकर्षस्य द्रव्ये सत्त्वेऽपि आलोकसंयोगविरहेण चक्षुःसन्निकर्षालोक
भयाभावविशिष्टज्ञानस्य प्रतिबन्धकस्य सत्त्वेन तत एव चाक्षुषधारावारणात्।
सौदामिनीसम्पातेन यत्र यत्किञ्चिद्द्रव्यद्रव्यत्वयोर्निर्विकल्पकं जनितं तत्रासन्निकृष्ट
तादृशोभयाभावसत्त्वेऽपि ज्ञानस्य विरहात् तन्मुख्यविशेष्यकचाक्षुषमेवापद्यत इति
एवमपि निखिलद्रव्यप्रत्यक्षसन्तानकथनासंगतेर्दुरुद्धरत्वात्। द्रव्यत्वेन निखिलद्रव्य
तस्यैव निरुक्तोभयाभावविशिष्टस्य प्रतिबन्धकत्वादिति कथमन्धकारस्थले दोष इति।

## ❀ काशिकानन्दी ❀

तन्मन्दम्। प्राचीनमते निखिलद्रव्यसाक्षात्कारसन्तानापत्तेर्दीधितिकारेणाभिधा-
त्। न हि प्राचीनमते एतादृशप्रतिबध्यप्रतिबन्धकभावः। चक्षुरादिसम्बद्धविशेष्यक-
ाक्षुषप्रकारतापन्नधूमत्वादिविरहादेव तन्मते धूमकालीनो घट इति प्रत्यक्षस्य निखिलधू-
मुख्यविशेष्यकत्वापत्तिविरहात्। अत एव चाक्षुषसन्तानापत्त्या अपेक्षणीयं चेति ग्रन्थो
वतारितो जगदीशेन। किन्तु चाक्षुषत्वादिनियामकाङ्क्षायामेव। अत एव गदाधरभ-
चार्योऽपि "तदिन्द्रियकरणकतद्धर्मप्रकारज्ञानसामग्र्या अनपेक्षणे इन्द्रियसम्बन्धादिनि-
शेऽप्यतिप्रसङ्ग इति दर्शयति—अतएवेती" त्येवं दीधितिं व्याचकार। न चैवमपि
त्किंचिद्घटचाक्षुषोत्तरजायमानघटत्वप्रकारकनिखिलघटविशेष्यकप्रत्यक्षस्य स्पार्शनत्वं न
भवति। मुख्यविशेष्यतासम्बन्धेन तस्य घटे वर्तमानतया मुख्यविशेष्यतया घटस्पार्शन-
तिबन्धकीभूतत्वगिन्द्रियसन्निकर्षाभावविशिष्टज्ञानस्य घटे सत्त्वादिति चाक्षुषत्वस्पार्श-
त्वाद्यनियमप्रसङ्गेना 'पेक्षणीयं चे' त्यादिदीधितिग्रन्थावतरणं जगदीशस्यासंगतमिति
ाच्यम्। घटत्वेन यत्किंचिद्घटज्ञानकाले अज्ञातघटेषु त्वक्सन्निकर्षाभावविशिष्टज्ञानाभाव-
त्वेन तत्रैवानियमसंभवात्। किं च धूलीपटले धूमत्वभ्रमे कस्यापि धूमस्य ज्ञानविरहेण
दुत्तरजायमानप्रत्यक्ष एवानियमसंभवात्।

वस्तुतस्तु यत्र यत्किंचित्प्रमेयनिर्विकल्पकमेव द्रव्यत्वादिनिखिलद्रव्यप्रत्यक्षं प्रमेया-
तरेण सह सन्निकर्षविरहश्च तत्र तदुत्तरं निखिलप्रमेयविषयकचाक्षुषं न स्यात्। द्रव्येषु
चक्षुःसन्निकर्षाभावविशिष्टज्ञानस्य सत्त्वाद्। अतः मुख्यविशेष्यतासम्बन्धेन तत्प्रकारक-
ाक्षुषत्वावच्छिन्नं प्रति चक्षुःसन्निकर्षाभावविशिष्टतत्प्रकारज्ञानत्वेन प्रतिबन्धकत्वं वक्तव्यम्।
एवं च सति द्रव्यत्वादिप्रकारभेदेन पृथक् पृथगेव प्रतिबध्यप्रतिबन्धकभाव इत्येतल्लाभार्थमेव
व्यचाक्षुषेत्युक्तं जगदीशेन। अधिकमग्रे वक्ष्यामः।

सुरभि चन्दनमित्यादौ चक्षुरादेः स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वादिरूपा-
ौकिकसन्निकर्षस्य सौरभादौ सत्त्वाच्चक्षुःसन्निकर्षाभावविशिष्टज्ञानस्य विरहेण प्रतिबन्धका-
ावात् यावत्सौरभमुख्यविशेष्यकत्वं स्यात्। एवं घटकालीनधूम इत्यस्य यावद्घटमुख्य-
विशेष्यकत्वं स्यादतो—लौकिकेति।

अत्र केचित्। लौकिकसन्निकर्षो योग्यवृत्तित्वेन विशेषणीयः। अन्यथा अणुस्म-
रणोत्तरमणुचक्षुःसन्निकर्षकाले जायमानाणूपनीता "णुकालीनो घट" इत्याद्याकारकचाक्षुष-
स्याणुमुख्यविशेष्यकत्वापत्तेः। अणुज्ञानसत्त्वेऽपि चक्षुःसन्निकर्षाभावरूपविशेषणविरहात्।
न च लौकिकसन्निकर्षेणैवाणुमुख्यविशेष्यकज्ञानं तत्रोत्पद्यतामिति तत्रेष्टापत्तिरेव स्यादिति-
वाच्यम्। महत्त्वोद्भूतरूपादिविरहेण तदसंभवात्। न च महत्त्वोद्भूतरूपाद्यात्मककारणान्त-
रविरहेणैव न तन्मुख्यविशेष्यकप्रत्यक्षापत्तिरिति वाच्यम्। यतः चाक्षुषादिमात्रं प्रति न
महत्त्वादेः कारणत्वम्। अणुकालीनो घट इति चाक्षुषस्याप्यनापत्तेः। अणौ महत्त्वादि-
विरहात्। नापि मुख्यविशेष्यकचाक्षुषे। प्रमेयत्वसामान्यलक्षणया जायमाने अणुमुख्य-

## ❀ काशिकानन्दी ❀

विशेष्यकचाक्षुषे व्यभिचारात्। किन्तु लौकिकतद्विषयताकचाक्षुषे एवं चाणुकालीनो इत्यत्रालौकिकनिखिलाणुविशेष्यकचाक्षुषमापद्येतैवेति वदन्ति।

वस्तुतस्तु मुख्यविशेष्यतासम्बन्धेन गन्धत्वादिप्रकारकचाक्षुषे गन्धत्वादिनेव अणु-दिप्रकारकचाक्षुषे तादात्म्येन अणुत्वेन समवायसमवेतसमवायादिसम्बन्धेन उद्भूत-शून्यत्वादिना वा प्रतिबन्धकत्वकल्पनान्न तत्र दोषः। चक्षुःसन्निकर्षाऽऽलोकसंयोगोद्-रूपैस्त्रितयाभावविशिष्टज्ञानत्वेन वा प्रतिबन्धकत्वं स्वीकार्यम्। समवेतसमवायसम्ब-गन्धेऽपि उद्भूतरूपसंभवात्तत्र पृथक् प्रतिबन्धकत्वमभिहितं जगदीशेन। प्रकृते अ-कालीनो घट इत्यत्र च चक्षुःसन्निकर्षालोकसंयोगयोः सत्त्वेऽपि उद्भूतरूपविरहेण त्रि-भावविशिष्टज्ञानसत्त्वात्प्रतिबन्धकत्वमुपपद्यत इति पृथक् प्रतिबध्यप्रतिबन्धकभावोऽत्र वक्तव्यः। त्रितयाभावस्त्रित्वावच्छिन्नभावः। समवायसमवेतसमवायादीनामनुगमप्रकार-

अथ सन्निकर्षसत्त्वे यदि धारावाहिकालौकिकमिष्टं तदा प्रमेयाणीत्याद्याकारक-त्तरं पुनः प्रमेयाणीत्याकारज्ञानं नोत्पद्येत। असन्निकृष्टप्रमेये चक्षुःसन्निकर्षाभाव-ज्ञानरूपप्रतिबन्धकसद्भावात्। न च चक्षुःसन्निकर्षाभावो न चक्षुःसन्निकर्षनिष्ठचा-जनकतावच्छेदकसम्बन्धेन। किन्तु स्वसमानाधिकरणविशेष्यतासम्बन्धेन। प्रमेयाणीत्या-रके सन्निकृष्टविषयनिष्ठाया असन्निकृष्टविषयनिष्ठायाश्च विशेष्यताया ऐक्येन दोषाभा-अस्तु वा स्वसमानाधिकरणविशेष्यतानिरूपितप्रकारतानिरूपितविशेष्यतासम्बन्धेन सन्निकर्षाभावस्य प्रवेश इति वाच्यम्। एवं सति पटादिभिः सह सन्निकर्षः प्रमेयत्व-ज्ञानं च यत्र तत्र घटकालीनो धूम इति ज्ञानस्य घटमुख्यविशेष्यकत्वाप-पटनिष्ठचक्षुःसन्निकर्षस्य स्वसमानाधिकरणविशेष्यतानिरूपितप्रमेयत्वनिष्ठप्रकारतानिरूपि-तविशेष्यतासम्बन्धेन घटेऽपि सत्त्वात् तेन सम्बन्धेन चक्षुःसन्निकर्षाभावस्य घटे विरहा-न च स्वसमानाधिकरणविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपितविशेष्यतासम्ब-चक्षुःसन्निकर्षाभावविशिष्टतत्प्रकारकज्ञानत्वेन प्रतिबन्धकत्वं वक्तव्यमित्यदोषः। चक्षु-कर्षसमानाधिकरणपटनिष्ठविशेष्यतानिरूपितप्रमेयत्वनिष्ठप्रकारताया घटत्वानिष्ठत्वा-वाच्यम्। एवमपि यत्र घटेन सह चक्षुःसन्निकर्षो घटत्वग्रहप्रतिबन्धकदोषादि-घटत्वेन तदप्रत्यक्षं किन्तु घटत्वेन घटस्मरणं तत्र जायमानघटकालीनो धूम इति प्रत्यक्ष-घटमुख्यविशेष्यकत्वापत्तेः। चक्षुःसन्निकर्षसमानाधिकरणस्मरणीयविशेष्यतानिरू-घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन चक्षुःसन्निकर्षस्य घटे सत्त्वात्। एवं घ-ग्रहप्रतिबन्धकदोषविरहेऽपि उत्तरक्षणं घटनिर्विकल्पकस्यैवेष्टतया घटमुख्यविशेष्यका-पत्तिः सुघटैव। संसर्गसाक्षात्कारात्मकविशिष्टप्रत्यक्षकारणसंसर्गिसाक्षात्कारस्य पूर्वक्ष-णात् तद्विरहे सोऽष्टापत्त्ययोगात्। न च स्वसमानाधिकरणचाक्षुषविशेष्यतानिरूपितप्रकारता-रूपितविशेष्यतासम्बन्धेन चक्षुःसन्निकर्षाभावस्य विवक्षणान्न दोष इति वाच्यम्। एवं यत्र घटत्वेन घटस्मरणं घटेन चक्षुःसन्निकर्षश्च तदुत्तरं निर्विकल्पकं तृतीयक्षणे तत्र घट-घटप्रत्यक्षं न स्यात्। चक्षुःसन्निकर्षवति स्मरणीयविशेष्यताया एव सत्त्वेन चाक्षुषवि-

## ॐ काशिकानन्दी ॐ

तानिरूपितप्रकारतानिरूपितविशेष्यतासम्बन्धेन चक्षुःसन्निकर्षस्य तत्र विरहात् । स्मरणात्मकतत्प्रकारकज्ञानस्य च सत्त्वात् । न च स्वसमानाधिकरणचाक्षुषविशेष्यतानिरूपितप्रकारतानिरूपितविशेष्यतासम्बन्धेन चक्षुःसन्निकर्षाभावविशिष्टतत्प्रकारकचाक्षुषज्ञानत्वेन प्रतिबन्धकत्वाभिधानान्न दोष इति वाच्यम् । एवं सति घटस्मरणोत्तरजायमानघटकालीनो धूम इति चाक्षुषस्य घटमुख्यविशेष्यकत्वापत्तेरेव दुरुद्धरत्वात् । प्रतिबन्धकीभूततत्तत्प्रकारकचाक्षुषविरहात् । न च चाक्षुषत्वं प्रतिबन्धकज्ञाने न निवेश्यं, किन्तु समवाय—स्वसमानाधिकरणचाक्षुषविशेष्यतानिरूपितप्रकारतारूपितविशेष्यत्वान्यतरसम्बन्धेन चक्षुःसन्निकर्षाभावः प्रवेशनीयः । एवं चोक्तस्थले समवायेनैव चक्षुःसंयोगसत्त्वान्न तृतीयक्षणे घटत्वप्रकारकचाक्षुषानुपपत्तिरिति वाच्यम् । यत्र घटत्वेन निखिलघटस्मरणं एकघटेन सह सन्निकर्षश्च द्वितीयक्षणे निर्विकल्पकं तत्र तृतीयक्षणे घटत्वेन निखिलघटप्रत्यक्षानापत्तेः । असन्निकृष्टघटेषु समवायेन स्वसमानाधिकरणचाक्षुषविशेष्यतानिरूपितप्रकारतानिरूपितविशेष्यतया च चक्षुःसन्निकर्षस्य विरहात् स्मरणात्मकज्ञानसत्त्वाच्च । न च वस्तुगत्या तत्र तृतीयक्षणे घटत्वेन निखिलचाक्षुषस्य जायमानतया तदीयामेव विशेष्यतामादाय चक्षुःसन्निकर्षस्य निखिलघटेषु संभव इति वाच्यम् । पूर्वक्षणे तदभावस्यापि वारयितुमशक्यत्वात् । विनश्यदवस्थचक्षुःसन्निकर्षेण यत्र तथाविधचाक्षुषजननं तत्रैतादृशशङ्काया एवानुत्थानाच्च । एतेन प्रमेयाणीत्याद्याकारकधारावाहिकमनभ्युपगच्छन्तोऽपि परास्ताः ।

यत्तु चक्षुःसन्निकर्षाभावविशिष्टत्वं नाम चक्षुःसन्निकर्षविशिष्टान्यत्वम् । तथा च न कोऽपि दोष इति । तत्तुच्छम् । भेदस्य व्याप्यवृत्तित्वे यत्र घटत्वेन घटप्रत्यक्षोत्पत्तिकाले वर्त्तमानस्य घटचक्षुःसंयोगस्य द्वितीयक्षणे नाशः तत्र तृतीयक्षणे जायमानस्य घटकालीनो धूम इति प्रत्यक्षस्य घटमुख्यविशेष्यकत्वापत्तेः । प्रथमक्षणे घटप्रत्यक्षस्य चक्षुःसन्निकर्षविशिष्टतया द्वितीयक्षणेऽपि तदन्यत्वासंभवात् । भेदस्य अव्याप्यवृत्तित्वे सति प्रागुक्तदोषाणां तादवस्थ्यात् । प्रमेयाणीत्याकारकधारावाहिकस्थलेऽसन्निकृष्टप्रमेयावच्छेदेन ज्ञानस्य चक्षुःसन्निकर्षविशिष्टान्यत्वात् । एवमनुपदोक्तस्थलेऽपि ।

अत्राहुः । चाक्षुषत्वविशेषणं न विशेष्यतायां देयम् । तथा च स्वसमानाधिकरणविशेष्यतानिरूपिततत्प्रकारतानिरूपितविशेष्यतासम्बन्धेन चक्षुःसन्निकर्षाभावविशिष्टज्ञानत्वेन प्रतिबन्धकत्वम् । न च घटग्रहप्रतिबन्धकदोषविशेषसमवधानकालीनसन्निकर्षसत्त्वे प्रागुक्तस्थले घटकालीनो धूम इत्यत्र घटमुख्यविशेष्यकत्वापत्तिरिति वाच्यम् । दोषविशेषाभाववैशिष्ट्यस्य चक्षुःसन्निकर्षे विशिषणात् । नापि यत्र घटत्वेन घटस्मरणं चक्षुःसंयोगश्च तत्र द्वितीयक्षणे घटत्वेन निखिलघटमुख्यविशेष्यकत्वापत्तिः, इष्टत्वात् । विशेषणज्ञानसत्त्वादिति । न च घटत्वेन घटमुख्यविशेष्यकप्रत्यक्षस्य संसर्गसाक्षात्कारात्मकतया तत्कारणसंसर्गिसाक्षात्कारविरहेण नेष्टापत्तिसंभव इति वाच्यम् । घटत्वस्योपनीततयैव तत्र भानस्य स्वीकारसंभवेन तस्य संसर्गलौकिकसाक्षात्कारानात्मकत्वेऽपि क्षत्यभावात् ।

## ❀ काशिकानन्दी ❀

परे तु तद्धर्मनिष्ठप्रकारतानिरूपितलौकिकविशेष्यताप्रयोजकचक्षुःसन्निकर्षा-विशिष्टज्ञानत्वेन प्रतिबन्धकत्वम्। चक्षुःसन्निकर्षाभावश्च कालिकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। तदधिकरणवृत्तित्वमपि कालिकेन बोध्यम्। घटकालीनो धूम इति ज्ञाने घटमुख्यविशेष्यकत्वापत्तिः। घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताप्रयोजकत्वस्य चक्षुःसंयोगे विरहात्। तथा च तादृशसन्निकर्षाभावस्य तत्काले सत्त्वात् तस्मिन्नेव काले घटज्ञानस्यापि सत्त्वात्तत्र प्रतिबन्धकसत्त्वम्। तत्पुरुषीयत्वं तत्प्रकारकत्वं च निवेश्यम्। धूमत्वेन बाष्पभ्रमोत्तरजायमानधारावाहिकेऽपि धूमत्वनिष्ठप्रकारतानिरूपितबाष्पनिष्ठविशेष्यताप्रयोजकचक्षुःसन्निकर्षसत्त्वेन दोषाभावः। बाष्पेण सह चक्षुःसन्निकर्षनाशे पुनर्न भवत्येव धूमत्वेन धूमानां प्रत्यक्षम्। न चैवं तद्धर्मनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकसन्निकर्षत्वेन हेतुत्वमेवोच्यतां किं तदभावविशिष्टज्ञानत्वेन प्रतिबन्धकत्वकल्पनेनेति वाच्यम्। यथाकथंचित्संबन्धेन तन्निवेशासंभवात्। समवायेन तद्विशिष्टासन्निकृष्टघटादिविशेष्यकज्ञानानुदयप्रसङ्गस्योक्तत्वात्।

वस्तुतस्तु तद्धर्मनिष्ठप्रकारतानिरूपितलौकिकविशेष्यताप्रयोजकसामग्र्यभावविशिष्टतद्विषयकज्ञानत्वेन प्रतिबन्धकत्वं वक्तव्यम्। अभावः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकः। एवं चालोकसंयोगोद्भूतरूपादिकं सर्वमपि तदन्तर्भवतीति न पृथक् तान्युपादाय त्रित्वावच्छिन्नाभावप्रवेश आवश्यकः। तथा च न कोऽपि दोषः। प्रकारता तु लौकिकालौकिकसाधारणी। तेन धूमत्वेन बष्पभ्रमकाले धूमत्वेन निखिलधूमप्रत्यक्षोपपत्तिः।

ननु घटत्वेन यत्किंचिद्घटज्ञानोत्तरजायमान "घटकालीनोधूम" इति चाक्षुषे प्रागज्ञातघटमुख्यविशेष्यकत्वमेव किं न स्यात्। अज्ञातघटेषु प्रतिबन्धकीभूतज्ञानविरहात् न च कारणविरहान्न भवतीति शङ्क्यम्। घटत्वज्ञानस्य कारणत्वात्। यावद्घटमुख्यविशेष्यतात्वेन कार्यतानवच्छेदकत्वादिति चेद्?

न, निरुक्तसामग्र्यभावविशिष्टतद्विषयकज्ञानस्य स्वविषयोभूतसामान्याश्रयनिष्ठमुख्यविशेष्यतासम्बन्धेन प्रतिबन्धकत्वोपगमेन दोषाभावात्। न चैवं घटत्वेन पटभ्रमोत्तरजायमान "घटकालीनोधूम" इति प्रत्यक्षस्य पटमुख्यविशेष्यकत्वापत्तिः। तादृशज्ञानप्रकारीभूतघटत्वाश्रयत्वस्य तत्र विरहादिति वाच्यम्। तद्भासकसामग्रीविरहात्। सामान्यलक्षणायाः स्वाश्रयमात्रभासकत्वात् स्वविषयीभूतसामान्याश्रयनिष्ठविषयत्वं प्रागभिहितदिशा परिष्करणीयम्। मुख्यत्वप्रवेशाद् घटकालीनो धूम इत्यत्र न व्यभिचारः। अन्यथा घटविशेष्यताप्रयोजकलौकिकसामग्र्यभावस्य घटत्वज्ञानस्य च तत्र सत्त्वाद् प्रतिबन्धकसद्भावेन तादृशज्ञानानापत्तेः।

एवं स्थिते तत्तत्प्रकारकत्वस्य प्रतिबध्यप्रतिबन्धकभावावच्छेदककोटावश्यनिवेश्यत्वे द्रव्यचाक्षुषेत्यत्र द्रव्यपदमसहिष्णवः सोढव्या एव।

इदं पुनरिहावधेयम्। एवं रीत्या द्रव्यादिचाक्षुषत्वाद्यवच्छिन्नं प्रति प्रतिबन्धकत्वकल्पनेऽपि घटकालीनो धूम इत्यादिचाक्षुषस्य घटमुख्यविशेष्यकत्वापत्तिवारणं न

## ❀ काशिकानन्दी ❀

संभवति । घटमुख्यविशेष्यकचाक्षुषत्वस्य अनापादितत्वात् । घटादिमुख्यविशेष्यकप्रत्यक्षत्वस्यैवापादनात् । न हीदृशप्रतिबन्धकसमवधाने सामान्यसामग्र्याः कार्यजनकत्वं नास्ति । घटत्वेन निखिलघटचाक्षुषकाले सन्निकर्षविगमेऽपि उत्तरक्षणे मानसात्मकस्यैव निखिलघटप्रत्यक्षस्य उत्पद्यमानत्वात् । न च बाह्येन्द्रियजन्यप्रत्यक्षसामग्र्यभावस्य मानसे कारणतया तत्रापि विशेषसामग्र्याः सत्त्वाद् यावद्विशेषसामग्र्यन्यतमस्यैव सामान्यसामग्र्या स्वकार्यजननेऽपेक्षणीयत्वाद् घटकालीनो धूम इत्यत्र च तथाविधायाः कस्याश्चिदपि सामग्र्या विरहान्न दोष इति वाच्यम् । बाह्येन्द्रियजन्यप्रत्यक्षसामग्र्यभावस्य विशेषसामग्रीत्वाभावात् । सामान्यलक्षणा कार्यतावच्छेदककोटौ तत्तद्घटत्वादिप्रकारकत्वप्रवेशाद् बाह्येन्द्रियजन्यप्रत्यक्षसामग्र्यभावकार्यतावच्छेदककोटौ च तदप्रवेशात् । नापि सामान्यसामग्रीत्वं निरुक्तसामग्र्यभावस्य समान्यलक्षणया घटत्वादिप्रकारकचाक्षुषस्यापि जननात् । तस्माद् घटत्वादिप्रकारकघटादिमुख्यविशेष्यकघटइत्येतावन्मात्राकारकमानसं न भवत्येवेत्यालोच्यैवायं ग्रन्थः । तथा सति निरुक्तप्रतिबन्धकाभावस्य विशेषसामग्रीत्वं सम्पद्यत इति तादृशप्रतिबन्धकसद्भावकाले न घटकालीनो धूम इत्यादिचाक्षुषस्य घटमुख्यविशेष्यकत्वापत्तिः । एतदेवाभिसन्धायाग्रे घट इत्येतावन्मात्राकारमानसोपनीतभानाऽसत्त्वेऽपि क्षत्यभावं वक्ष्यतीति केचिदाहुः ।

अन्ये तु मानसस्थलेऽपि कार्यकारणभावान्तरमुक्त्वा तत्रापि विशेषसामग्रीं सम्पाद्य घटत्वादिसामान्यलक्षणया घटत्वादिप्रकारकमानसमपि साधयांचक्रुः ।

परे तु बाह्यप्रत्यक्षसामग्र्यभावस्य विशेषसामग्रीत्वाभावेऽपि घटत्वसामान्यलक्षणया कार्यजनने चक्षुःसन्निकर्षाभावविशिष्टज्ञानात्मकप्रतिबन्धकाभावबाह्यप्रत्यक्षसामग्र्यभावाद्यन्यतमत्वेन सहकारित्वकल्पनाद्घटत्वादिप्रकारकमानसोपपत्तिमाहुः ।

अथैवं तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्या एव विशेषसामग्रीत्वसंभवे किमेतादृशप्रतिबध्यप्रतिबन्धकभावकल्पनेन । घटकालीनो धूम इत्यत्र घटत्वप्रकारकघटलौकिकप्रत्यक्षसामग्रीभूतघटचक्षुःसंयोगादिविरहादेव दोषाभावात् । घटत्वप्रकारकमानसासत्त्वादित एव विशेषसामग्र्या व्यभिचाराभावादिति चेद् ?

सत्यम्, संभवति तस्या विशेषसामग्रीत्वे एवंसमाधानसंभवः । नत्वेवम् । यतो हि घटेन्द्रियसंयोगत्वेन नेन्द्रियसंयोगस्य हेतुता, विषयतया द्रव्यचाक्षुषादौ समवायेन चक्षुःसंयोगादेः कारणतया चक्षुःसंयोगत्वादिनैव चक्षुःसंयोगादेर्हेतुत्वात् । तावन्मात्रापेक्षणे च धूमेन सह चक्षुःसन्निकर्षोऽस्त्येवेति घटकालीनो धूम इति प्रत्यक्षस्य घटमुख्यविशेष्यकत्वं स्यादेव ।

ननु विषयस्यापि तत्तद्व्यक्तित्वेन विषयप्रत्यासन्नतया कारणत्वात् चक्षुःसंयोगमहत्त्वतद्व्यक्त्यादीनामेकस्मिन् प्रत्यासन्नानां विशेषसामग्र्यात्मकतया घटप्रत्यक्षकारणीभूताया घटे प्रत्यासन्नाया चक्षुःसंयोग-तद्घटव्यक्त्याद्यात्मिकायाः सामग्र्या विरहादेव न घटमुख्य-

### ❁ जागदीशी ❁

तया प्रतिबन्धकत्वात्। अत एव सत्यपि भूतलादिज्ञाने लौकिकसन्नि- दशायां तन्मुख्यविशेष्यकं लौकिकप्रत्यक्षमिति ध्येयम्।

गन्धादेरचाक्षुषत्वोपपत्तये चाक्षुषादिकं प्रति तादात्म्येनावश्यं गन्ध-

### ❁ काशिकानन्दी ❁

विशेष्यकचाक्षुषापत्तिः। धूमप्रत्यासन्नाया धूमव्यक्त्यादिघटितायाः सामग्र्या धूम- एव हेतुत्वादिति चेद् ?

न, प्रत्यक्षे विषयस्य तत्तद्व्यक्तित्वेन हेतुत्वेऽपि अत्र सामान्यविशेषभावो न- एव। तथा हि घटप्रत्यासन्नया चक्षुःसंयोगतद्घटव्यक्त्याद्यात्मकसामग्र्या घटत्वेन- लौकिकप्रत्यक्षं प्रतीव द्रव्यत्वादिना घटलौकिकप्रत्यक्षं घटनिर्विकल्पकं च प्रत्यपि हेतुत्व- न तु घटत्वज्ञानात्मकसामान्यलक्षणायाः। एवं घटत्वज्ञानात्मकसामान्यलक्षणाया - न्निकृष्टघटस्यापि प्रत्यक्षप्रयोजकत्वं न तु तद्घटप्रत्यासन्नाया उक्तसामग्र्याः। तथा सामान्यलक्षणया कार्यजनने कथमुक्तसामग्र्याः सहकारितासंभवः। एवं सामान्यसाम- कार्यजनने यावद्विशेषसामग्र्यन्यतमापेक्षेत्यत्र यत्किंचिद्विशेषसामग्रीमात्रस्य सहकारि- मिति यदि तदा चक्षुषा चाक्षुषत्वावच्छिन्नजननात् यत्किंचिद्घटादिप्रत्यक्षप्रयोजकसा- काले योग्यनिखिलविषयकचाक्षुषं स्यात्। सामान्यसामग्रीसत्त्वात्। तस्मात् साम- सामग्र्यास्तत्तद्विशेषधर्माक्रान्तकार्यजनने तत्तद्विशेषसामग्र्या अपेक्षेत्येव वक्तव्यम्। - सति प्रकृतेऽपि घटत्वसामान्यलक्षणया निखिलघटप्रत्यक्षजनने तत्तद्घटविषय- चाक्षुषत्वाद्यात्मकविशेषधर्माक्रान्ततायाः कार्यस्यावश्यकतया तत्तद्विषयताकचाक्षुषसा- अपेक्षणीयेति असन्निकृष्टघटविषयताकप्रत्यक्षप्रयोजकविशेषसामग्रीविरहात् कथं - तत्प्रत्यक्षमुत्पाद्यताम् ?

अथैवमपेक्षणीयं चेत्यादिदीधितेरसंगतिः स्यादिति चेन्न। घटत्वादिज्ञानोत्तर- मानसामान्यलक्षणाप्रयोज्यप्रत्यक्षस्य चाक्षुषत्वस्पार्शनत्वादिनियामकत्वमात्रार्थं तदि- करणकतद्धर्मवत्त्वबोधसामग्र्या अपेक्षणात्। अत एव चाक्षुषत्वनियामकाकाङ्क्षा- स ग्रन्थ उत्थापितो जगदीशेन न तु घटेन्द्रियादिसन्निकर्षशून्यकाले घटत्वादिसामा- प्रत्यक्षापत्तिशङ्कया। इयमेव च रीतिः सुरभि चन्दनमित्यत्रोक्तस्थलेऽप्यनुसन्धेये- मतिविस्तरेण।

ननु प्रतिबन्धककोटौ चक्षुरादिलौकिकसन्निकर्षाभावप्रवेशः किमर्थः ? अत आह- अत एवेति। चक्षुरादिलौकिकसन्निकर्षाभावविशिष्टान्तदानादेवेत्यर्थः। तन्मुख्यवि- ष्यकं=भूतलादिमुख्यविशेष्यकम्। ध्येयमिति। ध्येयताबीजं तु वक्ष्यामः।

सौरभत्वप्रकारेण यत्किंचित्सौरभज्ञानोत्तरं जायमानस्य सुरभि चन्दनमित्याक- चाक्षुषस्य पूर्वानुपस्थितयावत्सौरभमुख्यविशेष्यकत्वापत्तिरिति यो दोषोऽभिहितस्तं परि- हीर्षूणां प्रकारान्तरमनुसरतां केषांचिन्मतमाह—गन्धादेरिति। अचाक्षुषत्वो- त्तये=चाक्षुषमुख्यविशेष्यकत्वाभावोपपत्तये। लौकिकविषयतासम्बन्धेन चाक्षुषाभा-

❀ जागदीशी ❀

दिना प्रतिबन्धकत्वं वाच्यम् । तथा च तत्रैव लौकिकविषयतामात्रं न प्रतिवध्यताघटकसम्बन्धः । किन्तु मुख्यविशेष्यत्व-निर्विकल्पकविषयत्वयोरन्यतरदेव । सम्बन्धादेरननुगमस्य स्वरूपसम्बन्धेन हेतुतास्थले एव स्वहस्तितत्वात् । प्रकारतान्यविषयत्वं वा तादृशसम्बन्धो वाच्यः । 'सुरभिचन्दन' मित्यादिचाक्षुषे चन्दनांशे प्रकारतैव सौरभत्वांशे विशेष्यता, न त्वधिकेत्युक्तप्रतिबन्धकसद्भावादेव चाक्षुषज्ञानं न सौरभमुख्यविशेष्यकमित्यपि

❀ काशिकानन्दी ❀

पपत्तय इति वा । एवं च सुरभि चन्दनमिति चाक्षुषविषयत्वस्य सौरभत्वे सत्त्वेऽपि न क्षतिः । वाच्यमिति । प्राचीनैर्नव्यैश्चेति शेषः । अत्र प्राचीनानां मते लौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति तादात्म्येन गन्धत्वेन प्रतिबन्धकत्वं, तत्र नव्य आह—तथा च मुख्येति । निर्विकल्पकविषयत्वमात्रस्य प्रतिबन्धकतावच्छेदकसम्बन्धत्वे सौरभमाणीत्याद्याकारकचाक्षुषवारणं न स्यात् । सौरभनिष्ठविषयताया निर्विकल्पकीयत्वविरहादिति मुख्यविशेष्यत्वोपादानम् । तथा च सौरभमाणीत्याकारकं न सौरभमुख्यविशेष्यकचाक्षुषमापद्यते । मुख्यविशेष्यतासम्बन्धेन सौरभे तदुत्पादे तादात्म्येन गन्धस्य विरोधित्वात् । मुख्यविशेष्यतामात्रस्य प्रतिबध्यताघटकसम्बन्धत्वे गन्धविषयकचाक्षुषनिर्विकल्पकमापद्येत तथा च सति विशेषणे विशेष्यमिति रीत्या जायमानगन्धवानिति चाक्षुषस्य लौकिकगन्धप्रकारकत्वापत्तिरतो निर्विकल्पकयिषयत्त्वेति ।

नन्वेवं प्रतिबध्यताघटकसम्बन्धस्याननुगमः । न च मुख्यविशेष्यत्व-निर्विकल्पककविषयत्वान्यतरत्त्वेन तदुभयानुगमसंभव इति वाच्यम् । भेदद्वयावच्छिन्नप्रतियोगिताकभेदात्मकान्यतरत्वस्याननुगतत्वात् । एकभेदविशिष्टापरभेदावच्छिन्नामपरभेदविशिष्टतद्भेदावच्छिन्नां च प्रतियोगितां विनिगमनाविरहेणोपादातुं शक्यत्वात्तद्घटितान्यतरत्वस्य नानात्वेन नानाप्रतिबध्यप्रतिबन्धकभावस्यापत्तेरत आह—सम्बन्धादेरिति । आदिना संसर्गतावच्छेदकपरिग्रहः । स्वरूपसम्बन्धेन हेतुतास्थल इति । रूपादिप्रत्यक्षे चक्षुःसंयुक्तसमवायादेः स्वरूपेणैव हेतुत्वात्तादृशस्थल इत्यर्थः । स्वहस्तितत्वादिति । स्वरूपसम्बन्धस्य तत्तदनुयोग्यादिस्वरूपतया अनुयोग्यादीनामननुगमेन सर्वैरेव सम्बन्धाननुगमस्य स्वहस्तस्थितस्य सोढव्यत्वादित्यर्थः ।

अननुगममसहमानः प्रकारान्तरमनुसरति—प्रकारतान्येति । तादृशसम्बन्धः = प्रतिबध्यतावच्छेदकसम्बन्धः । नन्वेवं सुरभिचन्दनमित्यादिचाक्षुषमपि न स्यात् प्रकारतान्यायाः सौरभत्वनिष्ठप्रकारतानिरूपितसौरभनिष्ठविशेष्यतायाः सौरभे सत्त्वादत आह—सुरभीति । चन्दनांशे प्रकारता = चन्दननिष्ठविशेष्यतानिरूपितप्रकारता । सौरभत्वांशे विशेष्यता = सौरभत्वनिष्ठप्रकारतानिरूपितविशेष्यता । न त्वधिकेति । न त्वतिरिक्तेत्यर्थः । सौरभे हि सौरभत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वं चन्दननिष्ठविशेष्यतानिरूपितप्रकारत्वं च वर्तते । तच्च प्रकारत्वं विशेष्यत्वं च गदाधरमत इव न भिन्ना भिन्ना

## ❀ जागदीशी ❀

वदन्ति । तच्चिन्त्यम् ।

केचित्तु घटत्वपटत्वादीनां तद्विषयकज्ञानानां वा प्रत्यासत्तित्वे कार्यकारणभावानन्त्यप्रसङ्गात् सर्वत्र नित्यज्ञानव्यक्तिरेव प्रत्यासत्तिः । तस्याश्च स्वाश्रयविशेष्यकप्रत्यक्षत्वावच्छिन्नं प्रति तद्बुद्धिव्यक्तित्वेन हेतुत्वम् ।

## ❀ काशिकानन्दी ❀

जगदीशमते । किन्त्वेकैव । एवं च सौरभनिष्ठविषयतायाः प्रकारतान्यत्वविशिष्टसम्बन्धेन चाक्षुषोत्पादे क्षतिविरहः प्रकारतान्यविषयतया चाक्षुषोत्पादे एव गन्धविरोधित्वादिति ।

तच्चिन्त्यमिति । चिन्ताबीजन्तु गन्धादेश्चाक्षुषनिर्विकल्पकं न प्राप्नोति । योग्यसन्निकर्षस्य प्रत्यक्षहेतुत्वात् । रूपादिवृत्तिसन्निकर्षो योग्यो न तु गन्धादिवृत्तिः । योग्यवृत्तिः सन्निकर्षविशेषणं वा । न च योग्यवृत्तित्वं न वक्तव्यमुक्तप्रतिबध्यप्रतिबन्धकभावेनैव निर्वाहादिति वाच्यम् । यत्र प्रथमं गन्धस्मरणं चक्षुःसंयुक्तसमवायश्च गन्धे तत्र विशेषणविशेष्यमितिरीत्या उत्तरक्षणे गन्धवच्चन्दनमित्याकारकगन्धप्रकारकचाक्षुषोत्पादात्। यदि च गन्धस्य लौकिकप्रत्यक्षे गन्धचन्दनयोः संसर्गस्यापि साक्षात्कारता स्यात् तथा संसर्गसाक्षात्कारकारणसंसर्गिसाक्षात्कारविरहादेव नायं दोषः गन्धचाक्षुषस्य प्रागभावादि विभाव्यते तदापि प्रमेयत्वेन गन्धप्रत्यक्षस्यानुपपत्तिः स्यात् । यदि च सौरभत्वादिप्रकारको निवेश्यते तदाऽस्माभिः प्रागभिहितप्रतिबध्यप्रतिबन्धकभावे एव पर्यवसानम् । निर्विकल्पसंग्रहेण पृथक् प्रतिबध्यप्रतिबन्धकभावकल्पनमेव भवेदिति ।

इन्द्रियसम्बन्धादेरिव तत्तत्प्रकारकत्वादेरपि परित्यागेन लघुभूतकार्यकारणभावं वदतां मतमाह—केचित्त्विति । तस्याः = नित्यज्ञानव्यक्तेः । स्वाश्रयेति । स्वं—नित्यज्ञानव्यक्तिः, विषयतया तदाश्रयो घटादिः, तद्विशेष्यकप्रत्यक्षं—घटइत्याद्याकारकम् । अत्र स्वाश्रयत्वं कारणतावच्छेदकसम्बन्धः । विशेष्यत्वं च कार्यतावच्छेदकसम्बन्धः । एवं च तयोरेकाश्रयप्रत्यासन्नत्वमिति सूचयितुं स्वाश्रयविशेष्यकेत्युक्तम् ।

यत्तु स्वाश्रयत्वविशेषणमयुक्तं तस्य कार्यतावच्छेदककोटावप्रवेशात् विशेष्यतामात्रस्य कार्यतावच्छेदकसम्बन्धत्वाच्चेति कस्यचिद्दूषणम् ।

तन्न्यूनमुक्तम् । विशेष्यकत्वविशेषणमप्ययुक्तं वक्तव्यम् । तस्यापि कार्यतावच्छेदककोटावप्रवेशात् । अथ विशेष्यकेति पदं नानर्थकं, विशेष्यतायाः कार्यतावच्छेदकसम्बन्धत्वात् तत्सूचनेन तत्सार्थक्यादिति चेत्? तर्हि स्वाश्रयेतिपदमपि नानर्थकम् । स्वाश्रयत्वस्य कारणताघटकसंसर्गत्वात् । अथ स्वाश्रयत्वस्य संसर्गत्वमनभिधाय कार्यतावच्छेदककोटौ प्रवेशादसंगतिरुक्तेति चेत्? तर्हि विशेष्यत्वस्यापि संसर्गत्वमनभिधाय कार्यतावच्छेदककोटौ प्रवेशेनासंगतिस्तुल्या ।

अत्र विषयतात्वस्य कारणतावच्छेदकसंसर्गतावच्छेदकत्वे तेन सम्बन्धेन नित्यज्ञानव्यक्तेरभावाप्रसिद्ध्या अन्वयव्यतिरेकाऽलाभेन असाधारणकारणत्वाऽलाभ इति

## ❀ जागदीशी ❀

स्वाश्रयविषयकप्रत्यक्षहेतुत्वे तु नित्यज्ञानव्यक्तेः सर्वदा सत्त्वाद् यत्किंचित्सन्निकर्षदशायां जगद्गोचरनिर्विकल्पकोत्पत्त्या तदुत्तरं सार्वज्ञापत्तिरतः

## ❀ काशिकानन्दी ❀

स्वाश्रयत्वस्य संसर्गत्वमुक्तम्। स्वाश्रयत्वं चाश्रयभेदेन भिन्नमिति, नापि स्वाश्रयतात्वमखण्डधर्म इति तेन सम्बन्धेन तत्र तत्र नित्यज्ञानव्यक्तिव्यतिरेकोऽपि सुलभ एव। न च व्यतिरेकव्यभिचारः स्यात् विशेष्यतया घटप्रत्यक्षवति आश्रयत्वान्तरेण नित्यज्ञानाभावस्य तत्र सत्त्वादिति वाच्यम्। तत्तत्स्वाश्रयत्वस्य संसर्गत्वात्। संसर्गाननुगमस्तु सोढव्य एव। न च तद्व्यक्तिवृत्तिविषयत्वस्य संसर्गत्वमस्त्विति वाच्यम्। तथा सति लाघवाभावात्। एकस्यामेव व्यक्तौ प्रकारभेदेन नानाविषयतासंभवेन तासां तथात्वे गौरवाच्चेति दिक्।

स्वाश्रयविशेष्यकेत्यत्र विशेष्यतापर्यन्तफलन्माह—स्वाश्रयविषयकेति। यत्किंचित्सन्निकर्षदशायामिति। घटत्वादिना सह चक्षुरादिसन्निकर्षदशायामित्यर्थः। तदुत्तरं = घटत्वादिविषयकनिर्विकल्पकोत्तरम्। सार्वज्ञापत्तिरिति। अयं भावः—चाक्षुषाद्यात्मकप्रत्यक्षं प्रति चक्षुःसन्निकर्षादेः कारणत्वेऽपि यस्मिन् काले येन केनचित् घटादिना सह सन्निकर्षस्तदुत्तरं सार्वज्ञापत्तिः। तथा हि 'घटः' 'पट' इत्यादिज्ञानं विषयतया घटत्वादावुत्पद्यते। अस्ति चेश्वरज्ञानमपि तत्र स्वाश्रयत्वसम्बन्धेन। न च पटादिभिः सह सन्निकर्षविरहादेव कथमापत्तिरिति वाच्यम्। प्रत्यक्षविषयीभूतैः सर्वैः सन्निकर्षस्यानपेक्षणात्। अन्यथा घटत्वादिसामान्यलक्षणया निखिलघटादिभानं कस्यापि न स्यात्। तथा च यत्किंचिद्घटादिना सह सन्निकर्षोत्तरं जायमान "घट" इत्याद्याकारकप्रत्यक्षस्य घटत्वपटत्वादिनिखिलविषयकत्वं स्यादिति ततः सार्वज्ञापत्तिः स्यादेव।

ननु जगद्गोचरनिर्विकल्पकोत्पत्तावपि पटत्वादिप्रकारतायास्तत्र विरहात् कथं सार्वज्ञमापद्यते? न च निर्विकल्पकोत्तरमेवापत्तिरिति वाच्यम्। चक्षुःसन्निकर्षाभावविशिष्टज्ञानत्वेन प्राङ्निष्कर्षितेन चाक्षुषादौ प्रतिबन्धकत्वकल्पनादेव दोषाऽप्रसक्तेः। तादृशप्रतिबध्यप्रतिबन्धकभावाकल्पने विशेष्यत्वप्रवेशेऽपि घटकालीनो धूम इत्यादिप्रत्यक्षस्य यावद्घटमुख्यविशेष्यकत्वापत्तेरिति चेद्?

मैवम्। ज्ञानलक्षणासन्निकर्षेणैव घटत्वपटत्वादीनां घटपटादावुपनीतभानस्य प्रसक्तेः। न चोक्तप्रतिबन्धकसद्भावे ज्ञानलक्षणयापि कथं घटत्वादिप्रकारकज्ञानापत्तिरिति वाच्यम्। मुख्यविशेष्यतया घटत्वादिप्रकारकचाक्षुषजनने एवोक्तप्रतिबन्धकोपगमात्, अन्यथा घटकालीनो धूम इत्यादिचाक्षुषानापत्तिप्रसङ्गात्। तथा च घटपटादिनिखिलप्रकारकात्मकज्ञानादेव सार्वज्ञमापद्यते। न च घटपटादिप्रकारकप्रत्यक्षकारणविशेषणतावच्छेदकघटत्वादिप्रकारकज्ञानविरहात्कथमापत्तिरिति वाच्यम्। विशेष्ये विशेषणमितिरीत्या प्रत्यक्षसंभवात्। सर्वेषामेव घटादीनां येन केनचित्सम्बन्धेन सन्निकृष्टवस्तुनि प्रकारत्वसंभवात्।

अथवा—यत्किंचित्सन्निकर्षदशायां = यत्किंचित्सन्निकर्षोत्तरं, जगद्गोचरनि-

## ❀ जागदीशी ❀

स्वाश्रयविशेष्यकत्वानुसरणम्। स्वाश्रयस्तु विषयतया ग्राह्यः। न च तत्तद्व्यक्त्याश्रयत्वाऽविशेषात् "घट" इत्याकारकप्रत्यक्षकाले पटत्वेन पटस्य प्रत्यक्षापत्तिः। पटत्वज्ञानदशायामिष्टापत्तेः। अन्यथा विशेषणज्ञानविरहे तदसंभवात्।

## ❀ काशिकानन्दी ❀

र्विकल्पकोत्पत्त्येति। घटादिना ज्ञानादिना वा येन केनचित्सह सन्निकर्षोत्तरं जायमानघटादिनिर्विकल्पकस्य जगद्विषयकत्वापत्तिरित्येतत्। न च सन्निकर्षसत्त्वकथनमनर्थकमिति वाच्यम्। सन्निकर्षविरहकाले कारणविरहेण निर्विकल्पकस्यैवासंभवात्। निर्विकल्पकसामान्ये सन्निकर्षस्य हेतुत्वात्। न च स्मरणात्मकनिर्विकल्पके व्यभिचारः शङ्क्यः निर्विकल्पकप्रत्यक्षे एव तस्य कारणत्वात्। न च यत्किंचित्स्मरणस्यैव जगद्विषयकनिर्विकल्पकत्वापत्तिसंभवात् सन्निकर्षकथनवैयर्थ्यं शङ्क्यम्। प्रत्यक्षं प्रत्येवेश्वरज्ञानस्य हेतुत्वोक्तेः। न च घटपटादिनिर्विकल्पकप्रत्यक्षं प्रति विशेषसामग्रीभूतसन्निकर्षविरहे कथमापत्तिरिति वाच्यम्। यतो न निर्विकल्पकत्वमापाद्यते। किन्तु घटपटादिनिखिलविषयताकत्वमेव। न हि घटपटादिविषयताकप्रत्यक्षेऽपि चक्षुःसन्निकर्षादिसामग्री हेतुः तथा सति असन्निकृष्टाऽलौकिकप्रत्यक्षानापत्तेरुक्तत्वात्। एवं च जगद्विषयकविकल्पकोत्तरं घटत्वपटत्वादिप्रकारकघटपटादिविशेष्यकमानसमेवोत्पद्येतेति सार्वज्ञ्यं स्यादिति। न च घटत्वादिघटादिमुख्यविशेष्यकमानसानुपगमादेव न दोष इति वाच्यम्। एतादृशमानसोपगमात्। लौकिकप्रत्यक्षसामग्र्यभावस्य मानसप्रत्यक्षे विशेषसामग्रीत्वे प्रागुक्तदोषानवकाशात्। ईश्वरज्ञानकार्यतावच्छेदककोटौ तत्तत्प्रकारकत्वाऽनिवेशेन विशेषसामग्रीत्वाविघटनात्।

विशेष्यत्वाऽप्रवेशे उक्तप्रतिबध्यप्रतिबन्धकभाव एव नास्ति लौकिकचाक्षुषस्पार्शनमानसादिसामग्र्या विशेषसामग्रीत्वोपगमादेव दोषाभावाद्, घटत्वादिना निखिलघटादिचाक्षुषादौ यत्किंचिद्घटादिसन्निकर्षघटितसामग्र्या एवापेक्षणात्। एवं च ज्ञानादिना सह सन्निकर्षोत्तरं जायमानस्य प्रत्यक्षस्यैव जगन्निर्विकल्पकत्वापत्त्या तदुत्तरं सार्वज्ञापत्तिरित्यप्याहुः।

नित्यज्ञानाश्रयतायाः परमात्मन्येव सत्त्वाद् घटत्वादिप्रत्यक्षस्य विशेष्यतया तत्राव्यभिचार इत्यत आह—स्वाश्रयस्त्वति। ननु स्वाश्रयविशेष्यकप्रत्यक्षत्वावच्छिन्नं नित्यज्ञानव्यक्तेः कारणत्वस्वीकारे कथं सार्वज्ञवारणं? घटपटादिनिखिलविशेष्यतानियोजकनित्यज्ञानव्यक्तेः सर्वत्र सत्त्वादित्याशङ्कामपनुदति—न चेति। प्रत्यक्षापत्तिरित्यन्वयः। तज्ज्ञानेति। ईश्वरज्ञानेत्यर्थः। अविशेषादिति। जगत एवेश्वराश्रयत्वादिति भावः। पटस्यापीति। अपिकारेण मठत्वादिना मठादीनां सर्वेषां परिग्रहः। अन्यथा=पटत्वादिज्ञानविरहे। तदसंभवात्=पटत्वादिना पटादिज्ञानाऽसंभवात्। अयमभिप्रायः—नित्यज्ञानव्यक्तिः स्वाश्रयनिष्ठविशेष्यताया एव प्रयोजिका, न तु स्वनिष्ठप्रकारताया अपि, एवं च तत्प्रकारकप्रत्यक्षे प्रकारताप्रयोजकं किंचिद् वक्तव्यम्।

❀ जागदीशी ❀

नापि घटत्वेन घटस्य प्रत्यक्षदशायां ताद्रूप्येण पटादेः प्रत्यक्षापत्तिः। घटत्वप्रकारेण पटादिग्रहस्य भ्रमतया तज्जनकदोषविरहादेव तस्याप्यसंभवात्। अन्यथा घटत्वादिसामान्यज्ञानस्य प्रत्यासत्तितायामपि द्रव्यत्वघटत्वयोरुपस्थितौ द्रव्यत्वेन पटप्रत्यक्षदशायां घटत्वेनापि पटस्य प्रत्यक्षापत्तेर्दुर्वारत्वात्।

❀ काशिकानन्दी ❀

विशेषणज्ञानमेव। तथा च पटत्वप्रकारकप्रत्यक्षकारणीभूतपटत्वज्ञानसत्त्वे पटत्वप्रकारकज्ञानमिष्टमेवेति नानिष्टापत्तिः, तद्विरहकाले च पटनिष्ठविशेष्यताकज्ञानकारणीभूतेश्वरज्ञानव्यक्तिसत्त्वेऽपि पटत्वप्रकारकज्ञानकारणपटत्वज्ञानविरहादेव नापत्तिसंभव इति।

ननु पटविशेष्यकज्ञानकारणस्य तदानीं सत्त्वाद् घटत्वेन पटविशेष्यकमेव ज्ञानं जायतां घटत्वप्रकारताप्रयोजकघटत्वज्ञानसत्त्वादत आह—नापीति। प्रत्यक्षापत्तिरित्यन्वयः। ताद्रूप्येण = घटत्वेन रूपेण। तज्जनकेति। घटत्वप्रकारेण पटभ्रमजनकेत्यर्थः। दोषेति। दोषस्य भ्रमजनकत्वनियतत्वादिति भावः। तस्यापि = घटत्वेन पटविशेषयकप्रत्यक्षस्यापि।

ननु दोषाभावस्य घटत्वप्रकारकप्रत्यक्षे पटविशेष्यकत्वाभावप्रयोजकत्वमधिकं भवतामापतितम्, न ह्य ताहशकल्पनागौरवमन्येषाम्। पटादिनिष्ठविशेष्यताप्रयोजकविरहेणैवापत्तिविरहात्। न च यत्र घटत्वपटत्वयोरुपस्थितिः तत्र पटत्वेन निखिलपटप्रत्यक्षदशायां घटत्वस्यापि तत्र भानं स्यादिति अन्येषामपि दोषविशेषाभावस्य तथाविधप्रयोजकत्वमावश्यकमिति वाच्यम्। स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेनैव घटत्वप्रकारकप्रत्यक्षं प्रति घटत्वज्ञानस्य कारणतया पटनिष्ठविशेष्यताया घटत्वाश्रयनिष्ठत्वविरहेण घटत्वप्रकारकज्ञानस्य पटमुख्यविशेष्यकत्वापत्तिविरहात्। यद् यन्निष्ठविशेष्यतासम्बन्धेन यत्प्रकारकज्ञानजनकं तस्य तत्प्रकारतानिरूपिततन्निष्ठविशेष्यताप्रयोजकत्वमिति नियमाभ्युपगमाच्च समूहालम्बनेऽपि दोषाभावात्। घटत्वनिष्ठप्रकारतानिरूपितत्वस्य पटनिष्ठविशेष्यतायामसंभवादित्याशङ्क्याह—अन्यथेति। दोषाभावस्य घटत्वनिष्ठप्रकारतानिरूपितपटादिनिष्ठविशेष्यत्वाभावाऽप्रयोजकत्व इत्यर्थः। प्रत्यासत्तितायामपि = प्रत्यासत्तितामतेऽपि। पटप्रत्यक्षदशायामिति। निखिलद्रव्यान्तःपातिपटविषयकप्रत्यक्षदशायामपीत्यर्थः। घटत्वेनापि पटस्य प्रत्यक्षापत्तेरिति। द्रव्यत्वनिष्ठप्रकारतानिरूपितविशेष्यताया घटे पटे चैकस्या एव स्वीकारेण पटनिष्ठायास्तस्या घटत्वात्मकसामान्याश्रयनिष्ठत्वात्, घटत्वज्ञानस्य ताहशविशेष्यतायां घटत्वनिष्ठप्रकारतानिरूपितत्वप्रयोजकताया आवश्यकत्वादिति भावः। एवं चान्येषामपि दोषाभावस्य पटनिष्ठविशेष्यतायां घटत्वनिष्ठप्रकारतानिरूपितत्वाभावप्रयोजकत्वमवश्यं स्वीकार्यमेवेति नास्मन्मतेऽपि गौरवमिति भावः

यद्यपि निरुक्तसमूहालम्बने एव घटत्वाश्रयनिष्ठविशेष्यतां पटादिवर्त्तिनीमादाय व्यभिचारवारणाय घटत्वाश्रयनिष्ठं यद् घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वं तस्यैव कार्यतावच्छेदकसंसर्गत्वं प्राङ्निष्कर्षितम्। तथाचोक्तस्थले न घटत्वज्ञानस्य घटत्वनिष्ठप्रकारतानिरूपित-

❀ जागदीशी ❀

तादृशदोषसत्त्वे च तथाविधभ्रमस्येष्टत्वात्।

न च विनिगमनाविरहाद् गगनाभावादीनां तत्तत्संयोगाभावव्यक्तीनां तत्तद्व्यक्तित्वेन स्वाश्रयविशेष्यकप्रत्यक्षं प्रति हेतुतापत्तिरिति वाच्यं गगनाद्यभावानामन्यथासिद्धत्वात्। कार्यमात्रहेतोर्नित्यज्ञानस्य स्वाश्रयत्वेऽप्यनन्यथासिद्धत्वात्। गगनाद्यभावानां तादृरूप्येण हेतुत्वेऽपि लाघवाभवाच्च। घटत्वादिज्ञानत्वेन हेतुतायां घटत्वादिप्रकारकतदाश्रयप्रत्यक्ष-

❀ काशिकानन्दी ❀

पटनिष्ठविशेष्यताप्रयोजकत्वसंभवः। घटत्वज्ञानस्य स्वविषयीभूतसामान्याश्रयमात्र-विषयतासम्बन्धेन पटे विरहात्। नापि द्रव्यत्वज्ञानस्य घटत्वनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वसंभवः। द्रव्यत्वनिष्ठप्रकारतानिरूपितविशेष्यताया एव तत्प्रयोज्यत्वात् न घटत्वेन पटप्रत्यक्षापत्तिः। तथापि विशेष्यभेदेन विशेष्यताया भिन्नत्वे घटत्वादिप्रकारतानिरूपितविशेष्यतायाः कार्यतानवच्छेदकतया पटस्यापि घटत्वेन प्रत्यक्षं स्यादेव। पटस्योक्तज्ञाने विशेष्यत्वात्। न च घटत्वप्रकारतायाः पटविशेष्यता-निरूप्यनिरूपकभावापादकविरहादेव नोक्तदोष इति वाच्यम्। तत्प्रकारकप्रत्यक्षस्य एव तदापादकत्वात्। अन्यथा घटत्वप्रकारत्वघटविशेष्यत्वयोरपि निरूप्यनिरूपकभावानापत्तेः। न चेत एव घटत्वादिप्रकारतानिरूपितविशेष्यतायाः कार्यतावच्छेदकत्वं समुपेयमिति वाच्यम्। एवं सामान्यलक्षणास्थले निर्वाहेऽपि ज्ञानलक्षणाजन्ये ऽ-निर्वाहात्। न च दोषस्यैव भ्रमस्थले विशेष्यत्वप्रकारत्वयोर्निरूप्यनिरूपकभावापादकत्वं वाच्यम्। तर्हि तद्विरहादेव प्रकृतेऽपि भ्रमाऽप्रसक्तेर्विवादानवकाशाद्।

एवं स्थितेऽत्र पटत्वेन पटोपस्थितिदशायामपि घटत्वेन तद्भ्रमापत्तिदानसंभवे द्रव्यत्वे बाधविरहस्थललाभमात्रार्थम्। द्रव्यं न घट इति बाधस्त्वतिस्थूल इति।

ननु दोषसत्त्वे एव ईश्वरज्ञानकारणतावादिनां दोष इति शङ्कामिष्टापत्त्याह तादृशेति।

नन्वेतावता स्वाश्रयविशेष्यकप्रत्यक्षं प्रति नित्यज्ञानव्यक्तेः कारणत्वमित्यायातं तत्र नित्यज्ञानव्यक्तेर्जगद्वर्त्तिनो यथा हेतुत्वं तथा गगनाभावादीनामपि तथाभूतानां न हेतुत्वमित्याशङ्कां निराकुरुते—न चेति। गगनाभावादीत्यादिपदेन तत्तत्परमाण्वभावपरिग्रहः। ननु समनियताभावानामैक्याददोष इत्यत आह—तत्तदिति। तत्तत्संयोगाभावास्तु सावच्छिन्नवृत्तयो न गगनाभावस्वरूपाः। निरवच्छिन्नवृत्तिकत्वाद् गगनादीनाम्। नित्यज्ञानस्य कुतो नान्यथासिद्धत्वमत आह—कार्येति। अङ्गीक्रियते कार्यमात्रं प्रति साधारणकारणत्वं नित्यज्ञानस्य। तादृरूप्येण = तत्तद्व्यक्तित्वेन हेतुत्वेपीति। अन्यथा अवश्यक्लृप्तात्ममनःसंयोगादीनामेव कारणत्वसंभवेन नित्यस्याप्यन्यथासिद्धत्वं स्यादिति भावः। लाघवसंभवादिति। घटत्वादिप्रकारकतद्वत्प्रत्यक्षत्वापेक्षया प्रत्यक्षत्वमात्रस्य सर्वत्र कार्यतावच्छेदकत्वे स्पष्टं लाघवम्। तदेवाह घटत्वेति। तत्ततत्संयोगाभावत्वादिप्रकारकप्रत्यक्षाणामपि कार्यतावच्छेदकाक्रान्तत्वात्

❀ जागदीशी ❀

कार्यतावच्छेदकत्वे गौरवापत्तेः।

सुरभि चन्दनमित्यादेः सौरभत्वाद्यविशेष्यकप्रत्यक्षस्यानुरोधादेव सौरभत्वादेर्ज्ञानलक्षणायाः स्वीकार्यत्वादित्याहुः।

❀ काशिकानन्दी ❀

त्परमतेऽधिककार्यकारणभावोऽपि वर्त्तत इत्यपि बोध्यम्।

केचित्तु—ननु गगनाभावादीनामन्यथासिद्धत्वं दुर्वचमत आह—गगनाद्येति। लाघवसंभवादिति। कार्यमात्रं प्रति नित्यज्ञानं साधारणकारणमिति वदतामपि विनिगमनाविरहस्य तुल्यत्वादिति भावः। ननु तथापि तुल्यत्वमेव न तु लाघवमत आह—घटत्वेति। तथा च घटत्वपटत्वादिनानाप्रकारकप्रत्यक्षत्वानां कार्यतावच्छेदकत्वेन कार्यतावच्छेदकानन्त्यम्। अस्माकं तु प्रत्यक्षत्वमेकमेव कार्यतावच्छेदकमिति लाघवमिति भाव इत्याहुः।

ननु सौरभत्वप्रकारकचन्दनविशेष्यकप्रत्यक्षस्यापि विशेष्यतया चन्दने सत्त्वान्नित्यज्ञानव्यक्तेरपि स्वाश्रयत्वसम्बन्धेन तत्र सत्त्वाद् ज्ञानलक्षणाकारणतोच्छेद इत्यत आह—सुरभीति। सौरभत्वप्रकारकचन्दनविशेष्यकज्ञानस्यायमाकारः। सौरभत्वाद्यविशेष्यकेति। सौरभत्वादि न विशेष्यं यत्र तादृशप्रत्यक्षस्य। सौरभत्वस्योक्तज्ञाने प्रकारत्वात्। अनुरोधादिति। तत्तद्विशेष्यकप्रत्यक्षं प्रत्येव भगवज्ज्ञानस्य हेतुता। सौरभत्वं तु न विशेष्यमिति तज्ज्ञाने भगवज्ज्ञानस्य अहेतुतया ज्ञानलक्षणा आवश्यकीति भावः।

आहुरित्यनेनास्वरसः सूचितः। तद्बीजं तु प्रत्यक्षत्वमात्रं न कार्यतावच्छेदकम्। ईश्वरप्रत्यक्षसाधारणत्वात्तस्य। नापि जन्यप्रत्यक्षत्वं तथा। जन्यत्वस्यैव कार्यतावच्छेदकत्वसंभवेऽधिकवैयर्थ्यात्। कार्यमात्रं प्रत्येवेश्वरज्ञानस्य कारणत्वात्। न च कालिकेन घटत्वादेरपि कार्यतावच्छेदकत्वापत्तिरिति जन्यत्वस्य न कार्यतावच्छेदकत्वसंभव इति वाच्यम्। कालिकेन घटविशिष्टप्रत्यक्षत्वादेरपि विनिगमनाविरहेण कार्यतावच्छेदकताप्रसङ्गेन जन्यप्रत्यक्षत्वस्य तथात्वस्वीकारेऽपि गतिविरहात्। किं च घटत्वादिना घटादिविशेष्यकप्रत्यक्षस्य जगद्विशेष्यताकत्वापत्तिः सामग्रीसद्भावात्। न च पटादिविशेष्यताकप्रत्यक्षत्वस्य पटत्वादिप्रकारकप्रत्यक्षत्वव्याप्यतया व्यापकधर्मावच्छिन्नसामग्रीविरहान्न दोष इति वाच्यम्। द्रव्यत्वादिनापि पटविशेष्यताकप्रत्यक्षात् पटत्वप्रकारकप्रत्यक्षत्वस्य तदव्यापकत्वात्।

किं च विषयतासम्बन्धेन नित्यज्ञानस्य न हेतुतासंभवः। तेन सम्बन्धेन नित्यज्ञानव्यतिरेकाऽप्रसिद्धेः। न च विषयतया स्वाश्रयत्वस्य सम्बन्धत्वस्वीकारेण नायं दोष इति वाच्यम्। यत्किंचित्स्वाश्रयत्वसम्बन्धेन हेतुत्वे व्यभिचारप्रसङ्गात्। यावत्स्वाश्रयत्वान्यतमत्वेन संसर्गत्वे व्यतिरेकाऽप्रसिद्धितादवस्थ्यम्। स्वीयघटनिष्ठविषयतासम्बन्धेन हेतुत्वे एकघटप्रवेशेऽपरघटे व्यभिचारः। स्वीयघटत्वाश्रयनिष्ठविषयतासम्बन्धेन हेतुत्वे पटत्वेन पटप्रत्यक्षे व्यभिचारः। घटत्वप्रकारकप्रत्यक्षत्वस्य कार्यतावच्छेदकतास्वीकारेण व्यभिचारवारणे पटत्वादिप्रकारकप्रत्यक्षं प्रति स्वीयपटत्वाद्याश्रयनिष्ठविषयतासम्बन्धेन पृथक् पृथक्

❀ दीधितिः ❀

**इयं च धर्मविषयकं ज्ञानं धर्मिणां प्रत्यासत्तिः। इतरा तु यद्वि-ज्ञानं तस्य। अत एव "सुरभि चन्दन" मित्यादौ सौरभत्वादेरपि भाना-**

❀ जागदीशी ❀

ननु सामान्यं यदि न प्रत्यासत्तिः, किन्तु तज्ज्ञानं तदा ज्ञानलक्ष-सहैतस्याः को भेद इत्यत आह **इयं चेति**। सामान्यलक्षणा चेत्य-**इतरा**=ज्ञानलक्षणा। **तस्येति**। प्रत्यासत्तिरित्यनुषज्यते। तथा च, कारणभावभेदादेव प्रत्यासत्योर्भेदव्यवहार इति भावः। अत ए-

❀ काशिकानन्दी ❀

हेतुत्वं वक्तव्यम्। तत्रापि घटत्वेन पटभ्रमस्थले व्यभिचारः। स्वप्रकारीभूतसामान्य-निष्ठविशेष्यतासम्बन्धेन घटत्वप्रकारकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे तु अस्मन्मतानुसा-न च तद्विषयकज्ञानत्वेन तव हेतुत्वमिति गौरवम्। स्वविषयीभूतसामान्याश्रयनिष्ठ-मात्रस्य संसर्गत्वेऽस्माकमपि तात्पर्यात्। इयांस्तु विशेषः—त्वया ईश्वरज्ञानस्य हेतुत्वं ज्ञानमात्रस्य तथात्वं स्वीक्रियत इति। गगनाभावादिभिः सह विनिगमनाविरह-महागौरवमपि।

यदि च विषयतासम्बन्धेनैव नित्यज्ञानस्य प्रत्यक्षमात्रं प्रति हेतुत्वमुच्यते, सम्बन्धेन ईश्वरज्ञानाभावाऽप्रसिद्धिश्चाकिंचित्करी, केवलान्वयग्रहेणापि कारणतानिश्चियसंभवादिति विभाव्यते, तदापि पित्तादिदोषवतः पुरुषस्य शङ्खे सन्निकर्षविरहकालेऽपि पीतत्वज्ञानाद् पीतत्वेन शङ्खप्रत्यक्षं स्यात्। नियतदोष-वर्त्तमानत्वाद्। शङ्खस्य विशेष्यताप्रयोजकेश्वरज्ञानसद्भावात्। न हि तादृशं कस्यचिदप्यभिमतमिति।

यत्तु कालिकेन घटत्वप्रकारकप्रत्यक्षोत्तरं समवायेन घटत्वप्रकारकप्रत्यक्षापत्ति-बीजमिति। तच्चिन्त्यम्। आत्मनिष्ठप्रत्यासत्त्या तत्सम्बन्धावच्छिन्नतत्प्रकारक-त्वावच्छिन्नं प्रति तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेन हेतुत्वान्तरकल्प-तद्वारणात्। लाघवादुक्तकार्यकारणभावसिद्धौ सत्यामनुमित्युत्तरं सम्बन्धान्तरेण प्रत्यपि प्रतिबन्धकविशेषस्य कल्पनायाः संभवाच्च। फलमुखगौरवस्याकिंचित्करत्वात्।

सामान्यं=घटत्वादिकम्। तज्ज्ञानं=सामान्यज्ञानम्। एतस्याः=सा-लक्षणायाः। **कार्यकारणभावभेदादेवेति**। घटत्वादिज्ञानस्य सामान्यलक्ष-ज्ञानलक्षणात्वं च वर्त्तते। यदा तत् घटत्वाश्रयज्ञानजनकं तदा सामान्यलक्षणा घटत्वस्यैवोपनायकं तदा ज्ञानलक्षणा।

दीधितौ धर्मेत्यादि। **धर्मविषयकं**=घटत्वादिविषयकम्। **धर्मिणां**=घटा-प्रत्यासत्तिः=प्रत्यक्षजनिका। **इतरा**=ज्ञानलक्षणा। **यद्विषयकं**=घटत्वादि-यद्विषयकम्। **तस्या**=घटत्वादेः। **प्रत्यासत्तिः**=प्रत्यक्षजनिका। **सुरभिचन्दन**-

## ❀ जागदीशी ❀

ज्ञानलक्षणाया अतिरिक्तप्रत्यासत्तित्वस्वीकारादेवेत्यर्थः । अन्यथा यत्र सौरभत्वजात्युपस्थित्यनन्तरं 'सुरभि गन्ध' इतिवत् 'सुरभि चन्दन' मित्याकारकं सौरभत्वप्रकारेण चन्दनस्य भ्रमात्मकं चाक्षुषं, तत्र सौरभत्वजातेर्भानं न स्यात् । न हि तत्र सुरभिगन्धस्य भानसंभवो येन सामान्यलक्षणायास्तद्धर्मप्रकारकतदाश्रयप्रत्यक्षं प्रत्येव हेतुतया सौरभत्वप्रत्यासत्तेः कार्यतावच्छेदकतयैव सौरभत्वजातेर्भानं भविष्यतीति संभावनीयम् ।

## ❀ काशिकानन्दी ❀

इदं भ्रमात्मकज्ञानम् । सुरभिपदं सौरभविशिष्टपरं नात्र । किन्तु सौरभत्वविशिष्टपरम् । यथा सुरभिरयं गन्ध इति । एवं च सौरभं चन्दनमिति शब्दार्थः । स्पष्टीभविष्यतीदं टीकायाम् ।

अन्यथा = ज्ञानलक्षणायाः प्रत्यासत्तित्वाऽस्वीकारे । सौरभत्वजात्युपस्थित्यनन्तरमिति । उद्बोधकवशादित्यादिः । अस्य सुरभिचन्दनमित्याकारकमित्यनेन सम्बन्धः । दीधितौ सुरभिपदं सौरभार्थकं, सौरभार्थेऽपि सुरभिपदस्य भूरिशः प्रयोगदर्शनादिति निदर्शयितुमाह—सुरभि गन्ध इतिवदिति । इतिवत् = इत्याकारकप्रत्यक्षवत् ।

केचित्तु—सौरभत्वजात्युपस्थित्यनन्तरमित्यस्य सुरभिगन्धइतिवदित्यत्र सुरभि चन्दनमित्याकारकमित्यत्र चोभयत्रैव संबन्धमभिधाय सुरभिर्गन्ध इतिवदित्यस्य सुरभिर्गन्ध इत्याकारकमानसप्रत्यक्षवदित्यर्थं व्याकुर्वते । तदायासमात्रम् ।

तत्र = तादृशभ्रमत्वेनाभिमते । भानं न स्यादिति । सुरभिचन्दनमित्याकारकभ्रम एव नोपपद्येतेति भावः । ननु सौरभत्वजात्युपस्थित्यनन्तरं सौरभत्वेन निखिलसौरभावगाह्येव प्रत्यक्षं संभवतीति न सुरभि चन्दनमित्याकारकप्रत्यक्षानुपपत्तिः । न वा तत्र सौरभत्वभानानुपपत्तिश्चेत्याशङ्क्याह—न हीति । तत्र = सुरभि चन्दनमित्याकारकप्रत्यक्षे । येनेति । अस्य संभावनीयमित्यनेनान्वयः । प्रत्येवेति । एवकारो भिन्नक्रमः । सामान्यलक्षणाया इत्यस्यानन्तरं योज्यः । सामान्यलक्षणाया एव तद्धर्मप्रकारकतदाश्रयप्रत्यक्षं प्रति हेतुतया तद्धर्मभानार्थं न ज्ञानलक्षणाया आवश्यकत्वमिति योजनालभ्यार्थः । यद्वा यथाश्रुतस्थान एव एवकारः । तद्धर्मप्रकारकतदाश्रयप्रत्यक्षं प्रत्येव हेतुतया तद्धर्मप्रकारकप्रत्यक्षं प्रति कारणत्वमस्तीति किं वक्तव्यं, सुतरामेव तदिति तद्भावः । ननु तद्धर्मप्रकारकतदाश्रयप्रत्यक्षं प्रति सामान्यलक्षणायाः कारणत्वमात्रेण सौरभत्वस्य तत्र कथं भानसंभव इत्याकाङ्क्षां पूरयति—सौरभत्वप्रत्यासत्तेः कार्यतावच्छेदकतयैवेति । सौरभत्वसामान्यलक्षणाप्रत्यासत्तिनिरूपितायाः कार्यताया अवच्छेदकतयैवेत्यर्थः । तद्धर्मप्रकारकत्वस्यापि कार्यतावच्छेदकान्तःपातित्वादिति भावः । संभावनीयं = संभावयितुं शक्यम् । यदि हि 'सुरभि चन्दन' मित्याकारकप्रत्यक्षे सुरभिगन्धभानं संभाव्येत तदा तद्भानस्य सामान्यलक्षणयैव संभवेन सामान्यलक्षणाकार्यतावच्छेदकतयैव सौरभत्वभानमपि तत्र

## ❁ जागदीशी ❁

चक्षुषो बहिरिन्द्रियत्वेन स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियम पूर्वानुपस्थितस्य सुरभिगन्धस्य तत्र भानासंभवेनोक्त

## ❁ काशिकानन्दी ❁

संभाव्येत । नत्त्वेवमित्याशयः । अत्र सर्वत्र एवकारो नावधारणार्थः । किन्तु इतरे द्योतकः । यथा देवदत्त एव गामानेष्यति किमर्थं भवान् कष्टमुद्वहतीति ।

"न हि तत्र सुरभिगन्धस्य भानसंभवः" इति प्रतिज्ञायां हेतुमाह – चक्षुष सौरभत्वसामान्यलक्षणया सौरभाणां भानस्वीकारे 'सौरभाणि चन्दनं चे' त्याक ज्ञानस्यापत्तेः । तत्र च सौरभस्य मुख्यविशेष्यतया चक्षुषः स्वायोग्यमुख्यविशेष्य जनकत्वापत्तिः स्यात् । न हि बहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानज स्वीक्रियत इति न तथाविधज्ञानस्वीकारसंभव इति भावः । नियमादिति । द क्षणम् । सौरभमुख्यविशेष्यकज्ञानाङ्गीकारेऽपि चन्दनांशे सौरभत्वाऽभानेन चन्द विशेष्यतानिरूपितसौरभत्वनिष्ठप्रकारताप्रयोजकतयापि ज्ञानलक्षणासिद्धेः । चन्दनमित्याकारकसमूहालम्बनानात्मकज्ञानानुपपत्तेश्च । यद्वा अग्रे अस्माभिः स्फु ष्यमाणसमाधिरिहाप्यनुसन्धेयः ।

ननु मा भवतु चक्षुरादीनां स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियमेन सौरभ विशेष्यकं तादृशज्ञानम् । तथापि स्वायोग्यगौणविशेष्यकज्ञानजनकत्वे बाधकाभावेन सौरभत्वज्ञाने सति सौरभत्वेन रूपेणोपस्थितानां प्रकारतयैव चन्दनांशे भानं स न चालौकिकमुख्यविशेष्यत्वस्य सामान्यलक्षणाकार्यतावच्छेदकतया कथं प्रक सौरभभानमिति वाच्यम् । नव्यमते अलौकिकमुख्यविशेष्यत्वस्य कार्यतावच्छेदकस विरहात् । स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यत्वस्यैव संसर्गत्वात् । न च त सामान्यलक्षणाया मुख्यविशेष्यताप्रयोजकत्वात् प्रकारत्वं न युक्तमिति वाच्यम् । मु विशेष्यतायाः प्रकारतायाश्च प्रयोजकसमवधाने प्रकारतायाः प्रयोज्यमानतास्वीकार गामानयेत्यादौ गवादिपदानां गवादिमुख्यविशेष्यताप्रयोजकत्वेऽपि आकाङ्क्षादिरूपप्रका प्रयोजकसमवधाने प्रकारताया एव दर्शनात् । न च सुरभिचन्दनमित्यत्र प्रकारताप्रयो विरहः शङ्क्यः । असंसर्गाग्रहस्यैव तथात्वात् । न च सौरभचाक्षुषप्रयोजक सन्निकर्षादिविरहादेव न सौरभभानं तद्धर्मवत्त्वबोधसामग्र्यन्तरस्यापेक्षितत्वा वाच्यम् । लौकिकचाक्षुषं प्रत्येव चक्षुःसन्निकर्षादेरपेक्षितत्वात् । अन्यथा ज्ञानल भ्युपगमेऽपि सौरभप्रकारकचाक्षुषानुत्पादप्रसङ्गात् । अधिकस्य प्रागेवावेदितत्वात् । च सौरभत्वजात्युपस्थित्यनन्तरं सौरभत्वेनोपस्थितानां सौरभाणां चन्दनांशे प्रका भानसंभवेन न किंचिदनुपपन्नं, सामान्यलक्षणाकार्यतावच्छेदकतयैव सौरभत्वजाते भानसंभवादित्याशङ्क्याह—पूर्वानुपस्थितस्येति । तत्प्रकारकप्रत्यक्षादिकं प्रति विशे भूततद्विषयकज्ञानत्वेन हेतुतया 'सरभि चन्दन' मित्याकारक प्रत्यक्षस्य सौरभप्रका त्वाभ्युपगमो न संभवति । पूर्वं सौरभोपस्थितिविरहात् । सौरभस्य च चन्दनांशे विशे

## ❀ काशिकानन्दी ❀

त्वात्। न च सौरभत्वेन रूपेण निखिलसौरभोपस्थितेस्तत्र सत्त्वेन पूर्वं कथं न तद्विषयकज्ञानमित्युच्यत इति वाच्यम्। सौरभत्वजात्युपस्थित्युत्तरक्षणमेव सुरभि चन्दनमिति चाक्षुषस्योत्पद्यमानतया प्रथमक्षणे विशेषणीभूतसौरभोपस्थितिविरहात्। तदानीं सौरभत्वजातिमात्रस्योपस्थितत्वात्। न च सौरभत्वजात्युपस्थित्यनन्तरं सौरभत्वेन सौरभाणामुपस्थितिर्भवतु तृतीयक्षणे चैव सुरभि चन्दनमित्याकारकसौरभविशिष्टज्ञानं, तथा च द्वितीयक्षणे विशेषणीभूतसौरभज्ञानं सुघटमिति वाच्यम्। द्वितीयक्षणे सौरभत्वेन सौरभाणामुपस्थित्यङ्गीकारे बहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानाऽजनकत्वनियमभङ्गप्रसङ्गस्योक्तेः। तादृशनियमरक्षार्थमेव सौरभस्य प्रकारतयैव भानप्रतिपादनपरिश्रमोद्वहनात्।

ननु सौरभत्वजात्युपस्थित्यनन्तरं निखिलसौरभविषयकमानसप्रत्यक्षमेव द्वितीयक्षणे संभवति। न हि तत्र घ्राणेन्द्रियसन्निकर्षादिकमपेक्षितं, न वा तादृशप्रत्यक्षाभ्युपमेऽपि बहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वभङ्गः। तथा च तदुत्तरं सौरभसामान्यलक्षणया चन्दनांशे सौरभभानमपि सुघटम्। ज्ञानस्य तदिन्द्रियजन्यत्वादिविवक्षाविरहेण सौरभमानसोत्तरमपि चन्दनचक्षुःसंयोगवशेन सौरभवतश्चाक्षुषसंभवात्। एवं च नहि तत्र सुरभिगन्धस्य भानसंभव इति जगदीशग्रन्थोऽसंगत एव। असंगतश्चैव सुरभिगन्धस्य चन्दनांशे भानासंभवकथनम्। न च सामान्यलक्षणया सौरभवतो मानस्वीकारे सौरभवन्तीत्याकारकता ज्ञानस्य स्यात् न तु सुरभि चन्दनमित्याकारकतेति वाच्यम्। तादृशशब्दप्रयोगाभावस्याकिंचित्करत्वात्। सुरभि चन्दनमित्याकारकप्रत्यक्षस्य सौरभवतामवगाहित्वे क्षतिविरहात्। अन्यथा सौरभस्मरणोत्तरजायमानसुरभिचन्दनमित्याकारकप्रत्यक्षानुपपत्तेरपि संभवेन सौरभत्वपर्यन्तगमनस्य भ्रमपर्यन्तगमनस्य चायुक्ततापातादिति चेत्?

न, सौरभत्वजात्युपस्थित्यव्यवहितोत्तरजायमान 'सुरभिचन्दनमि'त्याकारकचाक्षुषे एव सौरभत्वजातिभानानुपपत्तेरभिधानात्। न च सौरभत्वस्मरणोत्तरं सौरभत्वेन सौरभाणां मानसात्मकमेव चन्दनांशे सौरभत्वचाक्षुषं सुरभिचन्दनमित्याकारकं भवतु, तथा च न तत्र सौरभत्वभानानुपपत्तिरिति वाच्यम्। योग्यविभुविशेषगुणयौगपद्याभावेन मानसचाक्षुषयोर्युगपदुदयासंभवात्, चाक्षुषे मानसत्वानुपगमाच्च।

ननु सौरभत्वजात्युपस्थित्यव्यवहितोत्तरक्षणे सुरभि चन्दनमित्याकारकचाक्षुषं नोत्पद्यते। किन्तु निखिलसौरभमानसोत्तरं तृतीयक्षणे एव तदुत्पद्यत इति न किंचिदनुपपन्नम्। क्षणानामतिसूक्ष्मत्वेन द्वितीयक्षणे एव सुरभि चन्दनमित्याकारकं चाक्षुषं जातमिति निर्णेतुमशक्यत्वादिति चेद्?

न, सौरभत्वजात्युपस्थित्यनन्तरं चन्दनांशे सौरभत्वभ्रमस्याप्यानुभविकतया तदनुरोधेनैव ज्ञानलक्षणायाः सिद्धेः। एतदेव ध्वनयन् वक्ष्यति भ्रमान्तरस्य परिग्रह इति। न चैवं सति चन्दनादौ सौरभत्वभ्रमानुरोधेन ज्ञानलक्षणासिद्धिरित्येतावतैवोपपत्तौ चन्दने

**❀ जागदीशी ❀**

तद्गतजातेरपि तत्र भानाऽसंभवादिति भावः। इत्यादाविति। आदि-
भ्रमान्तरस्य तदनुव्यवसायस्य च परिग्रहः।

**❀ काशिकानन्दी ❀**

पूर्वानुपस्थितसुरभिगन्धभानाऽसंभवकथनादिकमयुक्तमनुपयुक्तत्वादिति वाच्यम्। ज्ञानलक्षणां विना यदि सौरभत्वेन सौरभस्य चन्दनांशे भानं तादृशप्रत्यक्षे संभवति सौरभत्वस्यापि दोषवशाच्चन्दनांशे भानं भविष्यति। न हि तदर्थं ज्ञानलक्षण- प्रत्यासत्तित्वमावश्यकम्। सामान्यलक्षणाकार्यतावच्छेदकतया उपस्थितसौरभत्वविषय- चक्षुःसन्निकर्षप्रयोज्यचन्दनविषयतायाश्च निरूप्यनिरूपकभावापादने दोषस्य प्रयोज- दिति न भ्रममात्रानुरोधेन ज्ञानलक्षणासिद्धिसंभवः किन्तु यत्र सौरभभानं नास्ति त- स्थलीयसुरभिचन्दनमिति प्रत्यक्षानुरोधेनैवेत्याशयेन जगदीशेन तथाभिधानात्। सौर- दिना सौरभादीनां मानसं न भवतीत्याशयेन वेदम्।

तद्गतजातेः=गौरभगतजातेः। तत्र=सुरभिचन्दनमित्याकारकप्रत्यक्षे। सौ- जात्युपस्थित्युत्तरं सौरभत्वेन सौरभमानसं तदुत्तरं सौरभसामान्यलक्षणया चन्द- सन्निकर्षसहकारेण सौरभवतां प्रत्यक्षं दोषवशाच्च सौरभत्वस्य चन्दनांशे भानमिति ज्ञानलक्षणाया उपयोगः। सौरभत्वावच्छिन्नप्रकारताकप्रत्यक्षत्वस्यैव सामान्यलक्षणा- तावच्छेदकतया सौरभत्वविषयताया अपि तथात्वादिति यदि कश्चिद् ब्रूयात्तदाह—आ- पदेनेति। भ्रमान्तरस्य='असुरभिचन्दनमि' त्याद्याकारकासौरभादिप्रकारकभ्र- असुरभिद्रव्येण सन्निकर्षाभावान्न सामान्यलक्षणया निर्वाहः। न केवलं भ्रमानु- रोधेनैव ज्ञानलक्षणासिद्धिः। किन्तु भ्रमविषयप्रमात्मकज्ञानस्थलानुरोधेनापीत्या- तदनुव्यवसायस्येति। सौरभत्वेन चन्दनमहं जानामीत्याद्याकारकानुव्यवसायस्येत्यर्थ-

अथ 'सुरभि चन्दनमहं पश्यामि' सौरभत्वेन 'चन्दनमहं जानामी'त्यादौ इ- 'प्रकारितासम्बन्धेन सौरभत्वस्य विशेष्यितासम्बन्धेन चन्दनस्य च भानम्। तत्र प्रका- रितासम्बन्धेन सौरभत्वप्रकारकतदाश्रयप्रत्यक्षं प्रति सौरभत्वसामान्यलक्षणायाः, विशे- सम्बन्धेन चन्दनप्रकारकतदाश्रयप्रत्यक्षं प्रति चन्दनसामान्यलक्षणायाश्च कार- सामान्यलक्षणाकार्यतावच्छेदकतयैव सौरभत्वचन्दनयोर्भानसंभवात्तद्भानार्थं ज्ञानल- नापेक्षिता। न च ज्ञानलक्षणाया अपि तद्भासकत्वसंभवेन विनिगमनाविरहेण लक्षणाकार्यतयापि तद्भानसंभव इति वाच्यम्। ज्ञानलक्षणाया अद्याप्यसिद्धेः, लक्षणासाधनार्थमेव अत एवेत्यादिना युक्तेरभिधानात्, तत्रैव च इत्यादाविति- ग्राह्यतया तदनुव्यवसायपरिग्रहस्य जगदीशेनोक्तेः। न च सुरभिचन्दनमित्यत्र सौरभत्व- प्रयोजकतया ज्ञानलक्षणासिद्धौ तदनुव्यवसायेऽपि सौरभत्वभानप्रयोजकत्वं ज्ञानलक्ष- संभवतीत्यभिप्रायेणायं जगदीशग्रन्थ इति वाच्यम्। एवं सति सुरभिचन्दनमि- कारकसौरभप्रकारकचन्दनविशेष्यकप्रमाविषयकानुव्यवसायानुरोधेनापि ज्ञानलक्ष-

## ❀ काशिकानन्दी ❀

उपपादनसंभवे "भ्रमान्तरस्य तदनुव्यवसायस्य च परिग्रहः" इत्येवंपरिगणनासंगते- दुर्वारत्वात् । उपलक्षणविधया व्याख्यानस्य चात्यन्तोदक्षरत्वात् ।

ननु प्रकारित्वसम्बन्धेन सौरभत्वप्रकारकप्रत्यक्षं प्रति सौरभत्वसामान्यलक्षणायाः कारणत्वं न संभवति । तथा सति सौरभत्वप्रकारेण निखिलसौरभज्ञानानामुपस्थितौ सुरभि चन्दनं पश्यामि सौरभत्वज्ञानानीत्याकारकतानुव्यवसायस्य स्यात् । न चेष्टापत्तिः । सर्वदा तथाविधानुभवे मानाभावात् । न च सौरभत्वेनोपस्थितानां ज्ञानानामात्मांशे प्रकारतया भानान्न दोष इति वाच्यम् । निखिलज्ञानानां स्वात्मनि विरहेण तादृशप्रत्ययस्य भ्रमत्वा- पत्तेः । दोषविशेषाभावस्थले तस्याप्यसंभवाच्च । किं च समवायसम्बन्धावच्छिन्नसौर- भत्वप्रकारकप्रत्यक्षोत्तरं प्रकारित्वसम्बन्धावच्छिन्नसौरभत्वप्रकारकज्ञानमसंभवि । तत्सम्बन्धा- वच्छिन्नतत्प्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेनैव कारणत्वात् । न च ज्ञानलक्षणायाः सौरभत्वभानप्रयोजकत्वाभ्युपगमेऽपि उक्तकार्यकारणभावव्यभिचारो दुर्वार इति वाच्यम् । तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्न तद्विषयकज्ञानत्वेन कारणत्वामित्यत्र सामान्यलक्षणाप्रयोज्यविशेष्यतायाः एव कार्यतावच्छे- दकसंसर्गत्वोक्त्याऽदोषात् । एवं चात्र सौरभत्वनिष्ठप्रकारतायाः सामान्यलक्षणाप्रयोज्यत्वाऽ- संभवेन ज्ञानलक्षणाप्रयोज्यत्वमेवागत्या स्वीकार्यमिति निरुक्तानुव्यवसायानुरोधेनापि ज्ञान- लक्षणासिद्धिरिति चेद् ?

न, एवं हि सति घटमहं जानामीत्याद्याकारकप्रमाविषयकानुव्यवसायेनापि ज्ञान- लक्षणासिद्धिसंभवे तदनुव्यवसायेत्यत्र सौरभत्वादिप्रकारकचन्दनादिविशेष्यकभ्रमार्थकतत्प- दोपादानासंगतेर्दुर्वारत्वाद् ।

यदि च घटत्वप्रकारकघटविशेष्यकज्ञानोत्तरमेव नानुव्यवसायः, अपि तु तृतीयक्षणे एव घटमहं जानामीत्याकारकः सः, तत्र च द्वितीयक्षणे एव प्रकारितासम्बन्धेन घटादि- विशिष्टानां निखिलज्ञानानां प्रत्यये सति तृतीयक्षणेऽबाधितमात्रस्य ज्ञानस्य स्वात्मांशे प्रकारतया भानम्, इतरेषां भानप्रयोजकीभूतदोषविरहान्न भानम्, घटत्वादिप्रकारक- यत्किंचिज्ज्ञानविषयकज्ञानोत्तरजायमानप्रत्यक्षस्य तु घटमहं जानामि घटज्ञानानि चेत्या- कारकतास्वीकारेऽपि क्षतिविरहः, तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धा- नवच्छिन्नतद्विषयकज्ञानत्वेन कारणत्वमित्यत्र तत्सम्बन्धपदेन विषयितान्यसम्बन्ध एव गृह्यते, सम्बन्धानां विशिष्य प्रवेशेन तदन्येषामेव ग्रहणेऽपि दोषाभावादिति विभाव्यते, तदा सौरभत्वेनचन्दनमहंजानामीत्यत्रापि तुल्यमिति कथमत्र संगतिसंभव इति चेद् ?

मैवम्, सौरभत्वेन चन्दनमहं जानामीत्यादौ हि सौरभत्वादौ प्रकारताद्वयम् । एका प्रकारित्वसम्बन्धावच्छिन्ना ज्ञाननिष्ठविशेष्यतानिरूपिता । इतरा समवायसम्बन्धावच्छिन्ना चन्दननिष्ठविशेष्यतानिरूपिता । तत्र प्रथमायाः सामान्यलक्षणाप्रयोज्यत्वसंभवेऽपि द्वितीयस्याः न तथात्वसंभवः । तत्सम्बन्धावच्छिन्नतत्प्रकारकतदाश्रयप्रत्यक्षं प्रत्येव सामान्य- लक्षणायाः कारणतया समवायसम्बन्धावच्छिन्नसौरभत्वनिष्ठप्रकारतानिरूपितचन्दननिष्ठ-

## ❀ काशिकानन्दी ❀

विशेष्यताकप्रत्यक्षत्वस्य तत्कार्यतावच्छेदकत्वानाक्रान्तत्वात् । चन्दनस्य समवायेन भत्त्वाश्रयताविरहात् । एवं च ज्ञानलक्षणाया एव चन्दननिष्ठविशेष्यतानिरूपित भत्त्वनिष्ठप्रकारताप्रयोजकत्वं स्वीकार्यमिति तदनुरोधेनापि ज्ञानलक्षणासिद्धिसंभवः ।

ननु सुरभिचन्दनमहं पश्यामीत्याद्याकारकानुव्यवसाये सौरभत्वेन निखिलसौर मपि भानं भवतु । न ह्यत्र प्रागुक्तस्वायोग्यमुखविशेष्यकज्ञानाऽजनकत्वनियम दोषः । मनसो बहिरिन्द्रियत्वविरहात् । चन्दनांशे प्रकारतैव सौरभांशेऽपि प्रका दोषः । घटत्वेन घटपटोभयप्रत्यक्षे घटत्वे घटनिष्ठविशेष्यतानिरूपितायाः पटनिष्ठविशे निरूपितायाश्चैकस्या एव प्रकारतायाः स्वीकारो यथा तद्वदत्रापि संभवादिति चेद् ?

न, सौरभत्वेन चन्दनमहं जानामीत्याकारकानुव्यवसायानुरोधेनैव ज्ञानलक्षणासि भवात् । न हि तत्र सुरभिगन्धस्य भानमिति ।

नन्वत्र चन्दननिष्ठविशेष्यताप्रयोजकं किमिति । न चासंसर्गाग्रह एवेति वा नेदं सौरभमित्याकारकबाधोत्तरमपि सौरभत्वेन चन्दनमहमवेदिषमित्यनुव्यवसायात् । ताद्दशज्ञानं स्मरणात्मकमेवेति वाच्यम् । आत्मनस्तत्र प्रत्यक्षत्वात् । न च चन्दनज्ञा तद्विशेष्यताप्रयोजकमिति वाच्यम् । एवं सति विशेष्यताप्रयोकतया विशेष्यज्ञानस्य प्र सत्यन्तरतापत्तेः । सामान्यलक्षणाप्रयोज्यत्वं तु न संभवति चन्दनस्य सौरभत्वाभ त्वात् । न च नेदं सौरभमिति बाधोत्तरजायमानं सौरभत्वेन चन्दनमहमवेदिषमिति ज्ञानमाहार्यमेव संभवति, तत्र च चन्दननिष्ठविशेष्यताप्रयोजकत्वमिच्छाया एवेति वा तथा सति इच्छाया एव प्रत्यासत्यन्तरताया दुरपह्नवत्वात् । इन्द्रियाऽप्रतियो तत्त्वाभावस्तु ज्ञानेऽपि इति ज्ञानस्यापि प्रत्यासत्तित्वं न स्यादिति चेत् ?

सत्यम् । विशेष्यज्ञानस्य विशेष्यताप्रयोजकत्वेन प्रत्यासत्तित्वेऽपि यद्विषयकज्ञानं तस्येत्युक्तेर्ज्ञानलक्षणैव सा । किं च सौरभत्वेन चन्दनमहं जानामी चन्दनत्वसामान्यलक्षणयैव चन्दनभानसंभवः । सौरभत्वेनामुं जानामीत्यत्रापि सामान्यलक्षणा । यत्र सौरभमहं जानामीत्याकारकं तत्राऽसंसर्गाग्रह एव च ष्यताप्रयोजक इति ।

वस्तुतस्तु प्रत्यक्षीयविषयताप्रयोजकत्वमात्रेण न सन्निकर्षत्वम् । किन्तु तद्वि प्रत्यक्षप्रयोजकत्वेनैव । तथा च न चन्दननिष्ठविशेष्यताप्रयोजकतया प्रत्यास तापत्तिः । सौरभत्वेन चन्दनमहं जानामीत्यादौ विशेष्यित्वसम्बन्धावच्छिन्नप्रका अपि तत्र सत्त्वेन ज्ञानलक्षणयैव चन्दनभानसंभवात् । न च चन्दननिष्ठविशेष्यताप्र चन्दनविषयकज्ञानस्यापि चन्दनप्रत्यक्षप्रयोजकतया तस्य प्रत्यासत्तित्वं स्यादेवेति वा सन्निकर्षान्तरप्रयोज्यप्रत्यक्षप्रयोजकतया प्रत्यक्षासाधारणकारणत्वविरहेणैव तस्य प्र सत्तित्वाभावात् । न चैवं सौरभत्वेन चन्दनमहं जानामीत्यादौ प्रकारिताव सौरभत्वस्य ज्ञाने भानात् सामान्यलक्षणयैव तद्भानसंभवात्तदनुरोधेन ज्ञानलक्ष सिद्धिसंभव इति वाच्यम् । यतः सामान्यलक्षणया सौरभत्वभानं तत्र न सं

## ❀ काशिकानन्दी ❀

तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेनैव हेतुत्वात् । न चैवं ज्ञानलक्षणयाऽपि सौरभत्वभानं ज्ञाने न स्यादुक्तकार्यकारणभावव्यभिचारप्रसङ्गादिति वाच्यम् । सौरभत्वेन चन्दनमहं जानामीत्यनुव्यवसायानुरोधेन सामान्यलक्षणाप्रयोज्यविशेष्यताक तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रत्यक्षं प्रत्येव तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेन हेतुत्वात् । अलौकिकविशेष्यत्वस्य कार्यतावच्छेदकसंसर्गत्वमिति यावत् । तेन सामान्यलक्षणाकार्यतावच्छेदकसंसर्गतावच्छेदकतायाः सामान्यलक्षणाप्रयोज्यत्वेऽसंभवेऽपि न क्षतिः । ज्ञाननिष्ठविशेष्यता नालौकिकी । ज्ञानस्य मनसा सन्निकृष्टत्वात् । एवं च प्रकारित्वसम्बन्धावच्छिन्नसौरभत्वनिष्ठप्रकारताप्रयोजकतयैव ज्ञानलक्षणासिद्धिः । न चैवं घटत्वेन घटमहं जानामीत्यनुव्यवसायानुरोधेनापि ज्ञानलक्षणायाः सिद्धिः संभवति, घटत्वादिनिष्ठप्रकारतानिरूपितज्ञाननिष्ठविशेष्यताया अलौकिकत्वविरहेण समवायेतरप्रकारित्वसम्बन्धावच्छिन्नप्रकारताकलौकिकविशेष्यताकतत्प्रत्यक्षत्वस्य सामान्यलक्षणाकार्यतावच्छेदकत्वासंभवादिति वाच्यम् । प्रकारित्वसम्बन्धावच्छिन्नघटत्वप्रकारतानिरूपितविशेष्यताकप्रत्यक्षत्वस्य सामान्यलक्षणाकार्यतावच्छेदकत्वाऽसंभवेऽपि समवायसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताकप्रत्यक्षत्वस्य सामान्यलक्षणाकार्यतावच्छेदकत्वसंभवेन घटत्वप्रकारतायाः सामान्यलक्षणाप्रयोज्यत्वसिद्धेर्ज्ञानलक्षणायास्तत्रानुपयोगात् । घटे घटत्वस्य घटनिष्ठविशेष्यतानिरूपितप्रकारताया घटत्वे च सत्त्वात् । न चैवं सौरभत्वेन चन्दनमहं पश्यामीत्यत्र । चन्दने सौरभत्वविरहेण सामान्यलक्षणाकार्यतावच्छेदकताया सौरभत्वनिष्ठप्रकारतायां विरहात् । तत्प्रकारकतदाश्रयप्रत्यक्षे एव तज्ज्ञानस्य हेतुत्वात् । न च घटत्वेन निखिलघटमुख्यविशेष्यकमानसं न भवत्येवेति प्रमाविषयकानुव्यवसायानुरोधेनापि ज्ञानलक्षणासिद्धिः संभवति घटत्वभासकसामान्यलक्षणाविरहादिति वाच्यम् । एवमपि विषयतासम्बन्धेन घटत्वावच्छिन्नवतां भासकस्य घटत्वावच्छिन्नज्ञानस्यैव घटत्वविषयताप्रयोजकत्वसंभवात् । तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतद्धर्मावच्छिन्नज्ञानस्य स्वविषयतद्धर्मावच्छिन्नवन्निष्ठविषयतया हेतुत्वाद् । एवं च घटत्वप्रत्यक्षाऽसाधारणकारणत्वविरहेण सन्निकर्षान्तरत्वं ज्ञानलक्षणाया ततः ऐदूषुमर्हति ।

एतेन निर्वह्निः पर्वतो वह्निमान् निर्वह्निर्वह्निमानित्यादिमानसाहार्यप्रत्यक्षानुरोधेन इच्छायाः प्रत्यासत्यन्तरत्वं स्यात् । निर्वह्नित्वनिष्ठप्रकारतानिरूपितपर्वतनिष्ठविशेष्यताप्रयोजकत्वस्येच्छायामेव सत्त्वादिति निरस्तम् । पर्वतत्वसामान्यलक्षणया वह्निसामान्यलक्षणया चैव पर्वतभानसंभवेन पर्वतप्रत्यक्षासाधारणकारणताया इच्छायाममावात् । एवं संसर्गाग्रहस्यापि न प्रत्यासत्तितापत्तिः ।

केचित्तु उपनीतं विशेषणतयैव भासत इति नियमानुरोधेन ज्ञानप्रत्यासत्त्यैव बहिरिन्द्रियस्य स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियमात् सौरभत्वसामान्यलक्षणया सौरभत्वे बाधकाभावात् सौरभत्वेन चन्दनभ्रमानुरोधेन न ज्ञानलक्षणासिद्धिसंभवः । अत

❀ जागदीशी ❀

यत्तु ज्ञानस्य तदिन्द्रियजन्यत्वं नियामकमिति पूर्वमतेनायं ग्रन्थः च सौरभत्वेन सौरभस्मृत्यनन्तरं जायमानायां सुरभिचन्दनमित्याका चाक्षुषप्रमायां सामान्यप्रत्यासत्त्या न सौरभत्वस्य भानसंभवः, कारणं सौरभत्वचाक्षुषस्याभावात् अतो ज्ञानलक्षणा पृथक् प्रत्यासत्तिरिति मतम्

❀ काशिकानन्दी ❀

एव संयोगादिद्वारा चक्षुरादिकमेव यथा घटादिग्राहकं तद्वत् सामान्यलक्षणाप्रत्यासत्त्या चक्षुरादिकमेव चक्षुराद्यसंयुक्तघटादीनामपि ग्राहकमिति मन्वाना मिश्रा अपि सामान्यलक्षणात्मकसन्निकर्षेण चक्षुःसन्निकृष्टस्य वेदार्थस्य चक्षुर्जन्यज्ञाना अपूर्वत्वविरहेण वेदलक्षणाऽसंभवं परिहृश्य तत्परिजिहीर्षया वेदलक्षणे विशे प्रचिक्षिपुरिति वदन्ति।

तन्मन्दम्, बहिरिन्द्रियाणां स्वायोग्यमात्रमुख्यविशेष्यकज्ञानाजनकत्व स्यैव स्वीकृततया प्रमेयत्वसामान्यलक्षणया वेदार्थचाक्षुषोपगमेऽपि उक्तनियमभङ्ग प्रमेयत्वेन रूपेण घटादीनामपि चक्षुषा ग्रहणेन तदानीं चक्षुषा स्वायोग्यमात्र विशेष्यकज्ञानाऽजननात्। अधिकं प्राग्व्याख्यातम्। एवं चेत एवोपपत्तौ ज्ञानप्रत्यासत्तिं प्रक्षिप्य सौरभत्वसामान्यलक्षणया अनुभवविरुद्धस्य सौरभाणां स्वीकारानौचित्यात्।

दीधितौ सुरभिपदं सौरभविशिष्टपरं न तु सौरभत्वविशिष्टपरं, सुरभिचन्द कारकप्रमात्मकप्रत्ययानुरोधेनापि ज्ञानलक्षणासिद्धिसंभवादित्याशयवतां केषांचिन्मत यन्त्विति। नव्यमते सौरभसामान्यलक्षणयैव सौरभत्वस्यापि भानं संभवति वच्छिन्नविषयकज्ञानत्वेन हेतुतया सौरभविषयताया इव सौरभत्वविषयताया अपि वच्छेदकत्वादत आह—पूर्वमतेनेति। तत्पुरुषीयधूमत्वादिप्रकारकचाक्षुषत्व प्रति तदीयचक्षुःसन्निकृष्टविशेष्यकतदीयधूमत्वादिप्रकारकज्ञानत्वेन हेतुत्वमित्येवं व्याख्यातमतेनेत्यर्थः। अयं ग्रन्थः=अत एवेत्यादिग्रन्थः। सुरभिचन्दनमिति सामान्ये सौरभत्वभानार्थं पूर्वमतेऽपि ज्ञानलक्षणा नापेक्षिता सुरभिचन्दनमिति चाक्षुषोत्तरजायमानसुरभिचन्दनमितिचाक्षुषे सौरभत्वस्य सामान्यलक्षणयैव भवात्। चक्षुःसम्बद्धचन्दनविशेष्यकसौरभत्वावच्छिन्नप्रकारकचाक्षुषसत्त्वादत सौरभत्वेन सौरभस्मृत्यनन्तरमिति। तथा च यत्र सौरभत्वेन सौरभस्मृति उपनीतविषयापि चाक्षुषं तत्र तदुत्तरजायमान 'सुरभिचन्दनमि'त्याकारकप्रत्यक्षे भत्वभानार्थं ज्ञानलक्षणा अङ्गीकरणीया। सौरभेण सह चक्षुर्लौकिकसन्निकर्षविरहात्प्रति भत्वविषयकचाक्षुषविरहाच्चेति। सौरभस्मरणोत्तरं सुरभिचन्दनमित्याकारक संभवादाह—चाक्षुषेति। सौरभत्वेन चन्दनभ्रमात्मकसुरभिचन्दनमित्याकारक न्तानुसरणमनावश्यकमिति ध्वनयन्नाह—प्रमेति। सामान्यप्रत्यासत्त्या=नित्या सामान्यप्रत्यासत्त्या, सौरभत्वावच्छिन्नसामान्यप्रत्यासत्त्या वा। सौरभत्वचाक्षुष अत एव सौरभत्वावच्छिन्नचाक्षुषस्याप्यभावो बोध्यः।

## ❀ जागदीशी ❀

**तत्र, ज्ञानस्य तदिन्द्रियजन्यत्वापेक्षायां सुरभिगन्धस्यापि तत्र भानासंभवेन**

## ❀ काशिकानन्दी ❀

तदिन्द्रियजन्यत्वापेक्षायां = चाक्षुषत्वाद्यपेक्षायाम्। तत्र = सुरभिचन्दनमित्याकारकप्रत्यक्षे। भानाऽसंभवेनेति। कारणीभूतस्य चन्दनविशेष्यकसौरभप्रकारकचाक्षुषस्य-विरहादिति भावः।

ननु सुरभिचन्दनमित्याकारकप्रत्यक्षे चन्दनांशेऽलौकिकमुख्यविशेष्यताविरहेण चन्दनविशेष्यकसौरभप्रकारकज्ञानस्य न कार्यतावच्छेदकाक्रान्तं तादृशप्रत्यक्षम्। प्राचीनमतेऽलौकिकमुख्यविशेष्यत्वस्यैव कार्यतावच्छेदकसम्बन्धत्वात्। एवं च ज्ञानस्य तदिन्द्रियजन्यत्वानपेक्षायामपि सौरभप्रकारकचन्दननिष्ठलौकिकविशेष्यताकतादृशप्रत्यक्षस्यानुपपत्त्या ज्ञानलक्षणास्वीकारावश्यकत्वाद् "ज्ञानस्य तदिन्द्रियजन्यत्वापेक्षाया" मित्येतत् कथनमयुक्तम्। न च तादृशप्रत्यक्षे चन्दनांशेऽपि अलौकिकविशेष्यता अस्तीति नोक्तप्रकारेण तदिन्द्रियजन्यत्वानपेक्षायां ज्ञानलक्षणासिद्धिसंभवः, एकस्मिन्नेव ज्ञाने एकत्र लौकिकालौकिकोभयविषयताया: सत्त्वे बाधकाभावात्। घटत्वादिना निखिलघटप्रत्यक्षकाले सन्निकृष्टघटे लौकिकालौकिकोभयविषयताया: स्वीकारादिति वाच्यम्। चन्दनांशेऽलौकिकविषयताया: सामान्यलक्षणामन्तरा ज्ञानलक्षणावादिनापि सम्पादयितुमशक्यतया सौरभसामान्यलक्षणाया असंभवस्य चोक्तक्रमेण दर्शिततया तथा शङ्कितुमेवाशक्यत्वादिति चेद् ?

न, यदि हि तदिन्द्रियजन्यत्वं कारणीभूतज्ञानेऽनपेक्षितं स्यात् तदा सौरभवत्त्वेन रूपेण निखिलसौरभाश्रयविषयकचाक्षुषमेव संभवतीति चन्दनांशेऽलौकिकविशेष्यत्वं स्वीकर्तुं शक्येत। एवं चालौकिकमुख्यविशेष्यतायाश्चन्दनांशे संभवेन सामान्यलक्षणाकार्यतावच्छेदकाक्रान्तत्वं तादृशप्रत्यक्षस्य स्यादिति न तद्भानार्थं ज्ञानलक्षणादरावश्यकत्वं स्यात्। ज्ञानस्य तदिन्द्रियजन्यत्वविवक्षापूर्वकं ज्ञानलक्षणाङ्गीकारे तु सुरभि चन्दनमिति प्रत्यक्षस्य चन्दनांशे लौकिकविशेष्यत्वमेव न त्वलौकिकमिति तु अन्यदेतत्। वस्तुतस्तु सामान्यलक्षणाया: प्रयोजिकाया: सद्भावे प्रयोज्यीभूता अलौकिमुख्यविशेष्यतापि चन्दने स्यादेवेति भावः।

नन्वेवमपि "ज्ञानस्य तदिन्द्रियजन्यत्वापेक्षयाम्" इति कथनमयुक्तमेव। तदनपेक्षणेऽपि यत्र सौरभत्वेन सौरभस्मरणोत्तरं सन्निकृष्टचन्दनांशे सौरभप्रकारकं 'सुरभि चन्दनम्' इत्याकारकचाक्षुषं तस्य ज्ञानलक्षणां विनानुपपत्तेः। सौरभप्रकारकप्रत्यक्षं प्रति प्राचीनमते सौरभप्रकारकज्ञानस्यैव हेतुत्वात् तस्य प्रागनुत्पन्नत्वात्। 'सौरभम्' इत्याकारकस्मरणोत्तरमेव सुरभिचन्दनमित्याकारकप्रत्यक्षस्योत्पन्नतया कारणत्वेनाभिमतस्य स्मरणस्य सौरभाऽप्रकारकत्वात्। न च ज्ञानस्य तदिन्द्रियजन्यत्वानपेक्षायां सौरभवानित्याकारकस्मरणोत्तरं सुरभि चन्दनमित्याकारकप्रत्यक्षसंभवेन ज्ञानलक्षणा सौरभासक्ततया न सिद्ध्येदिति तादृशस्थलमुपादाय "ज्ञानस्य तदिन्द्रियजन्यत्वापेक्षायाम्"

❀ जागदीशी ❀

सौरभत्वजातिपर्यन्तानुसरणस्य सन्दर्भविरोधापत्तेः ।

❀ काशिकानन्दी ❀

इत्युक्तमिति वाच्यम् । 'सौरभम्' इत्याकारकस्मरणोत्तरजायमान'सुरभिचन्दना'कारकचाक्षुषानुरोधेनैव सौरभज्ञानलक्षणासिद्धिसंभवेन सौरभवानित्याकारकज्ञा त्पद्यमानप्रत्यक्षस्थलोपादनस्यायुक्तत्वात् । एवं च "प्राचीनमताभिप्रायेण ग्रन्थोत्थाने" इत्येव जगदीशेन वक्तव्ये "ज्ञानस्य तदिन्द्रियजन्यत्वापेक्षायाम्" इति मयुक्तमेवेति चेद् ?

न, ज्ञानस्य तदिन्द्रियजन्यत्वं नियामकमिति पूर्वमतेनायं ग्रन्थः" इति पूर्वप नानुरोधेन ज्ञानस्य तदिन्द्रियजन्यत्वापेक्षाया" मिति जगदीशेनोक्तेः । तथा हि यदि तत्प्रकारकालौकिकप्रत्यक्षं प्रति तत्पुरुषीयेन्द्रियसम्बद्धतद्विषयकतदीयचाक्षुषत्वेन यकचाक्षुषत्वमात्रेण वा हेतुत्वमित्यभिप्रायेण मम ग्रन्थ इति ब्रूयात्तदा तदपेक्ष दोषदर्शनं युक्तमिति । अत एव "कारणीभूतसौरभत्वचाक्षुषस्य" इत्येवाभिहितं, सौरभत्वप्रकारकचाक्षुषस्येति पूर्वपक्षिणा । परे तु "ज्ञानस्य तदिन्द्रियजन्यत्वापेक्ष इति प्राचीनमतोपलक्षकमित्याहुः ।

विरोधापत्तेरिति । अन्यथा "अत एव सुरभिचन्दनमित्यादौ सौरभादेरपि भा इत्येव दीधितिकारो ब्रूयादिति भावः । न च जगदीशमते कथं न सन्दर्भविरोधः, अ न्तगमनस्यापि तथात्वादिति वाच्यम् । सौरभवत्त्वेन सामान्यलक्षणयैव सौरभभानसंभ प्रागेवावेदितत्वात् । ज्ञानलक्षणायां सिद्धायां तु तथापि सौरभस्य चन्दनांशे भा तु अन्यदेतत् ।

अन्येतु "सुरभि चन्दनमिति" दीधितिः सौरभप्रकारकचन्दनविशेष्यकप्र ज्ञानपरैव । सौरभस्य भानं सौरभत्वसामान्यलक्षणयैव संभवतीति सौरभत्वपर्यन्तानुस सौरभत्वभानं तु न सामान्यलक्षणया, सौरभत्वस्य, जातित्वाद्यात्मकसामान्य ज्ञानस्य सौरभत्वभासकस्य विरहात् । न च सौरभत्वसामान्यलक्षणया भानस्वीकारे तत्कार्यतावच्छेदकतयैव सौरभत्वस्यापि भानं संभवतीति न सौ भानानुरोधेनापि ज्ञानलक्षणासिद्धिसंभव इति वाच्यम् । तत्प्रकारकत्वस्य लक्षणाकार्यतानवच्छेदकत्वात् । घटत्वादिसामान्याश्रयनिष्ठविषयतासम्बन्धेन प्रत्य स्वविषयीभूतसामान्याश्रयनिष्ठविषयतासम्बन्धेन ईश्वरज्ञानसाधारणज्ञानत्वेन नैवोपपत्तेः । प्रत्यक्षे घटत्वादिप्रकारतायाश्चात्मनिष्ठप्रत्यासत्त्याऽवश्यक तत्प्रकारकप्रत्यक्षकारणीभूतद्विषयकज्ञानेनैव नियमनसंभवात् । न च सौ सामान्यलक्षणया न सौरभभानसंभवः, सौरभत्वप्रकारकचाक्षुषप्रयोजकीभूत विरहादिति वाच्यम् । यतः तद्धर्मप्रकारकचाक्षुषसामग्रीतद्धर्माश्रयप्रकारकचाक्षु ग्र्योरन्यतरस्यैव सहकारित्वमुरगम्यते । अत्र च प्रथमसामग्र्या अप्रसिद्धत्वेऽपि सामग्र्या एव सत्त्वेनाऽदोषः । सौरभप्रकारकचाक्षुषसामग्री च सौरभात्मक

❀ काशिकानन्दी ❀

ज्ञानादिघटिता । न चैवं सौरभत्त्वसामान्यलक्षणया निखिलसौरभभाने सति प्रत्यक्षस्य सुरभि चन्दनं सौरभाणि चेत्याकाकारता अनुभवविरुद्धा स्यात्, निखिलसौरभाणां चन्दनांशे भानायोगादिति वाच्यम् । निखिलसौरभप्रकारकचाक्षुषसामग्रयाः सहकारिणया विरहादेव तदापत्त्यसंभवात् । निखिलसौरभविषयकचाक्षुषसामग्री हि निखिलसौरभविषयकज्ञानघटितैव भवति । यद्विशेषणज्ञानं तस्यैव प्रकारत्वात् । निखिलसौरभविषयकज्ञानं च न वृत्तमेव प्राक् । न चैवं घटत्वेन निखिलघटविषयकप्रत्यक्षमपि न स्यात् । यत्किंचिद्घटविषयकचाक्षुषसामग्रया एव इन्द्रियसंयोगादिरूपायाः सहकारिण्याः सत्त्वादिति वाच्यम् । द्विविधसामग्रीमध्ये आद्यायास्तद्धर्मप्रकारकयत्किंचिद्विशेष्यकचाक्षुषसामाग्रया एव तद्धर्माश्रयनिखिलविशेष्यकचाक्षुषजनने सहकारित्वोपगमात् । एवमपि द्वितीयायाः तद्धर्माश्रययत्प्रकारकचाक्षुषादिसामग्र्यास्तद्धर्माश्रयनिष्ठविषयताकप्रत्यक्षजनने एव सहकारित्वमिति फलबलेन कल्पयितुं शक्यत्वात् । तथा च यत्किंचित्सौरभप्रकारकज्ञानकारणीभूतयत्किंचित्सौरभज्ञानस्यैव सत्त्वेन सामान्यलक्षणयाऽपि तन्मात्रनिष्ठविषयताकज्ञानं प्रयोज्यत इति सुरभिचन्दनमित्येतावन्मात्राकारता ज्ञानस्योपपन्ना । न च सौरभज्ञानस्य सौरभप्रकारकप्रत्यक्षकारणत्वमभ्युपगम्यते चेत् सिद्धं नः समीहितम् । लौकिकसन्निकर्षाऽप्रयोज्यतन्निष्ठप्रकारतामात्रप्रयोजकविशेषणज्ञानस्यैव ज्ञानलक्षणात्वात्, तथा च सौरभभानानुरोधेनापि ज्ञानलक्षणा सिद्धिरवारणीयेति वाच्यम् । विशेषणज्ञानं हि न प्रत्यक्षासाधारणकारणम् । किन्तु विशिष्टज्ञानमात्रकारणमिति न तस्य प्रत्यासत्तित्वम् । किं च प्रत्यासत्त्यन्तराऽप्रयोज्यविषयताप्रयोजकताया एव प्रत्यासत्तितानिर्वाहकत्वात् सौरभत्त्वसामान्यलक्षणाप्रयोज्यसौरभविषयताप्रयोजकस्य विशेषणज्ञानस्य प्रत्यासत्तित्वाऽनिर्वाहात् । अन्यथा आलोकसंयोगादीनामपि प्रत्यासत्तित्वं स्यात् । इन्द्रियाऽप्रतियोगित्वेन तेषां प्रत्यासत्तित्वाभावे तु ज्ञानस्यापि इन्द्रियाऽप्रतियोगित्वेन प्रत्यासत्तित्वं न स्यादिति वदन्ति ।

तच्चिन्त्यम्, तथाहि घटत्वाश्रयनिष्ठविषयत्वमित्यत्र घटत्वाश्रयत्वं यथाकथंचित्सम्बन्धेन यत्किंचित्सम्बन्धेन वा । आद्ये यथाकथंचित्परम्परया जगत्येव तत्सत्त्वाद् व्यतिरेकाऽप्रसिद्धिः, धनवन्त इत्यादिप्रत्यक्षानुरोधेन सम्बन्धित्वस्य प्रवेश्यत्वात् । तत्रैव घटत्वादिविशेषणमप्यनर्थकं स्यात् । जगत एव प्रत्यक्षप्रसङ्गश्च स्यात् । यत्किंचित्सम्बन्धेनोच्यते तदा समवायस्य प्रवेशे कालिकेन घटत्वाश्रयनिखिलप्रत्यक्षानिर्वाहः । समवायेन घटत्वाश्रयनिष्ठविषयतासम्बन्धेन प्रत्यक्षत्वाद्यवच्छिन्नं प्रति स्वीयघटत्वनिष्ठसमवायावच्छिन्नाधेयताकाधिकरणनिष्ठविषयतासम्बन्धेन हेतुत्वमित्युक्तावपि निखिलजगद्विषयकनिर्विकल्पकमुत्पद्येत । स्वरूपेण प्रमेयत्वाश्रयनिष्ठविषयताप्रयोजकस्य स्वरूपेण प्रमेयत्वाश्रयनिष्ठविषयताप्रयोजकस्य स्वरूपेण प्रमेयत्वाश्रयनिष्ठेश्वरज्ञानविषयतायाः सत्त्वात् । तथा च तदुत्तरं सार्वज्ञापत्तिः । एवं तत्तद्घटत्वपटत्वादिप्रत्येकधर्ममादायाप्येष एव दोषः । न च घटत्वाद्याश्रयनिष्ठविशेष्यत्वमेव कार्यतावच्छेदकसम्बन्ध इति नैतद्दोषः, विशेष्यतायाः

❀ जागदीशी ❀

अत्रेदं तत्वम्। यद्यपि घटत्वादिप्रत्यक्षे तदलौकिकप्रत्यक्षे वा न तद्गोचरज्ञानत्वेन ज्ञानलक्षणाया हेतुत्वम्। घटत्वादिनिर्विकल्पके

❀ काशिकानन्दी ❀

किंचित्प्रकारतानिरूपिततया प्रकारताप्रयोजकविरहादेव सार्वज्ञासंभवादिति वाच्यम्। यतः विशेष्यत्वस्य कार्यतावच्छेदकसंसर्गत्वमनभिधाय विषयतामात्रस्य संसर्गत्वमुक्तवतो भवतः सुरभि चन्दनमित्याकारकप्रत्यक्षे सौरभनिष्ठप्रकारताया अपि सौरभत्वसामान्यलक्षणा-प्रयोज्यतया तत्प्रयोजकतयापि ज्ञानलक्षणायाः प्रत्यासत्तित्वं मा भूदिति अभिप्रायः। संप्रति च विशेष्यतायाः सामान्यलक्षणाकार्यतावच्छेदकत्वोपगमे सौरभप्रकारताप्रयोज-तयैव ज्ञानलक्षणासिद्धिः स्यादिति सौरभत्वपर्यन्तानुधावनानर्थक्यं स्यात्। किं चोक्तरूपेण सामान्यलक्षणायाः कारणतोपगमे शङ्खेन सह सन्निकर्षविरहवतः पित्तदोषदूषितनयनस्य पीतत्वज्ञानेन पीतत्वेन शङ्खप्रत्यक्षं स्यात्। शङ्खत्वाश्रयनिष्ठविशेष्यताप्रयोजकस्य स्वीयशङ्खत्वाश्रयविषयतासम्बन्धेन ईश्वरज्ञानस्य पीतत्वज्ञानस्य दोषस्य च सत्त्वात्।

न च त्वन्मतेऽपि प्रमेयरूपस्य पीतत्वस्य च ज्ञानोत्तरं जायमानस्य प्रमेयाणि पीतं चेति प्रत्यक्षस्य पीतत्वेन शङ्खविषयकत्वं स्यादिति वाच्यम्। यतोऽस्मन्मते प्रमेयत्वसामा-न्यलक्षणायाः प्रमेयत्वप्रकारकप्रमेयविशेष्यकप्रत्यक्षं प्रत्येव कारणत्वम्। पीतत्वज्ञानं तु पीतत्वप्रकारकपीतविशेष्यकप्रत्यक्षं प्रत्येव कारणम्। न च पीतत्वेन शङ्खज्ञानस्यापि पीतत्वप्रकारकत्वं प्रमेयविशेष्यकत्वं चैवेति वाच्यम्। पीतत्वादिप्रकारतानिरूपितपीतवि-शेषष्यतायाः सामान्यलक्षणाकार्यतावच्छेदकत्वोपगमात्। एवं प्रमेयत्वादिप्रकारतानिरू-पितप्रमेयविशेष्यताया एव सामान्यलक्षणाकार्यतावच्छेदकत्वात्। न चैवमपि ज्ञानलक्षणयैव पीतत्वेन शङ्खप्रत्यक्षं तव स्यादिति वाच्यम्। ज्ञानलक्षणया कार्यजनने विशेष्यलौकिक-प्रत्यक्षसामग्र्याः सहकारित्वस्य प्रागेवावेदितत्वाच्छङ्खलौकिकसाक्षात्कारसामग्रीविरहात्। तत्सामग्रीसत्त्वे च भ्रमस्येष्टत्वादिति दिक्।

दीधितौ "यद्विषयक ज्ञानं तस्य" इत्यत्र विषयत्वं यदि षष्ठ्यर्थस्तदा अनुषङ्जनीय-प्रत्यासत्तिपदस्य प्रत्यक्षजनकत्वार्थकतया घटत्वविषयकं ज्ञानं घटत्वविषयकप्रत्यक्षजनक-मित्यर्थः पर्यवस्यति। स च पुनरयुक्तः। निर्विकल्पकादौ व्यभिचाराद्, अतः षष्ठ्याः प्रकारत्वार्थकतया तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकज्ञानस्य हेतुत्वमित्येव दीधित्यर्थः स्वीकार्य इत्याशयेनाह—अत्रेदं तत्त्वमिति। घटत्वादिप्रत्यक्ष इति। न तद्गोच-रज्ञानत्वेन ज्ञानलक्षणाया हेतुत्वमिति योजना। निर्विकल्पके व्यभिचारस्य वक्ष्यमाण-त्वादाह—तदलौकिकप्रत्यक्षे वेति। घटत्वादिविषयकालौकिकप्रत्यक्षं प्रतीत्यर्थः। तद्गोचरज्ञानत्वेन=घटत्वादिविषयकज्ञानत्वेन। आद्ये दोषमाह—घटत्वादिनिर्विकल्पके इति। व्यभिचारादित्यन्वयः। ननु घटत्वादिविषयकालौकिकप्रत्यक्षं प्रति तथा हेतुत्वान्नायं दोषः निर्विकल्पकस्य लौकिकत्वादिति द्वितीयं पक्षं दूषयति—

❀ जागदीशी ❀

प्रमेयत्वादिसामान्यलक्षणाजन्यघटत्वादिप्रत्यक्षे च व्यभिचारात् । तथापि लौकिकालौकिकसाधारणघटत्वादिप्रकारकप्रत्यक्षमात्रं प्रत्येव घटत्वादिज्ञानत्वेन हेतुत्वम् । अत एव प्राथमिकस्य घटत्वचैत्रत्वादिप्रकारकप्रत्यक्षस्य घटत्वचैत्रत्वादिनिर्विकल्पकं विनाऽनुपपत्तेस्तत्सिद्धिरप्यावश्यकी, पूर्वानुभूतवस्तु-

❀ काशिकानन्दो ❀

प्रमेयत्वेति । घटत्वादिप्रत्यक्षे इति । प्रमेयत्वप्रकारकघटत्वादिविशेष्यकप्रत्यक्ष इत्यर्थः । अत्र घटत्वस्यालौकिकविशेष्यत्वमस्ति । व्यभिचारादिति । न हि घटत्वानिर्विकल्पके उक्तालौकिके वा घटत्वज्ञानस्य हेतुत्वम् । साधारणेति । एतेन पृथक् कार्यकारणभावाऽकल्पनं सूचितम् । प्रत्येवेति । एवकारेण घटत्वविषयकप्रत्यक्षव्यावृत्तिः । अत एव = घटत्वप्रकारकप्रत्यक्षमात्रे घटत्वज्ञानस्य हेतुत्वादेव । प्राथमिकस्य = सविकल्पकलौकिकस्य प्रथममुत्पद्यमानस्य । तत्सिद्धिः=निर्विकल्पकसिद्धिः । आवश्यकीति । घटत्वचैत्रत्वादिप्रकारकप्रत्यक्षं प्राथमिकं प्रत्यपि घटत्वादिज्ञानस्य हेतुतया तत्पूर्वं च घटत्वप्रकारकज्ञानस्य विरहाद् अगत्या निर्विकल्पकात्मकघटत्वज्ञानमेवाभ्युपगन्तव्यम् । एवं च लाघवानुरुद्धनिरुक्तकार्यकारणभावेन निर्विकल्पकसिद्धिरपि भवतीति भावः ।

नन्वेतादृशकार्यकारणभावोऽप्रामाणिकः । न च घटत्वप्रकारकप्रत्यक्षं प्रति घटत्वविषयकनिर्विकल्पकस्यावश्यकतया लाघवेनैवोक्तकार्यकारणभावः सिद्ध्यतीति वाच्यम् । उक्तकार्यकारणभावसिद्धौ सत्यां निर्विकल्पकसिद्धिः तत्सिद्धौ लाघवेन तादृशकार्यकारणभावसिद्धिरित्यन्योन्याश्रयप्रसङ्गात् । न चैवं सुरभि चन्दनमित्यत्र सौरभभानं कथं स्यादिति वाच्यम् । कार्यकारणभावान्तरेण तस्य निर्वाहणीयत्वात् तत्र ज्ञानद्वयस्यैव वा स्वीकरणीयत्वादत आह—पूर्वानुभूतेति । घटादौ इत्यादिः । वस्तुमात्रस्यैवेति । मात्रपदं कार्त्स्न्यार्थकम् । एवकारस्याग्रे सत्त्वात् । तत्तात्वेनेति । सोऽयं घट इत्यादिप्रत्यक्षस्थल इत्यादिः । घटादौ पूर्वमनुभूतानि यानि तद्व्यक्तित्व-घटत्वाद्यात्मकवस्तूनि तान्येव सोऽयं घट इत्याद्याकारकप्रत्यभिज्ञाविषयीक्रियमाणं तत्त्वं नाम । न च तद्व्यक्तित्वमेव तत्त्वमस्तु न तु घटत्वादिकमिति वाच्यम् । सोऽयं घट इत्युक्ते स घट एवायं घट इत्यर्थप्रतीतेः सर्वानुभवसिद्धतया घटत्वादेरपि तत्तात्वावश्यकत्वात् । अत एव राजनि पश्चाद् भिक्षुके जाते स एवायं भिक्षुक इति न प्रतीतिः । राजत्वविशिष्टे भिक्षुकत्वस्यासंभवात् । सोऽयं पुरुष इति तु भवति । राजत्वविशिष्टे पुरुषत्वविधाने विरोधाभावात् । स एव राजा संप्रति भिक्षुको जात इत्यादौ जातपदसाहचर्येण राजपदस्य प्रतियोगिव्यधिकरणराजत्वाभावाभावलाक्षणिकत्वान्न दोषः । उद्देश्यतावच्छेदककालावच्छेद्यत्वस्य विधेयगतत्वेन बोधस्य व्युत्पत्तिसिद्धतया राजत्वमात्रस्य तदर्थत्वे राजत्वकालावच्छेद्यत्वस्य भिक्षुकत्वे बाधापत्तेः । न च सोऽयं घट इत्यादौ घटत्वमेव तत्त्वमस्तु न त्वितरदिति वाच्यम् । एकघटं दृष्टवतोऽभ्रान्तस्य घटान्तरे सोऽयं घट इति प्रत्यभिज्ञाप्रसङ्गात् । एवं

❀ जागदीशी ❀

**मात्रस्यैव तत्तात्वेन, घटत्वाद्यात्मकतत्ताप्रत्यभिज्ञानुरोधेनैव परैरपि उक्त**

❀ काशिकानन्दी ❀

च सोऽयं घट इत्यादौ पूर्वानुभूतवस्तुमात्रमेव तत्त्वं नाम घटस्थमिति सुस्थम्। मात्रपदमितरव्यावर्त्तकमेव। एवपदं च तात्पर्यग्राहकम्। राजनि भिक्षुके जाते स एव भिक्षुक इति तु न प्रयोगः। स इत्यत्रापि भिक्षुकपदानुषङ्गस्य व्युत्पत्तिसिद्धेः स भिक्षुक एव भिक्षुक इत्येव ततः प्रतीतेः। तादृशप्रत्ययस्य च भ्रमत्वनियमात्। तत्कालवैशिष्ट्यस्य भिक्षुकत्वे विरहात्। न च तत्कालविशिष्टभिक्षुकत्वावच्छिन्ने एतत्कालविशिष्टभिक्षुकत्वस्य विधेयतया भानं न संभवतीति वाच्यम्। तत्कालोपलक्षितभिक्षुकत्वविशिष्टे एतत्कालविशिष्टभिक्षुकत्वविधानसंभवात्। पूर्वं भिक्षुकत्वविरहेण तत्कालोपलक्षितत्वस्यापि भिक्षुकत्वेऽसंभव एव। यत्र च पूर्वं राजा पश्चाद्भिक्षुकस्तत्र स एवायं भिक्षुक इति प्रतीतौ विशेषणविशेष्यभावव्यत्यासः। अयं भिक्षुकः स एवेति प्रतीतेः। तत्र तत्कालोपलक्षितं तद्व्यक्तित्वं विषयः। इदं च प्रत्यभिज्ञास्थलानुरोधेनोक्तम्। सोऽयं भिक्षुक इत्यादिशाब्दस्थले तु शाब्दप्रकार ऊह्यः।

घटत्वाद्यात्मकतत्तेति। तत्ताया घटत्वाद्यात्मकत्वे हेतुः पूर्वानुभूतवस्तुमात्रस्यैव तत्तात्वेनेत्यनेनोपन्यस्त इति द्रष्टव्यम्। घटत्वाद्यात्मिका या तत्ता तद्विषयकप्रत्यभिज्ञानुरोधेनेत्यर्थः। अत्र च तादृशतत्ताप्रकारकबोधं प्रति तत्पूर्वजाततत्तास्मरणस्य कारणत्वं सर्वैरङ्गीकार्यम्। अन्यथा अननुभूततत्ताकस्यापि पुंसः सोऽयं घट इत्याकारकप्रत्यभिज्ञापत्तेः। नह्येवं क्वचिदपि दृष्टम्। तथा च तत्ताप्रकारकप्रत्यभिज्ञात्मकप्रत्यक्षं प्रति तत्ताज्ञानत्वेन कारणत्वे सिद्धे तत्तायाश्च घटत्वाद्यात्मकतया घटत्वप्रकारकप्रत्यक्षं प्रत्यपि घटत्वज्ञानस्य कारणत्वं सिद्ध्यति।

ननु तत्ताया घटत्वाद्यात्मकत्वे घटत्वनिर्विकल्पकोत्तरं तवापि सोऽयं घट इति प्रत्यभिज्ञापत्तिः। न च संस्कारस्यापि प्रत्यभिज्ञाहेतुतया घटत्वविषयकसंस्कारविरहादेव न तदापत्तिरिति वाच्यम्। एवं सति अज्ञाततत्ताकस्यापि संस्कारादिविरहादेव सोऽयं घट इति प्रत्यभिज्ञोत्पादासंभवेन तत्ताज्ञानस्य तत्ताप्रकारकप्रत्यक्षहेतुत्वासिद्धेः। न च संस्कारद्वारा प्राचीनानुभवस्यापि प्रत्यभिज्ञाकारणत्वमस्तीति वाच्यम्। एवं सति प्रत्यभिज्ञाकरणतया अनुभवस्य प्रमाणान्तरतापत्तेः। न च तत्तात्वावच्छिन्नप्रकारताकप्रत्यक्षं प्रति तत्तात्वावच्छिन्नविषयकज्ञानत्वेन कारणतया नोक्तदोषः, तत्तात्वेन घटत्वाभानादिति वाच्यम्। एवं सति निरवच्छिन्नघटत्वप्रकारकप्रत्यक्षं प्रति निरवच्छिन्नघटत्वज्ञानत्वेन कारणत्वासिद्धेरिति चेद् ?

न, न केवलं घटत्वादिमात्रं तत्त्वम्। किन्तु पूर्वानुभूतत्वमपि। एवं च घटत्वविषयकनिर्विकल्पकवतः पूर्वानुभूतत्वविषयकज्ञानविरहादेव न सोऽयं घट इत्यादिप्रतीतिः। न च पूर्वानुभूतत्वस्य तदानीं विरहात् कथमुद्देश्यतावच्छेदकतया भानसंभव इति वाच्यम्। पूर्वानुभूतत्वस्योपलक्षणतयैव तत्र भानादिति दिक्।

## ❀ जागदीशी ❀

कारणभावास्याभ्युपेतव्यत्वात् ।

नचैवं जन्यसविकल्पकस्यैव प्रत्यासत्तित्वमिति प्राचीनगाथाविरोधः। तस्याकिंचित्करत्वात् । सखण्डघटादेरुपनीतस्थल एव तथानियमसंभवाच्च । द्रव्यत्वादिप्रकारेण घटादेरुपनयसत्त्वेऽपि घटत्वादिप्रकारेण तस्योपनीतप्र-

## ❀ काशिकानन्दी ❀

**नन्वेवमपि** तत्ताप्रकारकप्रत्यभिज्ञात्वावच्छिन्नं प्रत्येव तद्विषयकज्ञानत्त्वेन कारणत्त्वं सिद्धं न तु तत्प्रकारकप्रत्यक्षमात्रं प्रतीति चेद् ?

**न,** संस्कारसहकृतेन्द्रियार्थसन्निकर्षजन्यज्ञानत्वात्मकप्रत्यभिज्ञात्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवेण लाघवाज्जात्यात्मकप्रत्यक्षत्वस्यैव कार्यतावच्छेदककुक्षौ निक्षेपौचित्यात् । न चेश्वरप्रत्यक्षसाधारणप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वासंभव इति वाच्यम् । एवमपि जन्यप्रत्यक्षत्वस्य तथात्वसंभवात् । तथापि लाघवात् । त्वन्मतेऽपि जन्यत्वस्य कार्यतावच्छेदककोटौ प्रवेशात् । न च विनिगमनाविरहेण कालिकेन घटत्वादेरपि कार्यतावच्छेदकत्वापत्तिरिति वाच्यम् । क्रियामात्रस्य कालोपाधित्वात् । जन्यजलत्वादिवद्जन्यप्रत्यक्षत्वस्य जातिविशेषत्वाच्च । न च निर्विकल्पकमनभ्युपगच्छद्भिः परैः तत्तात्वावच्छिन्नप्रकारताकप्रत्यक्षत्वावच्छिन्नं प्रति तत्तात्वावाच्छिन्नज्ञानत्त्वेनैव कारणत्वमुपेयते । तादृशकार्यकारणभावस्य नैयायिकानामपि स्वीकार्यत्त्वादिति वाच्यम् । स्वरूपतोऽपि घटत्वादेः प्रत्यभिज्ञायां भानात् ।

**परैः**=मीमांसकादिभिः । **उक्तकार्यकारणभावस्य**=तत्प्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति तद्विषयकज्ञानत्त्वेन कारणत्वमित्युक्तकार्यकारणभावस्य ।

ननूक्तक्रमेण तत्प्रकारकप्रत्यक्षं प्रति निर्विकल्पकसाधारणतद्विषयकज्ञानत्वेन हेतुत्त्वोपगमे सविकल्पकमात्रस्य प्रत्यासत्तित्वं वदत्प्राचीनमतविरोध इत्याशङ्कां निषेधति · **नचे**ति । विरोध इत्यन्वयः । **एवं**=निर्विकल्पकसाधारणतद्विषयकज्ञानस्य प्रत्यासत्तित्वे । **जन्यसविकल्पकस्यैवे**ति । एवकारेण नित्यसविकल्पकस्यार्थादीश्वरज्ञानस्य, निर्विकल्पकस्य च व्युदासः । ईश्वरज्ञानस्य सविकल्पकस्यापि प्रत्यासत्तिताविरहाज्जन्येति । यद्यपि आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे ईश्वरेऽदृष्टादिविरहान्नापत्तिः । विषयनिष्ठप्रत्यासत्तिसमालम्बनेऽपि तत्पुरुषीयत्वनिवेशान्न दोषसंभावना । तथापि फलितकथनमिदम् । **तस्य**=प्राचीनगथाविरोधस्य । **अकिंचित्करत्वा**दिति । तन्मतस्य निर्युक्तिकत्वादिति भावः ।

प्राचीनगाथामपि कथंचित्संगमयितुं शक्यमित्याह—**सखण्डे**ति । घटकालीनो धूम इत्यादावित्यादिः । **तथानियमे**ति । सविकल्पकस्यैव प्रत्यासत्तित्वमिति नियमेत्यर्थः । ननु तत्रापि सविकल्पकज्ञानत्त्वेनैव कुतो हेतुत्त्वमत आह—**द्रव्यत्वादिप्रकारे**णेति । द्रव्यकालीनो धूम इत्याकारकज्ञानहेतुभूतस्य द्रव्यत्वादिप्रकारेण घटाद्युपनयस्य द्रव्यमित्याद्याकारस्य सत्त्वेऽपीत्यर्थः । **तस्य**=घटस्य ।

## ❀ जागदीशी ❀

त्याक्षानुदयेन घटत्वादिना तत्तद्घटप्रकारकप्रत्यक्षं प्रति घटत्वादिप्रकारेणैव तत्तद्घटाद्युपनयस्य हेतुत्वात्। अत एव घटघटत्वयोर्निर्विकल्पकोत्तरं घटे घटत्वस्यैव घटत्वेऽपि घटस्य न वैशिष्ट्यावगाहिप्रत्यक्षम्। द्रव्यत्वघटत्वादिप्रकारेणैव घटादीनां विशिष्टबुद्धेः पारमार्थिकतया तद्धेतुभूतस्य घटत्वादि-

## ❀ काशिकानन्दी ❀

अनुदयेनेति। घटकालीनो धूम इत्याद्याकारकप्रत्यक्षानुदयेन। ततः किमत आह-घटत्वादिनेति। तत्तद्घटाद्युपनयस्य='घट' इत्याद्याकारकज्ञानस्य। हेतुत्वादिति। घटकालीनो धूम इत्याद्युपनीतस्थल इत्यादिः।

सखण्डस्थले तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकज्ञानत्वेन हेतुत्वोपगमे द्रव्यत्वेन घटाद्युपनयमात्रकालेऽपि घटत्वेन घटोपनीतप्रत्यक्षापत्तिः। घटकालीनो धूम इत्यादौ प्रकारीभूतघटस्योपनायकं यद् द्रव्यत्वेन घटज्ञानं तस्य प्रागुत्पन्नत्वादिति तद्वारणाय घटत्वावच्छिन्नप्रकारताकप्रत्यक्षं प्रति घटत्वेन घटविषयकसविकल्पकज्ञानस्य पृथक् कारणताया वक्तव्यतया तदनुरोधेनैव प्राचीनैः सविकल्पकज्ञानस्यैव प्रत्यासत्तित्वमुक्तम्। एवं च तद्रूपावच्छिन्नप्रकारताकोपनीतचाक्षुषादिकं प्रति सविकल्पकस्यैव प्रत्यासत्तित्वमिति प्राचीनानामभिसन्धिरिति जगदीशाभिप्रायः।

ननु घटत्वाच्छिन्नप्रकारताकप्रत्यक्षं प्रति घटत्वेन घटविषयकसविकल्पकज्ञानस्यैव हेतुत्वमिति कार्यकारणभावोऽपि निष्प्रमाण इति प्राचीनोक्तिरसंगतैव। न च द्रव्यत्वेन घटोपनयस्थले घटत्वेन तदुपनीतभानापत्तिरुक्ता स्यादिति वाच्यम्। तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकज्ञानस्य हेतुतया घटकालीनो धूम इत्यादौ प्रकारतया घटत्वस्यापि भानाव-ज्ञानविरहेणैवापत्त्यसंभवात्। घटत्वज्ञानसत्त्वे च घटकालीनो धूम इति प्रत्यक्षमिष्टमेव विशेषणे विशेष्यमिति रीत्या घटत्वस्य घटे तस्य च धूमे भानसंभवादत आह— अत एवेति। घटत्वाद्यवच्छिन्नप्रकारताकप्रत्यक्षं प्रति घटत्वेन घटज्ञानस्य कारणत्वादेवेत्यर्थः। घटत्वेऽपि घटस्येति। समवायेन घटत्वस्य घटे इव समवेतत्वसम्बन्धेन घटस्य घटत्वेऽपि सत्त्वाद् घटत्वादिधर्मिकतया घटाद्यवगाहिघटवदित्याकारकप्रत्यक्षमप्युत्पद्येत यदि उक्तकार्यकारणभावो नाभ्युपगम्येतेति भावः।

ननूक्तकार्यकारणभावाभ्युपगमेऽपि स्वरूपतो घटप्रकारकघटत्वविशेष्यकप्रत्यक्षं किं न स्यात्, तदभ्युपगमे घटत्वावच्छिन्नप्रकारताकमप्यभ्युपगम्यतां तस्या नपराधित्वादत आह— द्रव्यत्वेति। प्रकारेणैवेति। न तु स्वरूपत इति भावः।

घटादीनां विशिष्टबुद्धेः= घटादिवैशिष्ट्यावगाहिबुद्धेः। द्रव्यत्वाद्यप्रकारेणापि घटत्वादिनिर्विकल्पकासंभवाद् विशिष्टबुद्धेरिति। पारमार्थिकतया=परमार्थत उत्पद्यमानतया। तद्धेतुभूतस्य=द्रव्यत्वघटत्वाद्यवच्छिन्नप्रकारताकबुद्धिहेतुभूतस्य।

❀ जागदीशी ❀

प्रकारेण घटादिज्ञानस्य तदानीमसत्त्वात्। न चैवं निर्विकल्पकोत्तरं विशेष्ये विशेषणमित्यादिक्रमेणापि घटवदित्याकारकप्रत्यक्षं न स्यात्। इष्टत्वात्। जातीतरनिष्ठप्रकारताया: किंचिद्वच्छिन्नत्वनियमात्। द्रव्यगुणकर्मणां निरवच्छिन्नप्रकारत्वानुभवात्। न च निर्विकल्पकस्य प्रत्यासत्तित्वे स्वविषयीभूतघटत्वाद्युपधानेन तस्य प्रत्यक्षापत्तिः,

❀ काशिकानन्दी ❀

तदानीं=घटघटत्वयोर्निर्विकल्पककाले। असत्त्वादिति। जात्यखण्डोपाध्यतिरिक्तस्य किंचिद्धर्मप्रकारेणैव भाननियमात् घटत्वे भासमानोऽपि घटो जात्याद्यतिरिक्ततया किंचिद्धर्मप्रकारेणैव वक्तव्यः। स च धर्मो घटत्वादिरेवेति घटत्वाद्यवच्छिन्नप्रकारताकमेव तत्प्रत्यक्षमित्यायातम्। एवं च तद्धेतुभूतसविकल्पकघटत्वापच्छिन्नबुद्धिविरहे कथं तदुत्पत्तिः, कथं वा निर्विकल्पकोत्तरमेव घटप्रकारकबुद्धिसंभव इति भावः।

न चेति। न स्यादित्यन्वयः। एवं=घटत्वावच्छिन्नप्रकारताकबुद्धौ घटत्वावच्छिन्नसविकल्पकज्ञानस्य हेतुत्वे। निर्विकल्पकोत्तरमिति। घटत्व-घट-घटत्वतामित्यादिः। तादृशनिर्विकल्पकाऽव्यवहितोत्तरक्षण इति यावत्। विशेष्य इति। घटवति घटस्तत्र घटत्वमित्येवं युगपद्विशेष्यविशेषणभावेनेत्यर्थः। न स्यादिति। निर्विकल्पककाले घटत्वेन घटस्याज्ञानादिति भावः। किंचिद्वच्छिन्नेति। एतेन सखण्डत्वं सूचितम्। एवं च सखण्डस्थले तत्प्रकारकज्ञानत्वेनैव कारणत्वमुक्तमिति स्मारितम्। अभावत्वादेरखण्डोपाधेर्जातीतरस्यापि स्वरूपतः प्रकारत्वावगाहिज्ञानोदयादाह—द्रव्यगुणकर्मणामिति। उपलक्षणमिदं जात्यखण्डोपाध्यतिरिक्तस्य। संसर्गविधया विशेष्यविधया निर्विकल्पकविषयविधया च स्वरूपतो भानादाह प्रकारत्वेति। निर्विकल्पकोत्तरं घटत्वे घटं घटे च घटत्वमवगाहमानं जायतां तथा न जातीतरस्य घटस्य किंचित्प्रकारेण भानमक्षतमित्यपि परास्यातुं पूर्वोक्तिं हित्वा निरवच्छिन्नप्रकारतेत्युक्तिः।

निर्विकल्पकस्यापि प्रत्यासत्तित्वे निर्विकल्पकविषयकानुव्यवसायापत्तिरित्याशङ्कां निरसितुमाह—नचेति। स्वविषयीभूतेति। स्वं=निर्विकल्पकम्, तद्विषयीभूतं—घटत्वादि, तदुपधानेन=तद्वैशिष्ट्येन, तत्प्रकारेणेति यावत्। तस्य=निर्विकल्पकस्य। निर्विकल्पके घटत्वस्य प्रकारता विषयित्वसम्बन्धावच्छिन्ना बोध्या। प्रत्यक्षापत्तिरिति। निर्विकल्पकं हि विषयितया घटत्वादिविशिष्टज्ञानं भवति। तस्य चेत् प्रत्यक्षं तदा तत्र घटत्वं प्रकारतया ज्ञानं च विशेष्यतया भासेत। तत्र च घटत्वनिष्ठा प्रकारता विषयितासम्बन्धेन। एवं च तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकज्ञानमात्रेण हेतुत्वे विषयतासम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारताकप्रत्यक्षहेतुत्वं घटत्वनिर्विकल्पकेऽपि सिद्ध्यतीति प्रथमक्षणोत्पन्नया घटत्वनिर्विकल्पकात्मिकया प्रत्यासत्त्या घटत्वप्रकारकनिर्विकल्पकविशेष्यकमानसप्रत्यक्षमुत्पद्येतेत्यर्थः। एवं चापसिद्धान्तापत्तिरिति भावः।

ननु निर्विकल्पकस्य प्रत्यक्षं न भवतीति वदतां क आशयः? कथं वा तैः निर्विक-

❀ जागदीशी ❀

विषयानुपधानेन ज्ञानादिप्रत्यक्षस्यालीकतया विषयोपनायकविरहादेव मनःसन्निकृष्टस्यापि तस्यातीन्द्रियत्वोपगमादिति वाच्यम् । सत्यपि सन्निकर्षे प्रत्यक्षसामान्यं प्रत्येवादृष्टत्वादिनेव निर्विकल्पकत्वेनापि तादात्म्यसम्बन्धेन विरोधित्वकल्पनादेव निर्विकल्पकस्याऽप्रत्यक्षत्वात् ।

❀ काशिकानन्दी ❀

त्वकप्रत्यक्षवारणं क्रियत इत्यत आह - विषयानुपधानेनेति । विषयाऽप्रकारेणेत्यर्थः। ज्ञानादिप्रत्यक्षस्य = ज्ञानादिविषयकानुव्यवसायस्य । आदिना इच्छाप्रत्यक्षपरिग्रहः। अलीकतयेति । केवलं 'जानामि' 'इच्छामी' त्याद्याकारकप्रत्यक्षस्याननुभविकत्वादिति भावः । विषयोपनायकविरहात्=विषयोपनायकज्ञानलक्षणाविरहात् । कारणान्तरसान्निध्यमाह—मनःसन्निकृष्टेति तस्य=निर्विकल्पकस्य । उपगमादिति । अयं भावः—तत्प्रकारकप्रत्यक्षे तत्प्रकारकज्ञानस्यैवोपनायकत्वमिति वदतां प्राचां मते न निर्विकल्पकविषयकप्रत्यक्षापत्तिः । निर्विकल्पकोत्तरक्षणमापाद्यमानघटत्वनिर्विकल्पकविषयकप्रत्यक्षस्य घटत्वांशे विषयितासम्बन्धेन प्रकारत्वावश्यकतया तादृशप्रत्यक्षहेतुभूतस्य घटत्वप्रकारकज्ञानस्य प्रागनुत्पन्नत्वात् । निर्विकल्पकस्य प्रागुत्पन्नस्य निष्प्रकारकत्वादिति । घटमहं जानामीत्याद्याकारकानुव्यवसाये घटघटत्वादिकं ज्ञानलक्षणाप्रत्यासत्त्यैव भासते । घटघटत्वादिभिः सह मनसः सन्निकर्षान्तरविरहात् । चक्षुःसन्निकर्षादेश्च मानसप्रत्यक्षेऽनुपयोगात् । एवं च निर्विकल्पकज्ञानविषयकप्रत्यक्षापत्तिवारणायाऽकामेनापि तत्प्रकारकज्ञानस्यैव प्रत्यासत्तित्वं स्वीकार्यमिति प्राचामभिसन्धिः । सत्यपीत्यादि । मनःसंयुक्तसमवायाद्यात्मकसन्निकर्षस्य प्रत्यक्षकारणीभूतस्य धर्माऽधर्म-संस्कारादिभिः सह विद्यमानत्वेऽपि धर्माधर्मादिविषयकमानसप्रत्यक्षानुदयेन तदुपपत्तये विषयतया प्रत्यक्षं प्रति तादात्म्येन धर्माधर्मसंस्कारादीनां यथा प्रतिबन्धकत्वमवश्यं सर्वैरेवाभ्युपगन्तव्यं, तथा विषयतया प्रत्यक्षसामान्यं प्रति निर्विकल्पकस्यापि प्रतिबन्धकत्वमवश्यं कल्पनीयमित्यर्थः। तथा च तादात्म्येन निर्विकल्पकस्यापि निर्विकल्पके वर्त्तमानतया विषयतया प्रत्यक्षोत्पादप्रतिबन्धकसद्भावेन न तद्विषयकं प्रत्यक्षमिति न तदनुरोधेन सविकल्पकज्ञानमात्रस्य प्रत्यासत्तित्वस्वीकारप्रसक्तिरिति भावः ।

ननु द्रव्यत्वप्रकारकप्रत्यक्षमेव यत्र घटघटत्वयोर्निर्विकल्पकं तत्र तदुत्तरं द्रव्यमहं जानामीत्याकारकप्रत्यक्षानुपपत्तिः । विषयितासम्बन्धेन तादृशप्रत्यक्षस्य द्रव्यत्वप्रकारकज्ञाने सत्त्वाद्, तस्य च घटघटत्वनिर्विकल्पकाऽभिन्नत्वात् । तादात्म्येन निर्विकल्पकस्य प्रतिबन्धकीभूतस्य तत्र सत्त्वात् । न च सविकल्पकान्यज्ञानत्वेन प्रतिबन्धकत्वाभिधानान्न दोषः । द्रव्यत्वप्रकारकोक्तप्रत्यक्षस्य निर्विकल्पकाभिन्नत्वेऽपि द्रव्यत्वांशे सविकल्पकतया सविकल्पकान्यत्वस्य तत्र विरहादिति वाच्यम् । एवं सति घटत्वाद्युपधानेनापि तादृशज्ञानविषयकप्रत्यक्षापत्तेः, तादृशज्ञानस्य घटत्वांशे निर्विकल्पकत्वेऽपि द्रव्यत्वांशे सविकल्पकतया सविकल्पकान्यत्वविरहादिति चेद् ?

## ❀ काशिकानन्दी ❀

न, विषयतानिरूपितविषयतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतान्यप्रकारताकप्रत्यक्षत्वावच्छिन्नं प्रत्येव, विषयतानिरूपितविषयतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतान्यप्रकारताकविशेष्यतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रत्येव वा तादात्म्येन निर्विकल्पकत्वेन प्रतिबन्धकत्वस्वीकारात् । घटघटत्वनिर्विकल्पात्मकद्रव्यत्वप्रकारकप्रत्यक्षोत्तरजायमान-'द्रव्यज्ञानवानहं' मित्याद्याकारकानुव्यवसाये विशेष्यित्वसम्बन्धावच्छिन्नं द्रव्यनिष्ठं प्रकारत्वं प्रकारित्वसम्बन्धावच्छिन्नं द्रव्यत्वनिष्ठं प्रकारत्वम् । तदुभयमपि विषयतानिरूपितविषयतानिरूपितविषयित्वसम्बन्धावच्छिन्नमेव । प्रकृते द्रव्यत्वनिष्ठविषयतानिरूपितद्रव्यनिष्ठविषयतानिरूपितविषयिताया एव विशेष्यितात्वात्, द्रव्यनिष्ठविषयतानिरूपितद्रव्यत्वनिष्ठविषयतानिरूपितविषयिताया एव प्रकारितात्वात् । एवं च तादृशसम्बन्धावच्छिन्नप्रकारतान्यप्रकारतापदेन 'घट' इत्याद्याकारकज्ञानीया घटत्वनिष्ठा प्रकारता धार्या । न तु द्रव्यत्वादिनिष्ठा प्रकारता अनुव्यवसायीया इति नात्र प्रतिबन्धसंभवः । घटत्वाद्युपधानेन निर्विकल्पकप्रत्यक्षं तु न भवति । तत्र घटत्वादिनिष्ठविषयताया विषयतानिरूपितत्वाभावेन विषयतानिरूपितविषयतानिरूपितविषयितान्यनिर्विकल्पकीयविषयितासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन तस्य निर्विकल्पके समुत्पादे तादात्म्येन निर्विकल्पकस्य विरोधित्वात् ।

नन्वेवं सति प्रमेयत्वादिसामान्यलक्षणया निर्विकल्पकविषयकचाक्षुषादिकं न स्यात् । निरुक्तविषयितान्यस्वरूपादिसम्बन्धावच्छिन्नप्रमेयत्वनिष्ठप्रकारतानिरूपितविशेष्यताया निर्विकल्पके सत्त्वात् । न च विषयतानिरूपितविषयतानिरूपितविषयितासम्बन्धावच्छिन्नप्रकारतान्यप्रकारतानिरूपितलौकिकविशेष्यतायाः संसर्गत्वोक्त्या नायं दोषः, प्रमेयत्वसामान्यलक्षणाप्रयोज्यनिर्विकल्पकनिष्ठविशेष्यताया लौकिकत्वविरहादिति वाच्यम् । एवमपि घटघटत्वनिर्विकल्पकात्मकद्रव्यत्वप्रकारकप्रत्यक्षोत्तर 'द्रव्यज्ञानवानहं' मिति प्रत्यक्षानुपपत्तेरेव तदवस्थत्वात् । विषयतानिरूपितविषयतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतान्या या समवायसम्बन्धावच्छिन्ना द्रव्यत्वनिष्ठा प्रकारता, एवं ज्ञानत्वनिष्ठा प्रकरता तन्निरूपितविशेष्यताया निर्विकल्पकाभिन्ने उक्तज्ञाने सत्त्वात् । न च विषयतानिरूपितविषयतानिरूपितविषयिता सम्बन्धावच्छिन्नप्रकारतान्या या विषयितासम्बन्धावच्छिन्नप्रकारता तन्निरूपितविशेष्यतायाःप्रवेशेनोक्तोभयदोषवारणम्, द्रव्यत्वज्ञानत्वादिनिष्ठप्रकारताया विषयितासम्बन्धावच्छिन्नत्वविरहादिति वाच्यम् । तेन सम्बन्धेन प्रतिबध्याऽप्रसिद्धेः प्रकारतादीनां विषयतानिरूपितत्वनियमेन निर्विकल्पकीयविषयिताया एव प्रकारतावच्छेदकतया लाभसंभवात् तत्सम्बन्धावच्छिन्नप्रकारतायाश्चाऽप्रसिद्धत्वात् । न च विषयतानिरूपितविषयतानिरूपितविषयित्वसंम्बन्धावच्छिन्नप्रकारतान्यत्वे सति ज्ञानत्वाऽवृत्तिर्या प्रकारता तन्निरूपितविशेष्यत्वस्य संसर्गत्वमस्तु । द्रव्यत्वादौ समवायसम्बन्धावच्छिन्नं प्रकारतान्तरं नाभ्युपगम्यत इति वाच्यम् । द्रव्यचाक्षुषवानहं द्रव्यस्पार्शनवानहमित्याद्याकारकानुव्यवसायस्थले एव दोषात् । न च विषयतानिरूपितविषयतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारताकप्रत्यक्षातिरिक्त

## ❀ काशिकानन्दी ❀

प्रत्यक्षत्वावच्छिन्नं प्रत्येव तदात्म्येन निर्विकल्पकस्य प्रतिबन्धकत्वमिति वाच्यम्। एवं सति द्रव्यमहं जानामीति प्रत्यक्षस्यैव ज्ञानांशे निर्विकल्पकविषयीभूतघटघटत्वावगाहिनो दुर्वारत्वादिति चेद् ?

न, विषयतानिरूपितविषयतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतान्यत्वे सति धर्मितावच्छेदकतान्यप्रकारतानिरूपितलौकिकविशेष्यतायाः संसर्गत्वोपगमेन दोषाभावात्। ज्ञानत्वचाक्षुषत्वादिनिष्ठा हि प्रकारता न धर्मितावच्छेदकतान्था जगदीशमते। किन्तु विषयत्वादिसम्बन्धावच्छिन्नद्रव्यादीनां धर्मितावच्छेदकतैव। न च घटघटत्वनिर्विकल्पकात्मकद्रव्यत्वसविकल्पकोत्तरं घटत्वं ज्ञानत्वं च धर्मितावच्छेदकीकृत्य द्रव्यत्वप्रकारेणानुव्यवसायापत्तिरिति वाच्यम्। यतः द्रव्यत्वेन द्रव्यविषयकज्ञानवानहमित्याकारकज्ञानकारणीभूतद्रव्यत्वप्रकारकद्रव्यविशेष्यकज्ञानात्मकविशेषणविषयकज्ञाने विषयित्वसम्बन्धावच्छिन्नद्रव्यत्वीयधर्मितावच्छेदकत्वं घटत्वस्यापद्यत इति हि आयातम्। विशिष्टज्ञाने विशेषणांशे घटत्वादिप्रकारत्वापादनस्य कारणीभूतविशेषणज्ञाने तत्प्रकारतासाध्यत्वात्। तत्र च विषयित्वसम्बन्धावच्छिन्नघटत्वांनिष्ठप्रकारताकज्ञाननिष्ठप्रकारताकप्रत्यक्षत्वस्य विषयित्वसम्बन्धावच्छिन्नघटत्वनिष्ठधर्मितावच्छेदकताकविषयित्वसम्बन्धावच्छिन्नद्रव्यत्वप्रकारताकप्रत्यक्षत्वव्यापकतया तद्धेतुभूतस्य विषयित्वसम्बन्धावच्छिन्नघटत्वप्रकारताकज्ञाननिष्ठविशेष्यताकज्ञानस्य प्रागसत्त्वेन तदापत्त्यसंभवात्। अत एव नीलत्वविशिष्टपर्वतत्वावच्छिन्नविषयकनिश्चयोत्तरमेव नीलपर्वतोवह्निमानित्याकारकमानसप्रत्यक्षम्। अन्यथा नीलत्वपर्वतत्ववह्नित्वादीनां युगपदुपस्थितौ तदनन्तरं नीलपर्वतो वह्निमानिति प्रत्यक्षस्वीकारे वह्निमत्पर्वतो नील इत्यपि स्यात्। न हि तत्र वह्निमत्पर्वतो नीलो नीलपर्वतो वह्निमानित्याद्याकारकसमूहालम्बनमानुभविकम्। किन्तु पर्वतो वह्निमान् नीलश्चेत्याद्याकारकमेव। न च विषयित्वसम्बन्धावच्छिन्नघटत्वप्रकारताकज्ञानविशेष्यताकज्ञानोत्तरमेवोक्तदोषो दीयत इति वाच्यम्। घटघटत्वयोस्तत्र निर्विकल्पकसत्त्वे जातत्वेन घटत्वोपधानेन तादृशनिर्विकल्पकप्रत्यक्षे तादात्म्येन निर्विकल्पकस्य प्रतिबन्धकत्वादेव तदसंभवात्। यदि च नीलपर्वतो वह्निमानित्याद्युक्तस्थलेऽदृष्टविशेषवशादेव वह्निमत्पर्वतो नील इति न प्रत्यक्षमिति मतं विभाव्यते तदा विषयित्वसम्बन्धानवच्छिन्नधर्मितावच्छेदकतान्यत्वं प्रवेशनीयमिति न दोषलेशः।

नन्वेवमपि घटत्वनिर्विकल्पकात्मकद्रव्यत्वसविकल्पकज्ञानविषयकज्ञानमेव प्रमेयत्वाद्युपनीतं प्रमेयत्ववद्द्रव्यत्वप्रकारकज्ञानवानहमित्याद्याकारकं तन्न स्यात्। प्रमेयत्वनिष्ठप्रकारतायाः स्वरूपसम्बन्धावच्छिन्नायाः धर्मितावच्छेदकतान्यत्वाद् निरुक्तविषयित्वसम्बन्धावच्छिन्नप्रकारतान्यत्वाच्च। न च विषयतानिरुपितविषयतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतान्यत्वे सति निरुक्तधर्मितावच्छेदकतान्यत्वे सति किंचिद्धर्मावच्छिन्नविशेष्यतानिरूपितविषयित्वसम्बन्धानवच्छिन्नप्रकारतान्या या प्रकारता तन्निरूपितविशेष्यत्व प्रवेशनीयमित्यदोषः, प्रमेयत्वनिष्ठप्रकारताया ज्ञानत्वावच्छिन्नविशेष्यतानिरूपितत्वाद् विषयित्वसम्बन्धानवच्छिन्नत्वाच्च तदन्यत्वविरहात्, घट इत्याद्याकारकसमवायसम्बन्धानच्छिन्नप्रकारता-

**❀ काशिकानन्दी ❀**

निरूपितविशेष्यताया निरुक्तविशेष्यतापदार्थतया प्रसिध्यर्थं किंचिद्धर्मावच्छिन्नविशेष्यतानिरूपितत्वान्तमिति वाच्यम् । तथापि निरुक्तनिर्विकल्पकात्मकसविकल्पके एव यत्र निर्विकल्पकीयविषयितासम्बन्धेन पटत्वादिभ्रमस्तत्र तादृशप्रत्यक्षानुपपत्तेरवारणात् । भ्रमीयविषयितान्यत्वनिवेशेन तद्दोषवारणेऽपि तत्रैव ज्ञाने निर्विकल्पकीयविषयितासम्बन्धेन घटत्वस्योपनये दोषात् । तादृशप्रत्यक्षे हि निर्विकल्पकीयविषयितासम्बन्धेन घटत्वस्य सत्त्वेन तस्य भ्रमत्वाभावात् । न चैवं निर्विकल्पकस्य न प्रत्यक्षमिति गाथाविरोध इति वाच्यम् । यतः निर्विकल्पकीयविषयितया घटत्वादेः न भानं प्रत्यक्षे इति न तन्मतम् । तथा सति प्राचीनमतेऽपि निर्विकल्पकस्य प्रत्यासत्तित्वाभावेऽपि घटत्वप्रकारकज्ञानोत्तरं निर्विकल्पकीयविषयितासम्बन्धेन तस्य उक्तज्ञाने भानप्रसङ्गवारणौपयिकोपायान्तरस्य गवेषणीयतापत्तेः । किन्तु ज्ञानत्वचाक्षुषत्वादिमात्रधर्मितावच्छेदककनिर्विकल्पकीयविषयित्वावच्छिन्नघटत्वादिप्रकारताकज्ञानविशेष्यताकप्रत्यक्षं न भवतीत्येवाभिमतम् । अत एव निर्विकल्पकीयविषयितासम्बन्धेन पटत्वप्रकारकभ्रम उत्पद्यते । न हि तत्र तत्सम्बन्धेन पटत्वस्योपनयो भवति न तु घटत्वस्येति युक्तियुक्तम् । न च तत्र निर्विकल्पकीयविषयितासम्बन्धेन पटत्वस्यापि न भानमिति वाच्यम् । निर्विकल्पकानात्मकसविकल्पके निर्विकल्पकीयविषयितासम्बन्धेन घटत्वभ्रमस्य निर्विकल्पके तादात्म्येन प्रतिबन्धकतास्वीकारेणापि वारयितुमशक्यतया तस्योपगमे निर्विकल्पकात्मकसविकल्पकेऽपि पटत्वभ्रमस्य युक्तियुक्तत्वात् ।

मैवम् । लाघवेन निर्विकल्पकत्वेन प्रतिबन्धकत्वे सिद्धे निर्विकल्पकात्मकसविकल्पकस्य निर्विकल्पकीयविषयितासम्बन्धेन पटत्वाद्युपनीतभानानङ्गीकारेऽपि क्षतिविरहः । यदि च विषयितया पटत्वोपनीतघटत्वनिर्विकल्पकात्मकद्रव्यत्वसविकल्पकमभ्युपगम्यते तदा विषयित्वसम्बन्धावच्छिन्नधर्मितावच्छेदकताकप्रकारतान्यत्वमपि निवेशनीयमित्यदोषः ।

तथा च विषयतानिरूपितविषयतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतान्यत्वे सति विषयित्वसम्बन्धानवच्छिन्नत्वेन विशेषितमविशेषितं वा यद्धर्मितावच्छेदकत्वं तदन्यत्वे सति यत्किंचिद्धर्मावच्छिन्नविशेष्यतानिरूपितविषयित्वसम्बन्धानवच्छिन्नप्रकारतान्यत्वे सति विषयित्वसम्बन्धावच्छिन्नावच्छेदकताकधर्मिताकप्रकारतान्या या प्रकारता तन्निरूपितलौकिकविशेष्यत्वस्य प्रतिबध्यतावच्छेदकसंसर्गत्वम् । घट इति ज्ञाने तादृशविशेष्यत्वं प्रसिद्धम् । विषयानुपहितत्वात् प्रमेयवानित्याकारकप्रमेयत्वेन ज्ञानावगाहिज्ञानांशे लौकिकोऽनुव्यवसायो नेष्ट इति ।

ननु विषयितात्वेन रूपेण विषयितायाः संसर्गत्वावगाहिघटत्वप्रकारकनिर्विकल्पकप्रत्यक्षं दुर्वारम् । विषयतात्वेन रूपेण संसर्गतायाः प्रकारतादावपि सत्त्वेन प्रथमसत्यन्ताभावात् । न च विषयत्वाऽनिरूपितविषयतानिरूपितविषयित्वाऽवृत्तित्वविशिष्टा या विषयतानिरूपितविषयतानिरूपितविषयतानिष्ठसंसर्गता तन्निरूपकप्रकारतान्यत्वं प्रथमसत्यन्तार्थं इति न दोष इति वाच्यम् । तथा सति विषयितात्वेन संसर्गत्वावगाहिद्रव्यादिप्रकारकस-

## ❀ काशिकानन्दी ❀

विकल्पकस्य घटत्वनिर्विकल्पकात्मकस्याप्रत्यक्षापत्तेः। विषयितात्वेन रूपेण निर्विकल्पकीय-विषयितायामपि संसर्गतासत्त्वात्।

मैवम्। संसर्गताया विषयितात्वावच्छिन्नत्वेऽपि निखिलविषयितायां संसर्गत्वाऽस्वीकारेण दोषाभावात्।

अथवा लौकिकविशेष्यतासम्बन्धेन निर्विकल्पकीयविषयिताप्रयोज्यप्रकारताकप्रत्यक्षं प्रति तादात्म्येन निर्विकल्पकत्वेन प्रतिबन्धकत्वम्। न च घटत्वनिर्विकल्पकात्मकद्रव्यत्व-सविकल्पकोत्तरं ज्ञानत्वनिर्विकल्पकोत्पत्त्या ज्ञानत्वप्रकारकं तल्लौकिकप्रत्यक्षं न स्यादिति वाच्यम्। ज्ञानत्वेन ज्ञानमानसलौकिकप्रत्यक्षे ज्ञानत्वज्ञानानपेक्षणात्। अन्यथा तृतीयक्षणे विषयविरहेण प्रत्यक्षानापत्तेः। समवायसम्बन्धानवच्छिन्नत्वस्य प्रकारतायां प्रवेशाद्वा। कालिकादिना ज्ञानत्वादेर्न स्वरूपतो भानमित्यदोषः।

केचित्तु विषयितासम्बन्धावच्छिन्नघटत्वादिप्रकारताकप्रत्यक्षं प्रति घटत्वादिविषयक-निर्विकल्पकत्वेन विशिष्यैव प्रतिबन्धकत्वोक्त्या न दोषः। न चैवं घटत्वप्रकारक-प्रत्यक्षमेव यत्र द्रव्यत्वादिनिर्विकल्पकं तदुत्तरं घटत्वप्रकारकज्ञानविषयकप्रत्यक्षं न स्यात्। घटत्वविषयकसविकल्पकस्य निर्विकल्पकाभिन्नत्वादिति वाच्यम्। यतो घटत्वविषयकनिर्विक-ल्पकं नाम सांसर्गिकविषयतानिरूपितघटत्वादिनिष्ठविषयत्वाऽनिरूपकत्वविशिष्टं घटत्वादि-विषयकज्ञानमेव। तादृशज्ञानत्वं च न तत्र, उक्तज्ञानस्य निर्विकल्पकत्वेऽपि निरुक्तघटत्व-विषयकनिर्विकल्पकत्वविरहः। घटत्वनिष्ठविषयतायाः सांसर्गिकविषयतानिरूपितत्वेन सांसर्गिकविषयतानिरूपितघटत्वनिष्ठविषयत्वाऽनिरूपकत्वस्य तत्रासत्त्वादित्याहुः

तदसत्, अन्यथेत्याद्युत्तरग्रन्थविरोधात्। न हि घटत्वप्रकारकप्रत्यक्षं प्रति घटत्वविषय-कनिर्विकल्पकज्ञानत्वेन प्रतिबन्धकताविरहे सुखत्वनिर्विकल्पकस्य सुखत्वोपधानेन प्रत्यक्षापत्ति-रावश्यकी। न वा घटत्वविषयकनिर्विकल्पकत्वेन प्रतिबन्धकत्वस्वीकारेऽपि सुखत्वनिर्विकल्पक-विषयकप्रत्यक्षापत्तिवारणम्। सुखत्वादिप्रकारकप्रत्यक्षं प्रति सुखत्वादिविषयकनिर्विकल्पत्वेनापि विशिष्यप्रतिबन्धकत्वसत्त्वान्नायमनुयोगो युज्यत इति चेत्? तर्हि तत्रैव प्राचीनैःप्रतिबध्यप्रति-बन्धकभावोऽङ्गीकरणीयो नान्यत्रेति। त्वन्मते पुनरनन्तप्रतिबध्यप्रतिबन्धकभावः कल्पनीय इति लाघवेन सविकल्पकज्ञानस्यैव प्रत्यासत्तित्वं सिद्ध्येत्। न च विषयतानिरूपितविष-यतानिरूपितविषयितासम्बन्धावच्छिन्नप्रकारतान्यप्रकारताकप्रत्यक्षत्वस्य कार्यतावच्छेदकतया प्रागुक्तपरिष्कारेऽपि गौरवमिति वाच्यम्। तस्याकिंचित्करत्वात्। प्राचीनैरपि सुखत्व-दुःखत्वेच्छात्वकृतित्वादिनानाधर्ममादाय तत्तन्निर्विकल्पके नानाप्रतिबन्धकत्वं कल्पनीयं स्यादिति एकस्यैवोक्तप्रतिबध्यप्रतिबन्धकभावस्य कल्पयितुं युक्तत्वादिति। प्राचीनमत-प्रतिक्षेपणपरो नायं ग्रन्थ इति स्वतिस्थवीयः। "निर्विकल्पकस्य प्रत्यासत्तित्वे" इति जगदीशोक्त्या सविकल्पकस्यैव प्रत्यासत्तित्वमभ्युपगन्तव्यमिमि पूर्वपक्षयाशयस्यार्थलभ्यत्वात्।

यत्तु विषयत्वाऽनिरूपितविषयतानिष्ठविषयतानिरूपितलौकिकविषयतासम्बन्धेन प्रत्यक्षसामान्यं प्रत्येव तादात्म्येन निर्विकल्पकत्वेन प्रतिबन्धकत्वाभिधानान्न

## ❀ काशिकानन्दी ❀

दोषः । घटत्वनिर्विकल्पकात्मकद्रव्यत्वप्रकारकज्ञानविषयकप्रत्यक्षस्थले च ज्ञाननिष्ठविषयता न विषयत्वाऽनिरूपितविषयतानिष्ठविषयतानिरूपिता । ज्ञानस्य विषयतया द्रव्यत्वविशिष्टतया द्रव्यत्वे इव संसर्गीभूतविषयतायामपि विषयतासत्त्वेऽपि विषयतानिष्ठविषयताया विषयत्वाऽनिरूपितविषयतानिष्ठत्वविरहात् । द्रव्यत्वनिष्ठविषयताया द्रव्यादिनिष्ठविषयतानिरूपितत्वात् । घटत्वोपधानेन तस्यैव ज्ञानस्य प्रत्यक्षं तु न भवति । तत्र घटत्वनिष्ठविषयताया एव संसर्गत्वात्तस्याश्च विषयत्वानिरूपितत्वसत्वात् । न च तादृशलौकिकविषयत्वप्रत्यक्षाप्रसिद्धिः, निर्विकल्पकीयविषयताकालीनो घट इत्यादावेव तत्प्रसिद्धेः । तत्र विषयतानिष्ठप्रकारताया विषयत्वाऽनिरूपितविषयतानिष्ठत्वात्तन्निरूपितलौकिकविषयतायाश्च घटे सत्त्वादिति मतम् ।

तन्न । घटत्वनिर्विकल्पकात्मकद्रव्यत्वप्रकारकज्ञाने उपनीततया निर्विकल्पकीयविषयताया यत्र निर्विकल्पकीयविषयताकालीनद्रव्यत्वप्रकारकज्ञानवानहमित्यादिप्रत्यक्षे भानं तादृशप्रत्यक्षस्यानुत्पादापत्तेः । विषयत्वाऽनिरूपितनिर्विकल्पकीयविषयतानिष्ठविषयतानिरूपितलौकिकविषयतायाः तादृशज्ञाने सत्त्वात् । न च विषयत्वानिरूपितविषयतानिष्ठप्रकारतान्यविषयतानिरूपितलौकिकविषयत्वस्य प्रवेशेनादोष इति वाच्यम् । एवं सति तादृशविषयतया प्रत्यक्षाऽप्रसिद्धिप्रसङ्गात् । निर्विकल्पकीयविषयत्वस्योपनीततया घटादौ प्रकारत्वसंभवेऽपि तस्य प्रकारतान्यत्वविरहात् । न च निर्विकल्पकीयविषयतासम्बन्धेन घटादौ यत्र घटत्वादिभ्रमस्तत्र विषयत्वाऽनिरूपितविषयतानिष्ठप्रकारतान्यविषयतानिरूपितविषयत्वं लौकिकात्मकं घटादौ प्रसिद्धं तत्र संसर्गताख्यविषयताया एव सत्त्वादिति वाच्यम् । एवंविधभ्रमसत्त्वे निर्विकल्पकीयविषयतासम्बन्धेन घटत्वपटत्वादिभ्रमस्य निरुक्तनिर्विकल्पकात्मकसविकल्पकज्ञानविशेष्यतयापि संभवात्तादृशप्रत्यक्षानुपपत्तेरेव दुर्वारतापत्तेः । विषयत्वाऽनिरूपितनिर्विकल्पकीयविषयतानिष्ठसांसर्गिकविषयतानिरूपितलौकिकविषयताया ज्ञाने सत्त्वात् । तेन सम्बन्धेन घटविशेष्यक एव भ्रमो भवतीति तु प्रतिज्ञामात्रयुक्तिकम् । भ्रमान्यविषयत्वादिकं प्रक्षिप्यात्र दोषवारणे पुनस्तादृशविशेष्यत्वाऽप्रसिद्धितादवस्थ्यमिति दिक् ।

वयं तु—लौकिकविशेष्यतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति तादात्म्येन सविकल्पकान्यज्ञानत्वेनैव प्रतिबन्धकता । न चैवं घटत्वनिर्विकल्पकात्मकद्रव्यसविकल्पकस्य घटत्वोपरागेण प्रत्यक्षं स्यादिति वाच्यम् । इष्टत्वात् । निर्विकल्पकस्यातीन्द्रियत्वमिति सिद्धान्तरक्षायै हि एवंविधप्रतिबध्यप्रतिबन्धकभावाभ्युपगमः, सविकल्पात्मकनिर्विकल्पकं तु नातीन्द्रियम् । न हि किंचिदवच्छेदेनातीन्द्रियं किंचिदवच्छेदेन च प्रत्यक्षयोग्यमिति युक्तम् । न हि विषयोपनायकविरहेणातीन्द्रियत्वं प्राचीनैरपि वक्तुं शक्यम् । द्रव्यत्वात्मकविषयोपनायकसत्त्वात् । एवं च तत्प्रकारकज्ञानस्यैवोपनायकत्वमिति प्राचीनगाथाविरोधस्य यथाऽकिंचित्करत्वं तथा घटत्वनिर्विकल्पकात्मकद्रव्यत्वसविकल्पकविषयकमानसप्रत्यक्षे

## ❀ जागदीशी ❀

अन्यथा सुखत्वादिनिर्विकल्पकस्य स्वविषयीभूतसुखत्वाद्युपधानेन प्रत्यक्षत्वस्य दुर्वारतापत्तेः । सुखत्वस्य निर्विकल्पक इव सुखत्वेऽपि लौकिकस्यैव मनःसन्निकर्षस्य सत्त्वात् । तदुपधानेन तन्निर्विकल्पकस्य प्रत्यक्षे बाधकाभावादिति ।

## ❀ काशिकानन्दी ❀

घटत्वस्य विषयतया भानं न भवतीति तदीयोक्तिसिद्धमप्यकिंचित्करमेव निर्विकल्पकोपनीतभानान्तरवदिति युक्तमुत्पश्यामः ।

परे तु घटत्वाद्युपनीतभाने विशेष्यलौकिकप्रत्यक्षतदीयविशेष्यान्तरभासकलौकिकसन्निकर्षादिघटिततदुपनीतभानसामग्र्योः सहकारित्वे कल्पनीये तत्र निर्विकल्पकव्यक्त्यादिघटितविशेष्यभासकसामग्र्याः सहकारित्वमेव नोपेयत इति विशेष्यभासकसामग्रीविरहादेव न घटत्वनिर्विकल्पकात्मकोपनायकमादाय निर्विकल्पकसाक्षात्कारापत्तिः । अत एव गदाधरभट्टाचार्यैरेवंविधप्रतिबध्यप्रतिबन्धकभावो नाभिहित इति वदन्ति ।

यत्र प्रथमं घटघटत्वादिनिर्विकल्पकं द्वितीयक्षणे घटत्वप्रकारकसविकल्पकं तत्र तृतीयक्षणे सविकल्पकस्यापि प्रत्यक्षं न स्यादिति आत्मनिष्ठप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावं परित्यज्य विषयनिष्ठप्रत्यासत्या तत्स्वीकारः ।

नन्वेवंविधप्रतिबध्यप्रतिबन्धकभावकल्पनाभियैव जन्यसविकल्पकस्यैव प्रत्यासत्तित्वं सेत्स्यति फलमुखगौरवस्यापि क्वचिददूषकत्वादित्याशङ्क्य प्राचीनैरपि एतादृशप्रतिबध्यप्रतिबन्धकभावोऽङ्गीकार्य इत्याशयेनाह—अन्यथेति । प्रत्यक्षसामान्यं प्रत्येव निर्विकल्पकत्वेन तादात्म्येन विरोधित्वानङ्गीकार इत्यर्थः । स्वविषयीभूतेति । सुखत्वादिनिर्विकल्पकविषयीभूतेत्यर्थः । सुखत्वस्य निर्विकल्पक इवेति । सुखत्वविषयकनिर्विकल्पके इवेत्यर्थः । तत्र यथालौकिकसन्निकर्षसत्त्वं तद्वदिति यावत् । लौकिकस्यैव मनःसन्निकर्षस्य सत्त्वादिति । निर्विकल्पकज्ञानस्य आत्मनि वर्त्तमानतया मनःसंयुक्तसमवायात्मकलौकिकसन्निकर्षो यथा सुखत्वविषयकनिर्विकल्पके वर्तते तथा सुखस्याप्यात्मनि वर्त्तमानतया सुखत्वेऽपि मनःसंयुक्तात्मसमवेतसुखसमवायाख्यलौकिकसन्निकर्षो वर्त्तत इति समुदितार्थः । लौकिकपदेन निर्विकल्पकविषयकप्रत्यक्षे आपाद्यमाने सुखत्वादिभानार्थं ज्ञानलक्षणाया अनपेक्षणं सूचितम् । ननु भवतु सुखत्वेऽपि लौकिकसन्निकर्षः, ततः किमायातमत आह—तदुपधानेनेति । सुखत्वोपधानेनेत्यर्थः । सुखत्ववैशिष्ट्येन, विषयितासम्बन्धेन सुखत्वप्रकारेणेति यावत् । निर्विकल्पकस्य प्रत्यक्षे= निर्विकल्पकविषयकप्रत्यक्षे । बाधकाभावादिति । अयमभिसन्धिः—जन्यसविकल्पकस्यैव प्रत्यासत्तितया अतिरिक्तप्रतिबध्यप्रतिबन्धकभावः प्रागुक्तो न कल्पनीय इत्यभिमन्यमानाः प्राचीनाः प्रष्टव्याः सुखोत्पत्त्यनन्तरं सुखसुखत्वयोर्यन्निर्विकल्पकं जायते, तदानीं सुखत्वेन सह मनःसंयुक्तसमवेतसमवायात्मकलौकिकसन्निकर्षस्य निर्विकल्पकेन च सह मनःसंयुक्त-

## ❀ काशिकानन्दी ❀

समवायात्मकसन्निकर्षस्य सत्त्वादुत्तरं विषयितासम्बन्धेन सुखत्वप्रकारकनिर्विकल्पकविशेष्यकप्रत्यक्षं कुतो नोत्पद्यते। यथा हि सुखेन सह मनःसंयुक्तसमवायस्य सुखत्वेन सह मनःसंयुक्तसमवेतसमवायस्य च सत्त्वात्तत्र समवायेन सुखत्वेन सुखप्रत्यक्षं, तथा निर्विकल्पकेन मनःसंयुक्तसमवायस्य सुखत्वेन सह मनःसंयुक्तसमवेतसमवायस्य च सत्त्वाद् विषयितासम्बन्धेन सुखत्वेन निर्विकल्पकप्रत्यक्षमपि प्राप्नोत्येव।

ननु विषयितासम्बन्धेन सुखत्वेन निर्विकल्पकसाक्षात्काराभ्युपगमे तस्य विषयितात्मकसंसर्गसाक्षात्कारात्मकतया तत्पूर्वं तत्कारणीभूतसंसर्गिसाक्षात्कारसत्त्वं वक्तव्यम्। तत्र च पूर्वं निर्विकल्पकविषयकसाक्षात्कारस्य विरहात् कथमेतत्संगतिः। सुखत्वेन सुखप्रत्यक्षे तु पूर्वं सुखसुखत्वयोर्निर्विकल्पकं जातमिति तयोः संसर्गप्रत्यक्षमुपपद्यते। सुखत्वेन निर्विकल्पकप्रत्यक्षे पूर्वं सुखत्वनिर्विकल्पकात्मकतत्साक्षात्कारसत्त्वेऽपि निर्विकल्पकविषयकसाक्षात्कारो नास्त्येव निर्विकल्पकस्योत्पद्यमानत्वाद्। न च प्रथमं निर्विकल्पकोत्पत्तिः ततस्तेन सह सन्निकर्षः तस्मिन्नेव वा काले सन्निकर्षः, द्वितीयक्षणे च निर्विकल्पकविषयकनिर्विकल्पकं तृतीयक्षणे च सुखत्वेन निर्विकल्पकप्रत्यक्षमापद्यत इति वाच्यम्। तृतीयक्षणे निर्विकल्पकस्य नाशेन तदानीं तल्लौकिकसाक्षात्कारायोगात्। तदलौकिकसाक्षात्कारस्तु इष्ट एव। विषयितया सुखत्वेन रूपेण निखिलसुखत्वज्ञानानां साक्षात्कारस्य तत्रोत्पादस्य संभवादिति चेद्?

न, एवं क्रमेण अपेक्षाबुद्ध्यनात्मकस्य कस्यापि ज्ञानस्य प्रत्यक्षं न स्यात्। ज्ञानोत्पत्तितृतीयक्षणे एव तत्साक्षात्कारसंभवात्तदानीं च विषयाभावात्। यदि च ज्ञानानुयोगिकसंसर्गसाक्षात्कारे संसर्गिसाक्षात्कारस्य न कारणत्वं किन्तु गुरुभूताया अपि संसर्गिसाक्षात्कारसामग्र्या एव, यद्वा विषयविरहकालेऽपि अव्यवहितपूर्वक्षणे विषयसत्त्वमादाय तल्लौकिकसाक्षात्कारोऽभ्युपगम्यत इत्युच्यते तदा सुखत्वेन निर्विकल्पकप्रत्यक्षमपि दुर्वारमेव स्यादिति।

यद्यपि घटत्वादिविषयकनिर्विकल्पकपूर्वक्षणे तदुत्तरक्षणे वा यत्र घटत्वप्रकारकस्मरणं तत्र सविकल्पकज्ञानस्य घटत्वप्रकारकस्मरणात्मकोपनायकस्य सत्त्वाद् घटत्वविषयकनिर्विकल्पकप्रत्यक्षमपि प्राचीनानामापद्यते। तथा च सुखत्वनिर्विकल्पकपर्यन्तगमनमनावश्यकम्।

तथापि घटत्वादिनिर्विकल्पकपूर्वक्षणे घटत्वस्मरणसत्त्वे तदुत्तरं घटत्वप्रकारकप्रत्यक्षमेवोत्पद्यते न तु तन्निर्विकल्पकं विशेषणज्ञानसत्त्वात्। उत्तरक्षणे तदुत्पादे तृतीयक्षणपर्यन्तं निर्विकल्पकमेव न तिष्ठतीति न तत्साक्षात्कारसंभवः। उपलक्षणपरो वा ग्रन्थ इत्येवं कथंचित्संगमनीयम्।

घटत्वादिना घटादीनां सामान्यलक्षणया मानसप्रत्यक्षं न केचिन्मन्यन्ते। अन्यथा नष्टकालीनो धूम इत्यादिप्रत्यक्षस्य घटमुख्यविशेष्यकत्वापत्तेः। चक्षुःसन्निकर्षाभावविशिष्ट-

## ❀ जागदीशी ❀

यत्तु घटादिप्रकारकप्रत्यक्षं प्रत्येव घटादिज्ञानत्वेन हेतुत्वे घटादिविषयकं घटो द्रव्यमित्याकारकमानसोपनीतभानं न स्यादिति। तन्न। घटादिधर्मिक-द्रव्यत्वाद्यसंसर्गाग्रहादिवशादेव मानसधियो घटादिविशेष्यकत्वसंभवात्। घट इत्येतावन्मात्राकारस्य बाधनिर्णयाऽप्रतिबध्यमानप्रत्यक्षस्यासत्त्वेऽपि क्षत्यभावात्।

## ❀ काशिकानन्दी ❀

ज्ञानात्मकप्रतिबन्धकाभावस्य विशेषसामग्रीत्वानिर्वाहस्य प्रागभिहितत्वात्। न चैवं घट-पदादिना यत्किंचिद्घटोपस्थित्युत्तरं घटत्वेन निखिलघटमानसानुत्पादे वह्निव्याप्योऽयं घट इत्यादिशाब्दोत्तरं घटत्वावच्छेदेन वह्निव्याप्तिसन्देहो न स्यादिति वाच्यम्। घटपदशक्ति-ग्रहस्यापि शब्दादिनैव तत्र संभवात्तदानीमेव निखिलघटोपस्थित्या स्मरणात्मकनिखिलघटो-पस्थित्यैव तत्संभवात्। एवं च घटत्वादिसामान्यलक्षणया मानसे घटभानासंभवे घटो द्रव्यमित्यादिमानसे घटादिभानं न स्यात्, यदि ज्ञानलक्षणाकार्यकारणभावस्थले तत्प्रकारकत्वस्यैव कार्यतावच्छेदकत्वं स्यात्। न च तद्विषयकप्रत्यक्षे तद्विषयकज्ञानस्य हेतुतायां निर्विकल्पके व्यभिचारः प्रागुक्त एवेति वाच्यम्। सासर्गिकविषयतानिरूपितत-द्विषयताकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वेन तद्दोषवारणात्। न च सामान्यलक्षणयाऽ-पूर्वभानं न स्याद् विशेष्यज्ञानस्य पूर्वं विरहादिति वाच्यम्। सामान्यलक्षणाप्रयोज्यभिन्नत्वा-देर्विषयताविशेषणेन तद्दोषवारणसंभवादित्येवं रीत्या स्वोक्तिं प्रतिचिक्षिप्सूनां तेषां मतं दूषयितुमनुवदति यत्त्विति। प्रत्येवेति। सामान्यलक्षणाऽप्रयोज्यत्वादेर्विषयताविशेषण-तायां गौरवमियेति भावः। चक्षुरादिसन्निकर्षसत्त्वे घटनिष्ठचाक्षुषविषयताप्रयोजकः स एव संभवतीत्यत उक्तं—मानसेति। न स्यादिति। निरुक्तमानसे घटस्य प्रकारता-विरहात्, घटनिष्ठविशेष्यताप्रयोजकस्य कस्यचिदभावात्। घटादिज्ञानस्य पूर्वं सत्त्वेऽपि तस्य प्रकारतामात्रप्रयोजकत्वादिति भावः। इदमुपलक्षणम्। घटो वह्निव्याप्यो न वा द्रव्यं न वा इत्यादिमानसमपि न स्यादित्यपि बोध्यम्।

धूमत्वादिना धूमादिशाब्दविरहवतोऽपि वह्निव्याप्तिज्ञानतद्व्यभिचारसंशयादेर्धूमेऽनु-भूयमानतया अपूर्वधूमादिभानार्थं सामान्यलक्षणाया आवश्यकत्वेऽपि प्रागभिहितदिशा घटत्वादिनाऽपूर्वघटमानसभानार्थं सामान्यलक्षणा नावश्यकीति मन्वानानां तेषां मतमुप-गम्याप्याह—तन्नेत्यादि। घटादिधर्मिकेति। घटो न द्रव्यमित्याद्याकारकबाधनिर्णया-भाववशादेवेत्यर्थः। ननु घट इत्येतावन्मात्राकारमानसं कथमुपपद्यतां तत्र बाधाऽप्रसिद्धेरत आह—घट इत्येतावन्मात्रेति। मात्रपदेन घटो द्रव्यमित्याद्याकारकताव्यावृत्तिः। बाधनिर्णयाऽप्रतिबध्येति। न हि "घटो न द्रव्यम्" इत्याकारकबाधनिर्णयप्रतिबध्य 'घटो द्रव्यम्' इतिज्ञानसमानं घटइत्येतावन्मात्राकारकज्ञानं तदीयबाधज्ञानाऽप्रसिद्धेः। घटो न इति ज्ञानस्य निर्धर्मितावच्छेदकतया अप्रतिबन्धकत्वात्। घटो न घट इति ज्ञानस्याहार्य-

❀ जागदीशी ❀

न चैवं घटत्वेन घटादेरनुपस्थितिदशायामपि तद्विशेष्यकं मानसप्रत्यक्षं स्यात् । तद्धर्मिकासंसर्गाग्रहस्य तदानीमपि सत्त्वादिति वाच्यम् । घटप्रकारकप्रत्यक्षत्वस्य घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वव्यापकतया

❀ काशिकानन्दी ❀

तथा प्रतिबन्धकत्वाऽसंभवात् । अयं न घट इत्याकारकेदन्त्वावच्छिन्नविशेष्यताकज्ञानस्य च अयं घट इत्याकारकेदन्त्वावच्छिन्नविशेष्यकज्ञानमात्रप्रतिबन्धकतया घट इत्येतावन्मात्राकारस्य बाधकं किंचिज्ज्ञानमप्रसिद्धमेव अयं घट इत्याकारकमानसं त्विष्टमेव । तस्य अयं न घट इति ज्ञानप्रतिबध्यत्वात् । न च अयं न घट इति बाधग्रहाभावस्य घट इत्याकारकमानसीयविशेष्यताप्रयोजकत्वमपि स्वीक्रियतां, किं नाम विनिगमकं यदयंघट इति ज्ञानीयविशेष्यतामेव स प्रयोजयतीति वाच्यम् । यतः प्रतिबन्धकाभावस्य कार्यमात्रे कारणतायाः सर्वसम्मततया अयं घट इति बुद्धिं प्रति अयं न घट इति निश्चयाभावस्य कारणत्वं सिद्ध्यति, तथा च तन्निष्ठविशेष्यताप्रयोजकत्वमपि बाधग्रहाभावस्य सेत्स्यति । अयं न घट इति निश्चयसत्त्वेऽपि घट इत्येतावन्मात्राकारज्ञानस्योत्पद्यमानतया तद्धेतुत्वं न तादृशाभावस्येति तन्निष्ठविशेष्यताप्रयोजकत्वं तस्य नास्तीति ।

केचित्तु "घटो द्रव्यं", "घटः" इत्यादौ सामान्यलक्षणयैव घटादिभानस्यावश्यंभावितया ग्रन्थासंगतिरित्याशङ्क्यान्यथा समादधिरे । तथा हि कालिकादिसम्बन्धान्तरेण यत्र घटत्वप्रकारकप्रत्यक्षं तदुत्तरं समवायेन घटत्वेन घटभानायोगात् घटोद्रव्यमित्याकारकप्रत्यक्षंनोपपद्यते । एवं कालिकादिना द्रव्यत्वज्ञानस्यापि पूर्वसत्त्वं वक्तव्यम्, अन्यथा द्रव्यत्वेनैव घटप्रत्यक्षसंभवात् । कालिकेन घटत्वादिप्रत्यक्षोत्तरं समवायेन घटत्वप्रकारकं तु न सामन्यलक्षणया संभवति तदितरसम्बन्धानवच्छिन्नतद्विषयकज्ञानत्वेनैव कारणत्वादिति वदन्ति ।

तन्मन्दम्, तत्र सामान्यलक्षणया समवायेन ज्ञानानुत्पादेऽपि ज्ञानलक्षणया तदुत्पादे उक्तकार्यकारणभावव्यभिचारस्य त्वन्मते दुर्वारत्वात् । न "चैवं घटत्वेन घटादेरनुपस्थितिदशायामि"त्याद्युत्तरग्रन्थानुरोधेन पूर्वक्षणे समवायेन घटत्वप्रकारकज्ञानस्यावश्यवक्तव्यतया समवायेतरसम्बन्धानवच्छिन्नघटत्वप्रकारकज्ञानस्यावश्यंभावाच्च । न चेति । एवम् = असंसर्गाग्रहस्यैव मानसज्ञाने विशेष्यताप्रयोजकत्वे । तद्विशेष्यकं = घटत्वावच्छिन्नविशेष्यताकम् । घटत्वद्रव्यत्वयोरुपस्थितिस्तु तत्रावश्यकी । घटो द्रव्यमिति प्रत्यक्षस्य घटत्वद्रव्यत्वयोरंशे प्रकारतया तत्प्रकारकप्रत्यक्षे तद्विषयकज्ञानस्य हेतुत्वात् । तद्धर्मिकासंसर्गाग्रहस्य = घटत्वावच्छिन्नधर्मिताकद्रव्यत्वाभावग्रहात्मकबाधनिश्चयाभावस्य । तदानीं = घटत्वेन घटादेरनुपस्थितिदशायाम् । सत्त्वादिति । न चेष्टापत्तिः । तथा सति प्रत्यक्षकारणस्य तस्य इतराऽप्रयोज्यविषयताप्रयोजकतया प्रत्यासत्त्यन्तरत्वं स्यात् । न ह्यसंसर्गाग्रहस्य प्रत्यासत्तित्वं कस्यचिदभिमतम् । घटप्रकारकप्रत्यक्षत्वस्य = घटवान् घटज्ञानवानहमित्याद्याकारकप्रत्यक्षत्वस्य । घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वव्यापकतया = घटत्वा-

## ❀ काशिकानन्दी ❀

वच्छिन्नघटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वव्यापकतया।

एतेन घटप्रकारकप्रत्यक्षत्वस्य घटनिष्ठलौकिकविशेष्यताकप्रत्यक्षत्वव्यापकत्वं न संभवति। घटत्वादिसामान्यलक्षणया जायमानचाक्षुषादिप्रत्यक्षे घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वसत्त्वेपि घटप्रकारकप्रत्यक्षत्वविरहात्। न च घटनिष्ठालौकिकविशेष्यताकमानसप्रत्यक्षत्वव्यापकत्वमेव विवक्षितमिति वाच्यम्। एवमपि घटत्वेन यत्किंचिद्घटोपस्थित्यनन्तरं घटत्वेन ज्ञानादिभ्रमोत्तरं वा जायमाननिखिलघटविषयकसामान्यलक्षणाजन्यमानसप्रत्यक्ष एव प्रागनुपस्थितघटनिष्ठलौकिकविशेष्यताकप्रत्यक्षत्वसत्त्वेन व्यापकत्वानिर्वाहात्। न च घटत्वावच्छिन्नप्रकारताकप्रत्यक्षत्वस्य घटनिष्ठालौकिकविशेष्यताकमानसप्रत्यक्षत्वव्यापकत्वं विवक्षितमिति वाच्यम्। एवं सति घटत्वेन यत्किंचिद्घटोपस्थित्युत्तरमनुपस्थितघटविशेष्यकद्रव्यत्वादिप्रकारकमानसस्य संभवेन प्रागभिहितदोषतादवस्थ्यात्। एवंविधनियमस्य प्रकृतानुपयोगित्वादिति परास्तम्। घटत्वावच्छिन्नतत्तद्घटनिष्ठप्रकारताकप्रत्यक्षत्वस्य घटत्वावच्छिन्नतत्तद्घटनिष्ठविशेष्यताकमानसप्रत्यक्षत्वव्यापकत्वमित्यत्र तात्पर्यात्। एवमपरापरघटमादायापि व्यापकत्वं बोध्यम्।

अहं घटज्ञानवानित्याद्याकारमानसप्रत्यक्षे आत्मत्वावच्छिन्नस्य विशेष्यता वर्त्तते, तदपि आत्मप्रकारकज्ञानत्वव्यापकतायास्तत्राभावाद् व्यापकत्वं न सिद्ध्येदिति अलौकिकपदमलौकिकामानसपरम्। यदि च तत्तद्घटादेर्विशिष्योपादानस्यावश्यकतयां नैष दोष इति विभाव्यते तदा अलौकिकपदं मानसमात्रपरमिति द्रष्टव्यम्।

सामान्यप्रत्यासत्त्यप्रयोज्यघटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वव्यापकत्वं घटप्रकारकप्रत्यक्षत्वस्येत्येव नियम इत्यप्याहुः। अत्र मतेऽपि यत्किंचिद्घटज्ञानवतोऽनुपस्थितघटविशेष्यकद्रव्यत्वप्रकारकज्ञानस्यासंसर्गाग्रहमात्रवशादापत्तेः तत्तद्घटविशेष्यकप्रत्यक्षत्वस्य तत्तद्घटप्रकारकत्वव्यापकत्वनियम एवाङ्गीकार्यं इति द्रष्टव्यम्।

लौकिकविशेष्यताशून्यघटनिष्ठविशेष्यताशालिप्रत्यक्षत्वव्यापकतयेत्यथ इति केचित्। तन्न। घटत्वेन पटादिभ्रमोत्तरजायमानघटत्वप्रकारकनिखिलघटविशेष्यताकालौकिकचाक्षुषस्य घटप्रकारत्वविरहात्। न च घटनिष्ठत्वं न वक्तव्यम्। तथा च लौकिकविषयताशून्यघटप्रकारकप्रत्यक्षत्वव्याप्यत्वविलक्षणान्न दोष इति वाच्यम्। तथा सति घटो द्रव्यं पटं तु जानामीति प्रत्यक्षस्यैव घटज्ञानं विनोत्पादापत्तेः। त्वदीयनियमानुसारेण तादृशप्रत्यक्षत्वव्यापकताया घटप्रकारप्रत्यक्षत्वेऽलाभात्। न च घटत्वनिष्ठप्रकारतानिरूपितलौकिकविशेष्यताशून्यघटनिष्ठविशेष्यताकप्रत्यक्षत्वव्यापकत्वं घटप्रकारप्रत्यक्षत्वस्योच्यत इति वाच्यम्। पटत्वेन घटविषयकचाक्षुषादिभ्रमे व्यभिचारात्। घटत्वसामान्यलक्षणाजन्यनिखिलघटविषयकमानसे व्यभिचारस्यानुपदोक्तस्यानुद्धाराच्च।

वस्तुतस्तु सामान्यलक्षणया घटत्वेन निखिलघटमानसं न भवत्येवेति मताभिप्रायेणैव जगदीशग्रन्थप्रवृत्तेर्घटनिष्ठालौकिकविशेष्यताकमानसप्रत्यक्षत्वव्यापकत्वमेव सुघटमिति न शङ्कालेश एव।

❀ जागदीशी ❀

तदवच्छिन्नं प्रति हेतुभूतस्य घटज्ञानस्य विरहादेवानुपस्थितघटादेर्विशेष्यविधया मानसग्रहाऽसंभवात्।

❀ काशिकानन्दी ❀

तदवच्छिन्नं प्रति = घटप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति। हेतुभूतस्य घटज्ञानस्येति। तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकज्ञानस्य हेतुत्वादिति भावः। मानसग्रहासंभवादिति। व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्योत्पादसामग्र्या अपेक्षितत्वेन घटप्रकारकप्रत्यक्षत्वात्मकव्यापकधर्मावच्छिन्नकार्योत्पादसामग्रीभूतघटज्ञानस्य तदानीं विरहादेव तादृशमानसापत्त्यसंभवादित्यर्थः।

अथ व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्यजनकसामग्र्याः सहकारितेति नियमः। अत्र च असंसर्गाग्रहजन्यतावच्छेदकत्वं न घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वस्य तादृशमानसप्रत्यक्षत्वस्य वेति घटो द्रव्यमित्याकारकमानसजनने असंसर्गाग्रहेण घटप्रकारकप्रत्यक्षसामग्री कथमपेक्ष्यताम्। न च घटत्वावच्छिन्नविशेष्यताकद्रव्यत्वप्रकारकमानसप्रत्यक्षत्वस्य कार्यतावच्छेदकतया घटप्रकारकप्रत्यक्षसामग्र्यपेक्षा युज्यत इति वाच्यम्। घटत्वावच्छिन्नविशेष्यताकद्रव्यत्वप्रकारकज्ञानत्वमात्रस्य बाधनिर्णयप्रतिबध्यतावच्छेदकत्वात् तस्यैव बाधाभावकार्यतावच्छेदकत्वात्। तादृशं ज्ञानत्वं च न व्याप्यधर्मः।

अत्राहुः, बाधकालेऽपि द्रव्यत्वादिप्रकारकप्रत्यक्षं जायतामितीच्छावशाद् घटो द्रव्यमित्याकारकप्रत्यक्षं जायते अतः घटविशेष्यकद्रव्यत्वप्रकारकज्ञानत्वमात्रं न बाधाभावकार्यतावच्छेदकम्! नापीच्छाविरहविशिष्टं तादृशज्ञानत्वम्। चाक्षुषं जायतामितीच्छाकालेऽपि बाधसत्त्वे स्पार्शनसामग्र्या स्पार्शजननात्। अतः चाक्षुषेच्छाविरहविशिष्टद्रव्यत्वप्रकारकचाक्षुषत्व-मानसेच्छाविरहविशिष्टद्रव्यत्वप्रकारकमानसत्वादिकमेव बाधाभावकार्यतावच्छेदकं, स्याद्वा चाक्षुषादीच्छाविरहविशिष्टबाधग्रहस्यैव चाक्षुषत्वाद्यवच्छिन्ने प्रतिबन्धकतया तदभावस्य तथाविधचाक्षुषत्वाद्यवच्छिन्ने हेतुत्वम्। एवं च घटत्वाद्यवच्छिन्नविशेष्यतानिरूपितमानसत्वादेरेव बाधग्रहाभावकार्यतावच्छेदकतया घटप्रकारकप्रत्यक्षत्वव्याप्यता असंसर्गाग्रहकार्यतावच्छेदके सुघटैव। एवं च घटो द्रव्यमित्यादिमानसस्य घटनिष्ठालौकिकविशेष्यतानियमाद् घटत्वावच्छिन्नविशेष्यताकद्रव्यत्वादिप्रकारकमानसत्वव्यापकतातात्पर्येण घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वव्यापकत्वाभिधानं तर्कालङ्काराणामिति।

परे तु घटनिष्ठालौकिकविशेष्यताकमानसप्रत्यक्षत्वावच्छिन्नं घटत्वावच्छिन्नविशेष्यताकमानसप्रत्यक्षत्वावच्छिन्नं वा प्रति घटज्ञानस्य पृथगेव कारणत्वमित्यभिप्रायवान् जगदीशः। न चैवं घटविशेष्यकप्रत्यक्षकारणतया घटज्ञानस्य प्रत्यासत्त्यन्तरतापत्तिरिति वाच्यम्। प्रत्यासत्त्यन्तरप्रयोज्यविषयतानवच्छिन्नविषयताप्रयोजकस्यैव प्रत्यासत्त्यन्तरत्वात्। प्रकृते ज्ञानलक्षणाप्रयोज्यघटप्रकारताश्रयनिष्ठविशेष्यताप्रयोजकत्वेऽपि न प्रत्यासत्त्यन्तरतापत्तिः। न हि तादृशप्रकारताशून्यकाले कदाचिदपि तत्र मानसविशेष्यतेति, तदिदं दर्शयितुं घटप्रकारताकप्रत्यक्षत्वस्य व्यापकत्वमभिहितमिति वदन्ति।

तदपरे न मन्यन्ते, तथा हि धूमत्वावच्छिन्ना व्याप्तिः सन्निकृष्टधूमविषये धूमत्वेन प्रत्यक्षेण ज्ञायते ततः स्मृता सा तृतीयलिङ्गपरामर्शे पक्षनिष्ठधूमवृत्ति-

❀ दीधितिः ❀

ततः स्मृता सेति । धूमसमानाधिकरणात्यन्ताभावा-ऽप्रतियोगिवह्निसमानाधिकरणवृत्तिधूमत्वं, वह्निमदन्याऽवृत्तित्वं

❀ जागदीशी ❀

घटो द्रव्यमित्यादिमानसस्य घटं जानामीत्याद्याकारकत्वनियमात् । अत एवोपनीतं विशेषणतयैव भासत इत्यभिधाय मानसे तु नायं नियम इति प्राचीनैरप्युक्तमित्यलं पल्लवितेन ।

व्याप्तेः सामानाधिकरण्यस्वरूपत्वे परामर्शस्य भ्रमत्वापत्तिः अतो भावार्थमाह धूमेत्यादि । लाघवादाह वह्निमदिति । न च केवलान्वयिन्यव्याप्तिः

❀ काशिकानन्दी ❀

तत्प्रकारकप्रत्यक्षत्वव्यापकत्वं स्फुटयति – घटो द्रव्यमित्यादि । घटं जनामीति घटविशिष्टज्ञनवानहमित्यर्थः । अत्र घटस्य ज्ञानांशे प्रकारत्वम् । इत्याकारकत्वनियमादिति । घटो द्रव्यं घटमहं जानामीत्यादिसमूहालम्बनता ज्ञानस्य बोध्या । अन्यथा घटो द्रव्यमित्याकारताया असिद्धेः । द्रव्यत्वविशिष्टघटं जानामीत्याकारताया एव प्रसङ्गात् । मानसे घटादेर्मुख्यविशेष्यतया भानेऽपसिद्धान्तापत्तिं वारयति—अत एवेति । अत एव= ज्ञानातिरिक्तानामपि मानसमुख्यविशेष्यत्वादेव ।

सामानाधिकरण्यस्वरूपत्वे = हेतुसमानाधिकरणात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यस्वरूपत्वे । परामर्शस्येति । पर्वतादौ धूमादेरित्यादिः । भ्रमतापत्तेरिति । निरुक्तसामानाधिकरण्यस्य प्रतिधूमं भिन्नत्वेन महानसीयधूमे गृहीतस्य तद्वृत्तिसामानाधिकरण्यस्य पर्वतीयधूमे विरहेण पर्वतीयधूमे तद्वैशिष्ट्यावगाहिज्ञानस्य भ्रमत्वापत्तिरित्यर्थः । भावार्थं = तात्पर्यलक्ष्यार्थम् ।

❀ मणिदीपिनी ❀

तत् = अनुमितिप्रयोजकीभूतपर्वतीयधूमधर्मिकव्याप्तिभानप्रयोजननिखिलधूमप्रत्यक्ष-प्रयोजकतया सामान्यलक्षणाऽङ्गीकरणीयेत्येतत् । अपरे=सामान्यलक्षणाविद्वेषिणः धूमत्वावच्छिन्ना = धूमत्वात्मिका । सन्निकृष्टधूमविषये = महानसीयधूमात्मके व्याप्तिग्रहविषयीभूते । निष्ठत्वं सप्तम्यर्थः । धूमत्वेन = धूमत्वात्मकतया । धूमत्वात्मकतया प्रत्यक्षविषयीक्रियत इति समुदितार्थः । सा = व्याप्तिः । पक्षनिष्ठेति । पर्व

तया ज्ञायते, ततोऽनुमितिः । तदनभ्युपगमेऽपि सन्निकृष्टधूमविषये धूमत्त्वेन धूमो वह्निव्याप्यः इत्यनुभवस्तथैव व्याप्तिस्मरणं ततो धूमवानयमितिव्याप्ति

---

❀ दीधितिः ❀

वह्निसम्बन्धितावच्छेदकरूपवत्त्वं वा व्याप्तिः । एकैव च सा

❀ जागदीशी ❀

व्यतिरेक्यनुमानस्यैव परैः स्वीकारादिति भावः ।

केवलान्वयिनः संग्राह्यत्वेऽपि लघुव्याप्तिमाह वह्निसम्बन्धितेति ।

❀ काशिकानन्दी ❀

व्यतिरेक्यनुमानस्यैवेति । व्यतिरेकिणः प्रतियोगत्वसम्बन्धेनाभाववतः धूमादिहेतुकतया वह्न्यादेरनुमानस्यैवेत्यर्थः । प्रमेयत्वादिकं न प्रतियोगिता सम्बन्धेन व्यतिरेकविशिष्टं, तद्व्यतिरेकाऽप्रसिद्धेः । परैः = दीधितिकृत् प्रभृतिभिः । तेन गुरूणां मतेऽभावस्याधिकरणस्वरूपत्वेन वह्निमदन्यवृत्तित्वाभावस्य महानसीयधूमादिस्वरूपस्यैकस्याभावेन सामान्यलक्षणास्वीकारापत्तावपि न दोषः । परामर्शाभ्युपगन्त्रभिप्रायेणैव "तथाही" त्यादि "ततोऽनुमिति" रित्यन्तमूलग्रन्थप्रवृत्तेर्नैयायिकादिमतानुसारेणैव तद्ग्रन्थस्य व्याख्येयत्वान्नासंगतिः । मीमांसकैः परामर्शानभ्युपगमात् । "तदनभ्युपभमेऽपी"त्यादिग्रन्थेनैव मीमांसकमतप्रतिपादनात् ।

संग्राह्यत्वेपीति । मूलकृता केवलान्वय्यनुमानस्यापि स्वीकारेण तस्यापि संग्र-

❀ मणिदीपिनी ❀

तादिनिष्ठेत्यर्थः । वन्हिमदन्याऽवृत्तित्वस्थ व्याप्तित्वे धूमत्वावच्छिन्नेति मूलस्य यथाश्रुतोऽर्थः । धूमत्वनेत्ि तृतीयाया अवच्छिन्नत्वमर्थ इति ध्येयम् । सामान्यलक्षणाविद्वेषिनैयायिकैकदेशाद्यनुरोधेनोक्त्वा संप्रति मीमांसकानुरोधेनाह—तदनभ्युपगमेऽपीति । तृतीयलिङ्गपरामर्शानभ्युपगमेऽपीत्यर्थः । धूमत्त्वेन = धूमत्वमुपादाय । इत्यनुभवः = इत्येवं व्याप्त्यनुभवः । वह्निमदन्याऽवृत्तित्वं व्याप्तिरिति मते धूमत्वेनेति तृतीयाया अवच्छिन्नत्वमर्थः। तस्य वह्निव्याप्यपदार्थैकदेशे वह्निव्याप्तावन्वयः । तथा च धूमो धूमत्वावच्छिन्नवह्निव्याप्तिविशिष्ट इत्यर्थः । धूमविषये इति सप्तम्यर्थनिष्ठत्वस्य अनुभव इत्तत्र पूरणीये व्याप्तेरित्यत्रान्वयः । तथैव = धूमत्वेन धूमो वह्निव्याप्य इत्याकारेणैव । धूमवानयमिति = धूमवानयमित्येवं, पक्षवृत्तिधूमज्ञानादित्य-

स्मृतिप्रकारेण धूमत्वेन पक्षवृत्तिधूमज्ञानादनुमितिः, व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञानानामेकप्रकारकत्वेनानुमितिहेतुत्वात्।

❀ दीधितिः ❀

सर्वधूमसाधारणीति भावः।

व्याप्तिनानात्वे तु पर्वतीयवह्नेरसन्निकर्षे तत्सामानाधिकरण्यग्रहायोगः। अन्यदीयवह्निसामानाधिकरण्यस्य तत्र भानाङ्गीकारे

❀ जागदीशी ❀

अत्रावच्छेदकत्वं स्वरूपसम्बन्धविशेष इति हृदयम्। तेन प्रागुक्तावच्छेदकत्वाऽघटनया गौरवानवकाशः। सर्वेति। सामानाधिकरण्योपलक्षितस्य धूमत्वादेः सकलधूमनिष्ठत्वादिति भावः।

व्याप्तिनानात्व इति। सामानाधिकरण्यस्वरूपतयेत्यादिः। तत्र = पर्वतीयधूमे। अथानुभवस्मरणयोः समानप्रकारतामात्रेण हेतुहेतुमद्भावे पूर्वागृही-

❀ काशिकानन्दी ❀

हावश्यकत्वादिति भावः। स्वरूपसम्बन्धविशेष इति। अतिरिक्तवृत्तिधर्मस्य न स्वरूपसम्बन्धरूपावच्छेदकत्वानुपगमेन धूमवान् वह्नेरित्यादौ नातिव्याप्तिः। सामानाधिकरण्यसम्बन्धेन धूमसम्बन्ध्यतिरिक्तवृत्तित्वाद् वह्नित्वस्य। तेन = स्वरूपसम्बन्धरूपावच्छेदकत्वस्याभिप्रेतत्वेन। प्रागुक्तेति। अवच्छेदकत्वनिरुक्त्युक्तानतिरिक्तवृत्तित्वादिरूपेत्यर्थः। सामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वे वक्ष्यमाणदोषतादवस्थ्यम्, महानसीयवह्निसामानाधिकरण्यविशिष्टधूमत्वस्य पर्वतीयधूमे विरहादत आह—समानाधिकरणोपलक्षितेति।

समानप्रकारतामात्रेणेति। मात्रपदेन समानविषयकत्वव्यवच्छेदः। पूर्वागृही-

❀ मणिदीपिनी ❀

न्वयः। व्याप्ति स्मृतिप्रकारेण=व्याप्तिस्मृतौ प्रकारीभूतेन। तत्स्मरणेति। व्याप्तिस्मरणेत्यर्थः। एकप्रकारकत्वेनेति। यद्रूपावच्छिन्नधर्मिकतया व्याप्त्यनुभवतत्स्मरणं तद्रूपावच्छिन्नपक्षवृत्तित्वज्ञानमनुमितिहेतुरिति ध्येयम्। तेन व्याप्तित्वेन व्याप्तेरनुभवात्तेनरूपेण पक्षवृत्तित्वज्ञानस्यानुमितिहेतुत्वासंभवेऽपि न क्षतिः।

ननु सामान्यप्रत्यासत्तिविरहे असन्निकृष्टघटेषु घटादिपदशक्तिग्रहाभावात् शाब्दबोधेऽपूर्वव्यक्तिभानं न स्यादिति घटं क्रीणीहीत्यादिवाक्यत आपणस्थघटबोधा-

**गवादिपदेष्वपि शक्त्यनुभवतत्स्मरणवाक्यार्थानुभवानामेकप्रकारकत्वेन हेतुहेतुमद्भाव इत्यपूर्वे वक्ष्यते।**

❀ दीधितिः ❀

भ्रमत्वापत्तिरिति द्रष्टव्यम्। **गवादिपदेष्वपीति**। शक्त्यनुभवशक्यस्मरणे हेतू, हेतुमान् वाक्यार्थबोधः।

❀ जागदीशी ❀

तस्यापि स्मरणे भानं स्यादिति स्मृतेरगृहीतग्राहित्वेन तन्मते. प्रामाण्यापत्तिरित्यन्यथा योजयति शक्त्यनुभवेति। अत्र शक्यस्मृतेरिव शक्त्यनुभ-

❀ काशिकानन्दी ❀

तस्यापि = पूर्वाननुभूतस्यापि। भानं स्यादिति। घटत्वेनैकघटानुभवोत्तरं घटत्वेन घटान्तरस्यापि स्मरणे भानं स्यात्। न च घटान्तरभासकसामग्रीविरहादेव न दोष इति वाच्यम्। प्रकारतायाः किंचिन्निष्ठविशेष्यतानिरूपितत्वनैयत्येन प्रकारताप्रयोजकस्यैव विशेष्यताया अपि प्रयोजकत्वात्। अत एवाऽनुभूतघटस्य तत्र भानोपपत्तिः। एवं च नियामकाभावेन निखिलघटविशेष्यताऽपि प्रकारताप्रयोजकसामग्र्या प्रयोज्येतेति भावः। तन्मते = अगृहीतग्राहिणः प्रामाण्याभ्युपगन्तृमते। समानप्रकारतामात्रेण हेतुहेतुमद्भावमते इति वार्थः। प्रामाण्यापत्तिः = प्रमात्वापत्तिः। अन्यथा योजयतीति। तदादिपदानां बुद्धिविषयता-

❀ मणिदीपिनी ❀

न स्यात्। किन्तु गृहस्थघटकर्मकबोध एव स्यात्। तस्माच्छाब्दबोधेऽपूर्वव्यक्तिभानार्थं सामान्यलक्षणाभ्युपगन्तव्येत्यत आह—**गवादिपदेष्वपीति**।

**तत्स्मरणेति**। शक्यस्मरणेत्यर्थः। न तु शक्तिस्मरणेत्यर्थः। तथा सति पदार्थस्मरणस्य समानविषयकत्वेन हेतुत्वशङ्काया अनिराकरणेन न्यूनतापत्तेः। न च तर्हि शक्तिस्मरणस्य समानविषयकत्वेन हेतुत्वशङ्काऽनिराकरणेनैव न्यूनता स्यादिति वाच्यम्। शक्तिस्मृतेः शब्दबोधहेतुत्वविरहेऽपि क्षत्यभावात्। न चैवं घटादिपदादाकाशस्मरणेनाकाशस्यापि शाब्दबोधापत्तिरिति वाच्यम्। वृत्तिज्ञानजन्यपदार्थस्मृतेः कारणत्वोपगमेनैव तद्दोषवारणे शक्तिस्मृतेः साक्षाच्छाब्दबोधहेतुत्वविरहेऽपि क्षत्यभावात्। एवं च पदार्थस्मरणस्य समानप्रकारकत्वेनैव कारणत्वं न तु समानविषयकत्वेनेत्यायाते पदार्थस्मरणेऽपूर्वव्यक्तेर्भानस्यानावश्यकतासिद्धौ सत्यां पदार्थस्मरणहेतुभूतवृत्तिज्ञानस्यापूर्वव्यक्तिविषयकत्वं सुतरामेवानपेक्षितं सिद्ध्यतीति तदकथनेऽपि न्यूनताविरहात्। अथैवं शक्त्यनुभवकथनस्याप्यनुपयोगित्वं स्यात्। शक्तिस्मरणस्य शाब्दबोधाहेतुत्वे सुतरां शक्त्यनुभवस्य तदहेतुत्वादिति तस्यापि पदार्थस्मरणमा-

# तत्र योग्यतादिबलादपूर्व व्यक्तिलाभोऽनुमाने तु पक्षधर्मताबलाद् ।

❀ जागदीशी ❀

वस्यापि साक्षादेव शाब्दबोधजनकत्वे हेतुपदं यथाश्रुतार्थमेव । अन्यथा

❀ काशिकानन्दी ❀

वच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्ततया तत्स्मरणपदस्य शक्यस्मरणपरतया, शक्यनुभव तत्स्मरणे च वाक्यार्थबोधश्चेति द्वन्द्वे यथासंख्यविज्ञानेन हेतुहेतुमद्भाव इत्यत्र हेतुपदा स्य शक्यनुभवतत्स्मरणान्विततया हेतुमत्पदस्यवाक्यार्थानुभवान्विततया च योजयतीत्यर्थः न च तत्पदस्य शक्यपरकत्वे शक्तिस्मृतेरकथनेन न्यूनतेति वाच्यम् । शक्यनुभवस्य शक्तिस्मृतिद्वारा प्रयोजकत्त्वेन शक्यनुभवस्य समानप्रकारकत्त्वेन प्रयोजकताकथनादे शक्तिस्मृतावपि तथात्वलाभादिति ।

यद्यपि व्यवहाराधीनशक्यनुमितावपूर्वव्यक्तिभानसंभवेन समानप्रकारकत्वमात्रे शक्यनुभवादीनां हेतुत्वमनावश्यकम् । न च गौर्गोपदशक्येत्याकारानुमितौ पक्षधर्मता गवि विरहान्नापूर्वभानमिति वाच्यम् । गोपदं गोशक्तमित्यनुमितावेव निखिलगवां भान संभवात् । न च व्याकरणादितः शक्तिग्रहेऽपूर्वव्यक्तिषु न शक्तिग्रहसंभव इति वाच्यम् पदान्तरशक्यतयानुमिते एवार्थे व्याकरणात्पदान्तरशक्तिग्रहात् । यथा कर्त्तरि कृदिति तत्र कर्त्तृपदस्य पूर्वं शक्तिर्गृहीता । तद्ग्रहकाले च सकलाः कर्त्तार उपस्थिता व्यवहा जानुमित्या । सुखादिपदशक्तिग्रहविषयत्वेनोपस्थितेषु सुखेष्वेव स्वर्गादिपदानां सुखविशे त्वादिना शक्तिग्रहः तथापि यत्पुरुषस्य गौर्गोपदशक्येत्येव व्यवहारादितोऽनुमितिर्न गोपदं गोशक्तमिति तस्य दृष्टे एव गवि शक्तिग्रहादपूर्वभानार्थं शाब्दबोधस्य समानप्रकार त्वेनैव शक्तिधीकार्यत्त्वमित्यवधेयम् ।

अन्यथा = पदार्थस्मृतावेवोपयोगित्वाः शक्तिधियः शाब्दबोधाहेतुत्त्वे ।

❀ मणिदीपिनी ❀

त्रोपयोगितया समानविषयकत्वानावश्यकमेवेति विभाव्यते तदा शक्यनुभवस्य शक्ति स्मृतिद्वारा शाब्दबोधोपयोगित्वादेकस्य तथात्वकथनेनोपपत्तिरिति तत्वप्रदीपोक्त तात्पर्यमेव द्रष्टव्यम् । अत्र शक्यनुभवतत्स्मरणे च वाक्यार्थबोधश्चेति द्वन्द्वा वाक्यार्थबोधस्य हेतुमत्त्वमितरयोर्हेतुत्वं च सिद्ध्यति । व्याप्त्यनुभवेत्यादि पूर्वग्रन्थसमशीलत्वेन तथाविग्रहतात्पर्यमवसीयते । तत्रेत्यादि । शाब्दबो योग्यताबलादपूर्वव्यक्तिलाभः । योग्यता च पदार्थे पदार्थान्तरवत्ता । क्रयणादिरूपेऽ ऽपूर्वघटवत्तासत्त्वात्तद्बोधः । न च योग्यताज्ञानस्य शाब्दबोहेतुतया अपूर्वव्यक्तेरज्ञा कथं तस्य शाब्दे भानमिति वाच्यम् । स्वरूपसत्या एव योग्यताया अपूर्वव्यक्तिभा

# धूमो वह्निव्याप्य इत्यनुभवो न तु सर्वो धूमो

❀ दीधितिः ❀

न चैवं जातिशक्तिवादविरोधः। जातौ व्यक्तौ च शक्तिः। परन्तु जातिविषयकत्वेनैव ज्ञाता शक्तिर्व्यक्तिं स्मारयति

❀ जागदीशी ❀

प्रयोजकपरं तद् बोध्यम्। एवमिति। गोत्वप्रकारेण गोधर्मिकशक्तिग्रहस्य शाब्दधीहेतुत्वे इत्यर्थः। धर्मिणि शक्तिसत्त्वेऽपि तद्विषयकत्वस्य शाब्दधीजनकतानवच्छेदकत्वात्तत्राऽशक्यत्वव्यवहार इति कुब्जशक्तिवादिनः श्रीकरस्य मतमनुसृत्य परिहरति—जातौ व्यक्तौ चेत्यादि। जातिविषयकत्वेनैवेति।

❀ काशिकानन्दी ❀

तद्=हेतुपदम्। गोत्वादिप्रकारेण शक्त्यादिविशेष्यकग्रहस्य शाब्दधीहेतुत्वे जातिशक्तिवादविरोधो नास्तीत्यत आह—गोधर्मिकेति। धर्मिणि=गवादौ। तद्विषयकत्वस्य=गवादिविषयकत्वस्य। तत्र=गवादौ। अशक्यत्वव्यवहार इति। यद्विषयकत्वेन शक्तिज्ञानस्य शाब्दधीजनकत्वं तत्त्वस्यैव वाच्यताव्यवहारनियामकत्वम्। अत एवान्वयांशे कुब्जशक्तिसत्त्वेऽपि न तत्र गवादिपदवाच्यताव्यवहारः।

नन्वेवं व्यक्तिविषयकत्वस्य शाब्दधीजनकतावच्छेदककोटावप्रवेशे तत्र शक्तिस्वीकारः किमर्थः। न च शाब्दबोधे व्यक्तिभानार्थं व्यक्तौ शक्तिरावश्यकीति वाच्यम्। जातिशक्तिज्ञानकार्यतावच्छेदकतयैव शाब्दबोधे व्यक्तिभानसंभवात्। न च गोत्वशक्तिस्मरणोत्तरं समवायेन गोत्वविशिष्टस्य गोरिव कालिकादिना गोत्वविशिष्टस्य घटादेरपि शाब्दापत्तिरिति तद्वारणाय स्वरूपसत्या व्यक्तिशक्तेरपि व्यक्तिभाननियामकत्वमभ्युपगन्तव्यमिति वाच्यम्। गोत्वेन रूपेण गवये गृहीतवृत्तिकस्य कालिकेन गोत्वविशिष्टे गृहीतगोपदवृत्तिकस्य च गोत्वेन रूपेण गवयादीनां शाब्दबोधानुत्पत्तिप्रसङ्गात्। गवयादिषु शक्तिविरहात्। न च कालिकादिना गोत्वविशिष्टविषयकशाब्दबुद्धिं प्रति कालिकादिना गोत्वविशिष्टे शक्तिभ्रमस्य

❀ मणिदीपिनी ❀

कत्वोपगमात्। तत्प्रकारकशाब्दे एव तत्प्रकारकज्ञानत्वेन योग्यताज्ञानस्य हेतुत्वात्। अयोग्यताज्ञानाभावत्वेन वा तद्भासकत्वम्। एवमनुमानेऽपि अपक्षधर्मत्वज्ञानाभावत्वेनापूर्वभासकत्वम्। ननु सर्वस्मिन् धूमे व्याप्तिग्रहानुरोधेनैव सामान्यलक्षणा वाच्येत्यत आह—धूम इति। अथवा समानाधिकरणयोरेव व्याप्तिदिति मते धूमो महानसीयवह्नेर्व्याप्य इत्यादिव्यवहारवारणार्थं धूमपदस्य सकलधूमार्थकताया आवश्यकत्वात्तादृशशब्दप्रयोजकतया सर्वो धूमो वह्निव्याप्य इति ज्ञानमावश्यकमित्याशङ्कयाह—धूम इति। न त्विति। उक्तमतनिरासात् सकलधूमार्थकताया अनावश्यकत्वादिति भावः।

❀ दीधितिः ❀

अनुभावयति चेति तदर्थादिति वक्ष्यमाणत्वात् ।

❀ जागदीशी ❀

जातिप्रकारकत्वेनैवेत्यर्थः । तेन मूलोक्तस्य समानप्रकारकत्वेन हेतुत्वस्य न विरोधः । अनुभावयति=शब्दबोधं जनयति । तदर्थात्=जातिशक्तिवादार्थात् ।

❀ काशिकानन्दी ❀

कारणत्वं वक्तव्यमिति न दोष इति वाच्यम् । एवं सति तादृशकारणस्य विरहेणैव गवादिपदादभ्रान्तस्य कालिकादिना गोत्वविशिष्टबोधाभावोपपत्तिसंभवेन व्यक्तौ शक्तिस्वीकारानर्थक्यात् । न च तद्धर्मप्रकारेण यत्र शक्तिर्गृहीता तस्यैव तद्धर्मप्रकारेण शाब्दबोध इति व्यक्तौ शक्तिस्वीकारापेक्षा । व्यक्तिशक्तिविषयकत्वस्यापि शाब्दधीजनकतावच्छेदककोटिप्रवेशेन तस्यापि शक्यत्वव्यवहारापत्तिः सामान्यलक्षणास्वीकारापत्तिश्चेति चेद् ?

न, व्यक्तौ शक्तेरस्वीकारे गोपदं गोशक्तं, गोपदशक्यो गौरित्याद्याकारकशक्तिग्रहस्य भ्रमत्वापत्तेः । तादृशज्ञानेन गवांशेऽपि शक्त्यवगाहनात् । न च गोपदं गोत्वशक्तमित्याद्याकारकशक्तिज्ञानस्यैव कारणत्वमिति वाच्यम् गोत्वत्वेन गोत्वावगाहिशक्तिज्ञानस्य शाब्दधीहेतुत्वे गौरवात् । तेन रूपेण गोत्वज्ञानविरहवतः शक्तिज्ञानशाब्दबोधयोरनुपपत्तेश्च । न च शक्त्यंशे स्वरूपेणैव गोत्वावगाहिशक्तिज्ञानस्य हेतुत्वोपगमेन नायं दोष इति वाच्यम् । समवायान्यसम्बन्धेन जातेः स्वरूपतो भानानुपगमात् । न च गां जानामीत्यादौ विषयित्वादिसम्बन्धेन स्वरूपेणापि गोत्वस्य प्रकारत्वदर्शनादुक्तानभ्युपगमोऽकिंचित्कर इति वाच्यम् । समवायेन धर्मिविशेषणतापन्नस्यैव सम्बन्धान्तरेणान्यत्र स्वरूपतो भानोपगमात् । अन्यथा कालिकादिनापि स्वातन्त्र्येण गोत्वस्य स्वरूपतो भानाद् घटादावपि अयं गौरित्याकारकप्रमात्मकप्रत्ययोत्पादप्रसङ्गात् । गां जानामीत्यादौ समवायेन गोविशेषणतापन्नस्यैव प्रकारितासम्बन्धेन ज्ञानांशे स्वरूपतो भानम् ।

नन्वेवं गोशक्तं गोपदमित्याद्याकारकज्ञानस्य कारणत्वेनोक्तदोषाणां वारणेऽपि गोविषयकत्वस्य शाब्दधीजनकतावच्छेदकत्वं दुर्वारमेव । गोत्वनिष्ठविषयतानिरूपितगोनिष्ठविषयतानिरूपितशक्तिनिष्ठविषयताकत्वेनैव कारणतायाः पर्यवसानात् । गोत्वस्य गवांशे एव विशेषणत्वादिति चेत् ?

न, गवीव गोत्वेऽपि शक्तिसत्त्वेन समवायेन गवि विशेषणीभूतस्य गोत्वस्य निरूपितत्वसम्बन्धेन शक्त्यंशे स्वरूपतो भानाद् गोविषयतामनन्तर्भाव्य निरूपितत्वसम्बन्धावच्छिन्नगोत्वनिष्ठविषयतानिरूपिशक्तिनिष्ठविषयताकत्वेनैव कारणत्वात् । तादृशरूपेणैव कारणतायाः संभवे व्यक्तिविषयतायाः कारणतावच्छेदककोटावप्रवेशात् ।

तेन=जातिप्रकारकत्वेनैवेत्यर्थकरणेन । न विरोधः=न दीधित्युक्तेन सह विरोधः

# वह्निर्व्याप्य इति येन सर्वभानार्थं तत्स्वीकारः ।

❀ दीधितिः ❀

## अतद्गुणसंविज्ञानबहुव्रीहिणा पश्वादि--

❀ जागदीशी ❀

कस्यचिन्मतमाह—पश्वादीति । पशुत्वस्य संस्थानाऽव्यङ्ग्यत्वाद्, उच्चैःश्रवोनिष्ठतया तेजस्त्वेन सांकर्याच्च लोमवल्लाङ्गूलवत्त्वमेव पशुत्वम् । तस्य चोपाधित्वेन व्यक्त्या समं तुल्यवित्तिवेद्यत्वाभावात् तादृशोपाधिविशिष्टधर्मिण्येव परैः शक्तिस्वीकारादिति भावः ।

पृथिवीत्वादिप्रत्येकव्याप्या यदि नानैव, पृथिवीमात्रवृत्तिर्वा पशुत्वजातिः

❀ काशिकानन्दी ❀

संस्थानेति । अवयवसंयोगविशेषः संस्थानम् । अव्यङ्ग्यत्वादिति । लोमवल्लाङ्गूलाद्यात्मकावयवातिरिक्तपशुत्वसत्त्वे हि तेन तद्व्यङ्ग्यत्वं सिद्ध्यति । न हि किंचित्तत्र व्यज्यते तदतिरिक्तमिति लोमवल्लाङ्गूलादिमत्त्वमेय पशुत्वमित्यर्थः । ननु लोमवल्लाङ्गूलादिरूपावयवसंयोगविशेषं दृष्ट्वा अयं पशुरिति प्रत्येति इति तद्व्यङ्ग्यत्वस्य पशुत्वेऽङ्गीकारेऽपि न क्षतिरित्यत आह—उच्चैःश्रव इति । उच्चैःश्रवास्तैजसोऽश्वः । सांकर्यादिति । तेजस्त्वाभाववति गवि पशुत्वस्य, पशुत्वाभाववति वह्नौ तेजस्त्वस्य सत्त्वात्तदुभयोरुच्चैःश्रवसि सांकर्यात् । लोमवल्लाङ्गूलवत्त्वमेवेति । एवकारेण तस्य जातित्वव्यवच्छेदः ।

तस्य=लोमवल्लाङ्गूलवत्त्वस्य । तुल्यवित्तिवेद्यत्वाभावादिति । व्यक्तिज्ञानं विनापि लोमवल्लाङ्गूलवत्त्वबोधोत्पादसंभवादिति भावः । तादृशेति । लोमवल्लाङ्गूलवत्त्वात्मकेत्यर्थः । धर्मिणि=पश्वादौ । परैः=मीमांसकैः । शक्तिस्वीकारादिति । व्यक्तिं विना जातिभानाऽसंभवेन जातिभासकसामग्र्या एव व्यक्तिभासकत्वसंभव इति जातौ शक्तिस्वीकारमात्रेण गोत्वादिविशिष्टगवादिव्यक्तेः शाब्दबोधे भानोपपत्तिः । किन्तु लोमवल्लाङ्गूलादिरूपोपाधेर्व्यक्तिं विनापि भानसंभवेनोपाधिभासकसामग्र्या उपाधिविशिष्टधर्मिभासकत्वासंभव इति शाब्दबोधे व्यक्तिभानार्थमुपाधिविशिष्टे एव शक्तिरिति मीमांसकमतम् ।

पृथिवीत्वादीति । आदिना तेजःपरिग्रहः । नानैवेति । पशुत्वजातिरित्यन्वयः । घटत्वादिवदिति शेषः । सुवर्णघटे घटत्वतेजस्त्वयोः सांकर्यप्रसङ्गात् । उच्चैःश्रवसोऽपि पृथिवीत्वं मत्वाऽऽह—पृथिवीमात्रेति । ननूच्चैःश्रवसि तैजसत्वस्य पौराणिकैरभ्युपग-

❀ मणिदीपिनी ❀

इतीति । अनुभव इत्यनुषङ्गः । सर्वभानार्थं=सर्वधूमभानार्थम् । तत्स्वीकारः =सामान्यलक्षणास्वीकारः ।

❀ दीधितिः ❀

**लिङादिपदाभिप्रायेण परीत्या वा इत्यपि कश्चित् ।**

❀ जागदीशी ❀

पशुपदशक्त्या स्यात्, पीतसुवर्णस्यैवोच्चैःश्रवसोऽपि तैजसत्वप्रवादस्य तेजोभागस्योपष्टम्भकतयाप्युपपत्तेः, तदाह **लिङादी**ति । यजेतेत्यादौ कार्यत्वप्रकारेण घटादौ लिङः शक्तिग्रहात् यागविषयकं कार्यमित्यन्वबोधे योग्यताबलात्ताद्रूप्येण पूर्वव्यक्तिलाभस्य परैर्वक्ष्यमाणत्वादिति भावः । कार्ये लिङादिशक्तेस्तार्किकैरनङ्गीकारादेककार्ये शक्तिग्रहादपरकार्यस्य बोधानुपपत्तेः तैः शङ्कितुमशक्यत्वादाह **परे**ति । **परीत्या** = न्यायमतेन । न्यायमतेन समर्थनं चेत्यस्वरसः कश्चिदित्यनेन सूचितः ।

❀ काशिकानन्दी ❀

मात्तस्य पृथिवीत्त्वाभावेन पशुत्त्वं कथं पृथिवीमात्रवृत्तिरित्यत आह—**पीते**ति । सुवर्णस्य पृथिवीत्वे मानार्थ—**पीते**ति । नीलपीतादिरूपस्य तेजसि विरहात्सुवर्णमपि पृथिव्येवेति नवीनसिद्धान्तः । **तैजसत्वप्रवादस्ये**ति । उपपत्तेरित्यन्वयः । **उपष्टम्भकतयापि**= व्यापकतयापि । **यजेतेत्यादावि**ति । यागविषयककार्यमिति योजना । **घटादावि**ति । घटमानय, नयेत्यादिवृद्धव्यवहारादित इत्यादिः । **ताद्रूप्येण**=कार्यत्वरूपेण । **अपूर्वव्यक्ती**ति । अपूर्वयागव्यक्तीत्यर्थः । **परैः**=मीमांसकैः, मीमांसकमतोपपादनसमये इति यावत् ।

**कार्ये**=कार्यत्वविशिष्टे । **तैः**=नैयायिकैः । **शङ्कितुमशक्यत्वादि**ति । घटत्वगोत्वादिप्रकारेण घटगवादिव्यक्तिस्मरणस्य तत्प्रकारकतद्विषयकशाब्दधीहेतुतया अपूर्वघटादिविषयकशाब्दबोधनिर्वाहकाऽपूर्वघटादिविषयकस्मरणस्य तद्विषयकानुभवप्रयोजकीभूतसामान्यलक्षणामन्तरा असंभवेन सामान्यलक्षणाङ्गीकारावश्यक इति नैयायिकशङ्कायां गवादिपदेष्वपीति मूलं प्रवृत्तम् । तत्र च गवादिपदस्य लिङादिपदाभिप्रायकत्वे कार्यत्वविशिष्टे लिङादिपदानां शक्त्यभ्युपगन्तृनैयायिकैः "लिङादिपदात् कार्यत्वेनापूर्वकार्यबोधः सामान्यलक्षणां विना न संभवती"ति शङ्कितुमशक्यतया अनाशङ्कितानुपयुक्तोत्तरकथनस्योन्मत्तप्रलपितत्वापत्तिरिति भावः ।

ननु 'लिङादि'इत्यादिपदेन इन्द्रियादिपदग्रहणसंभवात्परीतिपर्यन्तगमनमयुक्तमयुक्तं चैव न्यायमतेन समर्थनास्वरसकथनं जगदीशस्येति चेद् ?

न, इन्द्रियादिपदरूपयत्किंचित्स्थलमात्रे समानप्रकारकत्वेन कार्यकारणभावसंभवेन तदर्थं सामान्यलक्षणाया अनुपयोगेऽपि गोघटादिपदस्थले समानप्रकारकत्वेन कार्यकारणभावस्य मीमांसकैः स्वीकर्तुमशक्यतया तत्रैवापूर्वव्यक्तिबोधानुपपत्त्या सामान्यलक्षणाङ्गीकारापाताद् जातिविशिष्टव्यक्तौ शक्त्यभ्युपगमेनैव तादृशापत्तिवारणसंभवात्, तदभ्युपगमे

## ❀ जागदीशी ❀

यद्यपि गोपदस्य नानार्थकत्वेन यत्र वाक्यत्वप्रकारेण वाक्यस्य इन्द्रियत्वप्रकारेणेन्द्रियस्य वा बोधकं गोपदं तत्र वाक्यत्वादेरुपाधितया तद्विशिष्टव्यक्तौ शक्तेः परेषामपि स्वीकाराद् "गवादिपदेष्वपी" ति मूलं तदभिप्रायेणैव साधु संगच्छते।

तथापि लाघवेन गोत्वादिशक्तेन गवादिपदेन लक्षणयैव वाक्यत्वादिप्रकारकबोधोपपत्तौ न वाक्यत्वादिविशिष्टे गोपदस्य शक्तिः गौरवादित्याशयेन तादृशाभिप्रायो मूलस्य नोपवर्णितः।

अत्र "गोपदं गोत्ववद्"इत्यकारकस्य पदविशेष्यकशक्तिज्ञानस्यैव शाब्दधीहेतुत्वाद् गोत्वप्रकारतामादायैव च तत्र समानप्रकारकत्वेन हेतुत्वसंभवाद् यथाश्रुतमेव मूलं सम्यगिति तु मैथिलाः।

## ❀ काशिकानन्दी ❀

समानप्रकारकत्वेन कार्यकारणभावनिर्वाहात् पररीत्याश्रयणस्यावश्यकत्वात्। पररीत्याश्रयणेनास्वरसस्य युक्तत्वादिति ध्येयम्। अधिकमग्रे द्रष्टव्यम्।

वक्ष्यमाणरीत्या वाचकत्वविरहात् लक्षकवाचकोभयसाधारणतया आह—बोधकमिति। उपाधितयेति। साकाङ्क्षपदसमूहत्वस्य वाक्यत्वस्वरूपत्वादिति भावः। तद्विशिष्टव्यक्तौ=वाक्यत्वादिविशिष्टव्यक्तौ। परेषां=परैः। स्वीकारादिति। वाक्यत्वभानस्य वाक्यभानं विनापि संभवादिति भावः। तदभिप्रायेण=वाक्यत्वादिप्रकारेण बोधजनकगोपदाभिप्रायेण। तादृशाभिप्रायः=वाक्यत्वादिप्रकारेण बोधे वाक्यत्वविशिष्टे शक्तिग्रह आवश्यक इति समानप्रकारकत्वेन कार्यकारणभाव इत्यभिप्रायः। नोपवर्णित इति। ननु गोत्वविशिष्टस्य शाब्दबोधे भानार्थं सामान्यलक्षणास्वीकारापत्तिः। तत्र समानप्रकारकत्वेन कार्यकारणभावविरहात्। अन्यथा तत्रैवापूर्वव्यक्तिभानानुपपत्तिरिति चेद्?

न, भट्टमते आक्षेपादेवापूर्वव्यक्तिलाभेन सामान्यलक्षणाया अनुपयोगात्। शाब्देऽपूर्वव्यक्तेरभानेऽपि क्षतिविरहात्। प्राभाकरमते च गोत्वादिशक्तपदज्ञानेन गोत्वविशिष्टगोव्यक्तेरेव स्मरणम्। व्यक्तिं विना जातिभानाभावात्। पदार्थस्मृतिशाब्दबोधयोश्च समानप्रकारकतया कार्यकारणभावः। उपाधिश्च व्यक्तिं विनापि भासत इति तत्र विशिष्टे शक्तिरावश्यकी।

मैथिलानां मतमाह—अत्रेति। गोत्ववदिति। शक्तिसम्बन्धेन गोत्ववदित्यर्थः। तत्र=शक्तिज्ञाने। इति तु मैथिला इति। तु इत्यनेनारुचिः सूचिता। तद्बीजं तु तेन सम्बन्धेन तत्प्रकारकशाब्दबुद्धिं प्रति तेन सम्बन्धेन तत्प्रकारकशक्त्यनुभवादेः कारणत्वं वाच्यम्। अन्यथा क्वचित्समवायेन क्वचित् कालिकेन गोत्वप्रकारकशाब्दबोध इत्यत्रानियमापत्तेः। किं च पदांशे गोत्वादिप्रकारतामादाय समानप्रकारकत्वस्याभिप्रेतत्वे "इत्यपूर्वे व्यक्त" इत्यग्रिममूलासंगतिः। अपूर्ववादे हि 'घटमानय' 'वटं नये'त्यादिवृद्धव्यवहाराद्

# अथ वह्निमानयमित्यनुमितिर्विशेषणज्ञानसाध्य

❀ दीधितिः ❀

**विशेषणज्ञानसाध्येति।** न च पक्षतावच्छेदकज्ञानजन्यत्व सिद्धसाधनम्। यद् यद्विशिष्टज्ञानं तत् तद्धीसाध्यमिति सामा

❀ जागदीशी ❀

यद्विशिष्टज्ञनमिति। जन्यं यत्प्रकारकं ज्ञानमित्यर्थः। तेन नित्यज्ञा न व्यभिचारः। परेषां च व्यर्थविशेषणत्वं न दोषायेति भावः। तद्धीसाध्य च समवायसम्बन्धावच्छिन्नं ग्राह्यम्। नातः परेषामीश्वरज्ञानजन्यत्वसिद्

❀ काशिकानन्दी ❀

लिङादिपदस्य कार्यत्वेन रूपेण घटाद्यात्मककार्ये शक्तिग्रहाद् यजेतेत्यादौ कार्यत्वेन रूपे पूर्वयागव्यक्तेर्लाभ इत्येवाभिहितम्। न तु तत्र कार्यत्वप्रकारकलिङादिपदविशेष्यकशा ज्ञानमादाय समानप्रकारकत्वं सम्पादितम्। एवं च व्यक्त्यंशे समानप्रकारताया तत्रत्यग्रन्थेन लाभाद् इहापि गवादिरूपव्यक्त्यंशे एव समानप्रकारकत्वं युक्तं न तु पदां तच्च कुब्जशक्तिवादानुसरणे एव संभवति। न चायं ग्रन्थः कुब्जशक्तिवादिनां मते प्रयेणापि न संभवति। जात्यंशे सा ज्ञाता व्यक्त्यंशे च स्वरूपसती हेतुर्लाघवादिति कु शक्तिवाद इत्यादिग्रन्थेन व्यक्त्यंशेऽज्ञाताया एव शक्तेर्हेतुत्वकथनात्। अज्ञातत्व पदांशे गोत्वप्रकारकत्वे एव संभवादिति वाच्यम्। व्यक्त्युपरागेण व्यक्तिविषयत कारणतानवच्छेदकत्वमिति तदर्थात्। एवं गोत्वत्वाद्यनुपस्थितिदशायामुक्तप्रकारेण श ज्ञानं दुर्घटम्। न च स्वरूपेणैव गोत्वस्य शक्त्यंशे भानमिति वाच्यम् तथासति व्यक्ति विना जातिभानस्यात्रैव शक्तिज्ञाने जाततया शाब्दबोधेऽपि व्यक्तेरभानप्रसङ्गादिति दिक्

दीधितौ पक्षतेति। मूलोक्तानुमानेन पर्वतो वह्निमानित्यनुमितेः पक्षतावच्छेदक यत् पर्वतत्वं तज्ज्ञानजन्यत्वं परैरप्यङ्गीकृतम्। न ह्येतावता पर्वतीयवह्निज्ञानस्य प्रागो सिद्धिर्यन्निबन्धनसामान्यलक्षणासिद्धिरिति भावः। यत्=पर्वतो वह्निमानित्याका यद्विशिष्टज्ञानं=पर्वतीयवह्न्यादिविविशिष्टज्ञानं, तत्=पर्वतोवह्निमाननितिज्ञा तद्धीसाध्यम्=पर्वतीयवह्न्यादिज्ञानसाध्यम्।

ननु परैरीश्वरानुपगमेन नित्यज्ञानस्य तन्मतेऽप्रसिद्ध्या जन्यत्वविशेषणवैफल्य आह—परेषामिति। समवायसम्बन्धावच्छिन्नं ग्राह्यमिति। समवायेन तद्विशि ज्ञानं प्रति समवायेन तद्विषयकज्ञानस्य कारणत्वं वाच्यमिति भावः। परेषां=मीमांस

❀ मणिदीपिनी ❀

सामान्यलक्षणासाधनयुक्त्यन्तरं दूषयितुमुपन्यस्यति—अथेति। विशे ज्ञानसाध्या=विशेषणीभूतवह्निज्ञानसाध्या।

# विशिष्टज्ञानत्वादिति पर्वतीयवह्निभानार्थं तत्कल्पने

❀ दीधितिः ❀

व्याप्त्यादरात्। अभावत्वप्रतियोगित्वयोरप्यनुपस्थितयोरप्रकारत्वात्। वह्निविशिष्टज्ञानत्वेन—

❀ जागदीशी ❀

वर्थान्तरम्। अथाभावत्वादिज्ञानं विनापि तद्विशिष्टप्रत्यक्षोत्पादाद् व्यभिचार इत्यत आह अभावत्वेति। अन्यथा विनाप्यभावत्वज्ञानमलौकिकस्याभावत्वविशिष्टप्रत्यक्षस्य प्रसङ्गात्। लौकिकान्यतत्प्रकारकज्ञानं प्रति तज्ज्ञानत्वेन हेतुत्वे च गौरवादिति भावः। यत्त्वतत्त्वयोरननुगमादाह— वह्नीति। वह्नेर्विलक्षणज्ञानत्वेनेत्यर्थः। वैलक्षण्यं चानुमितित्वम्। नातः पूर्ववद् व्यभिचारः।

अथात्र वह्न्यन्तरज्ञानजन्यत्वेन सिद्धसाधनम्। न च वह्नित्वेन गुञ्जादेर्धूमव्यापकत्वग्रहोत्तरं जायमानानुमितेर्वह्न्यन्तरज्ञानजन्यत्वबाधात् तत्रैव

❀ काशिकानन्दी ❀

प्रति परेषां नैयायिकानामिति यावत्। अर्थान्तरं = सिद्धसाधनम्। समवायेनेश्वरज्ञानस्य पुरुषान्तरे विरहादिति भावः। तद्विशिष्टप्रत्यक्षोत्पादात् = अभावत्वविशिष्टप्रत्यक्षोत्पादात्। व्यभिचार इति। अभावत्वविशिष्टज्ञानस्य अभावत्वज्ञानसाध्यताविरहादित्यभिमानः। अन्यथा = अनुपस्थितयोरपि अभावत्वप्रतियोगित्वयोः प्रकारत्वे। अभावत्वविशिष्टेति। अभावत्वोपनीतेत्यर्थः। एतच्च मीमांसकमतैकदेशेन। अन्यथा सामान्यलक्षणोपनीतभानयोरनङ्गीकर्तृमते एतादृशापत्त्ययोगाद्। विशिष्टं—विशेषयुक्तं, विलक्षणमिति यावदित्याशयेन व्याचष्टे—वह्नेरिति। पूर्ववदिति। नित्यज्ञाने इति शेषः। अनुमितिर्हि जन्यैव भवति।

वह्न्यन्तरेति। महानसीयवह्नीत्यर्थः। वह्न्यन्तरज्ञानजन्यत्वबाधादिति। न च वह्निं कदाचिदप्यदृष्टवतो गुञ्जादौ वह्नित्वभ्रमासंभवेन प्रथमं वह्नित्वविशिष्टवह्निज्ञानस्य वक्तव्यतया तेनैव वह्निज्ञानेन पर्वतादौ वह्निविशिष्टग्रहसंभवादिदमयुक्तमिति

❀ मणिदीपिनी ❀

विशिष्टेति। वह्निविशिष्टेत्यर्थः। इति पर्वतीयवह्निभानार्थमिति। इत्यनुमानेन पर्वतीयवह्निज्ञानस्यानुमितिहेतुतासिद्धौ अनुमितिपूर्वक्षणे पर्वतीयवह्निज्ञानसम्पत्त्यर्थमित्यर्थः। तत्कल्पने = सामान्यलक्षणाकल्पने।

# धूमेऽपि तथा क्वचिद्धूमस्यापि व्यापकत्वा-

❀ दीधितिः ❀

तद्वह्निविशिष्टज्ञानत्वेन वा तज्ज्ञानजन्यत्वसाधनाद्वा ।

❀ जागदीशी ❀

प्रकृतवह्निज्ञानजन्यत्वसिद्ध्यर्थं सामान्यलक्षणा स्यादिति वाच्यम् । गुञ्जा- वह्नित्वग्रहस्य तदधीनानुमितेश्च गुरुमतेऽसंभवात् । तेषामन्यथाख्यात्यभावा- अत आह तद्वह्नीति ।

❀ काशिकानन्दी ❀

वाच्यम् । वह्नित्वेन गुञ्जादिभ्रमोत्पत्तये अयोगोलकस्थवह्निदर्शनमेवालम् । न ह्ययोगोल- वह्निज्ञानजन्यत्वं पर्वते वह्न्यनुमितेः । तत्र धूमव्यापकत्वस्याग्रहीततया परामर्शे- तस्यानवगाहनेन पूर्वक्षणे तज्ज्ञानस्य विरहात् । उद्बोधकान्तरविरहस्थले एव तत्स्मर- स्याप्यसंभवात् । प्रकृतेति । प्रकृतस्य पर्वतीयवह्न्यनुमानस्य यद् वह्निज्ञानजन्- तत्सिद्ध्यर्थमित्यर्थः । सामान्यलक्षणा स्यादिति । तथा च गुञ्जायां वह्नित्वभ्रम- वह्नित्वेन वह्नेरपि सामान्यलक्षणया ज्ञानात्तद्घटितव्याप्तिज्ञानसंभवेन परामर्शाव्यवहि- वह्निज्ञानमव्यवहितपूर्वक्षणं संभवतीति भावः । तदधीनानुमितेः = गुञ्जायां वह्नि- ग्रहाधीनानुमितेः । तदधीनत्वं च साक्षात् परम्परया वा । तेषां = गुरूणाम् । इति शेषः । वस्तुतस्तु गुरुमतेऽपि गुञ्जां पश्यतोऽयं वह्निरित्यनुभवोत्पादस्वीकाराच्च वह्निगुञ्जयोर्भेदाऽग्रहवशाद् वह्नित्वे व्यापकतावच्छेदकत्वग्रह एव संभवतीति तत्प्रकार- पूर्ववह्नेरपि अनुमितौ भानं स्याद् । तत्प्रतिक्षेपणाय विशेषणज्ञानसाध्यत्वानुमिति- शरणीकरणीया । न च वह्नित्वे व्यापकतावच्छेदकत्वग्रहे वह्नौ व्यापकत्वग्रहोऽपि भवेद् तथा चान्यथाख्यातिस्वीकारापत्तिः अयोगोलकीयवह्नेरेव स्मर्यमाणत्वादिति वाच्यम् वह्नौ व्यापकत्वग्रहं विनापि वह्नित्वे व्यापकतावच्छेदकत्वग्रहे बाधकाभावात् । तस्मा- जातिभानस्य व्यक्तिभानं विनाऽसंभवेनानुमितिपूर्वक्षणं वह्नित्वे व्यापकतावच्छेदकत्वग्रहका- पूर्वानुभूतवह्नेरपि भानात्तज्जन्यत्वेन सिद्धसाधनमेव तत्रापि वक्तुं युक्तमिति युक्तमुत्पश्याम- यद्वा वह्नित्वत्वग्रहविरहकाले तत्र व्यापकतावच्छेदकत्वग्रहासंभवः । वह्नौ तु व्यापकत्वग्र- न संभवत्येव अयोगोलकादिस्थितवह्नेरेव स्मर्यमाणत्वादिति ध्येयम् ।

❀ मणिदीपिनी ❀

धूमेऽपि=पर्वतीयधूमादिभानार्थमपि । तथा = सामान्यलक्षणाकल्पनम् । सिद्ध- मितिशेषः । व्यापकत्वाद्=अनुमेयत्वात् ।

दिति चेद् ? न, विशिष्टवैशिष्ट्यज्ञाने विशेषणता-
वच्छेदकप्रकारकज्ञानस्यावश्यकत्वेन हेतुत्वात्। तच्च

❀ दीधितिः ❀

विशिष्टवैशिष्ट्येत्याद्यभ्युपगमवादः। वस्तुतो विशेषणतावच्छेद-

❀ जागदीशी ❀

अयं देशो दण्डमानित्याद्यनुमितौ विशेषणतावच्छेदकीभूततत्तद्दण्ड-भानार्थं सामान्यलक्षणापत्तेराह विशिष्टेत्यादि। नन्वेवं विशेषणतावच्छेदक-प्रकारकज्ञानविरहेऽपि सुरभिचन्दनमित्यादिविशिष्टवैशिष्ट्यधीः स्यादत आह वस्तुत इति। तथा च तादृशबुद्धेः प्रत्यक्षादिनियतत्वेन तदानीं प्रत्यक्षादिसामग्रीविरहादेव न तादृशं ज्ञानमिति भावः। विशेषणतावच्छेद-

❀ काशिकानन्दी ❀

सामान्यलक्षणापत्तेरिति। न चात्र विशेषणतावच्छेदकतावच्छेदकप्रकारकज्ञानस्य हेतुत्वेनादोषः। तथा सति दण्डिमानप्रयोजकसामग्र्यसिद्धेः। तस्यैव दण्डिमानप्रयोजकत्वे ऋतेऽपि दण्डिज्ञानाद् दण्डत्वप्रकारज्ञानेन दण्डविशिष्टवैशिष्ट्यावगाहिबुद्ध्युत्पादापत्तेः। विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वनियमव्यभिचारापाताच्चेति भावः। एवं = अभ्युप-गमकथनत्वे। विशेषणतावच्छेदकप्रकारकज्ञास्य विशिष्टवैशिष्ट्यावगाहिग्रहहेतुत्व इति यावत्। घटवद्भूतलमित्यादौ दण्डिमान् देश इत्यादौ च विशेषणज्ञानविरहेऽपि सन्निकर्षसत्त्वे तादृशज्ञानमिष्टमेव। तदसत्त्वे तदभावादेव नापत्तिरतः स्थलान्तरमनुसरति—सुरभि चन्दनमिति। अत्र चक्षुस्सन्निकर्षादेरयोग्यत्वान्नेष्टापत्तिः संभवतीति भावः। तादृश-बुद्धेः = सुरभिचन्दनमित्यादिबुद्धेः। प्रत्यक्षादीति। आदिना अनुमित्यादिः। तदानीं = विशेषणतावच्छेदकीभूतसौरभत्वादिप्रकारकज्ञानविरहकाले। सामग्रीविरहादिति। चक्षुःसन्निकर्षस्यायोग्यत्वाद्, ज्ञानलक्षणाया अभावाद् व्याप्त्यादिग्रहविरहाच्चेति भावः।

❀ मणिदीपिनी ❀

विशिष्टवैशिष्ट्यज्ञाने = घटवद्भूतलमित्यादौ। विशेषणतेति। घटत्वादिप्र-कारकज्ञानस्येत्यर्थः। आवश्यकत्वेनेति। मतद्वयेऽपीत्यादिः। अन्यथा घटत्वादिना घटज्ञानविरहवतोऽपि प्रमेयत्वादिना तज्ज्ञानात्तथा बोधापत्तेरिति भावः। एवं च प्रकृतेऽपि न दोष इत्याह—तच्च = विशेषणतावच्छेद-

# वृत्तमेव, न तु विशेषणज्ञानमपि तथा, गौरवात्।

❀ दीधितिः ❀

कादीनां युगपदिन्द्रियसन्निकर्षात्तादृशं प्रत्यक्षम् । अनुमित्यादिष्व ताद्रूप्येण व्याप्त्यादिग्रहात् । अत एवानेकव्यक्तिद्रव्यादिविशेषणता-वच्छेदककानुमित्या तद्भानार्थं न सामान्यलक्षणादरः ।

❀ जागदीशी ❀

कादीनामिति । आदिपदाद् विशेष्यादिसंग्रहः । तादृशं = विशिष्टवैशिष्ट्या-वगाहि । अनुमित्यादिस्त्विति । तादृश इति लिङ्गव्यत्ययेनानुषज्यते । ताद्रूप्येण = विशेषणतावच्छेदकरूपेण । येन रूपेण व्यापकतायाः शक्तेर्वा ग्रहः तेन रूपेणैवानुमितेः शाब्दस्य चोत्पत्तेरिति भावः । अत एव = इन्द्रिय-सन्निकर्षादेर्नियामकत्वादेव । तद्भानार्थं = विशेषणतावच्छेदकभानार्थम् ।

ननु विशेष्यादिसन्निकर्षेऽपि दण्डत्वदण्डयोर्निर्विकल्पकोत्तरं दण्डे दण्डत्वस्येव दण्डत्वादौ तद्दण्डादेर्विशिष्टप्रत्यक्षानुत्पत्त्या अवश्यं दण्डत्वा-

❀ काशिकानन्दी ❀

सौरभांशे स्मरणात्मकं तादृशप्रत्यक्षं प्राभाकरादीनां तु संभवतीति बोध्यम् । तेन रूपेणेति । अपूर्वव्यक्तेरिति शेषः ।

दीधितौ न सामान्यलक्षणादर इति । अयं देशो दण्डिमानित्याद्यनुमितौ परम्परासम्बन्धस्य दण्डत्वादेरेव व्यापकतावच्छेदकत्वेन तेन रूपेणापूर्वदण्डव्यक्तेरपि अनुमितौ भानसंभवात् । न चापूर्वदण्डव्यक्तेस्तत्र कथं भानं, परम्परासम्बन्धेन दण्डत्वस्य दण्डे विरहात्, साक्षात्सम्बन्धेन दण्डत्वे व्यापकतावच्छेदकत्वविरहादिति वाच्यम् । दण्डत्वे साक्षात्सम्बन्धेन व्यापकतावच्छेदकतावच्छेदकत्वस्यापि भानाद् । येन रूपेण व्यापकतावच्छेदकत्वग्रहस्तेन रूपेणापूर्वव्यापकतावच्छेदकव्यक्तेरपि तत्र भानस्वीका-रेणादोषात् ।

विशेष्यादिसन्निकर्षेऽपि = दण्डिमानित्यादिप्रत्यक्षस्य विशेष्यादिसन्निकर्षेणैवो-पपत्तावपि । निर्विकल्पकोत्तरमिति । इदं नैयायिकमतानुरोधेन । मीमांसकानां निर्विक-

❀ मणिदीपिनी ❀

कप्रकारकज्ञानं च । वह्निरित्याकारकज्ञानमित्येतत् । वृत्तमेव = जातमेव । ननु विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वे प्रकृते किमायातमत आह—नत्विति । तथा = हेतुः । ननु विशेषणज्ञानस्य हेतुत्वे किं तव प्रनष्टमत आह—गौरवादिति ।

गौरयमिति विशिष्टज्ञाने युगपद् विशेष्ये विशेषणे सन्निकर्ष एव कारणं, न तु निर्विकल्पकं,

❀ दीधितिः ❀

अस्तु वा दण्डीत्यादिप्रत्यक्षे दण्डत्वादिना, दण्डसंयोग-

❀ जागदीशी ❀

दिना तद्दण्डादेर्विशिष्टबुद्धौ विशेषणतावच्छेदकीभूतदण्डत्वादिना तद्दण्डादेर्ज्ञानं हेतुः। एवं दण्डो रक्तो नवेति संशयोत्तरं रक्तदण्डवानिति विलक्षणबोधानुत्पत्त्या तत्र विशेषणतावच्छेदकप्रकारकनिश्चयोऽवश्यं हेतुरत आह अस्तु वेति। स्मृतौ व्यभिचारात् तादृशज्ञानमात्रे हेतुत्वाऽसंभवादाह प्रत्यक्ष इति। विशेषणतावच्छेदकांशे धर्मितावच्छेदकाऽसत्त्वसत्त्वाभ्यां विशिष्टवैशिष्ट्यबुद्धेर्द्वैविध्यादाद्यामुदाहृत्य द्वितीयामाह दण्यसंयोग-

❀ काशिकानन्दी ❀

ल्पकाभावेन तान् प्रति एवं वक्तुमशक्यत्वात्। तन्मते सन्निकर्षोत्तरमेव दण्डत्वादौ तद्दण्डादेर्विशिष्टप्रत्यक्षापत्तिर्द्रष्टव्या। हेतुरिति। वाच्य इति शेषः। दण्डप्रकारकप्रत्यक्षे इत्यादिश्च।

ननु त्वन्मतेऽपि दण्डइत्याकारकदण्डत्वप्रकारकज्ञानोत्तरं नियमतो दण्डत्वे दण्डावगाहिज्ञानं कुतो नोत्पद्यते? विशेषणतावच्छेदकप्रकारकज्ञानसत्त्वात्। अदृष्टादिरूपप्रतिबन्धकविशेषादिति चेत्तर्हि एकक्षणपूर्वमेव तत्कल्प्यतेति कथमस्माकमापत्तिः। यत्रोत्पद्यते तत्रैकक्षणविलम्बः शपथनिर्णेयः कार्यकारणभावकल्पनेन तव गौरवं चेत्यत आह— एवमिति। तत्र = रक्तदण्डवानित्यत्र। निश्चय इति। एवं च संशयस्थले कारणं नास्तीत्यदोष इति भावः। तव तु अत्रापि प्रतिबन्धकविशेषः कल्पनीय इति गौरवमित्यभिसन्धिः। व्यभिचारादिति। विशिष्टस्मृतौ विशेषणज्ञानस्य हेतुत्वं न कस्याप्यभिमतम्। तादृशज्ञानमात्रे = दण्डीत्यादिज्ञानसामान्ये। धर्मिताच्छेदकेति। दण्डसंयोगवानित्यत्र विशेषणतावच्छेदकीभूतदण्डस्य धर्मितावच्छेदकं संयोगत्वम्। निरवच्छिन्नत्वसा-

❀ मणिदीपिनी ❀

विशेषणज्ञानस्य विशिष्टज्ञानं प्रति पृथग् हेतुत्वे इत्यादिः। नन्वेवं गोत्वज्ञानं विनापि गोत्वविशिष्टं गौरित्याकारकज्ञानमुत्पद्येत। नेयं विशिष्टवैशिष्ट्यावगाहिबुद्धिर्येन पूर्वोक्तकार्यकारणभावेन निर्वाह इत्यत आह— गौरयमिति। न तु निर्विकल्पकमिति।

# मानाभावात्। विशिष्टज्ञानत्वमेव मानमिति चेन्न,

❀ दीधितिः ❀

वानित्यादौ च दण्डसंयोगत्वादिना यत्किंचिद्व्यक्तिज्ञानं कारणम्।

❀ जागदीशी ❀

वानिति। यत्किंचिदिति। तथा च विशेषणव्यक्तेः पूर्वमभानेऽपि न क्षति-रिति भावः।

व्यतिरेकेण घटादेः, अन्वयेन च गोत्वादिसाध्यकानुमितेर्दृष्टान्तत्वसंभ-

❀ काशिकानन्दी ❀

च्छिन्नत्वाभ्यां विशेषणताद्वैविध्यादपि विशिष्टवैशिष्ट्यज्ञानद्वैविध्यं बोध्यम्। तथा च= यत्किंचिद्व्यक्तिज्ञानस्यैव हेतुत्वे च। विशेषणव्यक्तेः=पर्वतीयवह्न्याद्यात्मकविशेषण-व्यक्तेः। पूर्वं = विशिष्टवैशिष्ट्यावगाह्यनुमितिपूर्वम्। न क्षतिरिति भाव इति एतदापाततः। अनुमितिं प्रति निरुक्तक्रमेण यत्किंचिद्व्यक्तिज्ञानस्यापि हेतुताया असिद्धेः क्षतिशङ्काया एव प्रकृते विरहात्। प्रत्यक्षं प्रत्येव यत्किंचिद्विशेषणज्ञानहेतुतायाः साधि-त्वात्। न च दण्डीत्यादिप्रत्यक्षे एव विशेषणव्यक्तेः पूर्वमभानेऽपि क्षत्यभावो जगदीशाभिप्रेतः इति वाच्यम्। प्रत्यक्षस्थले विशेषणव्यक्तेः पूर्वं भानावश्यकत्वस्वीकारेऽपि दण्डीत्यादौ अपूर्वव्यक्तेरभानेन क्षतिशङ्कायास्तत्राप्यभावात्। न चाभावप्रत्यक्षस्थलानुरोधेनेदमुक्तमिति वाच्यम्। तस्याऽप्रकृतत्वात्। दण्डीत्याद्याकारप्रत्यक्षस्यैव मूलोक्तेः। वस्तुतस्तु विशिष्ट-वैशिष्ट्यावगाहिज्ञाने यदि विशेषणतावच्छेदकप्रकारकज्ञानस्य न हेतुत्वं तदा दण्डो रक्तो न वेति संशयाद्युत्तरं रक्तदण्डवानिति प्रत्यक्षाद्यापत्तिरत आह दीधितौ अस्तु वेति। एवमपि विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे एव विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वं न तु तथाविधानुमित्यादिसाधारणज्ञानमात्र इति भाव इति व्याख्येयम्। एतदर्थपरतयैव वा तथाचेत्यादिजागदीशी योजनीया।

व्यतिरेकेण घटादेरिति। दृष्टान्तत्वसंभवादित्यन्वयः। गौरित्यादिविशिष्टज्ञानं विशेषणज्ञानपूर्वकम्, विशिष्टज्ञानत्वात्, यद् यद्विशिष्टज्ञानं तत्तद्धीपूर्वकम्, यन्नैवं तन्नैवं

❀ मणिदीपिनी ❀

कारणमित्यनुषङ्गः। मानाभावादिति। एवं च तदनुरोधेनापि सामान्यतो विशिष्टज्ञानत्वेन कार्यकारणभावो न सिद्ध्यति येनोक्तानुमितिं प्रति पर्वतीयवह्निज्ञानस्य कारणत्वं तत्प्रयोजकतया सामान्यलक्षणा च सिद्ध्येदिति भावः। मानं=मानतावच्छेदकम्। आचार्यमतेनेदं वा। गौरितिज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वादित्यनुमानं प्रमाणमित्यर्थः। विशेषणज्ञानजन्यत्वं नाम विशेषण-

दृष्टान्ताभावात् । दण्डी पुरुष इत्यत्र विशेषणधीजन्यत्वानुपगमात् । विशिष्टवैशिष्ट्यज्ञानत्वात् ।

## ❀ दीधितिः ❀

दृष्टान्ताभावादिति । विशेषणज्ञानत्वेन हेतुत्वस्य विशेष्य-

## ❀ जागदीशी ❀

वादाह विशेषणज्ञानत्वेन हेतुत्वस्येति । निरस्तत्वादित्यग्रेऽन्वयः । विशेष्य-

## ❀ काशिकानन्दी ❀

यथा घटः, न हि घटो विशेषणज्ञानपूर्वकः । यथा वा गोत्वविधेयकानुमितिः । अत्र च गोत्वमेकमेवेति नापूर्वविशेषणव्यक्तेरभानादिशङ्का । न च घटत्वादिप्रकारकज्ञानत एव कुलालेन घटोत्पादात्तत्रापि घटत्वज्ञानपूर्वकत्वमक्षतमेवेति वाच्यम् । घटोत्पत्त्यव्यवहितपूर्वक्षणे घटत्वप्रकारकज्ञानविरहेऽपि घटोत्पत्तिसंभवात् । किं च विशेषणज्ञानपूर्वकत्वं नाम स्वसमवायिसमवेतत्व—स्वाऽव्यवहितोत्तरत्वोभयसम्बन्धेन विशेषणज्ञानविशिष्टत्वम् । एतेनेश्वरज्ञानपूर्वकत्वमादाय व्यतिरेकदृष्टान्तासंभव इति निरस्तम् । निरस्तं च विशेषणज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यत्वस्यानुमितौ विरहेण गोत्वविधेयकानुमि-

## ❀ मणिदीपिनी ❀

ज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यत्वमित्याशयवानाह—दृष्टान्ताभावादिति । अन्वयदृष्टान्ताभावादित्यर्थः । गोत्वप्रकारकानुमितेर्गोत्वात्मकविशेषणविषयकज्ञानजन्यत्वेऽपि गोत्वज्ञानत्वेन रूपेण नानुमितिहेतुत्वम् । किन्तु गोत्वव्याप्तिज्ञानत्वेनैव । न च गोत्वनिष्ठविधेयताप्रयोजकतया गोत्वज्ञानत्वेन हेतुतासिद्धिरिति वाच्यम् । गोत्वविधेयताकानुमितित्वावच्छिन्नं प्रति गोत्वव्याप्तिज्ञानत्वेन हेतुतयैवानुमितौ गोत्वविधेयताया अप्युपपत्तेः । न च गोत्वविधेयताकज्ञानत्वेन गोत्वज्ञानत्वेन सामान्यतः कार्यकारणभावोऽपि सिद्ध्येदिति वाच्यम् । ईश्वरज्ञाने स्मरणे च व्यभिचारादिति मूलाशयः । दृष्टान्ताभावादित्युक्तिं प्रतिक्षेप्तुकमं पराचाष्टे—दण्डीति । विशिष्टवैशिष्ट्यज्ञानत्वादिति । विशिष्टवैशिष्ट्यज्ञाने च विशेषणतावच्छेदकप्रकारकज्ञानस्यैव हेतुत्वं न तु विशेषणज्ञानस्येत्युक्तत्वादिति । न च विशिष्टवैशिष्ट्यज्ञानं विशिष्टप्रतियोगिकवैशिष्ट्यज्ञानमेव । एवं च विशिष्टप्रतियोगिकत्वानवगाहिदण्डमानितिबुद्धेदृष्टान्तत्वसंभव इति वाच्यम् । तथाविधबुद्धेः विशेष्ये विशेषणमितिरीत्या उत्पादात्तत्रापि विशेषणज्ञानस्यानपेक्षणात् । विशिष्टवैशिष्ट्येत्यनेन विशिष्टप्रकारकत्वविवक्षणाद्वा ।

## अपि च प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः

❀ दीधितिः ❀

ज्ञानादेरपि कारणत्वापत्त्या मानाभावेन च निरस्तत्वादिति।

एतेनास्तु विशेष्यज्ञानमपि कारणम्, जन्यतां च निर्विकल्पकमपि

❀ जागदीशी ❀

ज्ञानादेरिति। आदिपदेन सम्बन्धज्ञानपरिग्रहः। कारणत्वापत्त्येति। तथा च तद्वदिहाप्यप्रयोजकत्वमिति भावः। विशेष्यधियो हेतुत्वे वक्ष्यमाणेष्टापत्ते-राह मानाभावेन चेति।

एतेन=मानाभावेन। निरस्तमित्यन्वयः। ननु सामान्यलक्षणाजन्य-ज्ञानेऽसन्निकृष्टघटान्तरस्यापि विशेष्यत्वात् तस्य च प्रागनुपस्थितत्वेन विशेष्यज्ञानस्य हेतुत्वं दुर्घटमत आह जन्यतां चेति। निर्विकल्पकम्=

❀ काशिकानन्दी ❀

तेरन्वयदृष्टान्तत्वासंभव इति मतम्। विशेषणज्ञानपूर्वकत्वस्यैव निरुक्तस्य साधनात्। तावतापि पर्वतीयवह्निव्यक्तिज्ञानस्य पूर्वमावश्यकतासिद्धिसंभवेन सामान्यलक्षणासिद्धिसं-भवात्। किं च नानाविधव्याप्तिज्ञानजन्ये व्यभिचारवारणाय तत्तत्परामर्शाव्यवहितोत्तरा-नुमितित्वस्यैव कार्यतावच्छेदकतया गोत्वादिविधेयताया: कार्यतानवच्छेदकत्वेन तत्प्रयोजक-तया गोत्वज्ञानत्वेनापि अनुमितिहेतुत्वं वक्तव्यम्। एतेन विशेषणज्ञानपूर्वकत्वमात्रस्य साध्यत्वे विशेषणज्ञानत्वेन हेतुत्वस्येत्यादिदीधितिशिथिलव्याख्यानतापत्तिरिति दोषो निरस्तः। एतत् समान्यतो व्याप्तिमवष्टभ्य। विशेषणत्वादेः केवलान्वयित्वे विशेषव्याप्तिः स्वयमूह्या। तथा चेति। दण्डीत्यादिविशिष्टज्ञानं विशेष्यज्ञानपूर्वकं सम्बन्धज्ञानपूर्वकं च, यद् यत्सम्बन्धेन यद्विशेष्यकज्ञानं तत् तत्सम्बन्धज्ञानपूर्वकं तद्विशेष्यकज्ञानपूर्वकं च यन्नैवं तन्नैवं यथा घटः, यदेवं तदेवं च यथा सिषाधयिषाधीनानुमितिः, यथा वा विशेष्यज्ञान-जन्यत्वमनुमितौ, पक्षज्ञाजनन्यत्वस्यानुमितौ सत्त्वादित्याद्यनुमानेन विशेष्यज्ञानादेरपि कार-णत्वापत्त्या तद्वारणायैतादृशानुमानस्याप्रयोजकताया एव शरणीकरणीयत्वे चेत्यर्थः। तद्वत्=विशेष्यज्ञानकारणत्वानुमानाप्रयोजकत्ववत्। इहापि=विशेषणज्ञानकारणत्वानु-मानेऽपि। वक्ष्यमाणेष्टापत्तेरिति। "अस्तु विशेष्यज्ञानमपि कारण" मित्यादिनेत्यादिः।

सामान्यलक्षणाजन्यज्ञाने=घटत्वसामान्यलक्षणाजन्यज्ञाने। असन्निकृष्टघटा-न्तरस्येति। असन्निकृष्टोऽत एव सन्निकृष्टादन्यस्तस्येत्यर्थः। तस्य=असन्निकृष्ट-घटान्तरस्य। अनुपस्थितत्वेनेति। असन्निकृष्टत्वादेवेति भावः। दुर्घटमिति। न च

❀ मणिदीपिनी ❀

सामान्यलक्षणादूषकयुक्त्यन्तरमाह—अपि चेति। प्रमेयत्वेन व्याप्तिं परि-

# स्यात्। तथा च परकीयज्ञानविषये घटत्वं न

## ❀ जागदीशी ❀

अनुपस्थितस्वाश्रये स्वाऽप्रकारकम्। तथा च तत्रानुपस्थितघटांशे निर्विकल्पकमेव यावद्घटगोचरं ज्ञानमतो नोक्तदोषः।

## ❀ काशिकानन्दी ❀

सन्निकृष्टघटस्यापि विशेष्यतया तद्विषयकज्ञानस्य पूर्वं जाततया कथं विशेष्यज्ञानस्य कारणत्वं दुर्घटमिति वाच्यम्। असन्निकृष्टघटस्यापि विशेष्यत्वान्निखिलविशेष्यज्ञानजन्यताया एव दुर्घटत्वात्। न चोक्तानुमानेन विशेष्यताश्रयज्ञानकारणत्वमेव साध्यते न तु यावद्विशेष्यज्ञानकारणत्वमिति वाच्यम्। एवं सति प्रकारताश्रयज्ञानकारणत्वमेव तत्रापि साध्यताम्, न तु प्रकारीभूततत्तद्वह्न्यादिज्ञानकारणत्वम्। एवं च सामान्यलक्षणाया अनुपयोग एव। न च पर्वतो वह्निमानित्यनुमितौ पर्वतीयवह्नेरेव विशेषणत्वाद् विशेषणीभूतस्य कस्यापि ज्ञानं प्राङ् न जातं घटत्वेन निखिलघटप्रत्यक्षे सन्निकृष्टघटस्यापि विशेष्यत्वाद् यत्किंचिद्विशेष्यज्ञानं जातमेवेति नोभयोः साम्यमिति वाच्यम्। धूमत्वेन धूलीपटलभ्रमोत्तरधूमत्वेननिखिलधूमप्रत्यक्षीयविशेष्यताश्रयस्य कस्यापि धूमस्य प्राक्क्षणेऽज्ञानेन तत्रापि समानत्वाद्।

**अनुपस्थितस्वाश्रयेति**। अनुपस्थितो यः स्वाश्रयः, स्वं घटत्वादिकम्। तथा चोपस्थिते घटत्वाश्रये घटत्वप्रकारकम्, अनुपस्थिते घटत्वाश्रये च घटत्वाऽप्रकारकमिति आंशिकनिर्विकल्पकमेव सामान्यलक्षणया जायते, अनुपस्थितघटविशेष्यकघटत्वप्रकारकज्ञानं हि न संभवति तत्कारणीभूतस्य तद्विशेष्यविषयकज्ञानस्य पूर्वमसत्त्वादित्येतावन्मात्रमादाय निर्विकल्पकमित्युक्तमिति भावः। **यावद्घटगोचरमिति**। सामान्यलक्षणाजन्यं यावद्घटगोचरमेकमपि ज्ञानमुपस्थितानुपस्थितविशेष्याभ्यामांशिकीं निर्विकल्पकतां सविकल्पकतां च भजत इति भावः। **नोक्तदोषः**=न विशेष्यज्ञानहेतुताया दुर्घटत्वदोषः।

ननु सामान्यलक्षणया निर्विकल्पकज्ञानस्यापि जनने कीदृशः कार्यकारणभावः? न हि स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन तत्प्रकारकप्रत्यक्षं प्रति स्वविषयो-

## ❀ मणिदीपिनी ❀

छिन्दन्निति। प्रमेयत्वात्मकव्याप्तिं गृह्णन्नित्यर्थः। संयोगाभावव्याप्यतया प्रमेयत्वेन घटादेर्ग्रहे पश्चादपरत्रापि व्याप्तिस्मरणेन तदनुमानदर्शनात्प्रमेयत्वेन निखिलज्ञानं तस्यावश्यकमिति सार्वज्ञमापद्यत इति भावः। ननु आपद्यतां सार्वज्ञं ततः किमत आह तथा चेति। सार्वज्ञापत्तौ चेत्यर्थः। **परकीयज्ञानविषय इति**। परसम्बन्धिज्ञानविषय इत्यर्थः। सम्बन्धित्वं च विषयितया। परञ्च वक्ष्यमाणघटत्वात्। तथा च घटत्वादन्यो यः प्रमेयत्वाद्यात्मकधर्मः तत्प्रकारकज्ञानविषये घटादौ इत्यर्थः फलितः। घटत्वं न

# वेति संशयो न स्यात। प्रमेयत्वेन तदन्यतरनिश्चयात्

### ❀ जागदीशी ❀

घटत्वादिसामान्यस्य च स्वेतरप्रकारत्वाऽनिरूपितघटनिष्ठविषयतासम्बन्धेनैव

### ❀ काशिकानन्दी ❀

भूतसामान्याश्रयनिष्ठविषयतासम्बन्धेन तद्विषयकज्ञानत्वेन हेतुत्वमिति युक्तम्। असन्निकृष्टे घटे विशेष्यताविरहेण तादृशकार्यकारणभावासंभवात्। न च स्वप्रकारीभूतसामान्याश्रयनिष्ठविषयतासम्बन्धस्यैव कार्यतावच्छेदकत्वस्वीकारान्नायं दोष इति वाच्यम्। घट इत्याकारकप्रत्यक्षस्य स्वप्रकारीभूतसामान्याश्रयनिष्ठं यत् प्रमेयाणीत्याकारकज्ञानीयविषयत्वं तेन सम्बन्धेन निखिलप्रमेये वर्त्तमानतया व्यभिचारापत्तेः तद्वारणाय प्राक्प्रपञ्चितदिशा स्वप्रकारीभूतसामान्याश्रयनिष्ठायाः स्वीयप्रकारतानिरूपितविशेष्यताया एव संसर्गत्वस्वीकारे पुनरसन्निकृष्टघटभानं दुर्घटमेव। यदि च घटत्वाश्रयनिष्ठस्वीयविषयतासम्बन्धेन प्रत्यक्षं प्रत्येव सामान्यज्ञानस्य हेतुत्वं वाच्यम्। असन्निहितघटांशे घटत्वाऽप्रकारकं सन्निहितघटांशे घटत्वप्रकारकं यद् ज्ञानं तस्य निरुक्तविषयतासम्बन्धेनासन्निहिते सन्निहते च सत्त्वाददोषः। स्वीयत्वस्य विषयताविशेषणात् यत्किंचित्प्रमेयमित्याद्याकारकज्ञानान्तरीयविषयतामादाय न दोष इति विभाव्यते, तदा द्रव्यत्वज्ञानोत्तरजायमानं यत्सन्निहितद्रव्ये द्रव्यत्वप्रकारकमसन्निहितद्रव्ये तदप्रकारकं ज्ञानं तत्र व्यभिचारः तादृशज्ञानस्य घटत्वाश्रनिष्ठस्वीयविषयतासम्बन्धेन घटे वर्तमानत्वात्तत्पूर्वं च स्वीयघटत्वाश्रयनिष्ठविषयतासम्बन्धेन घटत्वज्ञानविरहादत आह—घटत्वादीति। घटत्वादिसामान्यलक्षणायाश्चेत्यर्थः। स्वेतरप्रकारत्वानिरूपितेति। असन्निहितघटविषयकनिर्विकल्पकानुरोधेन नञ्द्वयम्। तथा च घटत्वज्ञानोत्तरजायमानासन्निहितसन्निहितोभयनिखिलघटविषयताया अपि घटत्वेतरप्रकारत्वाऽनिरूपितत्वसत्त्वादुभयसंग्रहः। घटनिष्ठेति। घटत्वाश्रयनिष्ठेत्यर्थः। एवं च घटत्वेन पटभ्रमीयपटनिष्ठस्वीयविषयिताया घटत्वेतरप्रकारत्वाऽनिरूपितत्वेऽपि स्वीयविषयीभूतघटत्वाश्रयनिष्ठविषयतासम्बन्धेन

### ❀ मणिदीपिनी ❀

वेति संशयः इति। अयं घटो न वा अत्र घटत्वं वर्तते नवेत्याद्याकारकसंशय इत्यर्थः। यद्वा "ज्ञायतां प्रमेयत्वदर्शिना भवता मामकी चित्तवृत्ति" रिति खण्डनकारोक्ताभिप्रायानुवादोऽयम्। तथा च पुरुषान्तरीयज्ञानविषये घटादिसंशयः—"एतत्पुरुषीयज्ञानविषयो घटो न वा" "अयं घटं वा अन्यद्वा जानाती" त्याद्याकारकसंशयो न स्यादित्यर्थः। न स्यादित्यत्र हेतुमाह—प्रमेयत्वेनेति। तदन्यतरनिश्चयादिति। घटे घटत्वस्य, अघटे घटत्वाभावस्य चासंसर्गाग्रहवशेन निश्चयादित्यर्थः। न चासंसर्गाग्रहवशाद् सामान्यलक्षणानभ्युपगन्तॄणामपि ज्ञातघटत्वस्य कथं न घटे निश्चय इति वाच्यम्। दोषवशेन तदसंभवात्। प्रमेयवानित्यनुभवात्तु नात्राभियोगावकाशः।

# प्रमेयत्वेन घटं जानात्येव, घटत्वं तस्य न जानातीति चेन्न, तत् किं घटत्वं न प्रमेयं येन तन्न जानीयात ?

❀ जागदीशी ❀

घटत्वप्रकारकप्रत्यक्षं प्रति हेतुत्वं वाच्यम्। अतो विनापि घटत्वस्य ज्ञानं

❀ काशीकानन्दी ❀

पटे घटत्वविषयकज्ञानविरहप्रयुक्तव्यभिचारो न भवति पटनिष्ठविषयताया घटत्वाश्रयनिष्ठत्वविरहादिति भावः। यत्र द्रव्यत्वज्ञानोत्तरं सन्निकृष्टपटांशे द्रव्यत्वप्रकारकं घटाद्यंशे च निर्विकल्पकं तत्र घटनिष्ठविषयताया घटत्वेतरप्रकारत्वाऽनिरूपितत्वात् तादृशविषयतासम्बन्धेन प्रत्यक्षस्य घटे सत्त्वात् तत्पूर्वं च घटत्वज्ञानविरहाद् व्यभिचारः स्यादिति तद्वारणाय—घटत्वप्रकारकप्रत्यक्षमिति। एवं चोक्तज्ञानं द्रव्यत्वप्रकारकमेव न तु घटत्वप्रकारकमित्यदोष इति भावः।

ननु घटत्वप्रकारकप्रत्यक्षत्वस्य कार्यतावच्छेदकतया निवेशावश्यकत्वे स्वेतरप्रकारत्वानिरूपितत्वविशेषणमफलम्। द्रव्यत्वेन सन्निकृष्टपटविशेष्यकमसन्निकृष्टघटादिनिर्विकल्पकात्मकं यद् ज्ञानं तस्य घटत्वप्रकारकत्वविरहेणैव पूर्वं घटत्वज्ञानविरहेऽपि प्रागुक्तव्यभिचाराऽप्रसक्तेरिति चेद् ?

न, यत्र घटो द्रव्यं चेत्याकारकं घटत्वेन घटावगाहि द्रव्यत्वेन घटपटोभयावगाहि प्रत्यक्षं तादृशप्रत्यक्षस्य स्वीया घटनिष्ठा या द्रव्यत्वप्रकारतानिरूपितसन्निकृष्टघटपटोभयनिष्ठविशेष्यता तादृशविशेष्यतासम्बन्धेन घटत्वप्रकारकप्रत्यक्षस्य तस्य पटेऽपि वर्त्तमानतया तत्र स्वविषयीभूतघटत्वाश्रयनिष्ठविषयतासम्बन्धेन घटत्वज्ञानविरहाद् व्यभिचारापत्तेः। तदुक्तौ च घटपटोभयनिष्ठविशेष्यता न घटत्वेतरप्रकारत्वाऽनिरूपिता। घटत्वेतरद्रव्यत्वप्रकारतानिरूपितत्वादिति व्यभिचारवारणम्।

ननु घटत्वेन यत्र घटपटोभयावगाहिभ्रमः तत्र घटत्वेतरनिष्ठप्रकारत्वानिरूपितस्वीयविषयतासम्बन्धेन तादृशप्रत्यक्षस्य घटे पटे चैव सत्त्वात्तत्र च स्वीयघटत्वाश्रयनिष्ठविषयतासम्बन्धेन पटे घटत्वज्ञानविरहाद् व्यभिचारः। स्वीयघटत्वाश्रयनिष्ठविषयत्वात्मककारणतावच्छेदकसम्बन्धो घटमात्रवृत्तीति प्रागुक्तमेव। न च घटवृत्तित्वविशिष्टविषयता कार्यतावच्छेदिकेति वाच्यम्। तथा सति स्वेतरप्रकारत्वानिरूपितत्वविशेषणवैफल्यापत्तेरिति चेद् ?

❀ मणिदीपिनी ❀

संशयमुपपादयितुमाह—प्रमेयत्वेनेति। जानात्येवेत्येवकारः प्रमेयत्वेनेत्यनन्तरं योज्यः। घटमित्यनन्तरं वा। तस्य = घटस्य। तद् = घटत्वम्।

## ❀ जागदीशी ❀

द्रव्यत्वादिसामान्यज्ञानाद् घटस्य प्रत्यक्षोत्पादेऽपि न व्यभिचार इति भावः।

नन्वेवं मेयत्वसामान्यलक्षणया घटत्वपटत्वादिघटपटादिपूर्वानुपस्थित-यावद्वस्तुनिर्विकल्पकोत्पत्तौ उत्तरकालं घटादौ घटत्वादिनिश्चये बाधकाभावे-

## ❀ काशिकानन्दी ❀

न, भ्रमज्ञानीययोः घटपटनिष्ठविषयतयोर्भिन्नत्वात्। अन्यथा घटत्ववन्निष्ठविशेष्यता-निरूपितत्वेन पटांशेऽपि तस्य प्रमात्वापत्तेः। घटत्वाभाववत्पटनिष्ठविशेष्यतानिरूपितत्वेन घटांशेऽपि भ्रमत्वापत्तेश्च। एवं च घटनिष्ठविषयतासम्बन्धेनोक्तज्ञानस्य पटे विरह-देव न दोष इति।

घटस्य प्रत्यक्षोत्पादेऽपीति। घटविषयकनिर्विकल्पकात्मकप्रत्यक्षोत्पादेऽपीत्यर्थः। न व्यभिचार इति। यद्यपि घटनिष्ठस्वीयविषयतामात्रस्य कार्यतावच्छेदकसम्बन्धत्वे घटघटत्वयोः प्राथमिकनिर्विकल्पकेऽपि व्यभिचारः संभवतीति द्रव्यत्वसामान्यज्ञानोत्तर-जायमाननिर्विकल्पकपर्यन्तगमनमनावश्यकम्। न च यत्किंचित्प्रकारकत्वस्य कार्यतावच्छेदकत्वादेतद्दोषानवकाश इति वाच्यम्। यत्र घटघटत्वयोर्निर्विकल्पकमेव पटत्वप्रकारकं प्रत्यक्षं तत्र व्यभिचारसंभवात्। न च स्वप्रकारीभूतसामान्याश्रयीभूतघटनिष्ठविषयत्वनिवेशे तद्दोषवारणं संभवतीति वाच्यम्। यत्र घटघटत्वनिर्विकल्पकात्मकमेव द्रव्यत्वप्रकारकं तत्र व्यभिचारात्।

तथापि घटघटत्वयोर्निर्विकल्पकात्मकद्रव्यत्वप्रकारकप्रत्यक्षकारणीभूतद्रव्यत्वज्ञानो-त्तरजायमानं यदुपस्थितद्रव्ये द्रव्यत्वप्रकारकं असन्निकृष्टद्रव्ये च द्रव्यत्वाऽप्रकारकं प्रत्यक्षं तन्मात्रे एवं व्यभिचारप्रसक्तिसंभवे घटघटत्वयोर्निर्विकल्पकात्मकस्य द्रव्यत्वप्रकारकप्रत्यक्षस्य ग्रहणं शुल्कभीरोः शाकटिकस्य कथामनुकरोतीति केवलद्रव्यत्वप्रकारकालौकिकप्रत्यक्षे एव व्यभिचार उक्तः। अलौकिकविषयतायाः संसर्गत्वेऽत्रैव दोषो वक्तव्यश्चेति युक्तम्-द्रव्यत्वप्रकारकपर्यन्तमिति।

यावद्वस्तुनिर्विकल्पकोत्पत्ताविति। असन्निकृष्टवस्तुविषयकनिर्विकल्पकस्य भवताम्युपगमादिति भावः। सन्निकृष्टस्य प्रकारतया भानादनुपस्थितेति यावद्वस्तुविशेषणम्। घटादौ घटत्वादिनिश्चये = घटनिष्ठविशेष्यतानिरूपितघटत्वप्रकारताकनिश्चये।

बाधकाभावेनेति। ननु तदानीं घटत्वप्रकारकघटमुख्यविशेष्यकचाक्षुषादिकं न संभवति। चक्षुरादिसन्निकर्षस्यासन्निहिते तस्मिन्नभावात्। नापि मानसम्। घटत्वादि-प्रकारतानिरूपितविशेष्यताप्रयोजकाऽसंसर्गाग्रहादिरूपकारणस्य तत्रासंभवात्। बाधनिर्णये प्रतिबध्यमानसप्रत्यक्षासंभवस्य प्रागेवोक्तत्वात्। न च प्रमेयत्वज्ञानोत्तरजायमानसकल-विशेष्यकप्रमेयत्वप्रकारकचाक्षुषस्यैव घटत्वपटत्वादिनिखिलप्रकारकत्वापत्तिरिति वाच्यम्। चक्षुःसन्निकर्षाभावविशिष्टज्ञानस्य प्रतिबन्धकत्वात्। न च चक्षुःसन्निकर्षाभावविशिष्ट-तत्प्रकारकज्ञानस्यैव प्रतिबन्धकत्वं प्रागावेदितम्। अन्यथा प्रमेयत्वेन निखिलप्रमेये-

## ❀ दीधितिः ❀

सामान्यलक्षणाया । सार्वज्ञापत्त्या—

## ❀ जागदीशी ❀

तदुत्पत्त्या सार्वज्ञं स्यात्, न चेष्टापत्तिः, तथा सति प्रमेयत्वादि-सामान्यप्रत्यासत्तिजन्यज्ञानोत्तरम् "अयं घटो न वा" "घटो द्रव्यं न वे"त्यादि-संशयानुत्पत्तिप्रसङ्गादत आह सार्वज्ञेति ।

## ❀ काशिकानन्दी ❀

ज्ञानोत्तरं द्रव्यत्वेन निखिलद्रव्यज्ञानं न स्यादिति वाच्यम् । एतन्मते असन्निकृष्टविशेष्यताकज्ञानानुत्पत्त्या प्रकारत्वानिवेशाद् । असन्निकृष्टनिर्विकल्पकस्यैव जायमानत्वेनोक्तस्थले द्रव्यत्वेनासन्निकृष्टद्रव्यविशेष्यकज्ञानानुत्पत्तौ क्षतिविरहादिति चेद् ?

न, अत्र मते विशेष्यताप्रयोजकत्वस्य विशेष्यज्ञाने सत्त्वात् । तथा च सांसर्गिकविषयतानिरूपिततद्विषयताकप्रत्यक्षत्वावच्छिन्नं, विषयतानिरूपिततद्विषयताकप्रत्यक्षत्वावच्छिन्नं वा प्रति तद्विषयकज्ञानत्वेन हेतुत्वं, न तु विशेष्यज्ञानत्वेन प्रकारज्ञानत्वेन च पृथक्पृथगिति मानसात्मकमेव घटत्वपटत्वादिनिखिलप्रकारताकप्रत्यक्षं समापद्यते, घटः पट इत्यादिमात्राकारकज्ञानानां बाधनिर्णयाऽप्रतिबध्यतया तदीयविशेष्यताया असंसर्गाग्रहाऽप्रयोज्यत्वेऽपि प्रयोजकान्तरस्य सत्त्वाद् ।

वस्तुतस्तु असन्निकृष्टधूमादिष्वपि निर्विकल्पकोत्तरं धूमत्वप्रत्यक्षस्यैतदनुमततया चक्षुःसन्निकर्षाभावविशिष्टतत्प्रकारकज्ञानत्वेनैव विरोधित्वम् । तथा च प्रमेयत्वेन निखिलप्रमेयचाक्षुषस्यापि घटत्वादिनिखिलप्रकारताकत्वं घटादिनिखिलविशेष्यताकत्वं च स्यादिति ध्येयम् ।

तदुत्पत्त्या = घटविशेष्यकघटत्वप्रकारकनिश्चयोत्पत्त्या । ज्ञानोत्तरमिति । इदन्त्वादिना इदमादेः घटत्वादिना घटादेश्चोपस्थितावसंसर्गाग्रहादिवशेनेदन्त्वावच्छिन्नविशेष्यताकघटत्वादिप्रकारताकज्ञानोत्पत्ताविति शेषः । अयं घटो न वेति । लौकिकसंशयाकारोऽयम् । अयमिति सन्निकृष्टनिर्देशकत्वात् । मानसिकनिश्चयस्यापि लौकिकसंशयप्रतिबन्धकत्वमस्तीत्यभिप्रायः । ननु दोषविशेषजन्यैतादृशलौकिसंशयस्य तद्धर्मिकतद्वत्तानिश्चयप्रतिबध्यत्वं यदि न स्वीक्रियते तदा नात्र संशयानुपपत्तिरत आह— घटो द्रव्यं न वेतीति । मानसिकसंशयाकारोऽयम् । मानसिकसंशयं प्रति मानसिकनिश्चयस्य प्रतिबन्धकत्वमस्त्येवेति संगतिः ।

❀ जागदीशी ❀

यत्तु कैश्चिदुक्तं—प्रमेयत्वसामान्यलक्षणया घटत्वज्ञानोत्पत्तिकाले तद्वृत्ति-
धर्मस्यापि निर्विकल्पकज्ञाना—

❀ काशिकानन्दी ❀

ननु सामान्यलक्षणया निर्विकल्पकाऽस्वीकारेऽपि यत्र 'पटो द्रव्यं' 'घटश्चे'त्याकारक-
समूहालम्बनं, तदुत्तरं द्रव्यत्वाभावकोट्युपस्थितिस्तत्र तृतीयक्षणे घटो द्रव्यं न वेति संशयो-
नुभूयते। पटे एव द्रव्यत्वनिश्चयेन तस्य घटो द्रव्यं न वेति संशयाविरोधित्वात्। स च
संशयः संप्रति न स्यात्। प्रथमक्षणीयद्रव्यत्वज्ञानसत्त्वेन द्वितीयक्षणे घटो द्रव्यमिति
निश्चयोत्पादसंभवात्। तस्य च तृतीयक्षणे घटो द्रव्यं न वेति संशयप्रतिबन्धकत्वात्। न
च चित्तस्थैर्यभङ्गादिरूपदोषविशेषवशादुत्तरक्षणे घटांशे द्रव्यत्वोपनयविरहादेव प्रतिबन्धक-
विरहान्न दोष इति वाच्यम्। एवं सति संशयस्याप्यनुपपत्तिप्रसङ्गात्। घटे द्रव्यत्वोपनय-
प्रयोजकसामग्रीविरहात्। चित्तस्थैर्यभङ्गादिरूपदोषसत्त्वात्। द्वितीयक्षणे द्रव्यत्वाभावज्ञान-
स्याप्यनुत्पादप्रसङ्गाच्च। न च तत्तदुपनीतभाने तत्तदुपनायकज्ञानस्य विशिष्यैव कारणत्व-
मभ्युपगम्यते, एवं च प्रथमक्षणीयद्रव्यत्वज्ञानस्योपनायकत्वमेव नाङ्गीक्रियते। फलानु-
रोधात्। द्वितीयक्षणे द्रव्यत्वज्ञानान्तरोत्पादेनैव तृतीयक्षणे संशय इति वाच्यम्। एवं
सति सामान्यलक्षणाजन्यनिर्विकल्पकस्याप्युपनायकत्वाऽस्वीकारस्य सुवचतया कथं सार्वज्ञा-
पत्तिः कथं वा संशयानुपपत्तिरिति चेद्?

न, पटो द्रव्यं, घटश्चेत्याकारकसमूहालम्बनोपस्थितिक्षणे द्रव्यत्वाभावोपस्थितिविरहे
उत्तरक्षणेऽसंसर्गाग्रहादिवशेन घटो द्रव्यमिति निश्चयोत्पादात्तृतीयक्षणे संशयोऽसिद्ध एव।
यत्र तु पटो द्रव्यं घटश्च द्रव्यत्वाभावश्चेत्याकारकसमूहालम्बनं यत्र वा पटो द्रव्यमिति
ज्ञानोत्तरं घटो द्रव्यत्वाभावश्चेति समूहालम्बनं तथाविधस्थलेऽत्रैवोत्तरक्षणे संशयस्वी-
कारात्। न हि तत्रापि संशयानुपपत्तिः। द्रव्यत्वतदभावयोरुपस्थितत्वेनोभयोपनायकसत्त्वात्
पूर्वं बाधकविरहाच्च। एकधर्मिणि तदुभयोपनीतभानमेव च संशयो नाम। एतेनै-
निर्वाहे पटो द्रव्यमिति ज्ञानोत्तरं क्वचित्संशयः क्वचित्संशयाभाव इति नियमोपपत्तयेऽनु-
गतरूपेणोपनयज्ञानस्य कारणताकल्पनानौचित्यात्। न च सामान्यलक्षणास्थलेऽपि
द्रव्यत्वद्रव्यत्वाभावत्वावच्छिन्नकोट्युपस्थितिसत्त्वे संशय उपपद्यत इति वाच्यम्। प्रमेय-
मित्याकारकज्ञानोत्तरं तृतीयचतुर्थादिक्षणे द्रव्यत्वाभावत्वावच्छिन्नोपस्थितावपि संशयस्या-
भावात्तत्रैव पूर्वं द्रव्यत्ववैशिष्ट्यज्ञानेन तादृशसंशयानुपपत्तेः। अन्यथा अयं घटो न वा अयं
पटो न वेत्यादिनिखिलविषयकसंशयस्यैव तत्रापत्तिप्रसङ्गादिति दिक्।

प्रमेयत्वेनानुपस्थितनिखिलनिर्विकल्पके जाते जातित्वघटत्वत्वादीनामप्युपस्थित-
तद्वैशिष्ट्येनैव घटत्वभानसंभवो न तु स्वरूपत इति न सार्वज्ञापत्तिरिति केषांचिन्मतमाह
यत्त्विति। तद्वृत्तिधर्मस्य = घटत्ववृत्तिघटत्वत्वजातित्वादिधर्मस्य निर्विकल्पकज्ञाना-

❀ दीधितिः ❀

तस्यास्तदजनकत्वे तु—

❀ जागदीशी ❀

दुत्तरकालं घटे घटत्वस्येव घटत्वेऽपि तद्वृत्तिधर्माणामवश्यं भानं सामग्रीसत्त्वात् । तथा च घटत्वांशेऽन्याऽप्रकारकज्ञानाऽसंभवान्न सार्वज्ञापत्तिरिति ।

तत्तुच्छम् । घटत्वांशे धर्मान्तरप्रकारकस्यैव तदंशेऽन्याऽप्रकारकस्यापि ज्ञानस्य सामग्रीसत्त्वेनोत्पत्तिसंभवात् । जातिमान् घट इत्याकारकप्रत्यक्षानुरोधेन निरवच्छिन्नघटत्वादिप्रकारकज्ञानं प्रति निरवच्छिन्नघटत्वादिविषयताकत्वेन हेतुत्वात् । अन्यथा घटांशे घटत्वमिव घटत्वांशेऽपि जातित्वमवगाहमानस्यैव ज्ञानस्योत्पत्त्या जातिमान् जातिमानित्येव धीः स्यात्, न तु जातिमान् घट इत्याकारिकेति दिग् ।

तस्यास्तदजनकत्वे त्विति । सामान्यप्रत्यासत्तेर्निर्विकल्पकाऽजनक-

❀ काशिकानन्दी ❀

दिति । तस्यापि प्रमेयत्वादिति भावः । उत्तरकालं = निर्विकल्पकोत्तरकालम् । तद्वृत्तिधर्माणां = घटत्ववृत्तिधर्माणां जातित्वादीनाम् । भानमिति । स्यादिति शेषः । सामग्रीसत्त्वादिति । न च जातित्वादिभासकसामग्रीसत्त्वेऽपि जातित्वाद्यवच्छिन्नप्रकारताकप्रत्यक्षकारणीभूतजातित्वविशिष्टज्ञानस्य प्रागनुत्पन्नत्वात्, निर्विकल्पकस्यैव प्राग् जातत्वाद् घटः जातिः इत्याद्याकारसमूहालम्बनमेव तत्र भवेन्न तु जातिमान् घट इतीति वाच्यम् । युगपद्विशेष्ये विशेषणमिति रीत्या जातिमानित्याकारकप्रत्यक्षस्य संभवात् । तथा मणिकारादिभिरुपगमात्, सार्वज्ञभयेनैव तथा स्वीकर्तुं शक्यत्वाच्च । अन्याऽप्रकारकेति । जातित्वाद्यप्रकारकघटइत्याद्याकारकेत्यर्थः । जातिमान् घटइत्यादि । अत्र जातिमानित्यत्र जातित्वेन घटत्वाद्यात्मकजातिभानं घट इत्यंशे च घटत्वस्य स्वरूपतो भानम् । तन्न स्यात् । घटत्वांशे जातित्वभासकजातित्वोपस्थितेः सत्त्वात् । तत्सत्त्वेनैव जातिमानिति भानम् । एवं च प्रमेयत्वसामान्यलक्षणयापि निर्विकल्पकात्मकस्वरूपतोघटत्वोपस्थितिसत्त्वात्सार्वज्ञं दुर्वारमेवेति भावः । अन्यथा = उक्तहेतुत्वानङ्गीकारे । उत्पत्त्या = उत्पत्तिप्रसङ्गेन । दिगिति । जातित्वादिना घटत्वादिप्रकारकप्रत्यक्षे जातित्वादिना घटत्वाद्युपस्थितेकारणत्वे तु सुतरामेव सार्वज्ञापत्तिरिति दिगर्थः । यदि च 'घट' इत्येतावन्मात्राकारकमानसाभावेऽपि प्रत्यक्षभाव इति प्रागभिहितमतमुररीक्रियते तदा न सार्वज्ञमापद्यते । सकलविषयकनिर्विकल्पकोत्पादेऽपि विशिष्टबोधजनकसामग्रीविरहात् । घटो द्रव्यमित्यादिमानसस्यापि व्यापकीभूतघटप्रकारकप्रत्यक्षत्वावच्छिन्नजनकघटत्वप्रकारकज्ञानविरहेणापत्त्यसंभवात् । चक्षुषाद्यात्मकसार्वज्ञं तु दूरनिरस्तं सन्निकर्षविरहाद्, सन्निकर्षविरहविशिष्टज्ञानेन प्रतिबन्धाच्चेत्येतदपि दिगित्यनेन सूचितम् ।

सकलघटवृत्तिधर्मस्य प्रमेयत्त्वेन तदज्ञानासंभवात्।

॥ इति सामान्यलक्षणापूर्वपक्षः ॥

---

❀ दीधितिः ❀

तत एव बाधकान्न तत्कारणमिति निरस्तम्

॥ इति सामान्यलक्षणापूर्वपक्षदीधितिः ॥

---

❀ जागदीशी ❀

त्वे त्वित्यर्थः। तत एवेति। सामान्यजन्यज्ञाने व्यभिचारादेव विशेष्यज्ञानं न कारणमित्यर्थः।

॥ इति सामान्यलक्षणापूर्वपक्षजागदीशी ॥

---

❀ काशिकानन्दी ❀

सामान्यजन्यज्ञाने = सामान्यलक्षणाजन्येऽसन्निकृष्टविशेष्यकज्ञाने। व्यभिचारादिति। तद्विशेष्यविषयकज्ञानस्य पूर्वमसत्त्वादिति भावः।

॥ इति सामान्यलक्षणापूर्वपक्षतत्त्वप्रदीपः ॥

---

❀ मणिदीपिनी ❀

तत् किमित्यादिना पृष्टमेव स्फुटयति—सकलेति। सकलघटेषु वर्तमानधर्मस्य घटत्वस्य, सकलस्य घटवृत्तिधर्मस्य घटत्व-तद्घटत्व-प्रमेयत्वादेरिति वार्थः। प्रमेयत्वेन= प्रमेयात्मकतया। तदज्ञानासंभवात्=सकलघटवृत्तिधर्माज्ञानासंभवात्। घटत्वाज्ञानाऽसंभवादिति वा। तस्य ज्ञाने च घटे घटत्वज्ञानमपि सुघटमेवेति भावः।

॥ इति सामान्यलक्षणापूर्वपक्षमणिदीपिनी ॥



ॐ

श्रीगणाधिपतये नमः

# अनुमानजागदीश्याम्

# सामान्यलक्षणासिद्धान्तग्रन्थः

काशिकानन्दी ( तत्त्वप्रदीप ) युतः



❀ सामान्यलक्षणासिद्धान्तचिन्तामणिः ❀

**उच्यते। यदि सामान्यलक्षणा नास्ति तदाऽनुकूलतर्कादिकं विना धूमादौ व्यभिचारसंशयो**

---

❀ जागदीशी ❀

ननु धर्मिज्ञानस्य संशयहेतुत्वे मानाभावाद् असन्निकृष्टधूमादीनाम-

❀ काशिकानन्दी ❀

शिवशक्तियुगलमूर्तिं प्रणिवन्द्याभ्यन्तरीयतिमिरहराम्।
अथ विवृतिमपरभागे तनुमः सामान्यलक्षणाग्रन्थे ॥१॥

धर्मिज्ञानस्य = धूमो वह्निव्यभिचारी न वेत्यादिसंशयीयधूमाद्यात्मकधर्मिविषयकज्ञानस्य। मानाभावादिति। अत एव ज्ञानस्य स्वप्रकाशतावादिनां मीमांसकानामज्ञातज्ञानधर्मिकप्रामाण्यसंशयनिर्वाह इति भावः।

ननु धर्मिज्ञानस्य संशयहेतुताविरहे संशये धर्मिविषयताप्रयोजकं किं स्यादिति। न च धर्मेन्द्रियसन्निकर्ष एव तत्प्रयोजकः, अप्रत्यक्षसंशयानुपगमेन सन्निकर्षस्यावश्यकत्वादिति वाच्यम्। सत्यपि सन्निकर्षे वेगेन तुरगादौ गच्छतः सकलधर्मिकसंशयानुत्पादात्। न च घटपटाद्यनेकधर्मिज्ञानसत्त्वेऽपि क्वचिदेव घटो द्रव्यं न वेति संशयो न तु सर्वत्रेति धर्मिज्ञानस्य संशयहेतुतावादिनामप्ययं दोषस्तुल्यः। यदि च तत्तद्धर्मिज्ञानत्वेन विशिष्य हेतुत्वमुच्यते तर्हि तत्तत्सन्निकर्षत्वेनैव विशिष्य हेतुत्वमुच्यतां, किमक्लृप्तधर्मिज्ञानस्य हेतुताकल्पनेनेति वाच्यम्। न हि वयं तत्तद्धर्मिज्ञानत्वेन हेतुत्वं ब्रूमः यतः प्रोक्तदोषावकाशः।

❀ मणिदीपिनी ❀

अनुकूलतर्कादिकं विनेति। अनुकूलतर्कस्फूर्तिविरहकाले इत्यर्थः। व्यभिचारज्ञानविघटकानुकूलतर्कसत्त्वे सर्वेषामेव मते संशयाभाव इष्ट एवेति भावः। संशयानु-

न स्यात् । प्रसिद्धधूमे वह्निसम्बन्धावगमात् ।

❀ दीधितिः ❀

**प्रसिद्धधूम** इत्यादि । धर्मिज्ञानस्य संशयहेतुत्वानङ्गीकारेऽपि संशय एव धर्मिभानार्थं सा स्वीकार्या ।

❀ जागदीशी ❀

ज्ञानेऽपि तद्धर्मिकः संशयो भविष्यतीति व्यर्थं तद्भानार्थं प्रत्यासत्तिकल्पनमत आह धर्मीत्यादि । संशय एवेति । सन्देहस्य प्रत्यक्षरूपतया धर्मीन्द्रियसन्निकर्षं विना तद्विषयकत्वाऽसंभवादिति भावः ।

❀ काशिकानन्दी ❀

किन्तु साधारणधर्मवद्धर्मिज्ञानत्वेनैव । एवं च घटादिषु बहुषु धर्मिषु उपस्थितेऽपि सर्वत्र साधारणादिधर्मवत्ताज्ञानविरहान्न सर्वत्र संशयः किन्तु यत्र तद्वत्ताज्ञानं तत्रैव । न च साधारणादिधर्मज्ञानसहकृतसन्निकर्षत्वेनास्माभिरपि हेतुत्वमुपेयत इति तुरगादौ गच्छतः साधारणधर्मज्ञानविरहादेव सन्निकृष्टेषु निखिलेषु न संशय इति वाच्यम् । साधारणधर्मज्ञानसत्त्वेऽपि तुरगगामिनः सन्निकृष्टे सर्वत्र संशयानुत्पादाद् । तथा चाकामेनापि यद्धर्मिणि साधारणादिधर्मवत्ताज्ञानं तत्रैव संशय इति वक्तव्यमिति धर्मिज्ञानस्य संशयहेतुत्वमायातमेव । यत्तु साधारणधर्मवद्धर्मिज्ञानसामग्र्येव संशयकारणं न तु धर्मिज्ञानमिति, तन्न । निरुक्तसामग्रीत्वस्य कारणतावच्छेदकत्वे महागौरवात् ।

मैवम् । वह्निव्याप्तितदभावसहचरितधर्मवद्द्रव्यमिति ज्ञानोत्तरं धूमो वह्निव्याप्यो नवेति संशयानुत्पादात् यद्रूपावच्छिन्ने साधारणादिधर्मवत्ताज्ञानं तद्रूपावच्छिन्नविशेष्यताकसंशयं प्रत्येव तस्य कारणत्वं वक्तव्यम् । एवं च धर्मिविषयतायाः कारणतानवच्छेदकत्वेऽपि तद्धर्मावच्छिन्नविशेष्यतोपपत्तिः । न च धूमत्वस्योक्तसंशये प्रकारतया तत्प्रकारकज्ञानकारणतद्विषयकज्ञानविरहादेव नापत्तिरिति वाच्यम् । धूमत्वावगाहिसमूहालम्बनाद्यात्मकं यत्र तादृशसाधारणादिधर्मज्ञानं तत्रैवापत्तेः ।

**तद्धर्मिकः**=असन्निकृष्टधूमधर्मिकः । **तद्भानार्थं**=असन्निकृष्टधूमभानार्थम् । **प्रत्यासत्तिकल्पनं**=सामान्यलक्षणायाः सन्निकर्षत्वकल्पनम् । **प्रत्यक्षरूपतयेति**। संशयात्मकानुमित्यादे रत्नकोशकाराद्यतिरिक्तैरस्वीकारात् विप्रतिपत्तिवाक्यादपि पश्चान्मानससंशयस्यैवाभ्युपगमात् । **तद्विषयकत्वाऽसंभवात्**=धर्मिविषयकत्वाऽसंभवात् । धर्मितावच्छेदकावच्छिन्ने साधारणादिधर्मवत्ताज्ञानस्यैव धर्मिविषयताप्रयोजकत्वसंभवेऽपि

❀ मणिदीपिनी ❀

पपत्तौ बीजमाह—प्रसिद्धेति । **प्रसिद्धधूमे**=दृष्टे महानसादिस्थधूमे । **वह्निसम्बन्धावगमात्**=वह्निव्याप्तेः प्रत्यक्षीकरणात् । ननु असन्निकृष्टधूमे तदप्रत्यक्षात्तत्र

कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात्। सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते।

---

❀ दीधितिः ❀

धर्मितावच्छेदकप्रकारकज्ञानस्य प्रत्यासत्तित्वाभ्युपगमे त्वविवादात्। तद्धर्मप्रकारकज्ञानस्य तद्धर्माश्रयप्रत्यासत्तित्वोपगमात्।

❀ जागदीशी ❀

ननु संशये धर्मिभानार्थं धर्मितावच्छेदकप्रकारकं कस्यचिदेव ज्ञानं तत्र हेतुरस्तु, कृतं सामान्यलक्षणयेत्यत आह धर्मितेति। अविवादादिति। अस्य सामान्यप्रत्यासत्तावित्यादिः। अविवादमेव विवृणोति तद्धर्मेत्यादि। प्रकारकेति। यथा च सामान्यप्रकारकत्वेनैव हेतुत्वं न तु तद्विषयकत्वमात्रेण

❀ काशिकानन्दी ❀

चाक्षुषीयाद्यतिरिक्तविषयत्वाऽप्रसिद्धेस्तत्प्रयोजकचक्षुःसन्निकर्षादिविरहे प्रयोज्यविषयताया अप्यसंभवादिति भावः।

संशये = धूमो वह्निव्यभिचारी न वेत्यादिसंशये। धर्मिभानार्थं = धूमादिभानार्थम्। धर्मितावच्छेदकप्रकारकं = धूमत्वादिप्रकारकम्। कस्यचिदेवेति। धर्मिण इति शेषः। तत्र = धर्मिप्रत्यक्षे। तथा च कस्यचिद्धर्मिणा सह सन्निकर्षाज्जातस्य धर्मितावच्छेदकप्रकारकतद्धर्मिज्ञानस्यैव संशये धर्म्यन्तरभासकत्वं संभवतीति।

ननु तद्धर्मप्रकारकज्ञानस्येति दीधितिस्थं प्रकारपदमयुक्तम्। नव्यमतव्याख्यानावसरे तद्धर्मविषयकज्ञानस्यैव प्रत्यासत्तिताया निर्धारितत्वादिति परिचिन्त्य प्रकारकपदं प्रतीकतयोपादत्ते—प्रकारकेतीति। एवकारव्यवच्छेद्यमाह—नत्विति। तद्विषयकत्वमात्रेण = सामान्यविषयकत्वमात्रेण। प्रकारतापि विषयतैवेति मात्रपदम्। तथा च निर्विकल्पकीयविषयत्वादिव्यावर्त्तकधर्माऽपुरस्कारेण विषयतामात्रप्रवेशेन न निर्वाहः, किन्तु तद्व्यावर्त्तक-

❀ मणिदीपिनी ❀

सन्देहसंभव इत्यत आह—कालान्तरीयेति। धूमस्य मानाभावेन = धूमविषयकज्ञानकरणाभावेन। अज्ञानादित्यत्रापि धूमस्येत्यस्य सम्बन्धः। सामान्येन = सामान्यलक्षणया। धूमान्तरे = पर्वतीयधूमादौ। विशेषादर्शनेन संशयो युज्यत इति। विशेषदर्शनं हि संशयप्रतिबन्धकम्। तच्चैककोटिमत्ताज्ञानं तद्व्याप्यवत्ताज्ञानं च।

## ❀ जागदीशी ❀

तथोक्तमधस्तात् ।

## ❀ काशिकानन्दी ❀

प्रकारतात्वेनैव विषयताप्रवेश आवश्यक इति भावः । उक्तं = ध्वनितम् । अधस्तादिति। नव्यमतव्याखयानावसरे अत्र केचिदित्यादिध्येयमित्यन्तग्रन्थेनेत्यर्थः ।

अथ कथं तत्प्रकारकज्ञानत्वेनैव हेतुत्वं ध्वनितमधस्तादिति चेद् ? शृणु, तत्प्रकारक-तदाश्रयप्रत्यक्षं प्रति यदि तद्विषयकज्ञानत्वेनैव हेतुत्वं तदा सुरभिचन्दनमिति चाक्षुषस्य सौरभमुख्यविशेष्यकत्वापत्तिः । तत्प्रकारकज्ञानस्य कारणतावादिमते तु तत्प्रकारकघ्राणजत्वा-वच्छिन्नस्यैव कार्यतया उक्तापत्तिविरहः । यत्तु सौरभमुख्यविशेष्यकचाक्षुषाऽप्रसिद्ध्या न-व्यानामपि नापत्तिरिति, तदसत्, प्रसिद्धस्य सुरभिचन्दनमिति चाक्षुषस्य सौरभमुख्य-विशेष्यताया एवापादनात् । सौरभमुख्यविशेष्यकघ्राणज एव तादृशविशेष्यतायाः प्रसिद्धेः।

ननु मुख्यविशेष्यतासम्बन्धेन सौरभत्वप्रकारकचाक्षुषं प्रति तादात्म्येन सौरभत्वादिना गन्धत्वादिना वा प्रतिबन्धकत्वकल्पनान्न दोष इति चेत् ?

न, असौरभत्वादिप्रकारकचाक्षुषं रसत्वादिप्रकारकचाक्षुषादिकं च प्रति पृथक् पृथक् प्रतिबन्धकत्वकल्पनायां महागौरवात् । न च तत्प्रकारकज्ञानस्य कारणतावादिप्राचीन-मतेऽपि उक्तप्रतिबध्यप्रतिबन्धकभावः कल्पनीयः, अन्यथा चक्षुःसन्निकृष्टचन्दने समवायेन सौरभस्य सत्त्वाद् रूपादीनामिव गन्धादीनामपि चाक्षुषं दुर्वारमेव स्यादिति वाच्यम्। यतश्चक्षुःसंयुक्तचन्दनादौ समवेते चन्दनत्वादौ स्वरूपेण जातित्वप्रमेयत्वाद्यात्मक-धर्मसत्त्वान्नियमतो जातिमान् प्रमेयवानित्याद्याकारकप्रत्यक्षापत्तिरिति तद्वारणाय तत्तत्प्रत्यक्षत्वेन तत्तत्सन्निकर्षत्वेन कार्यकारणभावोऽवश्यमभ्युपगन्तव्यः । न च जाति-मानित्यद्याकारकज्ञानकारिणीभूतजातित्वादिप्रकारकज्ञानस्य पूर्वं विरहादेव नापत्तिः, तत्सत्त्वे चेष्टमेव तथा प्रत्यक्षमिति वाच्यम् । विशेष्ये विशेषणमिति रीत्यैव तत्र जाति-मानित्याद्याकारकप्रत्यक्षसंभवात् । किं च तत्रैव सन्निकर्षवशाद् जातित्वादिनिर्विकल्पको-त्पत्तौ तदुत्तरं जातित्वविशिष्टं प्रत्यक्षं तत्पश्चाच्च जातिमानित्याकारकप्रत्यक्षं च दुरपन-मेव। एवं च सर्वत्र तथानुभवविरहेण तत्तत्प्रत्यक्षत्वेन तत्तत्सन्निकर्षत्वेन विशिष्य कार्यकारणभावे वक्तव्ये सौरभप्रकारकत्वादिशालिलौकिकचाक्षुषव्यक्तेरप्रसिद्ध्यैव सामग्री-कल्पनायोगेन सौरभलौकिकचाक्षुषापादनासंभवात् । एवं चोभयवादिनामेव तत्र दोषाभावेन सुरभिचन्दनमिति चाक्षुषे सौरभमुख्यविशेष्यकत्ववारणाय नव्यैरुक्तानन्त-प्रतिबध्यप्रतिबन्धकभावस्य कल्पनीयतया तन्मते गौरवं दुर्वारमेव । कि च मुख्यविशेष्यता-चाक्षुषे तादात्म्येन गन्धादेः प्रतिबन्धकत्वोपगमेऽपि सौरभवच्चन्दनमित्याकारकसौरभ-लौकिकप्रकारकचाक्षुषापत्तिवारणाय लौकिकविषयतया चाक्षुषे तादात्म्येन गन्धादेः प्रतिबन्धकत्वमावश्यकमेवेति क्व प्राचीनानां दोषः ।

अपि च घटकालीनो धूम इत्यादिघटोपनीतचाक्षुषस्य घटमुख्यविशेष्यकत्वापत्तिः। न हि तत्रापि तादात्म्येन घटस्य प्रतिबन्धकत्वसंभवः, तथा सति 'घट' इत्याकारकचाक्षु-

## ❀ काशिकानन्दी ❀

स्याप्यनापत्तेः । इष्टापत्तिरपि न, उपनीतं विशेषणतयैव भासत इति नियमाद् । एवं च तत्र दोषवारणाय मुख्यविशेष्यतासम्बन्धेन तत्प्रकारकचाक्षुषे चक्षुःसन्निकर्षाभावविशिष्टज्ञानत्वेन प्रतिबन्धकत्वं वाच्यम्, तत्रापि घटकालीनो धूमः प्रमेयाणीत्यादिसमूहालम्बनापत्तिवारणाय तत्तत्प्रकारकत्वं ज्ञाने निवेश्यम् । चक्षुःसन्निकर्षज्ञानयोस्तत्पुरुषीयत्वं च । अधिकं प्राक् प्रपञ्चितमिति तत्रापि अक्लृप्तानन्तप्रतिबध्यप्रतिबन्धकभावकल्पनेन नव्यानामतीव गौरवम् । प्राचीनानां तु चक्षुःसन्निकृष्टधर्मिकचाक्षुषप्रकारतापन्नघटत्वविरहादेव दोषाभावः ।

नन्वन्धतमसान्तर्गतचक्षुःसन्निकृष्टघटोपनीतालोकमध्याध्यासीनधूमविशेष्यकघटकालीनोधूमइत्याद्याकारकचाक्षुषस्य चक्षुःसन्निकृष्टघटविशेष्यकघटत्वप्रकारकचाक्षुषानन्तरीणस्य घटमुख्यविशेष्यकत्वापत्तिः प्राचीनानामपि । एवमालोकमध्यवर्तिचक्षुःसन्निकृष्टाणूपनीतभानस्थलेऽपीति चेद् ?

न, चक्षुःसन्निकर्षालोकसंयोगोद्भूतरूपादिविशिष्टनिष्ठविशेष्यताकघटत्वादिप्रकारकचाक्षुषत्वादिना कारणत्वस्य प्राचीनैर्वक्तव्यतया दोषाभावात् । अन्धतमसान्तर्गतघटस्य चक्षुःसन्निकृष्टत्वेऽपि आलोकसंयोगाविशिष्टत्वात् । एवं च तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्या न पृथगपेक्षा प्राचीनानाम् । एवंविधनिवेशः प्रतिबध्यप्रतिबन्धकभावे नव्यानामपि प्रागुक्तः ।

एवं घटघटत्वादीनां निर्विकल्पकोत्तरं नियमतो घटत्वेन निखिलघटप्रत्यक्षमनुभवविरुद्धम् । अत एव क्वचिद् घट एक एव भुवने स च मया दृष्ट इत्यादिप्रत्यया अपि जायन्ते । तदर्थं चादृष्टाद्यात्मकप्रतिबन्धकविशेषः कल्पनीय इति गौरवम् । न च त्वन्मतेऽपि तत्र तृतीयक्षणे निखिलघटप्रत्यक्षापत्तिरिति तवापि प्रतिबन्धकविशेषः कल्पनीय इति वाच्यम् । यत्र प्राथमिकघटत्वप्रकारकप्रत्यक्षकाले सन्निकर्षविगमस्तत्रास्माकं प्रतिबन्धकाकल्पनेन लाघवात् । तव तु प्राथमिकप्रत्यक्षकाले एव निखिलघटप्रत्यक्षापत्तिरिति तत्रापि प्रतिबन्धकविशेषः कल्पनीयः ।

नन्वेतत्सर्वमपि फलमुखगौरवतया न दोषापादकमिति चेन्न, तथा हि—तत्पुरुषीयचक्षुःसन्निकर्षाद्यभावविशिष्टतदीयतत्प्रकारकज्ञानत्वेन तदीयतत्प्रकारकप्रत्यक्षप्रतिबन्धकत्वस्वीकारे तत्प्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति तत्पुरुषीयचक्षुःसन्निकर्षाद्यभावविशिष्टतदीयतत्प्रकारकज्ञानाभावत्वेन कारणत्वं वक्तव्यम् । प्रतिबन्धकाभावस्य कार्यजनकत्वात् । एवं च तत्रैव अभावद्वयमप्रवेश्य लाघवात् तत्पुरुषीयचक्षुःसन्निकर्षादिविशिष्टविशेष्यताकतत्प्रकारकज्ञानत्वेन कारणत्वं सिद्ध्यति इति प्राचीनमतसिद्धकार्यकारणभावो निष्प्रत्यूह एव । न च स्वप्रकारीभूतसामान्याश्रयनिष्ठविषयतायाः कारणतावच्छेदकत्वे प्राचीनानां गौरवमिति वाच्यम् । धारावाहिकप्रमेयाणीत्यादिप्रत्यक्षानुपपत्तिवारणाय नव्यैरपि स्वप्रकारीभूतसामान्याश्रयनिष्ठविषयतायाः प्रतिबन्धकतावच्छेदकसम्बन्धत्वस्य वक्तव्यत्वात् । एवं च वृत्त्यनियामकसम्बन्धेन प्रतियोगित्वानभ्युपगमे नव्यानामपराध्यापत्तिरुपतिष्ठते । अस्माकं त्वन्यो-

❀ दीधितिः ❀

**अत्र वदन्ति। प्रसिद्धधूमे धूमत्वेन व्याप्तिज्ञानमेतद्धूमत्वेन वा।**

❀ जागदीशी ❀

[ सामान्यलक्षणां दूषयितुमुपन्यस्यति—अत्र वदन्तीति ] धूमत्वेनेति। तदवच्छेदेनेत्यर्थः। तेन श्वेतधूमत्वावच्छेदेन वह्निव्याप्यतानिश्चयस्य धूमत्वप्रकारकत्वेऽपि तदुत्तरं धूमो वह्निव्याप्यो न वेति सन्देहः। तादृशनिश्चयेन धूमत्वस्यावच्छेदकत्वानवगाहनात्।

❀ काशिकानन्दी ❀

न्याभावघटितव्याप्तेः प्रवेशान्न कारणत्वघटकतयापि वृत्त्यवियामकसम्बन्धावच्छिन्नप्रतियोगितास्वीकारापत्तिः। न चालौकिकमुख्यविशेष्यतायाः कार्यतावच्छेदकसम्बन्धतया प्राचीनानां गौरवमिति वाच्यम्। मुख्यविशेष्यतायास्त्वयापि प्रतिबध्यतावच्छेदकसंसर्गत्वस्वीकारादलौकिकत्वमस्माकमधिकं प्रविष्टम्। तदापि लाघवमेवास्माकम्। तस्य संसर्गकोटावेव प्रवेशेन तदुपस्थितेरनावश्यकत्वात्। तव तु कारणतावच्छेदकधर्मकोटावभावद्वयं प्रविष्टमिति कथं न गौरवमिति प्राचीनैर्वक्तुं शक्यत्वात्। न चैवमपि 'यद्विशेषयोरिति' न्यायेन नव्यानां तद्विषयकत्वेन कारणत्वमपि सिद्ध्येदेवेति वाच्यम्। आत्मनिष्ठप्रत्यासत्त्या अवश्यकल्पनीयेन तत्प्रकारकप्रत्यक्षतद्विषयकज्ञानयोः कार्यकारणभावेनैवोपपत्तेः नव्योक्तकार्यकारणभावे मानाभावादिति।

नन्वेवं घटत्वादिना निखिलघटादीनां मानसं न स्यात्। चक्षुःसम्बद्धविशेष्यकघटत्वादिचाक्षुषविरहात्। तथाविधचाक्षुषस्य विशेषसामग्रीत्वविरहे तत्रापि घटकालीनो धूम इत्यादेर्घटमुख्यविशेष्यकत्वापत्तिः स्यादिति चेद्? न भवत्येव घटत्वादिना निखिलघटमानसम्। अन्यथा त्वन्मतेऽपि घटत्वादिना निखिलघटमानसं कथमुपपद्यताम्। द्रव्यादिचाक्षुषत्वावच्छिन्नं प्रत्येव प्रतिबन्धककल्पनात्। मानसं प्रति प्रतिबन्धकाभावस्य विशेषसामग्र्या अभावात्। प्रतिबन्धकाभावस्य विशेषसामग्रीत्वविरहे अनुयोगस्य तुल्यत्वात्। मानसे विशेषसामग्र्यन्तरकल्पनेऽस्माकमपि तत्सुवचमित्यारिकं बहुतरमूहनीयम्। एतदेव च प्राक् ध्येयमित्येनन सूचितम्।

परे तु प्रकारकत्वेनैवेत्यत्रैवकारस्याप्यर्थकतामुक्त्वा ग्रन्थं संगमयन्ति। तदवच्छेदेन = धूमत्वावच्छेदेन। धूमत्वमात्रावच्छेदेनेति यावत्। तेन = तदवच्छेदेनेत्यर्थकरणेन। अर्थात् धूमत्वावच्छेदेन वह्निव्याप्यत्वनिश्चयस्यैव संशयविघटकत्वस्वीकारेण। धूमत्वप्रकारकत्वेऽपि = धूमत्वविशेष्यतावच्छेदकत्वेऽपि। तदुत्तरं = श्वेतधूमो वह्निव्याप्य इति निश्चयोत्तरम्। सन्देह इति। उपपद्यत इति शेषः। धूमत्वेनेत्यस्य धूमत्वप्रकारेणेत्यर्थकरणे उक्तज्ञानोत्तरमुक्तसन्देहानुपपत्तिः स्यादिति भावः। तादृशनिश्चयेन = श्वेतधूमोवह्निव्याप्य इति निश्चयेन। धूमत्वस्य = शुद्धधूमत्वस्य। तेन श्वेतत्वविशिष्टधूमत्वस्यावच्छेदकत्वावगाहनेऽपि न क्षतिः।

❀ दीधिती ❀

आद्ये संशयोऽसिद्धः । द्वितीये धूमत्वावच्छेदेन व्याप्तिग्रहस्यैव

❀ जागदीशी ❀

यत्तु धूमत्वेनेत्यस्य धूमत्वमात्रावच्छिन्नविशेष्यताकेत्यर्थकरणान्नोक्तदोष इति। तत्तुच्छम्। 'वह्निव्याप्योधूमःसुन्दर' इति धूमत्वसामानाधिकरण्येन व्याप्तिनिश्चयेऽपि "वह्न्यव्याप्यो धूमः कुरूप" इति धूमधर्मिकव्याप्त्यभावज्ञानोदयाद्, अवच्छेदकत्वावगाहिन एव ज्ञानस्य प्रतिबन्धकत्वादित्यन्यत्र विस्तरः।

व्याप्तिज्ञानं=व्याप्तिनिश्चयः। असिद्ध इति। धूमत्वावच्छेदेन व्याप्ति-

❀ काशिकानन्दी ❀

'श्वेतधूमोवह्निव्याप्य' इति निश्चयोत्तर'धूमोवह्निव्याप्योनवेति' सन्देहः धूमत्वेनेत्यस्य धूमत्वमात्रप्रकारेणेत्यर्थकरणेनापि संभवतीति धूमत्वावच्छेदेनेत्यर्थकरणमनावश्यकमित्यभिमन्यमानानां मतमाह—यत्त्विति। नोक्तदोषः=न श्वेतधूमोवह्निव्याप्य इति निश्चयोत्तरं धूमोवह्निव्याप्योनवेति संशयानुपपत्तिदोषः। उक्तनिश्चयस्य श्वेतत्वधूमत्वोभयावच्छिन्नविशेष्यताकत्वादिति भावः। ज्ञानोदयादिति। द्विविधं हि धूमं तादृशज्ञानवान्पुरुषो मनुते। एकं वह्निव्याप्यम्, अपरं वह्न्यव्याप्यम्। तत्राद्यं सुन्दरमितरं कुरूपं च। एवं च तद्व्याप्यो धूमः सुन्दर इति ज्ञानवता धूमे वह्न्यव्याप्यत्वज्ञानात् संशयोऽपि स्यादेवेति भावः। अवच्छेदकत्वेति। अस्य तदुपपत्तये इत्यादिः। प्रतिबन्धकत्वात्=प्रतिबन्धकताया वक्तव्यत्वात्। धूमत्वेनेत्यस्य धूमत्वावच्छेदेनेत्यर्थस्यैव कर्त्तव्यत्वादिति शेषः पूरणीयः।

अयमर्थः—वह्निव्याप्यो धूमः सुन्दर इति ज्ञानं हि धूमत्वावच्छिन्नविशेष्यताकम्। तथा हि धूमांशे त्रिविधं विशेष्यत्वम्। सुन्दरत्वनिष्ठप्रकारतानिरूपितं वह्निव्याप्यत्वधूमत्वैतदुभयावच्छिन्नमेकविधम्। वह्निव्याप्यत्वनिष्ठप्रकारतानिरूपितं धूमत्वावच्छिन्नं द्वितीयविधम्। धूमत्वनिष्ठप्रकारतानिरूपितं निरवच्छिन्नं तृतीयविधम्। एवं चास्त्येव तादृशं ज्ञानं धूमत्वमात्रावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यत्वप्रकारताकम्। किन्तु-तादृशज्ञानसत्त्वेऽपि वह्निव्याप्तिविरहवान् धूमः कुरूप इति प्रत्ययः सिद्धः। एवं चोक्तव्याप्तिनिश्चयस्योक्तव्याप्तिविरहज्ञानाऽप्रतिबन्धकत्वे धूमो वह्निव्याप्यो न वेति संशयप्रतिबन्धकत्वमपि तस्य न संभवति। संशयप्रतिबन्धकत्वं हि निश्चयस्य संशयगतविरुद्धकोट्यवगाहिविरोधितया। विरुद्धकोटिश्च वह्निव्याप्यो न वेत्यत्र वह्निव्याप्यो नेत्यंशः। एवं च धूमत्वाद्यवच्छेदेन वह्निव्याप्तिनिश्चयस्यैव विरुद्धकोटिविरोधित्वेन धूमत्वेनेत्यस्य धूमत्वावच्छेदेनेत्यर्थकरणमेव संगतमिति। वह्निव्याप्यो धूमः सुन्दर इति निश्चयस्य च धूमत्वसामानाधिकरण्येनैव वह्निव्याप्त्यवगाहित्वं न तु तदवच्छेदेनेत्यदोष इति।

प्रसिद्धधूमे धूमत्वावच्छेदेन संशयात्मकवह्निव्याप्तिज्ञानसत्त्वेऽपि तदनन्तरं संशयो नासिद्ध इत्यतो व्याचष्टे—व्याप्तिनिश्चय इति। दीधितौ एतद्धूमत्वेनेत्यत्र प्रसिद्धधूमे

❀ दीधितिः ❀

**तद्विरोधितया स नानुपपन्नः ।**

**कथमन्यथा पृथिव्यादिरूपे वायुत्वाभावव्याप्यतानिर्णयेऽपि**

❀ जागदीशी ❀

निश्चयस्यैव विरोधिनः सत्त्वादिति भावः । **तद्विरोधितया**=धूमो वह्निव्याप्यो न वेति संदेहविरोधितया । **सः**=संदेहः । **नानुपपन्न** इति । अस्य प्रसिद्धधूमे इत्यादिः । तथा च कृतं सामान्यलक्षणयेति भावः ।

ननु लाघवात् तदभावनिश्चयत्वेनैव समानविशेष्यत्वप्रत्यासत्त्या तद्वत्ताबुद्धिं प्रति विरोधित्वान्नैवमतस्तत्र प्रतिबन्दिमाह **कथमि**त्यादिना । पृथिव्यादीति । समानधर्मिकस्यैव ज्ञानस्य विरोधित्वे पार्थिवं तैजसं जलीयं रूपं वायुत्वाभावव्याप्यमित्येवं निर्णये रूपं वायुत्वाभावव्याप्यं नवेति रूपविशेष्यकसंशयो न स्यात् । रूपमात्रे विरोधिव्याप्तिनिर्णयाद्, अत

❀ काशिकानन्दी ❀

इत्यस्यानुषङ्गः । प्रसिद्धधूमश्च महानसीयादिः ।

प्रसिद्धधूम इत्यादिरिति । ननु प्रसिद्धधूमे वह्निव्याप्तिसंशयस्योक्तरीत्या उपपादनेऽपि धूमान्तरे जायमानसंशय एव सामान्यलक्षणां विना कथमुपपद्यतामिति ।

मैवम् । धूमोवह्निव्याप्यो नवेति संशयस्यैतद्धूमे एव धूमत्त्वस्यावच्छेदकत्वमवगाह्य जायमानत्त्वात् । धूमान्तरस्य तादृशसंशये भानविरहात् । एवं वह्निव्याप्यो धूम इत्याकारकनिश्चयेऽपि एतद्धूमस्यैव धूमत्त्वेन भानं न तु धूमान्तरस्येति तदर्थमपि न सामान्यलक्षणाङ्गीकारापत्तिः ।

तदभावनिश्चयत्वेनैवेति । एवकारेण समानधर्मावच्छिन्नविशेष्यताकतदभावनिश्चयत्वव्युदासः । समानविशेष्यत्त्वप्रत्यासत्त्येत्यनन्तरं वा एवकारो योज्यः । समानविशेष्यतावच्छेदकत्त्वप्रत्यासत्तेरेवकारव्यवच्छेद्यत्त्वम् । एवं च विशेष्यतासम्बन्धेन तद्वत्ताबुद्धौ विशेष्यतासम्बन्धेन तदभाववत्तानिश्चयः प्रतिबन्धकः । धर्मिधर्मयोरनिवेशेनात्र लाघवम् । नैवमिति । एतद्धूमत्त्वावच्छेदेन व्याप्तिनिश्चयस्य शुद्धधूमत्त्वावच्छेदेनैतद्धूमे व्याप्तिसंशयविरोधित्वात्सामान्यलक्षणानङ्गीकारो न संभवतीत्यर्थः । तदभ्युपगमे धर्म्यन्तरे संशयसंभवः । तत्र व्याप्त्यनिश्चयात् । अतः=इत्याशङ्क्य । तत्र=तद्वत्ताबुद्धौ तदभाववत्तानिश्चयस्य समानविशेष्यताप्रत्यासत्त्या प्रतिबन्धकत्वे । प्रतिबन्दिम्=बाधकमुत्तरम् । समानधर्मिकस्यैव=समानविशेष्यताप्रत्यासत्त्यैव । ज्ञानस्य=तदभाववत्तानिश्चयस्य । विरोधित्वे इति तद्वत्ताबुद्धावित्यादिः । न स्यादिति । इष्टापत्तिस्तु न रूपत्त्वावच्छेदेन वायुत्वाभावव्याप्तिनिश्चयविरहवतः । रूपमात्रे=निखिलरूपे । विरोधिव्याप्तिनिर्णयादिति । न च सामान्यलक्षणामनभ्युपगन्तॄणामपूर्वरूपज्ञानविरहात् कथं निखिलरूपे विरोधिव्याप्तिनिश्चय इति

## ❀ दीधितिः ❀

वायुत्वाभावव्यभिचारि न वेत्यादिसंशयः । न चातिरिक्तसंभावनया तथा ।

## ❀ जागदीशी ❀

समानधर्मावच्छिन्नविशेष्यताकज्ञानस्यैव विरोधित्वं वाच्यमिति भावः । न चेति । वाच्यमित्यग्रेऽन्वयः । संभावनयेति । पार्थिवादिरूपभिन्नं रूपं न वेत्याद्याकारकसंभावनयेत्यर्थः । तथा = निर्णीतव्याप्तिकेष्वपि रूपेषु व्याप्तिसन्देहः । संभावनाविरहविशिष्टस्यैव समानधर्मिकनिश्चयस्य प्रतिबन्धकत्वादिति भावः ।

## ❀ काशिकानन्दी ❀

वाच्यम् । सामान्यलक्षणाभ्युगन्तृमते एव कथमित्यादिना दोषाभिधानात् । सामान्यलक्षणावादिनां तु सामान्यलक्षणया निखिलपार्थिवादिरूपोपस्थितिकालीनताद्दशनिश्चयस्य निखिलरूपविषयकत्वसंभवात् । इतरेषामपि अनुमित्यादिना निखिलपार्थिवादिरूपोपस्थितिकालीनताद्दशनिश्चये संशयानुपपत्तिप्रसङ्गो द्रष्टव्यः । एवं च समानधर्मिकस्यैव ज्ञानस्य विरोधित्वे पार्थिवजलीयतैजसरूपाणि वायुत्वाभावव्याप्यानीति निर्णयकाले तेषु वायुत्वाभावव्यभिचाराऽसंभवेन रूपं वायुत्वाभावव्यभिचारिनवेति संशयस्य एतत्त्रितयरूपातिरिक्तरूपविषयकत्वं वक्तव्यं, तच्चाऽप्रसिद्धमेवेति ताद्दशसंशयो विलुप्येतेति भावः । समानधर्मावच्छिन्नविशेष्यताकेति । समवायसम्बन्धेन तद्धर्मावच्छिन्नविशेष्यताकतद्वत्ताबुद्धि प्रति समवायसम्बन्धेन तद्धर्मव्यापकतदभावप्रतियोगिकसंसर्गेण तदभाववत्ताप्रकारकतद्धर्मावच्छिन्नविशेष्यताकनिश्चयस्य प्रतिबन्धकत्वं तद्धर्मव्यापकतत्प्रतियोगिकसंसर्गकतद्वत्ताबुद्धौ तद्धर्मावच्छिन्नविशेष्यताकतदभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वमित्येवं विवेचनीयम् । विशेष्यतावच्छेदकताप्रत्यासत्त्या तत्पुरुषीयतद्वत्ताबुद्धौ तत्पुरुषीयतदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमित्यन्ये ।

उक्तरूपेण प्रतिबध्यप्रतिबन्धभावाङ्गीकारे च धूमोवह्निव्याप्यो न वा रूपंवायुत्वाभावव्यभिचारि न वेत्यादिसंशये एतद्धूमो वह्निव्याप्यः पार्थिवादिरूपं वायुत्वाभावव्याप्यमित्यादिनिर्णयस्य न विरोधित्वम् । विशेष्यतायाः समानधर्मानवच्छिन्नत्वादिति द्रष्टव्यम् ।

इत्याद्याकारकेति । आदिना रूपं पर्थिवादिरूपातिरिक्तं न वेत्याकारकसंभावनापरिग्रहः । वक्ष्यमाणविकल्पानुरोधात् । इयमपि रूपत्वसामानाधिकरण्येन पार्थिवादिरूपातिरिक्तत्वमवगाहमाना बोध्या । पार्थिवादिरूपे पार्थिवादिरूपातिरिक्तत्वसंभावनायां पार्थिवादिरूपज्ञानस्यैव विरोधित्वाद्, रूपत्वावच्छेदेन तदतिरिक्तत्वसंभावनाया असंभवादिति बोध्यम् । निर्णीतेति । पार्थिवादिरूपत्वावच्छेदेनेत्यादिः । व्याप्तिकेषु = वायुत्वाभावव्याप्तिकेषु । व्याप्तिसन्देह इति । शुद्धरूपत्वावच्छेदेनेत्यादिः । संभावनाविरहेति । सामान्य-

❀ दीधितिः ❀

**विशेषतश्चोपस्थितानामतिरिक्तानां विशेषदर्शनाक्रान्ततया**

❀ जागदीशी ❀

नन्वेवं प्रसिद्धधूमे एव व्याप्तिनिश्चयेऽपि एतद्धूमातिरिक्तो धूमो न वेति संभावनयैव धूमो वह्निव्यभिचारी न वेति संशयसंभवात् कृतं सामान्यलक्षणयेत्यत आह विशेषतश्चेति। तथा च विशेषतो घटत्वादिरूपेणोपस्थितानां प्रसिद्धधूमभिन्नानां धूमत्वाभाववत्तया निश्चयात् तदतिरिक्तस्याप्रसिद्धधूमस्योपस्थित्यर्थमेव सामान्यलक्षणा वाच्या, तां विना संभावनाया एवासंभवादिति भावः।

❀ काशिकानन्दी ❀

धर्मावच्छेदेन संशयं प्रति विशेषधर्मावच्छेदेन सामान्यघटितविशेषधर्मावच्छेदेन वा निश्चयस्य प्रतिबन्धकत्वे विशेषधर्मविरहिणि सामान्यधर्मसंभावनायां उत्तेजकत्वाङ्गीकारेण पार्थिवादिरूपभिन्नं रूपं न वेत्याकारकस्य विशेषधर्मविरहिधर्मिकस्य रूपत्वात्मकसामान्यधर्मसंभावनात्मकस्योत्तेजकस्य प्रकृतस्थले सत्त्वात्तादृशसंभावनाविरहविशिष्टसमानधर्मिकव्याप्यवत्तानिश्चयस्य विरहान्न संशयानुपपत्तिरिति सामान्यलक्षणावादिनां समानविशेष्यताप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावं वदतामाशयः। एवं सामान्यधर्मसामानाधिकरण्येन विशेषधर्मसंभावनाया अप्युत्तेजकत्वं द्रष्टव्यम्।

संभावनाङ्गीकारे तत एव संशयोपपत्तौ सामान्यलक्षणाया अनुपयोगात् संभावनां वदन् सामान्यलक्षणावादी स्वयं स्वमेव व्याघातयतीति शङ्कते—नन्विति। एवं=संभावनाया उत्तेजकत्वे। **संशयसंभवादिति**। प्रसिद्धधूमातिरिक्तघटादिषु वह्निव्यभिचारसंशयोऽपि सुघट एव, धूमत्वेन संभाव्यमाने घटे वह्निव्याप्तिनिश्चयस्य समानधर्मिणि वह्निव्यभिचारसंशये विरोधिरूपस्य विरहादिति भावः। यस्य पुंसः प्रसिद्धधूमातिरिक्ते वह्निव्याप्त्यभावनिश्चयस्तस्यापि प्रसिद्धधूमातिरिक्तो यदि धूमो न भवेत् तदा धूमो वह्निव्याप्य एव, यदि च प्रसिद्धधूमातिरिक्तोऽपि धूमस्तदा धूमो न वह्निव्याप्यः अतो धूमो वस्तुतो वह्निव्याप्यो न वेति मे सन्देह इत्यनुभवः सर्वेषामित्याकूतम्। कृतमिति। एतद्धूमातिरिक्तघटादीनां प्रागेव ज्ञाततया तज्ज्ञानार्थं सामान्यलक्षणानपेक्षणादिति भावः।

एतद्धूमातिरिक्तेषु ज्ञातेषु घटादिषु यदि धूमत्वसंभावना तदा तदुपस्थित्यर्थं सामान्यलक्षणा नापेक्षिता भवेत्। परन्तु तेषां घटादीनां विशेषतो ज्ञाततया तत्र धूमत्वसंभावनैव न भवितुमर्हति। किन्तु ज्ञातेभ्योऽतिरिक्ते एव धूमत्वसंभावना। तज्ज्ञानाय च सामान्यलक्षणा अपेक्षितेत्याशयवानाह—**तथा चेति**।

**प्रसिद्धधूमेति**। प्रसिद्धाऽप्रसिद्धपदे ज्ञाताज्ञातपरे। **उपस्थित्यर्थमिति**। अनुपस्थिते कोटिभानायोगादिति भावः। **तां विना**=सामान्यलक्षणां विना। उपस्थितिर्वा तत्पदेन परामर्शनीया। **असंभवादिति**। नच धूमत्वेन सामान्येनोपस्थितेष्वप्रसिद्ध-

❀ दीधितिः ❀

अतिरिक्तान्तरोपस्थितये अवश्यं सा स्वीकरणीयेति वाच्यम्। यतो रूपेषु नातिरिक्तत्वसंभावना, तेषु विशेषदर्शनात्। नापि अतिरिक्ते रूपत्वसंभावना; रूपान्यद् न रूपं,

❀ जागदीशी ❀

समानधर्मिकज्ञानस्य विरोधित्वे संभावनैव न संभवति, कस्योत्तेजकत्वं स्यादित्याह यत इति। तेषु विशेषदर्शनादिति। रूपेषु पार्थिवादिभिन्नत्वाभावदर्शनादित्यर्थः। अतिरिक्ते = पार्थिवादिरूपातिरिक्ते। रूपान्यन्न रूपमिति। प्रात्यक्षिकस्यैव विशेषदर्शनस्याकारोऽयम्। उद्देश्यतावच्छेदकविधेययोरैक्येन तादृशशाब्दस्यासंभवादिति ध्येयम्। सामान्यरूपेणोक्त्वा विशेषतो-

❀ काशिकानन्दी ❀

धूमेषु धूमत्वनिश्चयात् कथं तत्र धूमत्वसंभावना। संशयसरूपत्वात् संभावनाया इति वाच्यम्। प्रमेयत्वादिरूपान्तरेणोपस्थितेष्वेव धूमेषु संभावनासंभवात्। न च धूमत्वेनापि धूमानां भानात् कथं धूमत्वसंभावनासंभवः। समानविशेष्यताप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभाववादिमते धूमेषु धूमत्वसंभावनायां धूमेषु धूमत्वनिश्चयस्य विरोधित्वादिति वाच्यम्। धूमत्वेन धूमानामनुपस्थितिकाले एव दोषस्यापादनीयत्वात्। प्रमेयत्वेनोपस्थितपदार्थान्तरे एव विशेषदर्शनविरहेण धूमत्वसंभावनासंभवाच्च। अप्रसिद्धधूमस्योपस्थित्यर्थमिति जागदीशी चोपलक्षणविधया व्याख्येया। धूमत्वेति रूपत्वाद्युपलक्षणम्।

रूपेषु प्रसिद्धरूपातिरिक्तत्वसंभावना, प्रसिद्धरूपातिरिक्ते वा रूपत्वसंभावनेति वितर्क्य आद्यं दूषयति दीधितिकृत्—यतो रूपेषु नेति। अतिरिक्तत्वसंभावना = पार्थिवादिरूपातिरिक्तत्वसंभावना। तेषु रूपेषु। विशेषदर्शनाद् = पार्थिवादिभिन्नत्वाभावदर्शनात्। अतिरिक्तस्य रूपस्याप्रसिद्धत्वेन तत्र पार्थिवादिभिन्नत्वसंभवनाया असंभवादिति। द्वितीयं दूषयति—नापीति।

सामानधर्मिकज्ञानस्य विरोधित्व इति। पार्थिवादिरूपं पार्थिवादिभिन्नत्वाभाववदित्यादिवक्ष्यमाणनिश्चयानां रूपं पार्थिवाद्यतिरिक्तं न वेति संभावनाप्रतिबन्धकत्वं समानधर्मावच्छिन्नविशेष्यताकज्ञानत्वेन प्रतिबन्धकत्वे न संभवति। पार्थिवादिरूपत्वस्यैव प्रतिबन्धकज्ञानविशेष्यतावच्छेदकत्वात्। प्रतिबध्यज्ञानविशेष्यवच्छेदकं तु रूपत्वम्। रूपं पार्थिवादिभिन्नत्वाभाववदितिनिर्णयस्य प्रतिबन्धकत्वसंभवेऽपि तादृशनिर्णयवतः संशयोऽपि न स्यात्।

उद्देश्येति। अत्रोद्देश्यतावच्छेदकं—रूपान्यत्वम्। विधेयं च 'नरूप'मिति शब्दबोधितं रूपभिन्नत्वं तदुभयं चाऽभिन्नमेव। तादृशशाब्दस्य = रूपान्यन्न रूपमित्याकारकशाब्दबोधस्य। सामान्यरूपेण = रूपान्यत्वेन। विशेषतः = द्रव्यत्वादिरूपेण।

❀ दीधितिः ❀

द्रव्यादयो रसादयश्च न रूपं; प्रसिद्धरूपभिन्नं यद् रूपभिन्नं,

❀ जागदीशी ❀

ऽपि विशेषदर्शनमाह द्रव्यादय इति। आदिपदेन कर्मत्वादि-प्रकारेण कर्मसामान्यादेः परिग्रहः। रसादय इति। अत्रापि आदिपदाद् गन्धत्वादिप्रकारेण गन्धस्पर्शादीनां संग्रहः। ननु संभावनाया यद् विशेष्य-तावच्छेदकं तदन्तर्भावेण समानधर्मिकनिर्णयः संभावनाविरोधी, रूपान्यत्र रूपमित्याकारकनिर्णयस्तु न संभावनाया विशेष्यतावच्छेदकं यत्प्रसिद्धरूप-भिन्नत्वं तदन्तर्भावेण, अतः संभावना स्यादेवेति यदि ब्रूयात्तदा तदन्त-र्भावेणापि निर्णयमाह प्रसिद्धेत्यादि। प्रसिद्धरूपभिन्नं सर्वं न रूपमिति निर्णयसत्त्वे रूपं वायुवृत्ति न वेति पर्यवसितो रूपं वायुत्वाभावव्यभिचारि न वेत्याकारः सन्देहो नोत्पद्यत इत्यत उक्तं रूपभिन्नमिति।

❀ काशिकानन्दी ❀

नन्वित्यादि। तथा च तद्धर्मावच्छिन्नविशेष्यताकायां तद्वत्तासंभावनायां, तद्वत्ताबुद्धौ वा समानविशेष्यताप्रत्यासत्त्या तद्धर्मावच्छिन्नविशेष्यताकतदभाववत्तानिश्चयो विरोधी। प्रति-बन्धकतावच्छेदककोटौ इतरवारकपर्याप्तिर्न निवेशनीया। तेन प्रसिद्धरूपभिन्नत्व-रूपभिन्नत्व-योर्धर्मितावच्छेदकतया प्रवेशेऽपि न क्षतिः। अत एव एतद्धूमो वह्निव्याप्य इत्यत्र एतत्-स्याधिकं प्रवेशेऽपि प्रतिबन्धकत्वप्रसङ्गस्तद्वारणाय संभावनाया उत्तेजकत्वाङ्गीकारश्चोप-पद्यते। एवं स्थिते सति समानविशेष्यत्वप्रवेशः प्राचीनोक्तिरक्षामात्रार्थः न तु तत्प्रवेशे प्रयोजनम्। धूमत्वेन घटे व्यभिचारबुद्धौ एतद्धूमत्वेनैतद्धूमे व्याप्तिनिश्चयस्य प्रतिबन्धकत्व-वारणं वा प्रयोजनमस्तु। इत्याकारकनिर्णयस्तु न तदन्तर्भावेणेति योजना। प्रसिद्धरूपान्य-त्वं हि पार्थिवाद्यन्यतमत्वावच्छिन्नभेदः। रूपान्यत्वं तु रूपत्वावच्छिन्नभेदः इति प्रतियोगि-तावच्छेदकधर्मौ भिन्नौ। एवं च रूपान्यन्न रूपमित्यत्र प्रसिद्धरूपान्यत्वानन्तर्भावः।

दीधितौ प्रसिद्धेति। प्रसिद्धरूपभिन्नत्वे सति रूपभिन्नं यत् तन्न रूपं, प्रसिद्धरूपभिन्नं यद् द्रव्यं रसादि वा तत्सर्वं न रूपमिति योजनार्थः। वायुत्वाभावव्यभिचारीत्यस्य वायुत्वाभावा-भाववद्वृत्तीत्यर्थाद् वायुवृत्तीत्यर्थे पर्यवसानम्। सन्देहो नोत्पद्यत इति। ननु प्रसिद्धरूपभिन्नं सर्वं न रूपमिति निश्चयस्य रूपं वायुवृत्ति न वेति संशयप्रतिबन्धकत्वं कथम्? विभिन्नविषय-कत्वात्। न चातिरिक्तेषु रूपत्वसंभावनेति वदतां प्रसिद्धरूपभिन्नं रूपं न वेति संभावनाया विभिन्नविषयिण्या उत्तेजकत्वमिव प्रसिद्धरूपभिन्नं न रूपमिति निश्चयस्य प्रतिबन्धकत्व-मपि भवतु इति वाच्यम्। एवं सति प्रसिद्धरूपभिन्नं यद्रूपभिन्नं तन्न रूपमिति निश्चय-स्यापि संशयप्रतिबन्धकतायाः प्रतिज्ञातुं शक्यतया रूपभिन्नत्वनिवेशेऽपि दोषवारणा-योगादिति चेद्?

## ❀ काशीकानन्दी ❀

न, प्रसिद्धरूपभिन्नं न रूपमिति निश्चयस्य प्रसिद्धरूपं वायुत्वाभावव्याप्यमिति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वसंभवात् । वह्न्यभाववान् पाषाणमयः पाषाणमयाऽभिन्नश्च पर्वत इत्यादिनिश्चयानां पर्वते वह्न्यादिमत्त्वबुद्धिविरोधित्ववत् । प्रसिद्धरूपभिन्नं न रूपमित्येतेन प्रसिद्धरूपमेव रूपमित्यर्थप्रतीतेः प्रसिद्धरूपाभेदस्यापि रूपे प्रतीतेः । वस्तुतस्तु वह्निव्यभिचारि द्रव्यं द्रव्याभिन्नश्च धूम इति निश्चयवतोऽपि वह्निव्याप्यो धूम इति ज्ञानोदयदर्शनाद् न केवलं तादात्म्येन तदभावाऽवच्छेदकस्य धर्मिणि भानं विरोधि । किन्तु स्वभेदव्याप्यभेदप्रतियोगित्वसम्बन्धेन तदभावऽवच्छेदकवैशिष्ट्यनिश्चय एव । तादृशनिश्चयश्च धूमभिन्नं न द्रव्यमिति निश्चय एव, स च न वृत्त इति द्रव्याभिन्नो धूम इति ज्ञानवतोऽपि तत्र व्याप्तिज्ञानोदयोपपत्तिः । एवं प्रकृतेऽपि प्रसिद्धरूपान्यन्न रूपमित्यनेन प्रसिद्धरूपभेदव्याप्यभेदप्रतियोगित्वस्य रूपे भानात्प्रतिबन्धकत्वोपपत्तिरिति ध्येयम् ।

अत्रेदमवसेयम् । रूपान्यन्न रूपं, प्रसिद्धरूपान्यरूपान्यन्न रूपमित्यादिनिर्णयवतः पुरुषस्य पार्थिवजलीयतैजसरूपं वायुत्वाभावव्याप्यमिति निर्णयसत्त्वेऽपि रूपं वायुत्वाभावव्यभिचारि न वेति संशयस्यानुभविकतया तदुपपत्तिः संभावनावादिना इत्थं हि कर्तव्यम्, तथा हि वायुत्वाभावव्याप्यत्वं हि पार्थिवरूपे जलीयरूपे तैजसरूपे च वर्त्तते इति ज्ञानवान् पुरुषः संभावयति इतोऽतिरिक्तं किंचन रूपं स्यात् इति । न ह्यत्र प्रसिद्धरूपान्यद् रूपान्यद् न रूपमिति निर्णयो विरोधी । अस्य रूपान्यन्न रूपमित्येतत्समतया धर्मितावच्छेदकीभूतरूपान्यत्वेन निर्णीयमाने एव रूपत्वसंभावनाप्रतिरोधित्वात् । यत्र रूपत्वसंभावना तस्य रूपत्वसंभावनास्पदतया रूपान्यत्वेनानिर्णीयमानतया तत्र प्रतिबन्धकविरहात् । तादृशसंभावनावतश्च पुरुषस्य संभाव्यमानेऽतिरिक्तरूपे वायुत्वाभावव्याप्यतानिर्णयविरहात् तस्य रूपे वायुत्वाभावव्यभिचारसंशय इति । पार्थिवं जलीयं तैजसं च रूपं पश्यतोऽपि बालस्य पार्थिवाद्यतिरिक्तं रूपमस्ति न वा किंचन इति संशयस्य सिद्धतया संभावना स्वीकरणीयेति संभावनावादिनां गूढाभिसन्धिः । प्रसिद्धरूपान्यन्नरूपमिति निश्चयसत्त्वे रूपं वायुत्वाभावव्यभिचारि न वेति संशयो नोत्पद्यत इत्यत्र संभावनावादिन आशयः— प्रसिद्धरूपान्यन्नरूपमिति निश्चयसत्त्वे पार्थिवाद्यतिरिक्तमपि किंचन रूपं स्यादिति संभावनैव न भवितुमर्हति । पार्थिवाद्यतिरिक्तं यदपि किंचन वस्तु तन्न रूपमिति निश्चयस्यैव तत्र विरोधित्वात् । रूपत्वसंभावनास्पदेऽपि पार्थिवाद्यतिरिक्तत्वनिर्णयात्तत्रापि प्रतिबन्धकसद्भावात् । एवं चोत्तेजकीभूतसंभावनाविरहान्न संशयोऽपीति । परन्तु एवं क्रमेण प्रतिपादनं न संभवति । पार्थिवादित्रिविधरूपान्यरूपाऽप्रसिद्धेः, अप्रसिद्धधर्मिक व्याप्यतासंशयादेरयोगात् । पार्थिवादित्रिविधरूपातिरिक्तयत्किंचिद्वस्तुनि रूपत्वसंभावनेत्यपि न शक्यं वक्तुम् । द्रव्यादीनामेवातिरिक्तत्वात्तत्र च विशेषदर्शनेन संभावनाया असंभवात् इति संभावनाया उत्तेजकत्वानङ्गीकर्त्तृणामाशयः ।

ननु द्रव्यरसादिकं न रूपमिति निर्णयकालेऽपि पार्थिवजलीयतैजसरूपातिरिक्तं

❀ दीधितिः ❀

**द्रव्यं रसादि वा तत् सर्वं न रूपम्,**

❀ जागदीशी ❀

उद्देश्यतावच्छेदकविधेययोरैक्येन प्रसिद्धरूपभिन्नं यद् रूपभिन्नं सर्वं न रूपमित्याकारस्य शाब्दविशेषदर्शनस्यासंभवादाह द्रव्यं रसादि वेति। अत्रापि प्रसिद्धेत्यादेः सम्बन्धात् प्रसिद्धरूपभिन्नं यद् द्रव्यं रसादि वा तत् सर्वं न रूपमित्यर्थः। तेन संभावनाधर्मितावच्छेदकान्तर्भावलाभः।

रूपत्वकोटिकसंभावनायां रूपभेदनिश्चयो न बाधकः भिन्नविषयकत्वात्,

❀ काशिकानन्दी ❀

किमपि रूपं वर्त्तते न वेति संभावनायाः सर्वजनसिद्धतया तस्य को विषयः। द्रव्य-रसादिभ्यः पार्थिवादिरूपेभ्यश्चातिरिक्तवस्तुनोऽप्रसिद्धत्वात्। न च सामान्यलक्षणा-मनङ्गीकुर्वतां पार्थिवादिनिखिलरूपाऽप्रत्यक्षादप्रसिद्धरूपं तद्विषय इति वाच्यम्। तथा सति तदुपस्थितये एव सामान्यलक्षणास्वीकारापातात्। न चानुमित्यादिना सकलरूपाणां ज्ञानेन संभावनाविषयतासिद्धिरिति वाच्यम्। तथा सति पार्थिवादिरूपत्वस्यापि तत्र ज्ञानाद्विशेषदर्शनादेव न तत्र संभावनासंभव इति चेद्?

न, रूपत्वे पार्थिवाद्यन्यतमत्वव्याप्तिभावाभावयोः, पार्थिवाद्यन्यतमत्वे वा रूपनिष्ठ-भेदप्रतियोगित्वभावाभावयोः तादृशसंभावनाविषयत्वाभ्युपगमेन दोषाभावात्। एतेन द्रव्यादिसप्तपदार्थातिरिक्तपदार्थोऽस्ति न वेत्यपि व्याख्यातम्।

अथैवमेतादृशसंभावनाया एवोत्तेजकत्वमास्तामिति चेद्? सत्यम्, रूपे वायुत्व-व्यभिचारसंशयं प्रति तादृशसंभावनाविरहविशिष्टतद्धर्मिकतदभाववत्तानिश्चयत्वेन प्रति-बन्धकल्पनापेक्षया लाघवेन रूपत्वावच्छेदेन तदभाववत्तानिश्चयत्वेनैव प्रतिबन्धकतायाः कल्पयितुं युक्तत्वादिति। एतदेव च मनसि निधाय संभावनाया उत्तेजकत्वे गौरवमेवाग्रे दीधितिकारो दोषं दर्शयिष्यति।

**शाब्दविशेषदर्शनस्य**=शाब्दात्मकविशेषदर्शनस्य। **असंभवादिति।** प्रसिद्धरूप-भिन्नत्वस्योद्देश्यतावच्छेदकोटावधिकं प्रवेशेऽपि, रक्तदण्डवान् दण्डवानितिवच्छाब्दबोधो न भवत्येव। **अत्रापि**=द्रव्यं रसादि वेत्यत्रापि। **प्रसिद्धेत्यादेः**=प्रसिद्धरूपभिन्न-मित्यस्य। **संभावनाधर्मितेति।** प्रसिद्धरूपभिन्नं रूपं न वेति संभावनाधर्मितावच्छेदकी-भूतप्रसिद्धरूपभिन्नत्वान्तर्भावलाभः। एवं च तदन्तर्भावेण प्रतिबध्यप्रतिबन्धकभाववा-दिमतेऽपि विशेषदर्शनसिद्धिः। प्रसिद्धेत्यादेः सम्बन्धाभावे द्रव्यादयो रसादयश्च न रूपमिति पूर्वोक्तेन पौनरुक्त्यापत्तिरपि द्रष्टव्या।

**रूपत्वकोटिकसंभावनायां**=प्रसिद्धरूपभिन्नं रूपत्ववन्न वेत्याद्याकारिकायाम्। **भिन्नविषयकत्वादिति।** संभावनाया रूपत्वविषयकत्वात्, बाधज्ञानस्य तु रूपविषय-कत्वात्। समानविषयकत्वं प्रतिबध्यज्ञानीयधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकार-

## ❀ दीधितिः ❀

रूपत्वाभाववच्चेत्यादिविशेषदर्शनेन तस्या अप्ययोगात् । तदानीं चोक्तसंशयस्य सर्वजनानुभवसिद्धत्वात् । अतिरिक्तसंभावनाया गौरवेणाऽप्रयोजकत्वाच्च । तस्मात्तत्रैव धूमे रूपे वा धूमत्वेन रूपत्वाद्यवच्छेदेन व्याप्तेरग्रहाद् व्यभिचारसंशयो नायुक्तः ।

## ❀ जागदीशी ❀

किन्तु रूपत्वाभावनिश्चय एवेत्यभिधानेऽप्याह रूपत्वाभाववदिति । तस्या इति । प्रसिद्धरूपातिरिक्ते रूपत्वसंभावनाया इत्यर्थः ।

नन्वेतादृशसंभावनाविरहदशायां रूपं वायुत्वाभावव्यभिचारि न वेति संशयोऽप्यसिद्ध एवेत्यत आह तदानीमिति । तदानीं = संभावनाविरहदशायाम् ।

प्रसिद्धरूपे वायुत्वाभावव्याप्यत्वनिर्णये एतादृशानुभवे विप्रतिपन्नं प्रत्याह अतिरिक्तेति । तद्धर्मिकतदभावनिश्चयाभावत्वेन हेतुत्वमपेक्ष्य संभावनाविरहविशिष्टतादृशनिश्चयाभावत्वेन हेतुतायां गौरवादित्यर्थः । तत्रैव = निर्णीतव्याप्तिक एव ।

## ❀ काशिकानन्दी ❀

तावच्छेदकीभूतधर्मेणावच्छिन्नप्रतियोगित्वावगाहनात् प्रतिबन्धकस्य ।

एतादृशसंभावनेति । अतिरिक्तेषु रूपत्वादिसंभावनेत्यर्थः । व्याप्यत्वनिर्णये = व्याप्यत्वनिर्णयकाले । एतादृशानुभवे = रूपं वायुत्वाभावव्यभिचारि न वेत्याकारसंशयात्मकानुभवे । एतादृशानुभवविरहविषयकयथार्थनिर्णयसत्त्वे लाघवमकिंचित्करम् । केवललाघवमनुरुध्यानुभवापलापे पुनर्दाहादिकं प्रत्यपि मण्यभावत्वेनैव प्रतिबन्धकत्वं स्यान्न तूत्तेजकाभावविशिष्टमण्यभावत्वेनेत्यत उक्तं—विप्रतिपन्नमिति । एवं च विप्रतिपत्तिस्थले प्रमाणान्तरविरहे लाघवस्यैव प्रमाणतया संभावनाविरहविशिष्टतादृशनिश्चयत्वापेक्षया लघुभूततादृशनिश्चयत्वेनैव प्रतिबन्धकत्वं सिद्ध्यतीति भावः । ननु कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वं तत्र गुरुधर्मावच्छिन्नप्रतियोगित्वाभ्युपगमान्नैतादृशदोषावकाश इत्यत आह तद्धर्मिकेति । तथाचावश्यक्लृप्तनियतपूर्ववर्त्तिभिन्नस्यान्यथासिद्धतया कारणत्वमेव न सिद्ध्यति किमनुरोधेन तत्प्रतियोगित्वरूपप्रतिबन्धकत्वम् । अवश्यक्लृप्तत्वं च धर्मसम्बन्धादिकृतलाघववत्त्वमेवेत्यन्यत्र विस्तरः ।

दीधितौ व्यभिचारसंशयो नायुक्त इति । अत्रेदं चिन्त्यते । धूमान्तरस्यात्यन्तमज्ञाने एतद्धूमो वह्निव्याप्य इत्याकारकैतत्त्वविशिष्टधूमत्वावच्छिन्नवह्निव्याप्तिनिश्चयोचरमपि संशयो दुरुपपादः । धूमान्तरस्यात्यन्तमज्ञानेन धूमत्वेस्यैतद्धूमे

## ❀ काशिकानन्दी ❀

एवावगाहनेन एतत्त्वे व्याप्यतावच्छेदकत्वानवगाहनात्। अव्यावर्तकधर्मे व्याप्यतावच्छेदकत्वग्रहासंभवात्। व्यावर्तकत्वेनाऽज्ञातधर्मस्योपलक्षणतयैव भानोपगमात्। न च व्यावर्त्तकत्वेनाऽज्ञातधर्मेऽपि अवच्छेदकत्वोपगमेनैतत्त्वविशिष्टधूमत्वावच्छेदेन तत्र व्याप्तिनिश्चय इति वाच्यम्। व्यावर्त्तकत्वेनाज्ञातधर्मस्यापि अवच्छेदकतया भानवादिमते व्यावर्त्तकत्वेनाज्ञातधर्मविशिष्टधर्मावच्छेदेन तद्वत्तानिश्चयस्य शुद्धधर्मावच्छेदेन तदभाववत्ताबुद्धिं प्रत्यपि प्रतिबन्धकत्वात्। कथमन्यथा सर्वं वस्तु प्रमेयमिति ज्ञानवतः प्रमेयधूमो वह्निव्याप्य इति निश्चयोत्तरं धूमो वह्निव्याप्यो न वेति संशयो नोत्पद्यते। न च प्रमेयधूमो वह्निव्याप्य इति निश्चयोत्तरं शुद्धधूमत्वावच्छेदेनापि वह्निव्याप्तिनिश्चयोत्पत्तिरभ्युपगम्यते, संशयानुत्पादरूपफलबलात्। एतद्धूमो वह्निव्याप्य इति निश्चयोत्तरं न संशय उत्पद्यत इति तत्रोत्तरकालं धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयो नोत्पद्यत इति तत्र एव सामञ्जस्यमिति वाच्यम्। प्रमेयत्वस्य व्यावर्त्तकत्वज्ञानवतोऽपि पुंसः उत्तरक्षणं धूमत्वावच्छेदेन व्याप्तिनिश्चयोत्पादापत्तेः। किं च प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्य धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयजनकत्वकल्पने प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्य तदव्यवहितपूर्ववर्त्तित्वमनन्यथासिद्धत्वं चेति द्वयं कल्पनीयम्। तदपेक्षया प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयविरहस्य सिद्धनियतपूर्ववृत्तिताकस्य प्रतिबन्धकाभावविधयाऽनन्यथासिद्धत्वमात्रं कल्पनीयमिति लाघवात् प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्यैव धूमत्वावच्छेदेन तत्संशयकारणीभूताभावप्रतियोगित्वात्मकप्रतिबन्धकत्वं सिद्ध्यति। न च प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयाभावस्य तत्संशयाव्यवहितपूर्ववर्त्तित्वमसिद्धमिति वाच्यम्। निश्चयसामग्र्या अपि संशयविरोधितया धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयकारणीभूत-प्रमेयधूमत्वावच्छिन्नधर्मिकवह्निव्याप्तिनिश्चयात्मकतत्सामग्रीसद्भावे संशयासंभवात् अन्यथा समानविषयकसंशयनिश्चययोर्युगपदापत्तेः। एवं च तदभावस्याव्यवहितपूर्ववर्त्तित्वं सिद्धमेव। वस्तुतस्तत्रानन्यथासिद्धत्वमपि सिद्धमेव। धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्येव तत्सामग्र्या अपि संशयप्रतिबन्धकतायाः उक्तनया तदभावस्य संशयकारणत्वात्। एवं स्थिते सति मध्ये किमेतेनान्तर्गडुना धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयेन तदुत्पत्तिकल्पनेन च।

एतेन व्यावर्त्तकत्वज्ञानविरहविशिष्टप्रमेयधूमत्वावच्छेदेनवह्निव्याप्तिनिश्चयस्यैव शुद्धधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयकारणत्वमिति व्यावर्त्तकत्वज्ञानकाले प्रमेयधूमो वह्निव्याप्य इति निश्चयोत्तरं न धूमत्वावच्छेदेन तन्निश्चयोत्पत्तिः न वा तत्र संशयानुपपत्तिरिति प्रागुक्तदोषवारणेऽपि न निस्तारः। व्यावर्त्तकत्वज्ञानविरहविशिष्टप्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयाभावस्य क्लृप्तकारणताकतया तत एवोपपत्तेः मध्ये निश्चयान्तरोत्पादकल्पनावैफल्यात्।

इत्थमेव च अयमेव धूमो नान्य इति निश्चयवतः एतद्धूमो वह्निव्याप्य इति निश्चयोत्तरं न धूमो वह्निव्यभिचारी न वेति संशयः। एवं चात्र व्यावर्तकत्वेनाज्ञातैतत्त्व

## ❀ काशिकानन्दी ❀

विशिष्टधूमत्वावच्छिन्ने व्याप्तिनिश्चयस्य शुद्धधूमत्वावच्छिन्ने व्याप्तिनिश्चोत्पादकताया-स्त्वदुक्तरीत्यापि उपगन्तव्यतया प्रागुक्तस्थलेऽपि तादृशनिश्चयोत्पत्तिर्दुर्वारैवेति कथं तत्र संशयोपपादनसंभवः। न च व्यावर्तकत्वेनाऽज्ञातैतत्त्वादिविशिष्टधूमत्वावच्छिन्ने व्याप्ति-निश्चयस्य शुद्धधूमत्वावच्छिन्ने व्याप्तिनिश्चयहेतुत्वं नोच्यते किन्तु तत्तद्व्यक्तित्वेनैवेति यत्र संशयानुभवस्तत्र तदकल्पनान्न दोष इति वाच्यम्। तथा सति अनन्तकार्यकारणभाव-प्रसङ्गेन महागौरवात्। अत एव तत्रानियतकारणान्तरस्वीकारस्यापि निरासः। अवश्य-क्लृप्तनियतपूर्ववर्त्तिनस्तस्यैव कारणत्वसिद्धेः।

अथ व्यावर्त्तकत्वेनागृहीतधर्मस्योपलक्षणतया भानमिति नोपगम्यते, न वा तादृश-धर्मविशिष्टधर्मावच्छेदेन तद्वत्तानिश्चयस्य शुद्धधर्मावच्छेदेन तदभाववत्ताज्ञानविरोधित्व-मिति ज्ञानान्तरस्य तत्रोत्पत्तिरिति वा, किन्तु व्यापकत्वेन गृहीतधर्मस्योपलक्षणतया भानादिक-मेव। सर्वं वस्तु प्रमेयमिति ज्ञानवतः वस्तुत्वव्यापकतायाः प्रमेयत्वे अवगाहनात् पश्चाद् धूमत्वव्यापकत्वमपि तत्रावगम्यतैवेति प्रमेयधूमो वह्निव्याप्य इति ज्ञाने प्रमेयत्वस्योपलक्ष-णतया भानम्। न तु एतद्धूमो वह्निव्याप्य इति निश्चये एतत्त्वस्य। एतत्त्वे धूमत्वव्यापक-ताया अग्रहणात्। एष एव धूमो नान्य इत्येवमेतत्त्वे धूमत्वव्यापकतानिश्चयसत्त्वे च संशयोऽसिद्ध एवेति चेद् ?

न, अयं धूम इति प्रत्यक्षानन्तरमेतत्त्वे धूमत्वव्यापकत्वग्रहस्यैव दुर्वारत्वात्। व्यभिचा-राऽग्रहसहचारग्रहयोरेव व्याप्तिग्राहकत्वात्। अत एवैतद्रूपैतद्रसयोरेकत्र दर्शने तयोर्व्याप्य-व्यापकभावग्रहाद् भूयोदर्शनस्य व्याप्तिग्राहकत्वानियमः। न च सामान्यलक्षणामङ्गीकुर्वतां मतेऽपि धूमत्वैतत्त्वयोर्व्याप्यव्यापकभावग्रहः स्यादिति वाच्यम्। धूमत्वेन निखिलधूमोप स्थितौ धूमान्तरे एतत्त्वाभावज्ञानादेव व्याप्तिनिश्चयासंभवात्। तत्रैव धूमत्वे-व्यभिचारग्रहात्। धूमान्तरे एतत्त्वाभावज्ञानानुत्पादे तु इष्टमेव व्याप्यव्यापकभावग्रहः। अत एव क्वचित्संशयः क्वचिन्न संशय इत्यपि नियम उपपन्नः। सामान्यलक्षणामनङ्गीकुर्वतां धूमत्ववतो धूमान्तरस्यानुपस्थित्या तत्रैतत्त्वाभावग्रहविरहेणैतत्त्वे धूमत्वव्यापकताया ज्ञानाद्-एतद्धूमो वह्निव्याप्य इति ज्ञाने एतत्त्वस्य विशेषणतया भानं दुःसम्पादमेव।

नन्वतिरिक्तेषु वस्तुषु धूमत्वसंभावनया नैतत्त्वे धूमत्वव्यापकत्वज्ञानमनङ्गीकुर्वतामपि सामान्यलक्षणाम्। व्यभिचाराऽग्रहसहचारग्रहयोरिव संभावनाविरहस्यापि व्याप्तिग्रहहेतु-त्वात्। अतिरिक्तेषु धूमत्वसंभावनया व्यभिचारसंशयसंभवाद्वा धूमत्वेन संभाविते एतत्त्वाभावग्रहादिति चेद् ?

न, ज्ञातेषु अतिरिक्तेषु विशेषदर्शनेनैव संभवनाया असंभवात्। न चाज्ञातेष्वेव धूमत्वं संभावनीयमिति वाच्यम्। तथा सति अज्ञातज्ञानायैव सामान्यलक्षणास्वीकारापत्तेः।

एतेन धूमत्वं वह्निव्यभिचारिवृत्ति न वा धूमत्वं तत्तद्धूमभिन्नवृत्ति न वा इत्यादिसं-भावनानामुत्तेजकत्वं वदन्तोऽपि परास्ताः तत्तद्धूमभिन्नत्वेन ज्ञातेषु धूमत्वस्य वृत्तित्वाभा-वनिश्चयेन संभावनाऽयोगात्। अज्ञातेषु चाज्ञानादेव वृत्तित्वसंभावनाऽसंभवात्। एवं

## ❀ काशिकानन्दी ❀

धूमत्ववत्त्वेन धूमत्वानुपस्थितिकालेऽपि तादृशसंशयस्यानुभविकतया तत्रैव संशयोपपादनं दुःशकं स्यात्। निधर्मितावच्छेदककसंभावनाविरहात्। धर्मिज्ञानस्य संशयाहेतुत्वेऽपि धर्मितावच्छेदकप्रकारकज्ञानस्य तद्धेतुताया आवश्यकत्वात्। निर्धर्मितावच्छेदककसंभावनायाः कथंचिदभ्युपगमेऽपि तस्योत्तेजकत्वादिकमत्यन्तमसंभावितमेव। न च तत्तद्धूमव्यक्तेः तादात्म्येन तत्तद्धूमान्यवृत्तित्वसंभावना विवक्षितेति वाच्यम्। तत्तद्धूमान्यत्वेन ज्ञातेषु घटादिषु तादात्म्येन धूमाभावनिश्चयाद् अज्ञातस्य चाज्ञानादेव संभावनाया असंभवात्।

ननु तद्रूपतद्रसयोरेकाधिकरणे दर्शनेऽपि कदाचिद्व्यभिचारसंशयो दृश्यते। न हि तत्र तद्रूपस्य पदार्थान्तरोपस्थापकसामान्यत्वम् एकस्मिन्नेव वस्तुनि तत्सत्त्वाद् येन व्यभिचारसंशयो वक्तुं शक्येत। एवं चादृष्टविशेषादेरेव तत्र व्याप्तिग्रहप्रतिबन्धकत्वं वक्तव्यम्, एवं सति एतत्त्वधूमत्वयोरपि व्याप्तिग्रहप्रतिबन्धकादृष्टविशेषकल्पनेनैवोपपत्तिरिति चेद्?

न, तद्रूपतद्रसस्थलेऽपि सामान्यान्तरेणैव वस्त्वन्तरोपस्थितिसंभवेन तत्रैव विशेषादर्शनेन तद्रूपाभावादिसंशयेन व्यभिचारसंशयसंभवात्। वस्त्वन्तरानुपस्थितिकाले व्याप्तिग्रहस्येष्टत्वात्। न चैवं वस्त्वन्तरोपस्थितिकाले कदाचिदपि तद्रूपतद्रसयोर्व्याप्तिग्रहो न स्यात् तत्र तद्रूपाभावादिसंशयादिति वाच्यम्। तद्रूपतद्रसयोः प्रत्यक्षेणापि व्यापकत्वग्रहसंभवात्।

ननु प्रत्यक्षं प्रति तत्तत्सन्निकर्षत्वेन हेतुतया एतत्त्वधूमत्वयोर्व्यापकत्वग्राहकसन्निकर्षाऽकल्पनादेव न व्यापकत्वग्रह इति नोपलक्षणतया एतत्त्वग्रह इति धूमे वह्निव्याप्तिसंग्रहनानुपपन्न इति चेत्?

न, एतत्त्वधूमत्वयोर्दर्शनोत्तरं मानसव्याप्तिग्रहस्यैव दुर्वारत्वात्। व्यभिचाराग्रहसहचारग्रहादीनामेव तत्र हेतुत्वात्। घट इत्याकारकप्रत्यक्षकाले जातिमानित्याकारकमानसप्रत्यक्षापत्तेर्जातित्वज्ञानविरहेणैवापादयितुमशक्यतया तत्तत्सन्निकर्षादेस्तत्र हेतुत्वाकल्पनात्। न च तद्रूपतद्रसयोः सन्निकर्षसत्त्वेऽपि क्वचित्संशयदर्शनाद् वस्त्वन्तरे क्वचिद् तद्रूपाभावज्ञानमुत्पन्नं कदाचिच्च नोत्पन्नमिति वक्तव्यम्। एवमेतत्त्वधूमत्वयोर्ज्ञानस्थलेऽपि क्वचिद् वस्त्वन्तरे एतत्त्वाभावज्ञानं क्वचिन्न जातमिति वक्तव्यम्। तत्रैवादृष्टविशेषस्य नियामकत्वं वक्तव्यमिति तदपेक्षया तयोर्व्याप्यव्यापकभावग्रहे एवादृष्टविशेषस्य नियामकत्वमास्तामिति वाच्यम्। अयं धूम इति ज्ञानोत्तरमपि किं धूममात्रे एतत्त्वं वर्तते किं वा क्वचिद्धूमे तदभाववोऽपीति, धूमान्तरं वर्तते तदा तत्र एतत्त्वं नास्तीत्याद्यनुभवस्य सर्वसिद्धतया तन्नियामकतया सर्वैरेवादृष्टविशेषस्य कल्पनीयत्वात्। एतत्त्वधूमत्वयोर्व्याप्यव्यापकभावऽग्रहनियामकान्तरसंभवेऽदृष्टविषशेषस्य तन्नियामकत्वकल्पनानौचित्यात्। अन्यथा घटादिकं प्रत्यपि अदृष्टविशेषादेर्नियामकत्वं कल्प्यतां किं दण्डादेः कारणत्वेन, किं वा गुरुभूतप्रतिबन्धकत्वादेस्तत्र तत्र कल्पनेन। सर्वत्रादृष्टविशेषस्य नियामकत्वसंभवात्। न च अयं धूम इति प्रत्यक्षाऽव्यवहितोत्तरक्षणं तत्र वह्निव्याप्तिग्रहे तृतीयक्षणे व्यभिचारसंशयः संभवति। तत्र द्वितीयक्षणे व्यापकत्वग्रहादुपलक्षणतया मानसिके

❀ काशिकानन्दी ❀

चतुर्थक्षणीयसंशयादिकं प्रत्येव तस्य प्रतिबन्धकत्वसंभवादिति वाच्यम्। चतुर्थपञ्चमादिक्षणेष्वपि संशयानुभवात् तदनुपपत्तेरेव दुरुद्धरत्वात्।

अथ पार्थिवरूपं जलीयरूपं तैजसरूपं च वायुत्वाभावव्याप्यमिति निर्णयकाले रूपं वायुत्वाभावव्यभिचारि न वेति संशय आनुभविकः। स कथं सामान्यलक्षणावादिनामप्युपपद्यताम्। न च पार्थिवत्वादीनां रूपत्वाव्यापकतया, पार्थिवत्वाभावादेर्जलीयरूपादौ ग्रहणेन व्यभिचारग्रहाच्च-नोपलक्षणतया पार्थिवत्वादिमानसंभव इति न रूपत्वावच्छेदेन वायुत्वाभावव्याप्तिसंशये पार्थिवरूपत्वाद्यवच्छेदेन वायुत्वाभावनिश्चयस्य प्रतिबन्धकत्वमिति वाच्यम्। पार्थिवजलीयतैजसान्यतमरूपं वायुत्वाभावव्याप्यमिति निश्चयवत एव संशयानुपपत्तेः। पार्थिवत्वतैजसत्वजलीयत्वान्यतमाभावस्य कस्मिंश्चिदपि रूपेऽग्रहणादिति चेद् ?

न, रूपत्वेनोपस्थितापूर्वरूपेषु पार्थिवत्वाद्यन्यतमत्वानिर्णयेन व्यभिचारसंशयसंभवात्। तदन्यतमत्वे रूपत्वव्यापकत्वग्रहविरहेण तत्रोपलक्षणतया भानायोगात्। न च यावन्ति पार्थिवरूपाणि तावन्ति पार्थिवाद्यन्यतमत्ववन्ति एवं यावन्ति जलीयानि तैजसानि चेति निश्चयोत्तरं व्यभिचारसंशयो दुर्वच इति वाच्यम्। पार्थिवरूपत्वाद्यवच्छेदेन तादृशान्यतमत्वनिश्चयस्य रूपत्वसामानाधिकरण्येन तादृशान्यतमत्वाभावग्रहाविरोधित्वात्। न च पार्थिवजलीयतैजसानि यावन्ति रूपाणि सर्वाणि तानि पार्थिवजलीयतैजसान्यतमत्ववन्तीति निश्चयवतः सर्वेषु रूपेषु तदन्यतमत्वनिश्चयात्तादृशान्यतमत्वस्योपलक्षणतयैव मानं स्यादिति वाच्यम्। यतः उक्तप्रत्ययो हि पार्थिवजलीयतैजसान्यतमत्वविशिष्टरूपत्वावच्छेदेन तादृशान्यतमत्वावगाही। न हि पुनस्तादृशप्रत्ययो रूपत्वसामानाधिकरण्येन पार्थिवाद्यन्यतमत्वाभावबुद्धिं प्रतिरुणद्धि। शुद्धरूपत्वावच्छेदेन तादृशान्यतमत्वनिश्चयस्यैव विरोधित्वात्। न च पार्थिवजलीयतैजसान्यतमरूपाणि तादृशान्यतमत्ववन्तीति प्रत्यये अन्यतमत्वमुपलक्षणविधयैव भासत इति तस्य रूपत्वसामानाधिकरण्येन अन्यतमत्वाभावग्रहविरोधित्वमिति वाच्यम्। रूपत्वव्यापकताया अन्यतमत्वे ग्रहणे तस्योपलक्षणतया भानम्। तस्योपलक्षणतया भाने च रूपत्वसामानाधिकरण्येन अन्यतमत्वाभावग्रहप्रतिबन्धमुखेन व्यभिचाराग्रहेणान्यतमत्वे रूपत्वव्यापकत्वग्रह इति परस्पराश्रय इति कदुत्तरमात्रमिदम्। तस्माद् पार्थिवाद्यन्यतमरूपाणि तादृशान्यतमत्ववन्तीति ज्ञानवतः रूपत्वसामानाधिकरण्येन अन्यतमत्वाभावग्रहेण तद्वृत्तित्वस्य रूपत्वे ग्रहणाद् रूपत्वव्यापकत्वमन्यतमत्वे दुर्ग्रहमत एवान्यतमत्वस्योपलक्षणतया भानाभावेन पार्थिवाद्यन्यतमरूपं वायुत्वाभावव्याप्यमिति निश्चयवतोऽपि संशयोपपत्तिः। यस्य रूपाणि सर्वाणि वायुत्वाभावव्याप्यानीत्येव रूपत्वावच्छेदेन तद्ग्रहस्तस्य संशयाभावस्तूभयमतेऽपीष्ट एव। प्रकृते च त्वन्मते प्रत्यक्षीभूतधूमे एतत्त्वनिश्चयेन धूमान्तरस्यात्यन्तमज्ञानेन एतत्त्वाभाववद्वृत्तित्वज्ञानं धूमत्वेऽसंभावितमेव। तथा च व्यापकत्वेन गृहीतस्य तस्योपलक्षणतयैव भानान्मूलोक्तसंशयो दुरुपपाद एवेति सामान्यलक्षणा स्वीकरणीयैव स्यादिति दिक्।

❋ दीधितिः ❋

यत्तु सामान्याभावभानार्थं सा स्वीकार्या, तां विना सकलतत्प्रतियोगिज्ञानाऽसंभवादिति। तन्न। नह्यभावस्य ज्ञानमात्रे लौकिकप्रत्यक्षे वा प्रतियोगिज्ञानं कारणम्। तव सामान्यलक्षणया इदन्त्वादिना च भाने व्यभिचाराद्, मानाभावाच्च। अत एवेदंत्वादिना उपस्थिते

❋ जागदीशी ❋

मिश्रमतमुपन्यस्य दूषयति यत्त्विति। तां=सामान्यलक्षणाम्। तत्प्रतियोगीति। सामान्याभावप्रतियोगीत्यर्थः अभावबुद्धौ प्रतियोगिज्ञानस्य हेतुतासत्त्वे एव सकलप्रतियोगिज्ञानापेक्षा स्यात्। सैव तु नास्तीत्याह नहीति। प्रथमे—तवेति। तव=सामान्यलक्षणावादिनः। द्वितीये—इदन्त्वेति।

नन्वभावत्वप्रकारकतल्लौकिकप्रत्यक्षे प्रतियोगिज्ञानं हेतुरत आह—मानाभावादिति। अत एव=प्रतियोगिज्ञानं विनाप्यभावप्रत्यक्षादेव।

नन्विदं भावो न वेति संशयविषयीभूतमिदंत्वं तेजोऽभावत्वमेव। तथा च

❋ काशिकानन्दी ❋

दीधितौ—सामान्याभावभानार्थं=घटादिसामान्याभावज्ञानजनकनिखिलघटादिभानार्थम्। सा=सामान्यलक्षणा। अभावस्य ज्ञानमात्रे=अभावविषयकज्ञानमात्रे। लौकिकप्रत्यक्ष इति। अत्रापि अभावस्येति सम्बन्धाद् अभावविषयकलौकिकप्रत्यक्ष इत्यर्थः। सामान्यलक्षणयेति। प्रमेयत्वादिसामान्यलक्षणया निखिलप्रमेयप्रत्यक्षकाले यावत्प्रमेयान्तःपातिनोऽभावस्यापि भानात्तत्रैव व्यभिचारः तादृशज्ञानपूर्वं घटपटादिरूपतत्प्रतियोगिज्ञानाभावात्। इदन्त्वादिनेति। तमोधर्मिकेदंनीलमित्याद्याकारकप्रत्यक्षस्य तेजोरूपतत्प्रतियोगिज्ञानशून्यकालेऽप्युदयेन तत्रापि व्यभिचारः।

जागदीश्यां—प्रथमे इति। दोषमाहेति शेषः प्रथमे=अभावज्ञानमात्रे प्रतियोगिज्ञानं कारणमिति कल्पे। द्वितीये इति। दोषमाहेति शेषः। अभावलौकिकप्रत्यक्षे प्रतियोगिज्ञानं कारणमिति द्वितीयकल्पे इत्यर्थः।

तल्लौकिप्रत्यक्षे=अभावलौकिकप्रत्यक्षे। इदन्त्वेन प्रत्यक्षस्थलवारणायाभावत्वेति। प्रमेयत्वेन अभावत्वेन वा निखिलाभावप्रत्यक्षस्थलवारणाय—लौकिकेति। यत्किंचिद्व्यक्तेरभावत्वेनाभावज्ञानोत्तरमभावत्वसामान्यलक्षणासंभवः।

नन्विदमिति। इदमित्यनेन तमसोऽवगाहनम्। तेजोऽभावत्वमेवेति। बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्माणामिदमः शक्यतावच्छेदकत्वात् तेजोऽभावत्वेन तेजोऽभावावगाहिज्ञानाकार एव इदंपदेन बोध्यत इति भावः।

❀ दीधितिः ❀

तमसि भावत्वाभावत्वसंशयः । तेजोऽभावत्वेनोपस्थिते तदयोगात् । प्रतियोगिविशेषिततज्ज्ञानं तु विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते ।

❀ जागदीशी ❀

तत्रापि तेजोरूपप्रतियोगिज्ञानसत्त्वान्न व्यभिचार इत्यत आह तेजोऽभावत्वेति । तदयोगादिति । भावत्वसंशयायोगादित्यर्थः । तद्धर्मविशिष्टधर्मिकतदभावग्रहं प्रति तादृशज्ञानेच्छाविरहविशिष्टज्ञानमात्रस्य [ तादृशेच्छाविरहस्यैव वा ] प्रतिबन्धकत्वात् । अन्यथा निर्वह्निर्वह्निमानित्येवमनाहार्यधीप्रसङ्गादिति भावः ।

अथाभावबुद्धौ प्रतियोगिज्ञानस्याहेतुत्वे विनापि घटादिग्रहं घटो नास्तीत्याकारकाभावप्रत्यक्षापत्तिरत आह प्रतियोगीति । तथा चोक्तबुद्धेर्घटत्वविशिष्टवैशिष्ट्यबुद्धित्वात् तत्कारणीभूतस्य घटत्वप्रकारकज्ञानस्य विरहादेव न तस्योत्पाद इति भावः ।

❀ काशिकानन्दी ❀

तत्रापि = तमोऽवगाहि 'इदं भावो न वे'त्याकारको यः संशयस्तथाविधस्थलेऽपि । प्रतियोगिज्ञानसत्त्वादिति । प्रतियोगज्ञानस्य तत्रापि स्वीकारादिति भावः । न व्यभिचार इति । अभावत्वेनाभावलौकिकप्रत्यक्षं प्रति प्रतियोगिज्ञानस्य न व्यभिचरितत्वमित्यर्थः । तद्धर्मविशिष्टेति । प्रकृते तद्धर्मः तेजोऽभावत्वरूपधर्मः । तदभावग्रहं प्रति = तेजोऽभावत्वाभावग्रहं प्रति । तादृशज्ञानेच्छेति । तद्धर्मविशिष्टधर्मिकतदभावज्ञानेच्छेत्यर्थः । तेजोऽभावत्ववति तेजोऽभावत्वाभावप्रकारकज्ञानं जायतामित्याकारकाहार्यज्ञानजनकेच्छेति यावत् । विरहेति । इच्छासत्त्वे तु आहार्यात्मकं तादृशज्ञानमुत्पद्यत एवेति भावः । आहार्यज्ञाने बाधज्ञानस्याविरोधित्वात् । अन्यथा = उक्तप्रतिबध्यप्रतिबन्धकभावानङ्गीकारे । इत्येवम् = इत्याकारकतया । अनाहार्येति । इच्छाऽप्रयोज्यधीप्रसङ्गादित्यर्थः । एवं च तेजोऽभावो न वेति संशयोत्पादात् तदनुरोधेन इदमित्यंश एतद्व्यक्तित्वप्रकारकप्रत्यक्षाकार एव न तु तेजोऽभावत्वप्रकारकप्रत्यक्षाकार इति प्रतियोगिज्ञानं विनापि अभावप्रत्यक्षं स्फुटमेवेति भावः ।

दीधितौ प्रतियोगीति । घटाद्यात्मकप्रतियोगिविशेषिताभावज्ञानं घटो नास्तीत्याकारकमिति यावत् । विशिष्टवैशिष्ट्यबोधस्य या मर्यादा विशेषणतावच्छेदकज्ञानहेतुकत्वरूपा तां नातिशेते = नातिक्रामतीत्यर्थः । घटवद्भूतलमित्यादिविशिष्टवैशिष्ट्यावगाहिबुद्धौ घटत्वादिप्रकारकयत्किंचिद्घटादिज्ञानस्यैव हेतुत्वं प्रागुपपादितम् । इयमपि घटो नास्तीति बुद्धिर्घटत्वविशिष्टस्य प्रतियोगितासम्बन्धेनाभावांशे वैशिष्ट्यावगाहिनीति तत्रत्या मर्यादा इहापीति भावः ।

❀ दीधितिः ❀

**सकलप्रतियोगिविषयत्वं तु तस्यासिद्धम् ।**

❀ जागदीशी ❀

ननु स्वातन्त्र्येणाभावप्रत्यक्षे प्रतियोगिज्ञानस्याहेतुत्वेऽपि अभावप्रत्यक्षे सकलप्रतियोगिविषयकत्वरक्षार्थं सन्निकर्षविधयैव तदपेक्षा स्यादत आह—**सकलेति** । **तस्य** = सामान्याभावप्रत्यक्षस्य ।

❀ काशिकानन्दी ❀

स्वातन्त्र्येणेति । प्रतियोगिज्ञानस्याऽहेतुत्वे इत्यनेनास्य सम्बन्धः । सकलप्रतियोगिविषयकत्वरक्षार्थमिति । घटो नास्तीत्याद्याकारकसामान्याभावप्रत्यस्य सकलघटप्रतियोगिकत्वाद्यवगाहित्वमावश्यकम् । यत्किंचिद्घटमात्रस्य प्रतियोगिविषया भाने घटान्तरवति घटो नास्तीति बुद्ध्युत्पादापत्तेरिति भावः । सन्निकर्षविधयैव = ज्ञानलक्षणात्मकसन्निकर्षविधयैव । तदपेक्षा = प्रतियोगिज्ञानापेक्षा । घटोनास्तीत्याकारकप्रत्यक्षे घटभासकसंयोगादिसन्निकर्षविरहेण घटज्ञानलक्षणाया एव सन्निकर्षत्वं वाच्यम् एवं च तत्र निखिलघटभासकनिखिलघटविषयकज्ञानलक्षणायाः सामान्यलक्षणामन्तरेणासंभवात् सामान्यलक्षणा स्वीकार्या । न चानुमित्याद्यात्मकनिखिलघटविषयकज्ञानलक्षणतज्जन्यस्मृतेश्च सन्निकर्षत्वसंभवान्न सामान्यलक्षणापेक्षेति वाच्यम् । यत्पुरुषस्य निखिलघटविषयकानुमित्यादिः कदाचिदपि नोत्पन्नः तस्य भूतले प्रथमवारं घटं दृष्ट्वा पश्चाच्छालायां घटमपश्यतो जायमानघटोनास्तीत्यादिप्रत्यक्षस्यैव सकलघटविषयकत्वरक्षायै सामान्यलक्षणापेक्षणादिति भावः ।

केचित्तु तदपेक्षेत्यत्र तत्पदेन पूर्वप्रक्रान्ताया एव सामान्यलक्षणायाः परामर्शात् तत्कालोत्पन्नयत्किंचिद्घटत्वप्रकारकघटज्ञानस्यैव स्वोत्तरोत्पन्नघटोनास्तीतिबुद्धौ निखिलघटमानार्थं सन्निकर्षत्वं वक्तव्यमित्याशयं वर्णयन्ति । तच्चिन्त्यम् ।

दीधितौ—**असिद्धमिति** । नन्वेवं घटवत्यपि भूतले घटान्तरप्रतियोगिकाभावसत्त्वाद् घटोनास्तीतिप्रत्ययापत्तिः । घटान्तरमात्रस्य प्रतियोगित्वमवगाहमानज्ञानस्यापि घटो नास्तीत्याकारताया एव संभवादिति वाच्यम् । घटो नास्तीतिबुद्धिप्रतिबन्धकीभूतघटवत्तानिश्चयसत्त्वादेव तत्र तादृशप्रत्ययानुदयात् । न च घटवति भूतले घटमपश्यतो जायमानस्य घटोनास्तीतिप्रत्ययस्य प्रामात्वापत्तिरेव स्यादिति वाच्यम् । यतो घटो नास्तीत्याकारकप्रत्ययेन वस्तुगत्या निखिलघटप्रतियोगिकाभाव एव विषयीक्रियते न तु यत्किंचिद्घटप्रतियोगिकः । निखिलघटप्रतियोगिकाभाव—यत्किंचिद्घटमात्रप्रतियोगिकाभावयोः खण्डयोर्भिन्नत्वेन यत्किंचिद्घटप्रतियोगिकाभावोऽपि स एवेति आपादयितुमशक्यत्वात् । एवं चैकघटवति भूतले निखिलघटप्रतियोगिकाभावावगाहिघटोनास्तीतिप्रतीतेस्तदभाववति तत्प्रकारकत्वावगाहितया भ्रमत्वम् । नीलघटो नास्तीत्यादिप्रतीत्या च निखिलनीलघटाभाव-

## ❀ जागदीशी ❀

अथाभावलौकिकप्रत्यक्षे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याऽहेतुत्वे घटत्वनिर्विकल्पकोत्तरं विशेष्ये विशेषणमिति न्यायेनाभावे घटं घटे च घटत्वमवगाह्य घटाभाव इत्याकारकलौकिकप्रत्यक्षं स्यात्। न चेष्टापत्तिः, अननुभवादपसिद्धान्ताच्च। घटत्वप्रकारेण घटविशिष्टबुद्धौ घटत्वप्रकारेण

## ❀ काशिकानन्दी ❀

प्रतियोगिकमखण्डमभावान्तरं विषयीक्रियत इति घटो नास्ति नीलघटो नास्तीत्यादिप्रतीत्योर्नवैलक्षण्यशङ्का ।

अभावत्वेनाभावलौकिकप्रत्यक्षे प्रतियोगिज्ञानस्य कारणत्वं व्यवस्थापयितुमाह जागदीश्यामथेति । **अभावलौकिकप्रत्यक्षे**=अभावत्वप्रकारकाभावलौकिकप्रत्यक्षे । स्यादिति। ननु घटादिभिः सह सन्निकर्षाविरहेण कथं तन्निर्विकल्पकम्। न च भूतले घटस्य वर्त्तमानतया न सन्निकर्षानुपपत्तिरिति वाच्यम्। तथा सति घटाभावस्य तत्र विरहेण अभावेन सन्निकर्षविरहात्तस्यैव प्रत्यक्षानुपपत्तेः। निर्विकल्पकात्मकस्मरणानभ्युपगमेन तस्याप्यसंभवादिति चेन्न। घटे एव घटात्यन्ताभावस्य वर्त्तमानतया घटेन सह सन्निकर्षकाले घटात्यन्ताभावेनापि सह तत्संभवात्। इष्टापत्तिरिति। घटवद्भूतलमित्यादिप्रत्ययवदिति भावः। ननु क्षणविलम्बेन घटाभाव इत्याकारकलौकिकप्रत्यक्षं प्रतियोगिज्ञानहेतुतावादिमतेऽपीति क्षणविलम्बः शपथनिर्णेय इत्यत आह—अपसिद्धान्तेति। अयं भावः—घटवद्भूतलमित्यादिज्ञानं द्विविधं, विशिष्टवैशिष्ट्यावगाहि तद्भिन्नं च। तत्र द्वितीयं विशेष्ये विशेषणमिति रीत्या जायमानं, तत्र च विशेषणांशे घटत्वादेरुपलक्षणतयैव भानम्। अन्यथा विशिष्टवैशिष्ट्यावगाहिबुद्धितस्तस्यावैलक्षण्यापत्तेः। विशिष्टवैशिष्ट्यावगाहिबुद्धौ तु विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणतया कारणवैलक्षण्यम्। इत्थं च घटाभाव इत्यादिप्रत्यक्षसामान्ये घटत्वप्रकारकज्ञानत्वेन कारणत्वानुपगमे विशिष्टवैशिष्ट्यावगाह्यनात्मकं विशेष्ये विशेषणमिति रीत्या घटाभाव इत्याकारकप्रत्ययमपि कदाचिदुत्पद्येत। घटवद्भूतलमितिवत्। तथा सति घटांशे घटत्वस्योपलक्षणतयैव भानं स्यादिति अपसिद्धान्तः। प्रतियोग्यंशे उपलक्षणविधया धर्मस्य प्रकारत्वानभ्युपगमात्। तथा सति द्रव्यत्वादेरपि तत्र भानापत्त्या पटादिमत्यपि द्रव्यं नास्तीति प्रत्ययः स्यात्। घटाभावस्य तत्र सत्त्वाद् घटे च द्रव्यत्वसत्त्वादिति।

**घटत्वप्रकारेण घटविशिष्टबुद्धाविति ।** विशिष्टवैशिष्ट्यावगाहितद्भिन्नसाधारणतयेति भावः। हेतुत्वोक्त्येति। घटत्वप्रकारेण घटविशिष्टबुद्धिसामान्ये घटत्वप्रकारकज्ञानस्य हेतुत्वे न मानम्। घटघटत्वयोर्निर्विकल्पकोत्तरं घटत्वे घटप्रकारकज्ञानापत्तेः प्रागुक्तायाः प्रतिबन्धकविशेषेणैव वारणीयत्वात्। अन्यथा सविकल्पकोत्तरं परेषामपि तदापत्तेरवारणात्। सविकल्पकोत्तरं तस्येष्टत्वे क्षणविलम्बस्योक्तैव रीतिः। दण्डो रक्तो न वेति संशयोत्तरं रक्तदण्डवानिति विलक्षणबोधानुत्पत्तेर्विशेषणतावच्छेदकसंशयाभावस्य

## ❀ जागदीशी ❀

घटज्ञानस्य हेतुत्वोक्त्या कथंचित्तन्निरासेऽपि घटाज्ञानदशायामिन्द्रियसम्बद्धविशेषणतया 'न' इत्याकारस्याभावलौकिकप्रत्यक्षस्य प्रसङ्गो दुर्वारः। अभावप्रत्यक्षं प्रति विशिष्टप्रतियोगिज्ञानस्य हेतुत्वे तु प्रागुपस्थितस्य विशिष्टप्रतियोगिनः अभावांशे विशेषणीभूय भाने बाधकाभावान्न तादृशं प्रत्यक्षम्। न च घटाभावस्यैव पटत्वावच्छिन्नाभावत्वेन प्रात्यक्षिकभ्रमे घटज्ञानाजन्ये व्यभिचारात्प्रतियोगिज्ञानस्य हेतुत्वं दुर्वचम्। घटत्वावच्छिन्नाभावत्वेन प्रत्यक्षं प्रत्येव घटज्ञानत्वेन हेतुत्वे तु घटाऽज्ञानदशायां विशेषणताप्रत्यासत्त्या नेत्याकारकप्रत्यक्षं दुर्वारमिति वाच्यम्। घटत्वावच्छिन्नप्रकारत्वान्यप्रकार-

## ❀ काशिकानन्दी ❀

त्वद्धेतुत्वोक्त्यापि वारणसंभवात्, संशयान्यज्ञानत्वात्मकतन्निश्चयत्वेन हेतुतायां गौरवात्। रक्तत्वस्यैव रक्तत्वाभावस्याप्युपनायकसत्त्वाद् रक्तत्वतदभावयोरेकत्रावगाहिताप्रसङ्गेन संशयस्य प्रतिबन्धकत्वावश्यकत्वात्। विशेष्ये विशेषणमिति रीत्या ज्ञानस्य बाधग्रन्थाद्दौ मूलकारैः स्वयं स्वीकाराच्चेत्यादिकं विचिन्त्य कथंचिदित्युक्तम्। इन्द्रियसम्बद्धेति। भूतलादि तथा। विशेषणतयेति। विशेषणतासन्निकर्षेणाभावप्रत्यक्षहेतुभूतेनेत्यर्थः। प्रसङ्ग इति। 'न' इत्याकारकप्रत्यक्षं तु सर्वानुभवविरुद्धमिति नेष्टापत्तिः संभवतीति भावः।

ननु विशिष्टप्रतियोगिज्ञानस्याभावप्रत्यक्षे कारणत्वमितिमतेऽपि घटज्ञानानन्तरं नेत्याकारकप्रत्यक्षं कुतो न भवति। न हि दण्डज्ञानोत्तरं दण्डिपुरुष इत्येव प्रत्यक्षं न तु पुरुष इत्येतावन्मात्राकारमिति शक्यं वक्तुमित्याशङ्क्याह विशिष्टेति। प्रतियोगितावच्छेदकविशिष्टेत्यर्थः। एवमुत्तरत्र। बाधकाभावान्न तादृशं प्रत्यक्षमिति। न च बाधकाभावमात्रं न विशिष्टप्रत्यक्षे प्रयोजकं, तथा सति दण्डप्रत्यक्षानन्तरं पुरुष इत्येतावन्मात्राकारप्रत्यक्षानापत्तेरिति वाच्यम्। यादृशविशेषणज्ञानजन्यं विशेष्यविषयकज्ञानं तस्य तादृशज्ञानविषयविषयकत्वनियमेनादोषात्। दण्डज्ञानानन्तरजायमानपुरुषज्ञानस्य दण्डज्ञानजन्यत्वाभावात्। यत्तु दण्डज्ञानजन्यं दण्डीति प्रत्यक्षं तत्र दण्डभानसत्त्वनियमाच्च। किं च दण्डज्ञानोत्तरमपि पुरुष इति ज्ञानदर्शनात्तत्र बाधकविशेषोऽगत्या कल्पनीयः। इह तु केवलनेत्याकारप्रत्यक्षस्याननुभवेन स न कल्पनीय एवेति रुचिरमुत्तरम्। व्यभिचारादिति। पटज्ञानजन्यत्वस्य तत्र सत्त्वेऽपि पटस्य तत्प्रतियोगितावच्छेदकविशिष्टत्वाभावादिति भावः। दुर्वारमिति। घटाभावत्व-पटाभावत्वादिना प्रत्यक्षं प्रत्येव घटपटादिज्ञानस्यो-क्तक्रमेण हेतुतया शुद्धाभावत्वेनाभावप्रत्यक्षे प्रतियोगिज्ञानस्यानपेक्षणादिति भावः। प्रकारत्वान्यप्रकारत्वेत्यादि। घटाभावस्य पटाभावत्वेन भ्रमे पटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितत्वसत्त्वात्पटज्ञानं तत्र हेतुः। नेत्याकारकप्रत्यक्षमपि पटत्वाद्यवच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपितमभावविषयकं चेति पटादिज्ञानं तत्र हेतुः स्यादिति भावः।

❀ जागदीशी ❀

त्वाऽनिरूपिताभावनिष्ठलौकिकविषयताकप्रत्यक्षं प्रत्येव घटत्वादिप्रकारकज्ञानत्वेन हेतुत्वात् । तस्य च भ्रमप्रमानिर्विकल्पकसाधारणत्वात् । प्रकारत्वं तु प्रतियोगितासम्बन्धावच्छिन्नं ग्राह्यम्, अतो घटो नास्तीति प्रत्यक्षस्य स्वरूपसम्बन्धेनाभावत्वप्रकारकत्वेऽपि नासंग्रहः ।

❀ काशिकानन्दी ❀

अभावनिष्ठेति । अभावत्वावच्छिन्नेत्यर्थः । ननु घटाभाव इति प्रत्यक्षेऽभावांशे घटत्वावच्छिन्नप्रकारत्वान्याभावत्वनिष्ठप्रकारतानिरूपितत्वसत्त्वाद् घटज्ञानस्य तत्र हेतुत्वं न स्यादित्यत आह प्रकारत्वमिति ।

ननु तमोविषयकेदंनीलमित्याकारकप्रत्यक्षं न स्यात् । इदंत्वनीलत्वादिनिष्ठप्रकारताया घटत्वावच्छिन्नप्रकारतान्यत्वेऽपि प्रतियोगित्वसम्बन्धानवच्छिन्नतया तादृशप्रत्यक्षत्वस्य घटादिज्ञानकार्यतावच्छेदकाक्रान्तत्वात् । न च घटत्वावच्छिन्नप्रकारत्वान्यनिरुक्तप्रकारत्वाऽनिरूपिता याऽभावनिष्ठा अभावत्वनिष्ठप्रकारतानिरूपितविशेष्यतासमानाधिकरणलौकिकविषयता तादृशविषयताकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वेन नायं दोषः । इदं नीलमित्यादिप्रत्यक्षीयाभावनिष्ठविषयताया अभावत्वनिष्ठविषयतानिरूपितविशेष्यतासमानाधिकरणत्वविरहादिति वाच्यम् । पटाभावत्वकालीनमिदंनीलम् अयं नीलोऽभावत्ववानित्याद्यभावत्वोपनीतप्रत्यक्षस्यैवमपि उपपादयितुमशक्यात्वात् । एवं पुरुषान्तरज्ञानीयविशेष्यतासामानाधिकरण्यमादायापि दोष इति चेद् ?

न, घटत्वावच्छिन्नप्रकारत्वान्यप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वाऽनिरूपिता याऽभावनिष्ठा अभावत्ववृत्तिलौकिकविषयतानिरूपितविषयता तादृशविषयताकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वोपगमेनादोषात् । पटाभावत्वादिनिष्ठा निरुक्तस्थलीयविषयता तु न लौकिकी । न चैवमभावत्वोपनीतनेत्याकारकप्रत्यक्षापत्तिरिति वाच्यम् । इष्टत्वात् । न च नेत्याकारकप्रत्यक्षं नानुभूयते, अत्राभावो वर्तत इत्यर्थे अत्र 'न' वर्तत इत्यप्रयोगादिति वाच्यम् । यतो नेत्येतावन्मात्रशब्दप्रयोगो नानुभवजनकोऽनुभूयत इति शङ्कसे आहोस्वित् अभावत्वप्रकारकाभावविशेष्यकप्रत्यक्षं नानुभूयत इति । आद्ये नञादिपदानां प्रतियोगिवाचकपदसमभिव्याहारे एवार्थबोधजनकत्वव्युत्पत्त्याऽदोषः । अभावत्वप्रकारकाभावविशेष्यका'ऽभाव' इत्याकारकप्रत्यक्षं त्वनुभूयत इति द्वितीयशङ्काप्यपास्ता । अत एव घटादावभावत्वभ्रमोत्तरमभावमद्राक्षमित्यनुभवः, तमसि चायमभावो नवेति प्रात्यक्षिकसंशयश्च ।

नन्वेवमित एव युक्त्या 'ने'त्याकारकप्रत्यक्षस्याप्यभ्युपगमे को दोषः । अभावो वर्तत इत्यर्थे न वर्तत इति प्रयोगाभावस्य नञादिपदानां प्रतियोगिवाचकपदसमभिव्याहारे एवानुभावकत्वमिति नियमस्वीकारेणैवोपपत्तेः । अभावत्वोपनीतभ्रमात्मकाभावइत्याद्याकारकप्रत्यक्षवल्लौकिकप्रत्यक्षस्यापि स्वीकारसंभवादिति चेद् ?

## ❋ काशिकानन्दी ❋

न, अभावत्वादेरनुयोगित्वात्मकतया तस्य च किंचिन्निरूपितत्वनियमान्निरूप्य-साक्षात्कारस्य निरूपकज्ञानमन्तराऽस्वीकारात् । निरूपकोपरागेणैव निरूप्यमानात्। अत एव भूतलमधिकरणमित्याद्याकारकाधिकरणत्वनिष्ठलौकिकविषयताकप्रत्यक्षस्याप्य-स्वीकार एव। घटाधिकरणं भूतलमित्यादिप्रत्यक्षस्यैवानुभविकत्वात् ।

ननु अभावत्वोपनीतभावधर्मिकाभावोघटोयइतिप्रत्यक्षस्य घटज्ञानकार्यत्वानापत्तिः, घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताया घटप्रकारतानिरूपितविषयतायाः अभाव-त्वनिष्ठलौकिकविषयतानिरूपितत्वविरहाद् । न च तत्राभावत्वेऽपि लौकिकविषयतैव सन्निकर्षसत्त्वादिति वाच्यम्। यत्र दोषविशेषवशादभावत्वस्य न लौकिकप्रत्यक्षं तत्रैव दोष-स्यापादनीयत्वात् । तमसि अभावस्तैजस इति प्रत्यक्षेऽभावत्वस्य लौकिकविषयत्वविरह-संभवादिति चेद् ?

अत्राहुः, घटत्वावच्छिन्नप्रकारत्वान्यप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपि-तत्वशून्या या अभावनिष्ठा प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितत्त्वा-ऽभावत्व-निष्ठलौकिकविषयतानिरूपितत्वान्यतरवती विषयता तादृशविषयताकप्रत्यक्षत्वस्य कार्य-तावच्छेदकत्वात्। घटोनास्तीत्यादिप्रत्यक्षस्य पटादिज्ञानकार्यतापत्तिवारणाय शून्यान्तम्। इदमिदन्त्वयोर्निर्विकल्पकमिवाभावाभावत्वयोर्निर्विकल्पकोत्पादे क्षतिविरह एव।

ननु घटपटोभयं नास्तीति प्रत्यक्षस्य घटज्ञानकार्यतानापत्तिः। घटत्वावच्छिन्नप्रकार-त्वान्यप्रतियोगित्वसम्बन्धावच्छिन्नपटत्वावच्छिन्नप्रकारतानिरूपितत्वादभावनिष्ठविषयताया इति। यदि च अभावत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः पटत्वावच्छिन्नप्रकारता-निरूपितविशेष्यतायाश्च भिन्नतया न दोष इत्युच्यते तदा घटोनास्तीत्यपि प्रत्यक्षं न स्यात्। अभावत्वविषयतानिरूपितविषयताया घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपितत्ववद् पटत्वमठत्वाद्यवच्छिन्नप्रकारत्वान्यनिरुक्तप्रकारत्वाऽनिरूपितत्वस्याप्यक्षतेः घटत्वावच्छिन्न-प्रकारतायाः पटत्वाद्यवच्छिन्नभिन्नत्वेऽपि तन्निरूपितत्वस्य अभावत्वविषयतानिरूपित विषयतायामभावादिति चेद् ?

मैवम्, घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वान्या या प्रतियोगित्व-सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यता तदन्यत्वस्य तदनवच्छिन्नत्वस्य वा अभावत्व-निष्ठप्रकारतानिरूपितविशेष्यतायां देयत्वात् । घटपटोभयं नास्तीत्यत्र घटत्वावच्छिन्न-प्रकारतानिरूपितविशेष्यतैव घटत्वावच्छिन्नप्रकारतानिरूपितापीत्यदोषः । एतेन अन्वया-भासमानप्रकारताविशेष्यतयोर्जगदीशमते ऐक्यसत्त्वेऽपि विशेष्यताद्वयस्य नैक्यम्। अत एव वह्निव्याप्यो धूमः सुन्दर इत्यत्र धूमत्वमात्रावच्छिन्नविशेष्यताकत्वं तत्र जगदीशोक्तं सगच्छते। अन्यथा वह्निव्याप्यत्वनिष्ठप्रकारतानिरूपितविशेष्यताया धूमत्वा-दिनिष्ठप्रकारतानिरूपिविशेष्यतायाश्चैक्येन धूमत्वमात्रावच्छिन्नत्वं विशेष्यताया न संघटेतेति कस्यचिदुक्तिरपि परास्ता । विशेष्यतैक्यस्यास्वीकारावलम्बने द्वितीयकल्पेन दोषवारणात् ।

## ❀ काशिकानन्दी ❀

यदि च घटाभावः पटीय इत्याकारकैकत्रद्वयानवगाह्यपि भ्रमात्मकप्रत्यक्षमभ्युपगम्यते तदा घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नत्वे सति घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वान्यप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छिन्नविशेष्यता तदन्याभावत्वनिष्ठलौकिकविषयतानिरूपितविषयत्व-प्रतियोगितासम्बन्धावच्छिन्नघटत्वावच्छिन्ननिरूपितविशेष्यत्वैतदन्यतरनिरूपितप्रत्यक्षत्वस्य घटज्ञानकार्यतावच्छेदकत्वमभ्युपगन्तव्यमिति ।

केचित्तु अभावत्वोपनीताभावो घटीय इति प्रत्यक्षस्य घटपटोभयं नास्तीत्यादिप्रत्यक्षस्य च विशिष्टवैशिष्ट्यावगाहितया विशेषणतावच्छेदकीभूतघटत्वादिप्रकारकज्ञानकार्यतावच्छेदकाक्रान्ततया नोक्तदोषाणामाशङ्कैवेति नैतादृशपरिष्कार उपयुज्यत इति वदन्ति । तच्चिन्त्यम् , अपसिद्धान्ताच्चेत्यत्रोक्तयुक्तेः।

अथ घटाभावोऽभाव इत्याकारकाभावत्वनिष्ठलौकिकविषयताकप्रत्यक्षापत्तिः । अभावत्वनिष्ठप्रकारतानिरूपितविशेष्यताया घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नमात्रप्रकारतानिरूपितत्वात् । न चेष्टापत्तिः । 'न' इत्याकारकप्रत्यक्षवत् घटाभावो 'न' इत्याकारकप्रत्यक्षस्याप्यनुभवविरुद्धत्वात् । विधेयीभूताभावत्वस्य स्वनिरूपकानुपरागेणैव तादृशप्रत्यक्षे आपाद्यमानत्वात् । स्वनिरूपकानुपरागेणाभावत्वादिप्रत्यक्षासंभवस्यैव नेत्याकारप्रत्यक्षास्वीकारे बीजतायाः प्रागभिधानात् । न च घटत्वावच्छिन्नप्रकारत्वान्यप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतान्याभावत्वनिष्ठलौकिकविषयताकप्रत्यक्षत्वस्य घटज्ञानकार्यतावच्छेदकत्वोपगमेन नैतद्दोष इति वाच्यम् । एवं सति अभावो घटाभाव इत्याकारकाभावत्वलौकिकविषयताकप्रत्यक्षस्यैवापत्तेः । तत्राभावत्वनिष्ठविषयताया विशेष्यतावच्छेदकतान्यत्वविरहात् । न च घटत्वावच्छिन्नप्रकारत्वान्यत्वे सति विधेयत्वान्या या प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारता तन्निरूपितविशेष्यतावच्छेदकतान्याभावत्वनिष्ठलौकिकविषयताकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वं वाच्यमतो न दोषः । अभावो घटाभावः इत्यत्र अभावत्वस्य विशेष्यतावच्छेदकत्वेऽपि विधेयतान्यप्रकारतानिरूपितविशेष्यतावच्छेदकतान्यत्वसत्त्वात्पटमठादिज्ञानकार्यतावच्छेदकाक्रान्तत्वात् । घटो नास्तीति प्रत्यक्षस्य पटत्वावच्छिन्नप्रकारतान्यत्वे सति विधेयतान्यघटत्वावच्छिन्नप्रकारतानिरूपिताविशेष्यतावच्छेदकत्वमेवाभावत्वांशे न तु तदन्यत्वमतो न पटादिज्ञानकार्यतावच्छेदकत्वापत्तिः । नेत्याकारकप्रत्यक्षमपि न भवति निरुक्तविधेयतान्यप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतान्यत्वादभावत्वविषयताया इति वाच्यम् । एवं सति अभावो घटीय इति प्रत्यक्षानापत्तेः । पटत्वावच्छिन्नप्रकारतान्यत्वे सति विधेयतान्यप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारता न घटनिष्ठा किन्तु मठादिनिष्ठैव, तन्निरूपितविशेष्यतावच्छेदकतान्यत्वस्याभावत्वनिष्ठविषयतायां सत्वेन पटादिज्ञानकार्यतावच्छेदकाक्रान्तत्वात् । तादृशप्रत्यक्षं तु नापलपितुं शक्यम् । भूतलेऽभावो घटस्य, न तु पटस्येत्यादिसर्वजनानुभवात् । न च विधेयतान्यत्वं न वक्तव्यम् । अभावो घटाभाव

※ काशिकानन्दी ※

इत्यत्र अभावत्वस्य विशेष्यतावच्छेदकत्वेऽपि प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यतावच्छेदकताविरहात्। तादात्म्येन घटाभावस्यैव तत्र प्रकारत्वादिति वाच्यम्। प्रतियोगित्वसम्बन्धेन घटस्य स्वरूपेणाभावत्वस्य च विधेयत्वावगाहिं अभावो घटाभावत्व-नित्याकारकं यत् प्रत्यक्षं तत्रैव दोषात्। तत्र च घटस्य न विशेष्यतावच्छेदकीभूताभावत्वे उपरागतया भानम्। अपि तु विधेयीभूताभावत्वांशे एव। अभावो घटीय इत्यत्र विशेष्यतावच्छेदकीभूताभावत्वांशे एवेति विशेष इति चेद्?

नैवम्, घटत्वनिष्ठविषयतान्य—स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नविषय-त्वाऽनिरूपिताभावत्वनिष्ठलौकिकविषयताकप्रत्यक्षत्वस्य घटत्वप्रकारकज्ञानकार्यतावच्छेदक-त्वात्। अभावो घटाभावः, घटाभावोऽभाव इत्यादौ घटानुपरक्ताभावत्वविषयतायाः स्वाव-च्छिन्नप्रतियोगितानिरूपितत्वसम्बन्धेन किंचिद्विषयतानिरूपितत्वविरहाद् घटत्वपटत्वादि-प्रकारकज्ञानकार्यतावच्छेदकाक्रान्ततया पटत्वादिनिखिलप्रकारकज्ञानविरहादेव न तादृशा-पत्तिः। घटो नास्तीत्यत्राभावत्वांशे स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटत्वस्य भानान्न पटत्वादिप्रकारकज्ञानकार्यतावच्छेदकाक्रान्तत्वं तस्य। नचैवमभावांशे घटानव-गाहि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटत्वविशिष्टाभावत्ववानित्याकारकं प्रत्यक्षमुत्प-द्येत, किं च घटत्वप्रकारकज्ञानविरहकाले घटत्वोपनीततादृशप्रत्यक्षं न स्यादिति वाच्यम्। इष्टत्वात्। यदि च निरुक्तसम्बन्धेन घटत्वविशिष्टाभावत्ववानित्याकारकाभावत्वांशे लौ-किकविषयताकप्रत्यक्षं नाभ्युपगम्यते तदा घटत्वावच्छिन्नप्रकारत्वान्यप्रतियोगित्वसम्बन्धा-वच्छिन्नप्रकारत्वाऽनिरूपिताभावनिष्ठलौकिकविषयतासम्बन्धेनाभावप्रत्यक्षं प्रति घटत्वप्र-कारकज्ञानस्य हेतुत्वं पृथगेव वक्तव्यमिति न दोषावकाशः। एवं निरूपितत्वसम्बन्धेन घटत्वावच्छिन्नविषयतानिरूपिताभावत्वनिष्ठलौकिकविषयतायाः प्रवेशान्न द्वितीयदोषस्या-प्यवकाशः इति दिक्।

ननु ध्वंसः, भेद इत्याद्याकारकध्वंसत्वादिप्रकारकलौकिकप्रत्यक्षापत्तिः। घटो ध्वस्तः 'घटध्वंसः' घटाद्भिन्नः' घटोन' इत्यादिप्रत्यक्षस्यैवानुभविकतया इष्टापत्तेरयोगात्। इदं नीलमित्यादिप्रत्यक्षोपपत्त्यर्थं घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताभावत्वविषय-तानिरूपितविषयताया एव प्रवेशात्। न चाभावत्वव्याप्यधर्मनिष्ठविषयतानिरूपितविषय-तायाः प्रवेशान्नदोष इति वाच्यम्। इदन्त्वादेस्तत्तद्व्यक्तित्वस्वरूपतयाऽभावत्वव्याप्यत्वा-दिति चेद्?

न, घटत्वावच्छिन्नप्रकारत्वान्यप्रकरत्वाऽनिरूपितध्वंसत्व-भेदत्वादिविषयतानिरूपिता-भावनिष्ठलौकिकविषयताकप्रत्यक्षत्वादेरपि घटज्ञानकार्यतावच्छेदकत्वोपगमेन दोषाभावात्।

यदि च ध्वंसत्वादिकं नाखण्डोपाधिः, किन्तु जन्याभावत्वं ध्वंसत्वम्, विनाश्य-भावत्वं प्रागभावत्वम्, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं भेदत्वं, त्रैकालिक-संसर्गावच्छिन्नप्रतियोगिताकाभावत्वमत्यन्ताभावत्वमिति विभाव्यते तदा नानाकार्यकारण-

❀ जागदीशी ❀

यद्यपि विशिष्टप्रतियोगिज्ञानस्य हेतुत्वपक्षेऽभावो न घटीय इत्यभावे प्रतियोगित्वसम्बन्धावच्छिन्नघटाभावनिश्चयदशायामिन्द्रियसम्बद्धविशेषणता- वशाद् नेत्याकारप्रत्यक्षस्य दुर्वारत्वम् ।

❀ काशिकानन्दी ❀

भावो नोपगन्तव्यः । सर्वस्याप्यभावत्वघटितत्वात् । न चैवं द्रव्यादिषट्कान्योन्याभावत्वम- भावत्वं, न भावः अभाव इति व्युत्पत्तेरिति अभाव इत्याकारकप्रत्यक्षमप्यस्तु प्रतियोगिनस्तत्र भानात् । नेत्याकारकशब्दप्रयोगाभावस्तु प्रागुपपादित इति वाच्यम् । भावाभावसाधारणा- भावत्वस्य भावभेदानात्मकत्वात् । तदङ्गीकारेऽपि भेदत्वस्याखण्डोपाधितां विनाऽभावत्वस्य दुर्वचतापत्तेः भेदत्वेन भेदप्रत्यक्षवारणायैव उक्तकार्यकारणभावो निष्कर्षणीयः ।

अत्र केचित् । घटत्वावच्छिन्नप्रकारतान्या या स्वरूपसम्बन्धायच्छिन्नाभावत्वप्रकार- तान्यप्रकारता तादृशप्रकारत्वाऽनिरूपिताभावनिष्ठलौकिकविषयताकप्रत्यक्षत्वस्यैव कार्य- तावच्छेदकत्वमास्तां, किं प्रतियोगित्वसम्बन्धावच्छिन्नत्वनिवेशेनेति । अभावत्वं नास्तीत्यत्र घटत्वावच्छिन्नप्रकारतान्याभावत्वविषयतान्यनिरूपितविषयताया विरहाद् घटज्ञानकार्यतावच्छे- दकाक्रान्तिवारणाय स्वरूपसम्बन्धावच्छिन्नत्वप्रवेश इति वदन्ति ।

तन्मन्दम्, अयमभाव इत्यादिप्रत्यक्षप्रसङ्गात् । घटत्वावच्छिन्नप्रकारतान्या अभावत्वप्रकारतान्या च या इदंत्वनिष्ठप्रकारता तदनिरूपितत्वस्याभावविषयतायां विरहात् । तस्य घटज्ञानकार्यतावच्छेदकानाक्रान्तत्वात् । न च विधेयतान्यत्वमभावत्वप्रकारतायां देय- मिति वाच्यम् । अभावोऽयमिति प्रत्यक्षापत्तेः । तस्मादिदंत्वनीलत्वादिव्यावृत्तविषयताया उपग्रहाय प्रतियोगित्वसम्बन्धावच्छिन्नत्वमकामेनापि निवेशनीयम् ।

अभावत्वप्रकारकलौकिकप्रत्यक्षे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वेऽपि घटज्ञानोत्तरमेव नेत्याकारप्रत्यक्षं जायतामित्याशङ्कायां बाधकाभावेन तत्राभावांशे घटस्य भानान्न दोष इत्युक्तम्, तत्र बाधकसत्त्वे एव नेत्याकारकप्रत्यक्षं कथं वार्यतामिति शङ्कते—यद्यपीति । बाधकाकारमाह—अभावो न घटीय इति । प्रतियोगितासम्बन्धा- वच्छिन्नप्रतियोगिताकघटाभाववानित्यर्थः । इदमभावे प्रतियोगितासम्बन्धेन घटवैशिष्ट्यग्रहे बाधकम् । इति=इत्येवम् । अभावे इति । निश्चयान्वयि विशेष्यत्वं सप्तम्यर्थः । प्रतियोगित्वेति । प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावप्रकारकनिश्चयदशा- यामित्यर्थः । इन्द्रियेति । अभावप्रत्यक्षकारणीभूतेन्द्रियसम्बद्धभूतलादिविशेषणतात्मकस- न्निकर्षवशादित्यर्थः । दुर्वारत्वमिति । न चाभावो न घटीय इति ज्ञानकालेऽपि घटी- योऽभाव इत्याकारकाभावत्वविधेयताकप्रत्यक्षे बाधकाभावात्कथं नेत्याकारप्रत्यक्षापत्तिरिति वाच्यम् । घटीयोऽभाव इति प्रत्यक्षस्याप्यनिष्टत्वात् । घटीयो नाभाव इति बाधकदशायां तस्याप्यसंभवाद् नेत्याकारेत्यादिजागदीश्या उपलक्षणपरत्वसंभवाद्वा नासंगतिः ।

इदन्तु बोध्यम् । अभावो न घटीय इति ज्ञानमभावत्वांशेऽलौकिकमनुमित्याद्यात्मकं

## ❀ जागदीशी ❀

न चाभावत्वसामानाधिकरण्येन यदि घटस्याभावग्रह-तदा तस्याऽविरोधित्वादग्रे घटो नास्तीत्येव धीर्जायते, प्रतियोगि-विशिष्टबुद्धेः सामग्रीसत्त्वात् । अभावत्वावच्छेदेन घटाभावग्रह-तदानीमसंभवो । अभावत्वविशिष्टे प्रतियोगितासम्बन्धेन घटविशिष्टबुद्धि-त्रस्यैव तदवच्छेदेन प्रतियोगितासम्बन्धावच्छिन्नघटाभाववत्ताज्ञानविरोधि-त्वादिति उभयथापि नेत्याकारकप्रत्यक्षापादनं दुर्घटमिति वाच्यम्

## ❀ काशिकानन्दी ❀

वा तादृशज्ञानं बोध्यम् । लौकिकस्य तादृशज्ञानस्यानिष्टत्वात् । प्रतियोगिनोऽभावां-शेऽनुपरागादिति ।

ननु अभावो न घटीय इति ज्ञानमभावत्वसामानाधिकरण्येन घटीयत्वाभावावगाहि वा अभावत्वावच्छेदेन तदवगाहि वा इति वितर्क्य क्रमशो दूषणमाह कल्पद्वयेऽपि-न चेत्यादि । घटस्याभावग्रहः = प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकघटाभावग्रहः तस्य = अभावत्वसामानाधिकरण्येन प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकघटाभाव-ग्रहस्य । अविरोधित्वादिति । अभावत्वसामानाधिकरण्येन घटवैशिष्ट्यबुद्धौ अभावत्व-सामानाधिकरण्येन घटाभावग्रहो न विरोधी तत्रावच्छेदकावच्छेदेन तदभावग्रहस्यैव विरो-धित्वात् । घटाभाव इति प्रत्यक्षं तु अभावत्वसामानाधिकरण्येनैव घटवैशिष्ट्यावगाहि अन्यथा तस्य भ्रमत्वापत्तेः । अग्रे = उत्तरक्षणम् । इत्येवेति । बाधकाभावादिति भावः प्रतियोगीति । प्रतियोगिवैशिष्ट्यभानकसामग्रीसत्त्वादित्यर्थः । अभावत्वावच्छेदेन घटो-त्वाभावग्रहस्य घटाभाव इति बुद्धिप्रतिबन्धकत्वं संभवतीति द्वितीयं पक्षं निरस्यति-अभावत्वावच्छेदेनेति । घटाभावग्रह इति । प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगि-ताकेत्यादिः । तदानीं = बाधकत्वरेनाभिमतकाले । अभावत्वेत्यादि । अभावत्वावच्छि-न्नविशेष्यताकप्रतियोगित्वसम्बन्धावच्छिन्नघटप्रकारताकनिश्चयमात्रस्यैव तदवच्छेदेन = अभावत्वावच्छेदेन प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकघटाभाववत्ताज्ञानप्रतिबन्धक-त्वादित्यर्थः । अयमर्थः—अभावो न घटीय इत्यत्र न घटीय इत्यस्य प्रतियोगितासम्बन्धेन घटाभाववानित्यर्थः । प्रतियोगितासम्बन्धेन घटाभावो नाम प्रतियोगितासम्बन्धावच्छिन्नप्रति-योगितासम्बन्धेन घटविशिष्टाभावः । एवं चैकमेव तज्ज्ञानं प्रतियोगितासम्बन्धेन घटवैशि-ष्ट्याभावमभावेऽवगाहते प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेनाभावे घटवैशि-ष्ट्यं च । तथाविधज्ञानमाहार्यमेव भवितुमर्हति इतीच्छाविरहकाले तादृशज्ञानं नोत्पद्य-तैव । प्रतियोगितासम्बन्धेन घटाभावबुद्धौ प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन घटवैशिष्ट्यबुद्धेर्विरोधित्वात् । संयोगसम्बन्धेन घटाभाववत्ताबुद्धिं प्रति घटीयसंयोगे भूतलीयसंयोगेन च घटवत्तानिश्चयस्य प्रतिबन्धकत्वदर्शनेन प्रतियोगित्वात्मकसामान्य-संसर्गेण घटाभाववैशिष्ट्यबुद्धावपि प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगितात्मकविशेषसंसर्गेण

## ❀ जागदीशी ❀

तदसंभवेऽपि अभावत्वावच्छेदेन प्रतियोगितासम्बन्धेन घटवदवृत्तिधर्मवत्तानिर्णयदशायां विशेषणतासन्निकर्षान्नेत्याकारकप्रत्ययप्रापत्तेर्दुरपलपत्वात्। तद्वदवृत्तिधर्मवत्त्वज्ञानस्यापि तद्वत्ताज्ञानविरोधित्वेनाभावांशे घटवत्ताज्ञानाऽसंभवात्।

तथापि नेत्याकारकप्रत्यक्षस्य घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताभावनिष्ठविषयताकत्ववत् कुड्यत्वपटत्वादितत्तद्धर्मावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताभावनिष्ठविषयताकत्वेन तादृशविषयताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति हेतुभूतस्य तत्तद्धर्मप्रकारकज्ञानकूटस्यैकदा विरहादेव न नेत्याकारकप्रत्यक्षम्।

## ❀ काशिकानन्दी ❀

घटवैशिष्ट्यनिश्चयस्य विरोधित्वात्। न चाभावः न संयोगेन घटीयः, अभावः संयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन घटाभाववानित्यादिज्ञानमेवानाहार्यं भवितुमर्हति। संयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन घटविरहबुद्धौ प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन घटवैशिष्ट्यबुद्धेरविरोधित्वात्, सम्बन्धयोः सामान्यविशेषभावविरहाद्, एकत्र प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वमपरत्र च संयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नत्वमिति विशेषादिति वाच्यम्। एवं सति संयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन घटवैशिष्ट्यभाने बाधकत्वेऽपि समवायसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन घटवैशिष्ट्यभासकसज्ज्ञानेन नेत्याकारप्रत्यक्षापादनायोगात्।

तदसंभवेऽपि = निरुक्तोभयविधबाधकमादाय नेत्याकारकप्रत्यक्षापादनाऽसंभवेऽपि। यद्यपि भूतलवृत्त्यभावो न घटीय इति ज्ञानोत्तरं 'भूतले न' इत्याकारकप्रत्यक्षमापद्यते, तथापि स्फुटार्थमाह—अभावत्वेति। अभावत्वं प्रतियोगितासम्बन्धेन घटवदवृत्तिः अभावत्ववांश्चायमित्याद्याकारकनिर्णयदशायामित्यर्थः। प्रतियोगितासम्बन्धेन घटवत्त्वज्ञानं च पटादावेव सुलभम् भ्रमात्मकम्।

ननु घटवदवृत्ति अभावत्वं अभावत्ववांश्चायमिति ज्ञानस्य भिन्नविषयकत्वेन कथं प्रतिबन्धकत्वमत आह तद्वदवृत्तीति। तद्वदवृत्तित्वं हि तदभावव्याप्यत्वमिति तद्वत्ताबुद्धौ तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वं सर्वसम्मतम्। घटवत्ताज्ञानेति। प्रतियोगितासम्बन्धेनेत्यादिः। तादृशविषयताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति = कुड्यत्वपटत्वादितत्तद्धर्मावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताभावनिष्ठलौकिकविषयताकप्रत्यक्षत्वावच्छिन्नं प्रति। तत्तद्धर्मप्रकारकज्ञानकूटस्य = कुड्यत्वपटत्वादितत्तद्धर्मप्रकारकज्ञानकूटस्य। एकदा = युगपद्। विरहादिति। असर्वज्ञस्येत्यादिः। योगिनां पुनर्घटाभावे अभावो न घटीय इति ज्ञानासंभवादेव न तेषामपि नेत्याकारकं लौकिकप्रत्यक्षम्।

वक्ष्यमाणरीत्यैव नेत्याकारकप्रत्यक्षवारणे उक्तरूपेण गुरुभूतकार्यकारणभावोऽनुचित

❀ दीधितिः ❀

**प्रतियोगिज्ञानस्य हेतुत्वेऽपि प्रतियोगितावच्छेदकविशिष्टयत्किंचित्प्रतियोगिज्ञानादेव तत्संभवात्, यावत्प्रतियोगिज्ञानत्वेन गौरवेणाहेतुत्वात् ।**

❀ जागदीशी ❀

वस्तुतो घटत्वपटत्वादिप्रत्येकधर्मावच्छिन्नाभावत्वप्रकारकप्रत्यक्षं प्रत्येव घटत्वपटत्वादिप्रत्येकधर्मप्रकारकज्ञानत्वेन हेतुत्वम् । तथा च तादृशप्रत्यक्षस्य सामग्रीविरहादेव केवलेन्द्रियसन्निकर्षदशायाम्, अभावो न घटीय इत्यादिबाधदशायां वा नाभावस्य प्रत्यक्षं विशेषसामग्रीविरहादित्यत आह—प्रतियोगिज्ञानस्य हेतुत्वेऽपीति ।

❀ काशिकानन्दी ❀

इत्यत आह—वस्तुत इति । घटत्वपटत्वादिप्रत्येकधर्मावच्छिन्नेति । प्रतियोगितासम्बन्धेन घटत्वाद्यवच्छिन्नप्रकारताकाभावत्वावच्छिन्नविशेष्यताकप्रत्यक्षं प्रत्येवेत्यर्थः । तेन घटध्वंसादेर्घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वविरहेऽपि न क्षतिः । प्रत्येवेत्येवकारेण घटत्वाद्यवच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताभावनिष्ठलौकिकविषयताकप्रत्यक्षस्य कार्यत्वव्युदासः । नन्वेवं घटत्वादिप्रकारकज्ञानविरहदशायां नेत्याकारकप्रत्यक्षं दुर्वारमेव घटत्वादिप्रकारकज्ञानस्य घटत्वावच्छिन्नाभावत्वप्रकारकप्रत्यक्षं प्रत्येव हेतुत्वादत आह—तथा चेति । तादृशप्रत्यक्षस्य = घटत्वादिधर्मावच्छिन्नाभावत्वप्रकारकप्रत्यक्षस्य । केवलेन्द्रियसन्निकर्षदशायामिति । नाभावस्य प्रत्यक्षमिति योजना । नाभावस्य प्रत्यक्षं = अभावत्वप्रकारकं न लौकिकं प्रत्यक्षम् । अत्र हेतुमाह—विशेषसामग्रीविरहादिति । अयमर्थः - सामान्यसामग्र्या कार्ये जननीये यावद्विशेषसामग्र्यन्यतमस्यापेक्षा । अन्यथा विशेषसामग्रीविरहेऽपि सामान्यसामग्र्या कार्योत्पादे तत्रैव विशेषसामग्र्या व्यभिचारापत्तेः । घटादिविशेषकारणतत्तद्भ्रम्यादिविरहकालेऽपि दण्डचक्रादिरूपसामान्यसामग्रीतो घटोत्पादापत्तेश्च । एवं च प्रकृतेऽपि घटज्ञानादिविरहकाले बाधकाले च विशेषसामग्रीविरहादेव न इन्द्रियसम्बन्धविशेषणतात्मकसामान्यसामग्र्या नेत्याकारकप्रत्यक्षापत्तिः ।

अथात्र इन्द्रियसन्निकर्षस्य सामान्यसामग्रीत्वं न संभवति । इन्द्रियसम्बन्धानामननुगमाद्, इन्द्रियसंयुक्तविशेषणतात्वादिना सामान्यसामग्रीत्वमपि न संभवति । इन्द्रियसंयुक्तविशेषणत्वाख्यसन्निकर्षाऽजन्यगुणादिगतघटाभावादिविषयकप्रत्यक्षजनकत्वाद् घटज्ञानादीनाम् । न वा घटादिज्ञानस्य सामान्यसामग्रीत्वसंभवः । घटादिज्ञानाऽजन्यघटाभावादिसाक्षात्कारकारणत्वादिन्द्रियसंयुक्तविशेषणत्वादीनाम् । न च लौकिकप्रत्यक्षजनकतावच्छेदकसम्बन्धत्वेन इन्द्रियनिष्ठलौकिकप्रत्यक्षजनकतावच्छेदकसम्बन्धत्वेन वा इन्द्रियसम्बन्धाननुगमय्य तद्विशिष्टविशेषणतात्वेनानुगमादिन्द्रियसन्निकर्षस्य सामान्यसामग्रीत्वं निर्वहतीति वाच्यम् । लौकिकप्रत्यक्षजनकतावच्छेदकत्वस्याभावलौकिकप्रत्यक्ष-

❀ काशीकानन्दी ❀

जनकतावच्छेदककोटिप्रवेशाऽसंभवात्। आद्ये विषयादिनिष्ठलौकिकप्रत्यक्षजनकताच्छेदकतादात्म्यादीनामपि संग्रहप्रसङ्गात्, द्वितीये शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वाद्यात्मकेन्द्रियत्वस्य नानात्वाद् विशेषणविशेष्यभावव्यत्यासप्रसङ्गाच्च तथारूपेणानुगतकारणत्वासंभवाच्च। लौकिकप्रत्यक्षजनकतावच्छेदकसम्बन्धवैशिष्ट्यस्यापि विशेषणतायामननुगतत्वाच्च। नचैकविधप्रत्यासत्त्या कार्ये जननीयेऽन्यविधप्रत्यासत्त्या कार्यजनकसामग्र्या अपेक्षणीयतास्वीकारादुक्तसामग्र्योः सामान्यविशेषभावविरहेऽपि न क्षतिः, विषयनिष्ठप्रत्यासत्त्याऽभावप्रत्यक्षजनकसन्निकर्षेणात्मनिष्ठप्रत्यासत्त्या प्रत्यक्षजनकघटज्ञान-बाधाभावादिसमुदायात्मकसामग्र्यपेक्षणादिति वाच्यम्। तथा सति अभावो न घटीय इत्यादिबाधदशायां घटज्ञानविरहदशायां चेन्द्रियसंयुक्तविशेषणतादिसन्निकर्षेण पटाभावादेरपि प्रत्यक्षं न स्यात्। अपेक्षितसामग्रीविरहात्। नापि घटज्ञानबाधाभावादिघटितसामाग्र्या कार्यजनने इन्द्रियसंयुक्तविशेषणतापेक्षासंभवः। तथा सति गुणादिगतघटाभावादिप्रत्यक्षजनकतायास्तत्र विरहप्रसङ्गात्, तथा च कथमेतद्ग्रन्थसंगतिरिति चेद्?

सत्यम्, एवं पुनर्नेत्याकारकप्रत्यक्षं दुर्वारमेव स्यादिति द्रव्यवृत्तिघटाभावप्रत्यक्षत्वं गुणादिवृत्तिघटाभावप्रत्यक्षत्वादिकं च पृथक् पृथगेव घटज्ञानबाधाभावादेः कार्यतावच्छेदकं वक्तव्यम्। तथा चेन्द्रियसंयुक्तविशेषणतादीनां सामान्यसामग्रीत्वं निर्वहतीति। न च व्यभिचारविरहात् घटाभावप्रत्यक्षत्वादिकमेव घटादिज्ञानकार्यतावच्छेकं न तु द्रव्यादिवृत्तिघटाभावप्रत्यक्षत्वादिकमिति वाच्यम्। सामान्यविशेषभावसम्पादनायैव गुरुभूतस्यापि कार्यतावच्छेदकत्वोपगमात्। अत एवानुमितिग्रन्थे पक्षधर्मतेत्यत्र पक्षताविशेषणमिति वदतां मिश्राणां मतव्याख्यानावसरे "व्यभिचारविरहेऽपि पक्षतापरामर्शयोः सामान्यसामग्रीत्वविशेषसामग्रीत्वनिर्वाहाय पर्वतो वह्निव्याप्यधूमवानित्यादिपरामर्शजन्यतावच्छेदककोटौ पर्वतत्वादावुद्देश्यतावच्छेदकतापर्याप्तिरवश्यं निवेश्या"त्युक्तं गदाधरभट्टाचार्यैः। न चैवं पूर्वोक्तकल्पस्यैव ज्यायस्त्वेन तं परित्यज्य वस्तुत इत्यादिकल्पोत्थानं जगदीशस्यासंगतमिति वाच्यम्। तत्रापि इन्द्रियसंयुक्तविशेषणतायाः प्रकारान्तरेण सामान्यसामग्रीत्वानिर्वाहात्। न हि घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वाऽनिरूपिताभावप्रत्यक्षत्वं सामान्यधर्मः इन्द्रियसंयुक्तविशेषणतादिजनितपटाभावादिप्रत्यक्षे तद्विरहात्। नापि विशेषधर्मः, गुणादिवृत्त्यभावप्रत्यक्षेऽपि तत्सत्त्वात्। एवं चेन्द्रियसन्निकर्षेण तदपेक्षणाऽसंभवेन नेत्याकारप्रत्यक्षं दुर्वारमेव स्यात्।

ननु द्रव्यवृत्त्यभावस्य गुणवृत्त्यभावस्य चाऽभिन्नतया द्रव्यवृत्तित्वादिनिवेशेऽपि न निस्तारः। न च द्रव्यवृत्तित्वविशिष्टघटाभावप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वोपगमान्न दोष इति वाच्यम्। विशिष्टस्यापि शुद्धानतिरेकात्। द्रव्यवृत्तित्ववैशिष्ट्यावच्छिन्नघटाभावविषयताकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वं तु न स्वीकर्तुं शक्यम्। तथा सति घटो नास्तीत्येतावन्मात्राकारकप्रत्यक्षानुत्पादप्रसङ्गादिति चेद्?

## ❀ काशिकानन्दी ❀

सत्यम्, अधिकरणभेदेनाभावभेदाद् द्रव्यवृत्त्यभावस्य गुणवृत्त्यभावस्य च भिन्नतया द्रव्यवृत्तित्वस्योरलक्षणतया प्रवेशेन दोषाभावादिति ।

वस्तुतस्तु इह घटो नास्तीत्यादिरेवानुभवो न तु घटो नास्तीत्येतावन्मात्राकारकानुभवः । तथा च द्रव्यवृत्तिविषयतानिरूपितघटाभावत्वावच्छिन्नविषयताशालिप्रत्यक्षत्वादिकमेव घटज्ञानबाधाभावादिकार्यतावच्छेदकमिति न दोषलेशः ।

ननु एकपुरुषीयेन्द्रियसन्निकर्षसत्त्वेऽपि पुरुषान्तरस्य घटज्ञानाद् घटाभावप्रत्यक्षं सन्निकर्षविरहिणस्तस्य स्यादिति, तद्वारणाय तत्पुरुषीयेन्द्रियसन्निकर्षस्य तत्पुरुषीयघटाभावप्रत्यक्षहेतुत्वाभ्युपगमे च कथमिन्द्रियसन्निकर्षस्य सामान्यसामग्रीत्वसंभव इति चेद् ?

न, यद्विशेषयोरिति न्यायेन इन्द्रियसन्निकर्षत्वेनाऽभावप्रत्यक्षत्वेनापि सामान्यतः कार्यकारणभावसिद्धेरप्रत्यूहत्वात्सामान्यसामग्रीनिर्वाहात् ।

नन्वेवमपि अवश्यकल्पनीये तत्पुरुषीयाभावप्रत्यक्षतत्पुरुषीयेन्द्रियसन्निकर्षयोः कार्यकारणभावे एव कार्यतावच्छेदककोटौ घटाभावप्रत्यक्षत्वादिक निवेश्यम्, तावतैव नेत्याकारप्रत्यक्षवारणसंभवात्, नेत्याकारप्रत्यक्षकारणीभूतविशेषसामग्र्या अकल्पनादेवादोषादिति चेद् ?

न, तथा सति एकत्र वर्त्तमानानेवानन्ताभावानादाय तत्तत्प्रत्यक्षत्वस्य सन्निकर्षकार्यतावच्छेदकत्वे महागौरवप्रसङ्गात् । न च त्वन्मतेऽपि घटपटादिज्ञानं पृथक् पृथगुपादाने गौरवं तुल्यमिति वाच्यम् । अस्माकं पुरुषनिवेशाभावेन लाघवात् । तथा हि यत्र दशाभावाः दश पुरुषाश्च तत्र तत्तत्पुरुषीयघटाभावादिप्रत्यक्षत्वस्य तत्तत्पुरुषीयेन्द्रियसन्निकर्षकार्यतावच्छेदकत्वे शतं कार्यकारणभावाः । अस्माकं तु सामानाधिकरण्यप्रत्यासत्त्या घटाभावप्रत्यक्षे घटज्ञानमिति रीत्या दश कार्यकारणभावाः एवं तत्पुरुषीयाभावप्रत्यक्षे तत्पुरुषीयेन्द्रियसन्निकर्षस्य कारणत्वमिति रीत्या दश कार्यकारणभावाश्चेति विंशतिरेव कार्यकारणभावा इति लाघवं स्फुटम् ।

ननु इन्द्रियत्वस्याननुगततया इन्द्रियसंयुक्तविशेषणतात्वादिनापि अनुगतकारणता न संभवति, चक्षुःसंयुक्तविशेषणतात्वादिना कारणत्वोपगमे पुनः क्व सामान्यसामग्रीत्ववार्त्ता घटाभावप्रत्यक्षसामान्ये एव घटज्ञानस्य हेतुत्वादिति चेद् ?

सत्यम्, एवं पुनः घटज्ञानादिकार्यतावच्छेदकमपि घटाभावादिचाक्षुषत्वादिकमेव वक्तव्यम्, गत्यन्तरविरहादिति सामान्यविशेषभावनिर्वाहात् ।

अथवा तत्तदिन्द्रियसंयुक्तविशेषणतात्वादिना कारणतायामनन्तकार्यकारणभावाद् यद्विशेषयोरिति न्यायाच्च विशेषणतात्वेनाभावप्रत्यक्षत्वेनानुगत एव कार्यकारणभावः । तत्तदिन्द्रियसन्निकर्षादेर्विशेषकारणत्वोपगमादेवातिप्रसङ्गभङ्गात् सन्निकर्षस्य सामान्यसामग्रीत्वं सुघटमेव । घटज्ञानादिकार्यतावच्छेदकमपि घटाभावत्वाद्यवच्छिन्नप्रत्यक्षत्वमेवेति न काप्यनुपपत्तिः, न वा अग्रिमग्रन्थविरोधः । विशेषणतात्वं चानुगतधर्मविशेषः । अन्यथा इन्द्रियसंयुक्तविशेषणतात्वादेरपि अनुगतस्य दुर्वचतापत्तेरित्येव रमणीयः पन्थाः ।

❀ जागदीशी ❀

यत्तु घटत्वाद्यवच्छिन्नप्रतियोगितासम्बन्धेन घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावत्वावच्छिन्नधर्मिताकाभावलौकिकप्रत्यक्षत्वं, प्रतियोगितासम्बन्धेन घटत्वादिविशिष्टवैशिष्ट्यावगाहिध्वंसादिलौकिकप्रत्यक्षत्वम् , इदन्त्वादिप्रकारकाभावप्रत्यक्षत्वं च नानैव इन्द्रियसम्बद्धविशेषणताया एव कार्यतावच्छेदकं वाच्यम् । न तु प्रतियोगिज्ञानस्य तावतैव नेत्याकारकप्रत्यक्षवारणसंभवात् । न चैवं घटाभावो नास्तीत्यभावत्वप्रकारकलौकिकप्रत्यक्षं न स्यात् ।

❀ काशिकानन्दी ❀

प्रतियोगिज्ञानस्याभावप्रत्यक्षे हेतुत्वाभावं साधयतां सांप्रदायिकानां मतं दूषयितुमुपन्यस्यति—यत्त्विति । घटो नास्तीत्याद्याकारकात्यन्ताभावप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वं सम्पादयितुमाह—घटत्वावच्छिन्नप्रतियोगितेति । अत्यन्ताभावीया प्रतियोगिता सावच्छिन्ना ध्वंसीया तु सा निरवच्छिन्ना अतः तत्प्रत्यक्षत्वस्य कार्यतावच्छेदकत्वं सम्पादयितुमाह—प्रतियोगितासम्बन्धेनेति । न च प्रतियोगितासम्बन्धेन घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावप्रत्यक्षत्वस्य ध्वंसात्यन्ताभावसाधारणस्य कार्यतावच्छेदकत्वसंभवेन द्विविधकार्यकारणभावोऽनावश्यक इति वाच्यम् । घटो नास्तीत्यत्रात्यन्ताभावत्वस्यैव धर्मितावच्छेदकत्वं घटध्वंस इत्यत्र ध्वंसत्वस्यैव तथात्वं प्रतीयत इति उभयोर्धर्मितावच्छेदकतया प्रवेशेन कार्यकारणभावद्वयावश्यकत्वात् । न चाभावत्वध्वंसत्वयोर्धर्मितावच्छेदकतया प्रवेश एव मास्त्विति वाच्यम् । घटीयोऽभाव इत्याकारकाभावत्वावधेयताकप्रत्यक्षापत्तेः । एतेन किञ्चिद्धर्मावच्छिन्नविशेष्यताकत्वप्रवेशोऽप्यनिस्तारः । घटीयोऽयमभाव इत्यत्रेदन्त्वस्य विशेष्यतावच्छेदकतया भासमानस्यापि अभावत्वावधेयताकप्रत्यक्षस्यानुपगमात् । न च ध्वंसत्वस्याभावत्वघटिततया अभावत्वावच्छिन्नविशेष्यताकत्वनिवेशेनैव सामञ्जस्यमिति वाच्यम् । अभावात्मकमिदं वस्तु घटीयमित्यादिप्रत्यक्षवारणायाभावत्वमात्रावच्छिन्नत्वस्य देयतया उभयसाधारणकार्यकारणभावासंभवात् । किं च घटो नास्तीति प्रत्यक्षप्रतियोगितायां घटत्वावच्छिन्नत्वस्यापि भानाद् घटत्वावच्छिन्नत्वविषयताप्रयोजकत्वं कारणस्य वक्तव्यम् । तच्च कार्यतावच्छेदककोटिप्रविष्टप्रतियोगितायां घटत्वावच्छिन्नत्वनिवेशेनैवोपपद्यत इति पृथक् पृथगेव कार्यकारणभावः स्वीकार्य इति ध्येयम् ।

इदं नीलमित्यादितमोविषयकप्रत्यक्षत्वस्य कार्यतालाभायाह—इदन्त्वादिप्रकारकेति । विशेषणताया एवेति । एवकारव्यवच्छेद्यमाह—न त्विति । प्रतियोगिज्ञानस्येति । कार्यतावच्छेदकमित्यनुषङ्गः । कार्यतान्वयिनिरूपितत्वं षष्ठ्यर्थः । वारणसंभवादिति । कार्यतावच्छेदककल्पनाया आवश्यकत्वेन अभावत्वमात्रप्रकारकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वाऽकल्पनसंभवादिति भावः ।

एवं = घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटत्वविशिष्टवैशिष्ट्यावगाह्यभावत्वावच्छिन्नधर्मिताकप्रत्यक्षत्वादेरेव इन्द्रियसम्बद्धविशेषणताकार्यतावच्छेदकत्वे । न स्यादिति । अस्य घटत्वावच्छिन्नाभावत्वविशिष्टवैशिष्ट्यावगाहित्वमेव न तु घटत्वविशिष्टवैशिष्ट्यावगाहित्व-

❀ जागदीशी ❀

तादृशाभावस्य द्रव्यत्वेन इन्द्रियसम्बद्धविशेषणतायास्तद्ग्राहकत्वाऽसंभवात् इन्द्रियसंयोगादेर्द्रव्यसाक्षात्कारत्वाद्यवच्छिन्नं प्रत्येव हेतुत्वादिति वाच्यम्, द्रव्यप्रत्यक्षत्वादेरिव घटाभावाभावत्वादिप्रकारकद्रव्यप्रत्यक्षत्वस्यापि इन्द्रियसंयोगजन्यतावच्छेदकत्वोपगमात्।

❀ काशिकानन्दी ❀

मिति भावः। ननु घटाभावत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटाभावत्वविशिष्टवैशिष्ट्यावगाह्यभावत्ववच्छिन्नविशेष्यताकप्रत्यक्षत्वस्यापि इन्द्रियसम्बद्धविशेषणताकार्यतावच्छेदकत्वं निगद्यतां तत्राह—तादृशाभावस्येति। घटाभावाभावस्येत्यर्थः। द्रव्यत्वेन = द्रव्यत्वरूपतया। तद्ग्राहकत्वाऽसंभवात् = घटाभावाभावग्राहकत्वाऽसंभवात्। ननु घटाभावाभावस्य द्रव्यत्वे इन्द्रियसंयोग एव तद्ग्राहक इति किमनुपपन्नं ? तत्राह—इन्द्रियसंयोगादेरिति। द्रव्यसाक्षात्कारत्वाद्यवच्छिन्नं प्रत्येवेति। विषयतासम्बन्धेन द्रव्यसाक्षात्कारत्वावच्छिन्नं प्रति समवायेनेन्द्रियसंयोगः कारणम्। एवं च घटाभावाभावस्य घटत्वरूपावभासकेन्द्रियसंयोगसत्त्वेऽपि घटाभावाभावत्वभासकसामग्रीविरहादेव घटाभावो नास्तीत्याकारकप्रत्यक्षं न संभवति। न च इन्द्रियसंयोगस्य द्रव्यमात्रभासकत्वे घट इत्याकारकप्रत्यक्षमपि न स्यात्। घटत्वस्यापि तत्र भासमानतया घटाभावाभावत्वस्येव घटत्वस्यापि भासकसामग्रीविरहेण तद्भानायोगादिति वाच्यम्। इन्द्रियसंयुक्तसमवायस्यैव घटत्वभासकत्वात्। न चैवमिन्द्रियसंयुक्तविशेषणताया घटाभावाभावत्वभासकतया घटाभावो नास्तीति प्रत्यक्षमपि नानुपपन्नमिति वाच्यम्। प्रतियोगितासम्बन्धेन घटत्वविशिष्टवैशिष्ट्यावगाह्यभावत्वावच्छिन्नविशेष्यताकप्रत्यक्षत्वादेरेवेन्द्रियसम्बद्धविशेषणताकार्यतावच्छेदकतायास्त्वयैवाभिधानेन घटाभावाभावत्वभासकताया इन्द्रियसम्बद्धविशेषणतायामसंभवादिति भावः। उपगमादिति। विषयतासम्बन्धेन द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति समवायेनेन्द्रियसंयोगत्वेन यथा कारणत्वं तथा विशेष्यतासम्बन्धेन घटाभावाभावत्वादिप्रकारकद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रत्यपि समवायेन इन्द्रियसंयोगस्य कारणत्वं यक्तव्यम्। एवं च घटाभावाभावत्वविषयताया अपि कार्यतावच्छेदककोटौ प्रवेशात्तद्भानमपि सुघटमिति भावः। न चैवं इन्द्रियसंयोगादेरुभयविधप्रत्यक्षकारणतया सर्वदैव घटः घटाभावाभावः इत्याकारकमेव प्रत्यक्षं स्यात् न तु केवलं घट इत्याकारकप्रत्यक्षमिति वाच्यम्। इन्द्रियसंयुक्तसमवायस्य घटत्व-पृथिवीत्व-द्रव्यत्वादिषु समानतया सर्वदैव घटः पृथिवी द्रव्यमित्याद्याकारकप्रत्यक्षापत्तिवारणाय तत्तत्सन्निकर्षत्वेन कारणतायास्त्वयापि वक्तव्यतया तत एवास्मकमपि दोषवारणात्। यदि च पृथिवीत्वादिज्ञानकाले तादृशप्रत्यक्षमिष्टमेवेत्यभ्युपैषि तदा घटाभावाभावत्वज्ञानकाले 'घटः घटाभावाभाव' इत्यपि प्रत्यक्षमिष्टमेव। विशेषणज्ञानस्य विशिष्टप्रत्यक्षे कारणत्वेन दोषाभावात्।

ननु पटेन सहेन्द्रियसंयोगकाले घटाभावाभावत्वेन पटस्य प्रत्यक्षापत्तिः। न च दोषसमवधानकाले तादृशप्रत्यक्षमिष्टमेव। अन्यथा तु दोषविरहादेव न भ्रमात्मकं तत्प्रत्यक्ष-

❀ जागदीशी ❀

वस्तुतो नव्यमते अभावाभावस्यातिरिक्तत्वाद् विशेषणतैव तद्ग्राहिकेति सांप्रदायिकैरुक्तम् ।

तत्तुच्छम् । तत्पुरुषीयघटत्वाद्यवच्छिन्नाभावत्वप्रकारकचाक्षुषत्वाद्य-

❀ काशिकानन्दी ❀

मिति वाच्यम् । दोषसमवधानकालेऽपि असन्निकृष्टघटाभावाभावत्वे लौकिकविषयत्वस्य केनाप्यनभ्युपगमात्तस्यैवापत्तेः घटाभावाभावत्वावच्छिन्नलौकिकप्रत्यक्षत्वस्यैव कार्यतावच्छेदकत्वात् । न च लौकिकविशेष्यतासम्बन्धेन घटाभावाभावत्वप्रकारकद्रव्यसाक्षात्कारत्वावच्छिन्नं प्रत्येवेन्द्रियसंयोगस्य कारणत्वाद् घटाभावाभावत्वस्य लौकिकविषयत्वं नापद्यते तन्निष्ठलौकिकविषयतायाः कार्यतानवच्छेदकत्वादिति वाच्यम् । तथा सति घटेऽपि घटाभावाभावत्वस्य लौकिकविषयत्वविरहप्रसङ्गात् । प्रयोजकान्तरविरहात् । इन्द्रियसम्बद्धविशेषणताकार्यतावच्छेदकतायाः प्रागेव निरासात् । न चेष्टापत्तिरिति वाच्यम् । तथा सति उपनीततयैव सर्वत्र घटाभावाभावत्वभानसंभवे विशिष्य कार्यकारणभावस्वीकारवैफल्यादत आह वस्तुत इति । विशेषणतैव = इन्द्रियसम्बद्धविशेषणतैव । तद्ग्राहिका = घटाभावाभावग्राहिका । घटाभावत्वविशिष्टवैशिष्ट्यावगाहिनिरुक्ताभावप्रत्यक्षत्वस्यापि कार्यतावच्छेदकत्वमिति भावः ।

यद्यपि घटाभावत्वेन पटाभावादिभ्रमे घटाभावत्वस्य लौकिकविषयतापत्तिः । न चाभावत्वस्याभावे सत्त्वात्तस्य लौकिकत्वमिष्टमेव । घटाभावत्वस्य तु लौकिकविषयत्वं न कार्यतावच्छेदकमिति वाच्यम् । एवं सति तुल्यरीत्या घटाभावाभावस्य द्रव्यस्वरूपतावादिमतेऽपि अभावत्वावच्छिन्नविशेष्यताकघटाभावत्वविशिष्टवैशिष्ट्यावगाहिद्रव्यप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वोक्त्या प्रागभिहितदोषासंभवात् । अभावत्वस्य पटे सत्त्वात् घटाभावत्वविशिष्टस्य लौकिकविषयतायाः कार्यतानवच्छेदकत्वसंभवात् । घटाभावाभावत्वावच्छिन्नद्रव्यसाक्षात्कारत्वस्य कार्यतानवच्छेदकत्वेऽपि क्षत्यभावात् । घटाभावत्वादेरतिरिक्तत्वाच्च । तथापि घटाभावत्वेन यत्र पटाभावप्रत्यक्षं तदुपपत्तये कार्यकारणभावान्तरं वक्तव्यम् । तथा च घटाभावत्वलौकिकविषयतानिरूपितघटाभावलौकिकविषयताकप्रत्यक्षत्वं घटाभावत्वविषयतानिरूपिताभावलौकिकप्रत्यक्षत्वं च पृथगेव कार्यतावच्छेदकं वाच्यम् । नव्यमतं तु वस्तुगतिमनुरुध्य वस्तुत इत्यादिना उक्तमिति दिक् ।

परे तु घटाभावत्वप्रकारकाभावलौकिकप्रत्यक्षत्वादिमात्रमेव कार्यतावच्छेदकम् । घटाभावत्वादौ लौकिकविषयताप्रयोजकस्तु इन्द्रियसंयुक्तविशेषणविशेषणत्वादिरेव । न चैवमिन्द्रियसंयुक्तविशेषणताया घटाभावाभावत्वभासकत्वमप्यस्त्विति वाच्यम् । तथा सति घटे नेत्याकारकप्रत्यक्षापत्तेः । केवलघटभासकेन्द्रियसंयोगसत्त्वादिति इन्द्रियसंयोगस्यैव घटाभावाभावत्वावच्छिन्नघटादिप्रत्यक्षकारणत्वमुक्तम् । अभावे नेत्याकारकप्रत्यक्षापत्तिस्तु न, केवलाभावप्रत्यक्षस्य कार्यताविरहात् । अभावत्वमित्येतावन्मात्राकारलौकिकप्रत्यक्षं तु इष्टमिति वदन्ति ।

तत्पुरुषीयेति । विशेष्यतासम्बन्धेन प्रतियोगित्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताका

## ❀ जागदीशी ❀

वच्छिन्नं प्रति तत्पुरुषीयचक्षुःसम्बद्धविशेषणतात्वेन इन्द्रियभेदेन पुरुषभेदेन चानन्तहेतुताकल्पनामपेक्ष्य घटत्वावच्छिन्नाभावत्वप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रत्येव लाघवेन सामानाधिकरण्यप्रत्यासत्त्या घटत्वादिप्रकारकज्ञानत्वेन हेतुताया युक्तत्वात्। संयोगसंयुक्तसमवायादिभेदेन इन्द्रियसम्बन्धानामप्यननुगमाच्च।

यदपि प्रसिद्धानामभावलौकिकप्रत्यक्षाणां विशिष्टवैशिष्ट्यावगाहित्वनियमात् तत्तद्विशेषणतावच्छेदकप्रकारकज्ञानविरहादेव तेषां नापत्तिः। अतिरिक्तस्य च नेत्याकारकप्रत्यक्षस्य अलीकतया नापत्तिसंभावनापि। पारमार्थिककार्यव्यक्तीनां सामग्र्या एव कार्योत्पत्तिव्याप्यत्वोपगमात्। तथा च घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावप्रत्यक्षत्वादिनानाधर्माणामिन्द्रियसम्बद्धविशेषणतायाः प्रतियोगिज्ञानस्य वा कार्यतावच्छेदकत्वविरहेऽपि न क्षतिरिति।

## ❀ काशिकानन्दी ❀

भावत्वावच्छिन्नविशेष्यताकतत्पुरुषीयाभावचाक्षुषत्वावच्छिन्नं प्रति स्वरूपेण तत्पुरुषीयचक्षुःसम्बद्धविशेषणतात्वेन हेतुत्वम्। पुरुषान्तरीयसन्निकर्षात् पुरुषान्तरस्य चाक्षुषं माभूदिति तत्पुरुषीयत्वनिवेशः। नेत्याकारप्रत्यक्षवारणाय घटाभावत्वावच्छिन्नविषयकत्वनिवेशः। इन्द्रियाणामननुगमात्कार्यतावच्छेदककोटौ चाक्षुषत्वस्य कारणतावच्छेदककोटौ चक्षुषश्च विशिष्य निवेशः। इन्द्रियभेदेन पुरुषभेदेन चेति। यद्यपि सामानाधिकरण्यप्रत्यासत्त्या घटज्ञानस्य कारणतावादिनामपि इन्द्रियभेदेन पुरुषभेदेन च कार्यकारणभावान्तरं वक्तव्यम्। अन्यथा सन्निकर्षशून्यस्य प्रत्यक्षापत्तेः। तथापि प्राग् (पृ० १७४) अभिहितदिशा गौरवमिहानुसन्धेयम्।

इन्द्रियत्वस्य कथंचिदनुगतस्य स्वीकारेऽपि इन्द्रियसन्निकर्षाणामननुगम एवेत्याह—संयोगेति। क्वचित्संयुक्तविशेषणता, क्वचित्संयुक्तसमवेतविशेषणतेत्येवमिन्द्रियसम्बन्धानां नानात्वेन एकविशेषणतात्वेन कारणत्वेऽपरजन्ये व्यभिचारापत्तेः।

प्रसिद्धानां=घटोनास्तीत्याद्याकाराणाम्। विशिष्टेति। घटत्वादिविशिष्टेत्यर्थः। तत्तद्विशेषणतावच्छेदकप्रकारकेति। घटत्वादिप्रकारकेत्यर्थः। तेषां=घटोनास्तीत्याद्याकाराणां प्रत्यक्षाणाम्। नापत्तिरिति। यत्रेन्द्रियसम्बद्धविशेषणतामात्रं तत्रेत्यादिः। ननु तत्र नेत्याकारकप्रत्यक्षमेवास्माभिरापादितमित्यत आह—अतिरिक्तस्येति। पारमार्थिककार्यव्यक्तीनां सामग्र्या एवेति। एवकारेण पारमार्थिककार्यव्यक्तिसामग्र्यन्यस्य व्युदासो न तु आपारमार्थिककार्यव्यक्तिसामग्र्याः, अप्रसिद्धेः। कार्योत्पत्तिव्याप्यत्वोपगमादिति। कार्योत्पत्त्यव्यवहितप्राक्क्षणत्वाभाववद्वृत्तित्वोपगमादित्यर्थः। इन्द्रियसम्बद्धविशेषणताया इति। कार्यतावच्छेदकत्वविरहेऽपीत्यन्वयः। एवं च न इन्द्रियपुरुषादिभेदेन प्रागुक्तगौरवमिति भावः। परमतमपि प्रतिक्षिपति प्रतियोगिज्ञानस्य वेति। घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावप्रत्यक्षत्वादिनानाधर्माणामिन्द्रियसम्बद्ध... । अत्र

## ❀ जागदीशी ❀

तदसत् । यत्र पटाभावे घटत्वावच्छिन्नप्रतियोगिताकत्वादिभ्रमस्य सामग्री नास्ति तत्रेन्द्रियसम्बद्धविशेषणताबलाज्जायमानस्य पारमार्थिकस्य घटो नास्तीति प्रत्यक्षस्य घटाभावे इव पटाभावेऽपि लौकिकविषयतासम्बन्धेनोत्पत्ते-र्दुर्वारत्वात् । तस्य च पटाभावांशे विशिष्टबुद्धिसामग्रीविरहान्नेत्याकारताया अर्थवशसम्पादनीयत्वादिति दिक् ।

## ❀ काशिकानन्दी ❀

मतद्वयेऽपि गौरवं दर्शितं नानाधर्माणामित्येतेन । एवं च विशेषणतावच्छेदकप्रकारक-ज्ञानस्यैव कार्यं घटाभावप्रत्यक्षादिकमिति भावः ।

यद्यपि तमोधर्मिकाभावत्वोपनीतायमभावइत्याकारकप्रत्यक्षस्याभावत्वलौकिकविषयता-कत्वापत्तिः संभवति । न चाभावत्वोपनीतप्रत्यक्षमपि नेष्टं, 'अयं न' इति प्रत्यक्षस्याप्य-ननुभवादिति वाच्यम् । तादृशशब्दप्रयोगविरहेऽपि तमोधर्मिकाऽभावत्वोपनीतप्रत्यक्षोत्पादे बाधकाभावात् । अत एव तमसि भावत्वाभावत्वसंशय उपपद्यते । न च दोषविशेषाभाव-स्यापि लौकिकविषयताप्रयोजकत्वमभ्युपगन्तव्यम् । अत एव पित्तदोषदूषितदृशः शङ्खे श्वेतत्वप्रकारिका बुद्धिः श्वेतत्वांशे उपनीततयैव जायते । एवं च तमसि नीलत्वादिबुद्धि-जनकदोषसमवधाना नाभावत्वविषयताया लौकिकत्वप्रसक्तिरिति वाच्यम् । तेजस्त्वावच्छिन्नो-पस्थित्युत्तरमिह तेजो नास्तीत्येवं तमसि तेजस्त्वाभावत्वप्रत्यययोर्द्वयेनाभावत्वे लौकिकविषयता-विघटकताया नीलत्वादिबुद्धिजनकदोषेऽसंभवात् । न च तेजोऽभावे तेजोऽभावत्वप्रतीतिनं तु तमसीति वाच्यम् । तमसस्तेजोऽभावत्वात् ।

तथापि स्फुटतरं दोषान्तरं वक्ष्यमाणमिति कृत्वाह—यत्रेति । सामग्री नास्तीति । तत्सामग्रीसद्भावे पटाभावे घटाभावत्वभ्रमात्मकघटाभावइत्याकारकप्रतीतिरेवोत्पद्येत, न श्वेतायता वक्ष्यमाणनेत्याकारप्रत्यक्षापत्तिरित्याशयः । अभावकालीनो घट इत्याद्या-कारकाभावोपनीतप्रत्यक्षस्येष्टत्वादाह—लौकिकविषयतासंबन्धेनेति । तस्य च= घटाभाव इति प्रत्यक्षस्य च । सामग्रीविरहादिति । पटवैशिष्ट्यावगाहिताप्रयोजकपट-ज्ञानस्य घटवैशिष्ट्यावगाहिताप्रयोजकदोषस्य चाभावादिति भावः । अर्थवशसम्पादनी-यत्वादिति । अयमभिसन्धिः । यत्र भूतले घटाभावेन पटाभावेन च सह सन्निकर्षः घटत्वप्रकारकज्ञानं चेति त्रयम्, तादृशस्थले घटाभाव इत्याकारकज्ञानमुत्पद्यते तादृशप्रत्यक्षं लौकिकविषयतासम्बन्धेन पटाभावेऽप्युत्पद्येत । तथा च "न" "घटाभावश्च" इत्याकार-कता तस्य स्यात् । तत्र घटाभावांशे घटवैशिष्ट्यावगाहित्वं पटाभावांशे च किंचिद्वैशिष्ट्-यानवगाहित्वमिति पटज्ञानादिकं प्रागनपेक्षितमेव । न च घटाभाव इति प्रत्यक्षस्य लौकि-कविषयतासम्बन्धेन पटाभाववृत्तित्वमप्रसिद्धमिति वाच्यम् । पटाभावे घटाभावत्वभ्रमजनक-दोषोत्तरजायमानघटाभावत्वप्रकारकप्रत्यक्षादावेव प्रसिद्धेः एवं च पटाभावांशे घटवैशिष्ट्-यावगाहिताप्रयोजकदोषस्य पटवैशिष्ट्यावगाहिताप्रयोजकपटज्ञानस्य च विरहेण नेत्याका-रकता पटाभावांशेऽर्थत आयातीति ।

❀ दीधितिः ❀

न च तदभावबुद्धौ तज्ज्ञानहेतुत्वाद् यावत्प्रतियोगिज्ञानस्य हेतुत्वमर्थायातं, मानाभावात्। ध्वंसप्रागभावात्यन्ताभावाश्च प्रतियोग्य-

❀ जागदीशी ❀

तदभावेति। तस्याभावप्रत्यक्ष इत्यर्थः। तादृशकारणतायां साधकाभाव-मुक्त्वा व्यभिचाररूपं बाधकमप्याह ध्वंसेत्यादिना। घटध्वंसो हि घट-

❀ काशिकानन्दी ❀

ननु पटाभावप्रत्यक्षं द्विविधम्। घटाभावत्वादिप्रकारकं भ्रमात्मकं, पटाभावत्वप्रकारकं प्रमात्मकं चेति। तत्र पटाभावप्रत्यक्षसामान्यकारणात्मकेन्द्रियसम्बद्धविशेषणतायाः सत्त्वेऽपि तत्र घटाभावत्वभानप्रयोजकघटत्वप्रकारकज्ञानदोषविशेषादिघटितविशेषसामग्र्याः, पटाभावत्वभानप्रयोजकपटत्वप्रकारकज्ञानबाधाभावादिघटितविशेषसामग्र्यास्त्व विरहादेव न सामान्यकारणेन कार्योत्पाद इति चेद्। सत्यम्। एवं सति जगदीशोक्त-तानुप्रवेशापत्तेः। नेत्याकारकप्रत्यक्षत्वयाऽप्रसिद्धतया न तदापत्तिरित्यादिकथनानौचित्यापत्तेश्च।

ननूक्तयुक्तिभिः प्रतियोगितावच्छेदकविशिष्टयत्किंचित्प्रतियोगिमात्रज्ञानस्य कारणत्वे सिद्धेऽपि कीदृशः कार्यकारणभावः। न च तद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वप्रकारकबुद्धौ तद्धर्मप्रकारकतदाश्रययत्किचिद्व्यक्तिज्ञानं कारणमिति वाच्यम्। ध्वंसादीनां किंचिद्धर्मा-वच्छिन्नप्रतियोगिताकत्वविरहात्। न च तद्धर्माश्रयनिष्ठप्रतियोगिताकत्वमेव निवेश्यम्, घटो नास्तीति बुद्धौ द्रव्यत्वप्रकारकज्ञानस्य कारणतापत्तेः। द्रव्यत्वाश्रयनिष्ठत्वात्प्रतियोगितायाः। न चात्यन्ताभावध्वंसादिकं पृथगुपादाय स्वप्रतियोगिनिष्ठप्रकारताकयत्किंचित्स्वप्रतियोगिज्ञानस्य स्वप्रत्यक्षहेतुत्वं वक्तव्यमिति वाच्यम्। भूतलपर्वतहृदादितत्तदनुयोगिककालिकादिना एकस्यैव घटस्यानन्ताभावसद्भावात् स्वपदेन तत्तदभावानां धर्त्तव्यतयाऽनन्तकार्य-कारणभावापत्तेः। तद्वरमेकैकं घटमादाय तत्प्रतियोगिकध्वंसादिसाधारणाभावमात्रबुद्धौ तज्ज्ञानत्वेन कारणत्वकल्पनम्। तत्तद्घटानुयोगिककालिकादिना घटाभावस्यापि स्वपदेन ग्राह्यतया तदपेक्षया अत्र लाघवात्। एवं सति सामान्याभावभानार्थं यावत्प्रतियोगिज्ञान-मापतितमेवेति सामान्यलक्षणास्वीकारापात इत्याशङ्कां निराकुरुते दीधितिकारः—न चेति। तद्धर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति तद्धर्मप्रकारकतदा-श्रययत्किंचिद्व्यक्तिज्ञानं कारणं ध्वंसप्रत्यक्षे स्वीययत्किंचित्प्रतियोगिज्ञानं कारणमित्येवं नानाकार्यकारणभावस्य वाच्यत्वान्न दोष इत्याशयेनाह—दीधितौ—मानाभावादिति। ननु तत्तद्व्यक्तित्वावच्छिन्नाभावबुद्धौ तत्रापि तद्व्यक्तिज्ञानं कारणं सिद्धं, तदेवास्तु प्रकारानिवेशेन लाघवादत आह—दीधितौ ध्वंसेत्यादि।

जागदीश्यां–तादृशकारणतायां=तदभावबुद्धौ तज्ज्ञानहेतुतायाम्। घटतत्प्रागभावौ घटध्वंसो घटाभावस्वरूपः घटप्रागभावाभावरूपः घटात्यन्ताभावाभावरूपश्चेत्यर्थः।

❀ जागदीशी ❀

प्रागभावतदत्यन्ताभावानामभावः। तत्सत्त्वे घटतत्प्रागभावादयो न सन्तीति प्रत्ययाद् व्यवहाराच्च। एवं घटप्रागभावोऽपि घटतद्ध्वंसतदत्यन्ताभावानामभावः, तथा घटात्यन्ताभावोऽपि घटतद्ध्वंसतत्प्रागभावानामभावः। तेषां चैकैकप्रतियोगिज्ञानमात्रादेव ग्रहात् स्फुटतरो व्यभिचार इति भावः। स्वमते

❀ काशिकानन्दी ❀

बीजमाह—तत्सत्त्व इति। घटध्वंससत्त्वे इत्यर्थः। इति प्रत्ययादिति। तद्बीजं तु घटध्वंसकाले तद्घटस्य तत्प्रागभावस्य चाविद्यमानत्वात्। तद्घटात्यन्ताभावस्य तदानीं सत्त्वेऽपि ध्वंसात्यन्ताभावयोः परस्परं विरोधादेव ध्वंसाधिकरणेऽत्यन्ताभावस्यासंभवात्। तादृशप्रत्यये विवादादाह—व्यवहाराच्चेति। प्राचीनैरिति शेषः। घटध्वंसोऽस्तीति व्यवहारात् घटात्यन्ताभावप्रागभावौ न स्त इति व्यवहाराच्चेत्यर्थः। तादृशव्यवहाराणां विषयस्त्वेक एव लाघवादिति भावः। घटप्रागभाव इति। घटप्रागभावो घटाभावस्वरूपः, घटात्यन्ताभावाभावस्वरूपः घटध्वंसाभावरूपश्च घटप्रागभावसत्त्वे घटध्वंसतदत्यन्ताभावौ न स्त इति प्रत्ययाद् व्यवहाराच्च। घटात्यन्ताभावो घटाभावरूपः, घटप्रागभावाभावरूपः, घटध्वंसाभावरूपश्च। घटात्यन्ताभाववति तद्ध्वंसप्रागभावयोरसंभावितत्वादिति भावः। तेषां=घटध्वंस-तत्प्रागभाव-तदत्यन्ताभावानाम्। ग्रहादित्यन्वयः। एकैकेति। घटध्वंसप्रत्यक्षे स्वप्रतियोगिघटज्ञानमेवापेक्षितं न तु तत्प्रतियोगिनोः घटात्यन्ताभावप्रागभावयोर्ज्ञानमपि, एवमन्यत्रापीत्यर्थः। स्फुटतरो व्यभिचार इति। यद्यपि घटध्वंस इत्याद्याकारकप्रत्यक्षे घटनिरूपितानुयोगितायाः प्रकारत्वात् तद्व्यक्तिनिरूपितानुयोगिताप्रकारकप्रत्यक्षत्वस्य तद्व्यक्तिज्ञानकार्यतावच्छेदकत्वोपगमे न व्यभिचारः। घटप्रागभावादिनिरूपितानुयोगिताया उक्तप्रत्यक्षेऽप्रकारत्वात्। न च द्रव्यत्वेन घटज्ञानोत्तरं घटत्वेन घटाभावत्वप्रकारकप्रत्यक्षापत्तिवारणाय घटत्वावच्छिन्नाभावत्वप्रकारकप्रत्यक्षे घटत्वप्रकारकज्ञानस्य कारणताया नियतत्त्वे तत्तद्व्यक्तिज्ञानस्य हेतुत्वं न कल्प्यते। तत्तद्व्यक्त्यभावबुद्धावपि तत्तद्व्यक्तित्वप्रकारकज्ञानत्वेन कारणताया वक्तव्यतया घटत्वावच्छिन्नाभावत्वप्रकारकप्रत्यक्ष-तद्व्यक्तित्वावच्छिन्नाभावत्वप्रकारप्रत्यक्षोभयसाधारणतया तद्व्यक्तिज्ञानस्य कारणताया वक्तुमशक्यत्वात्। अत एव घटत्वेन तद्व्यक्तिज्ञानसत्त्वेऽपि न तद्व्यक्तित्वेन तद्व्यक्त्यभावज्ञानानुदय इति वाच्यम्। विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षकारणविशेषणतावच्छेदकप्रकारकज्ञानविरहादेवोक्तदोषाणामनवकाशात्। तत्सत्त्वे च घटत्वेन तद्व्यक्तिज्ञानकालेऽपि तद्व्यक्तित्वेन तद्व्यक्तिज्ञानसत्त्वात् तद्व्यक्तित्वावच्छिन्नाभावज्ञानमिष्टमेव।

तथापि यत्र द्रव्यत्वेन घटज्ञानं घटाभावेन सह सन्निकर्षः तत्र दोषादिविरहकाले महानसादौ घटाभावप्रत्यक्षापत्तिः। घटनिरूपितानुयोगित्वप्रकारकप्रत्यक्षकारणीभूतघटज्ञानसत्त्वात्। न च निष्प्रकारकघटभानासंभवान्न दोष इति वाच्यम्। द्रव्यत्वस्यैव घटे प्रकारत्वसंभवात्। न च प्रतियोगितानवच्छेदकधर्मस्य न प्रतियोग्यंशे भानमिति वाच्यम्। घटध्वंसप्रत्यक्षे व्यभिचारात्। तस्माद् द्रव्यत्वावच्छिन्नाभावत्वप्रकारकप्रत्यक्षे द्रव्यत्व-

❀ दीधितिः ❀

द्वित्रितयप्रतियोगिका द्वयाऽग्रहेऽप्येकग्रहादेव गृह्यन्त इत्यभ्युपगमाच्च ।

अन्धकारस्तु तेजोविशेषसामान्याभावो नाभावसमुदायः ।

❀ जागदीशी ❀

ध्वंसप्रागभावयोरत्यन्ताभावेन समं न विरोधः, ध्वंसस्य प्रागभावः, प्रागभावस्य च ध्वंसोऽतिरिक्त एवेत्यत उक्तमभ्युपगमादिति । प्राचीनैरभ्युपगमादित्यर्थः ।

इदमुपलक्षणम् । नव्यमये समनियतसंख्यापरिमाणाद्यभावानामैक्यादेकमविज्ञायापरप्रतियोगिज्ञानादेव ग्राह्यत्वाच्च तत्रैव स्वमतेऽपि व्यभिचारो द्रष्टव्यः ।

ननु स्वपरप्रकाशकतेजःप्रतियोगिकयावत्संसर्गाभावरूपस्यान्धकारस्य ग्रहो न तादृशयावत्तेजोग्रहं विना, प्रतियोगिबुद्धेरभावप्रत्यक्षे हेतुत्वात् । यावत्तादृशतेजोग्रहश्च न सामान्यलक्षणां विना संभवतीति प्राचां मतं दूषयति अन्धकारस्त्विति । तेजोविशेषेति । महाप्रभात्वावच्छिन्नाभाव इत्यर्थः ।

उद्भूतानभिभूतरूपवन्महातेजःसामान्याभावस्तु नार्थः । अनुद्भूत

❀ काशिकानन्दी ❀

प्रकारकज्ञानस्य कारणत्वं वाच्यम् । तथा सति द्रव्यत्वावच्छिन्नाभावस्य महानसे अ... दोषविरहाच्च न तादृशप्रत्यक्षमिति दिक् ।

ननु अत्यन्ताभावेन ध्वंसप्रागभावयोरविरोधेऽपि घटध्वंसस्य प्रागभावः घटतत्प्रागभावोभयस्वरूपः, घटप्रागभावस्य ध्वंसो घटतद्ध्वंसोभयस्वरूप इति घटप्रागभावस्य घटतद्ध्वंस... प्रागभावात्मकस्य घटघटध्वंसौ, घटध्वंसस्य च घटघटप्रागभावयोर्ध्वंसात्मकस्य घटघटप्रागभावौ प्रतियोगिनौ स्वमतेऽपि स्यातामत आह—ध्वंसस्येत्यादि ।

एकं = संख्याद्यात्मकम् । अपरेति । अपरस्य परिमाणाद्यात्मकस्य प्रतियोगिज्ञानात् । ग्राह्यत्वादिति । समनियतसंख्यापरिमाणाद्यभावानामित्यादिः । तत्तद्वृत्त्येकत्वसंख्यापरिमाणादेरभावस्य तत्तदन्यस्मिन् समनियततया तदैक्यात् संख्यापरिमाणाद्यन्यतमज्ञानविरहवतोऽपरघटे तादृशसंख्याद्यभावप्रत्यक्षं न स्यात्, यावत्प्रतियोगिज्ञानविरहात् । उत्पद्यते तु तत्र इति तत्रैव यावत्प्रतियोगिज्ञानहेतुताव्यभिचार इति भावः ।

नन्विति । मानवशात्तस्य चक्षुष्मतः सर्वेऽप्यन्धकारस्थितिदर्शनात् स्वेति सुवर्णादेः स्वप्रकाशहेतोः सत्त्वेऽपि अन्धकारसत्त्वात् परेति । यावत्संसर्गाभावेति संसर्गाभावकूटेत्यर्थः । महाप्रभात्वावच्छिन्नाभाव इति । ग्रीष्मोष्मसन्तप्ते... सत्त्वेऽप्यन्धकारसत्त्वात् प्रत्यूषकालीनेप्रभाकालेऽपि तमो वर्त्तत इति प्रत्ययाच्चेति भावः ।

तेजोविशेषाभावेतिदीधितेर्व्याख्यान्तरं निरस्यति—उद्भूतेत्यादि । ग्रीष्माध्यायि... तिव्युदसनाय उद्भूतत्वविशेषणम् । सुवर्णादिव्युदसनायानभिभूतत्वविशेषणम् । ... सत्त्वेऽपि शालादौ तमःप्रत्ययान्महेति । अनुद्भूतत्त्वाभावाद्यात्मकेति । नील...

## ❀ जागदीशी ❀

भावाद्यात्मकस्योद्भूतत्वादेरतीन्द्रियतया तद्घटितधर्मावच्छिन्नाभावस्यायोग्यत्वेन प्रत्यक्षायोगात्।

नीलत्वशुक्लत्वाद्यव्याप्यकमुद्भूतत्वमेकमेव सामान्यं चाक्षुषप्रयोजकम्। पिशाचनिदाघोष्मादौ न नीलशुक्लाद्यात्मकं रूपं, किन्तु तद्भिन्नमेव। प्रत्यक्षस्य चाक्षुषाद्यन्यतमत्वनियम इव रूपस्य नीलशुक्लाद्यन्यतमत्वनियमे मानाभावादित्यस्मद्गुरुचरणमतानुसरणे तूक्तप्रकारोऽपि सम्यगिति ध्येयम्।

नचाऽऽलोकसन्निधानेऽपि घटीयरूपे तम इति चाक्षुषापत्तिः। चक्षुःसंयुक्तसमवेतरूपविशेषणतायास्तादृशप्रभाद्यभावेऽपि सत्त्वादिति वाच्यम्। तमःसाक्षात्कारं प्रति चक्षुःसंयुक्तविशेषणताया एव हेतुत्वोपगमादिति भावः।

## ❀ काशिकानन्दी ❀

इत्यादिना परमाणुनीलशुक्लादिवर्त्तिना सांकर्येण उद्भूतत्वस्य जातित्वायोगादिति भावः। न चानुद्भूतत्वमुद्भूतत्वाभाव इति परस्पराश्रयः। शुक्लत्वाद्यव्याप्यनानाजातिविशेषत्वादनुद्भूतत्वस्य। न चोद्भूतत्वमेव तथास्त्विति वाच्यम्। उद्भूतरूपत्वात्मकसामान्यधर्मेण प्रत्यक्षजनकत्वानुपपत्तेः संप्रति उद्भूतरूपत्वस्य सामान्यधर्मत्वासंभवात्। अतीन्द्रियतयेति। प्रतियोगिनोऽनुद्भूतत्वस्यातीन्द्रियत्वादिति भावः। इदमुद्भूतरूपमित्यादिप्रत्यक्षे चोद्भूतत्वस्योपनीततयैव भानमिति बोध्यम्। तद्घटितेति उद्भूतत्वघटितेत्यर्थः। अभावस्येति। तमस्त्वे इति शेषः। अयोग्यत्वेनेति। तस्येत्यादिः। अतीन्द्रियप्रतियोगिकत्वादिति भावः।

उद्भूतानभिभूतेत्यादिकथिताभावस्य तमस्त्वेऽपि अनुपपत्त्यभावं साधयति—नीलत्वेति। अनेकत्वे चाक्षुषप्रयोजकतायां व्यभिचारादाह—एकमेवेति। सामान्यं = जातिः। चाक्षुषप्रयोजकं = चाक्षुषजनकतावच्छेदकम्। एतेन जातित्वे बीजमुक्तम्। ननु नीलत्वादेः परमाणुनीलादावपि सत्त्वात्तद्व्यापकत्वं कथमुद्भूतत्वेऽत आह—पिशाचेति। निदाघोष्मादाविति। आदिना परमाणुपरिग्रहः तद्भिन्नमेव = नीलादिभिन्नमेव। तत्त्वे मानाभावात्। प्राणिनामदृष्टवशादेव क्वचिन्नीलघट उत्पद्यते, क्वचित्स्फटिकादिकं श्वेततां लभते न तु कारणगुणसाजात्यादिति भावः। ननु नीलशुक्लाद्यन्यतमत्वव्याप्यं रूपत्वमिति व्याप्यीभूतरूपत्वसत्त्वे व्यापकीभूतनीलाद्यन्यतमत्वमपि परमाणुरूपादौ स्यादत आह प्रत्यक्षस्येति। चाक्षुषाद्यन्यतमत्वनियमे इति। मानाभाव इति शेषः। ईश्वरप्रत्यक्षे चाक्षुषाद्यन्यतमत्वविरहादिति भावः।

तादृशप्रभाद्यभावे = रूपवर्त्तिनि महाप्रभात्वावच्छिन्नाभावे। तमःसाक्षात्कारं प्रतीत्यादि। तमस्त्वं हि अखण्डोपाधिर्महाप्रभात्वावच्छिन्नाभाववृत्तिः। महाप्रभात्वावच्छिन्नाभावत्वात्मकत्वेऽन्धतमस परिपश्यतः "तमो भावो न वे"त्यादि संशयानुदयप्रसङ्गात्। तमस्त्वेन तमोज्ञानस्यैव भावत्वप्रकारकज्ञानपरिपन्थित्वात्। अन्धकारदर्शनवेलायामपि च भावत्वप्रकारकसंशयस्य सर्वानुभवसिद्धस्यापलपितुमशक्यत्वात्।

❀ दीधितिः ❀

**यावत्तदभावानामेकत्र असंभवाद्, अननुगमाद्,**

❀ जागदीशी ❀

**एकत्रेति। एकदेशीयतेजोध्वंसप्रागभावव्यक्तीनामन्यदेशे विरहादिति**

❀ काशिकानन्दी ❀

न चैवं तत्तत्तेजोव्यक्तीनामभावकूटस्य तमस्त्वेऽपि तमस्त्वेन तत्प्रत्यक्षसंभवाद् वक्ष्यमाण-दूषणासंगतिरिति वाच्यम्। तादृशाभावसमुदायत्वमेव तमस्त्वमित्यभिप्रायेण प्राचीनैस्तथोक्तेः. तन्निरसनस्य युक्तत्वात्। अत एव तमःप्रत्यक्षानुरोधेन सामान्यलक्षणासाधनं प्राचामुपपद्यते। न चोक्तसंशयानुपपत्त्यैव प्राचीनमतनिरासंभवे वक्ष्यमाणदूषणानामनुपयोग इति वाच्यम्। तुष्यतु दुर्जन इति न्यायेन, तेषामपि दोषत्वेन च तत्कथनासंगतिविरहात्। न च तेजोविशेषाभावकथनमप्यनावश्यकं स्वमतानुसारेणेति वाच्यम्। तादृशतेजोभावकूटवृत्तित्वेन तमस्त्वस्वीकारापेक्षया महाप्रभात्वावच्छिन्नाभावे एव तमस्त्वस्वीकारौचित्याद्। तमस्त्वस्य व्यासज्यवृत्तिधर्मतास्वीकारापाताच्च। एवं विधाखण्डतमस्त्वप्रकारकचाक्षुषे चक्षुःसंयुक्तविशेषणतैव कारणं, न तु चक्षुःसंयुक्तसमवेतविशेषणता। तेन रूपे तम इति न प्रत्यक्षम्। एवं च रूपे महाप्रभा नास्तीत्याकारप्रत्यक्षसत्त्वेऽपि तस्य तमस्त्वाऽप्रकारतया नानुपपत्तिरित्यभिप्रायः।

तमस्त्वस्य महाप्रभात्वावच्छिन्नाभावत्वरूपत्वे रूपे महाप्रभा नास्तीति सर्वजनसिद्धप्रतीतिरपलप्येत। चक्षुः संयुक्तविशेषणतायास्तत्राभावात्। न च यथाकथंचित्सम्बन्धेन महाप्रभाया रूपे सत्त्वात्तादृशप्रतीतिर्नेष्टैवेति वाच्यम्। तमःस्थलेऽपि यथाकथंचित्सम्बन्धेन महाप्रभासंभवात् संयोगेन महाप्रभाऽभावस्यैव तमस्त्वात्, तस्य रूपेऽपि सत्त्वाद् ग्रन्थासंगतिः स्यादित्यखण्डोपाधित्वं तमस्त्वस्य ध्येयम्।

अथवा आलोकनिष्ठचाक्षुषजनकताघटकसम्बन्धेन महाप्रभाभावस्तम इत्यभिप्रायवान् जगदीशः। तत्र संयोगेन महाप्रभाभाव एव तम इत्याशयेन न चेत्यादिपूर्वपक्षः। आलोकनिष्ठचाक्षुषजनकताघटकसम्बन्धेन महाप्रभाभाव एव तम इत्याशयेनोत्तरम्। एवं च समवेतसमवायसम्बन्धेन महाप्रभाया रूपे सत्त्वे तदा तत्र न तमः। चक्षुःसंयुक्तविशेषणतेत्युपलक्षणम्।

अथवा द्रव्यानुयोगिकस्वरूपसम्बन्धप्रतियोगित्वविशिष्टमहाप्रभाभाव एव संयोगावच्छिन्नप्रतियोगिताकस्तम इत्याशयेनेदम्।

श्रीमन्तो गदाधरभट्टाचार्यास्तु तेजोविशेषसामान्याभावात्मकतमसो रूपे सर्वानुभवविषयतया न तत्र तमःप्रतीतिरयुक्ता। न चैवं रूपे तम इति व्यवहारापत्तिरिति वाच्यम्। तमःप्रभृतिपदसमभिव्याहारे सप्तम्यादेर्द्रव्यानुयोगिकविशेषणतावच्छिन्नाधेयतायां व्युत्पन्नतया तादृशव्यवहारासंभवात्। रूपनिरूपिताया द्रव्यानुयोगिकविशेषणतावच्छिन्नाया आधेयताया अप्रसिद्धेः, तादृशशब्दप्रयोक्तुर्भ्रान्तत्वादिति प्राहुः।

**एकदेशीयेति**। ध्वंसादेः समवायिकारणमात्रवृत्तित्वादिति भावः। **अन्यदेशे विरहा-**

❀ जागदीशी ❀

भावः । ननु यावत्त्वं प्रतियोगिविशेषणम् तथा च यावन्ति तादृशतेजांसि तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियोगिताकाभावानामेकदेश-वृत्तीनामेव तमस्त्वं वाच्ययत आह अननुगमादिति । निरुक्ताभावाना-मनुगतैकधर्माभावोत्तम इत्यनुगताकारप्रतीतिर्न स्यादिति भावः ।

ननु यावन्ति तादृशतेजांसि तेषां तथाविधैकप्रतियोगिकाभावविशिष्टेना-

❀ काशिकानन्दी ❀

दिति । यद्यपि तेजोऽत्यन्ताभावसमुदाय एव तम इति स्वीकारे नोक्तदोषावकाशः । वर्त्तमानात्यन्ताभावस्यैवापरदेशेऽपि वर्त्तमानत्वात् । अधिकरणभेदेनाभावभेदाऽस्वीकारात् । न च ध्वंसप्रागभावयोरधिकरणेऽत्यन्ताभावविरहेण उत्पत्स्यमानोद्भूततेजस्केऽन्धतमस-स्थितोष्मसन्ततिविशेषे तमो नास्तीति प्रत्ययापत्तिः, एवं तत्रैवोद्भूततेजोध्वंसे जाते इति वाच्यम् । महाप्रभात्वावच्छिन्नाभावादेस्तमस्त्वं वदतस्तवापि मते उक्तदोषप्रसरप्रसङ्गेन ध्वंसप्रागभावयोरत्यन्ताभावाविरोधित्वं मत्त्वैव लक्षणस्य करणीयत्वात् । न च परमाणवादि-साधारणतेजःप्रतियोगिकाभावकूटस्य तमस्त्वे ग्रीष्मोष्मसन्ततिमति ध्वान्तमतिर्नस्यादिति वाच्यम् । तेजोविशेषात्यन्ताभावकूटस्यैव तमस्त्वेनादोषात् । तथापीतोऽप्यरुचेरननुगम-गौरवयोरुत्तरत्र दोषत्वेनोपन्यासान्नासंगतिरिति ध्येयम् ।

ननु यावत्त्वस्य प्रतियोगित्वविशेषणमात्रेण कथं व्यधिकरणध्वंसप्रागभावादिवारण-मित्यत आह—तथा चेति । तादृशतेजांसि=तेजोविशेषाः । ग्रीष्मोष्मसन्ततिमति तिमिरलाभाय तादृशपदं बुद्धिविषयीभूतविशेषार्थकम् । इतरधर्मानवच्छिन्नेति । ध्वंसादिनिरूपितप्रतियोगिताया निरवच्छिन्नत्वान्नञ्द्वयम् । यद्यपि तत्तद्व्यक्तित्वावच्छिन्न-त्वमेव प्रवेश्य ध्वंसप्रागभावानन्तर्भाव्यैव तमस्त्वं सुवचम् । तथापि तेजःसामग्र्या विरहे तेजःप्रागभावप्रत्यक्षानभ्युपगमकथनपरोत्तरग्रन्थसंगतिलाभायैतावान् प्रयास इति ध्येयम् । एकदेशवृत्तीनामेवेति । एवं च व्यधिकरणप्रागभावादीनां वारणम् । न चैवं स्फीतालोकवति देशे तमःसत्त्वापत्तिः । विद्यमानतेजःप्रतियोगिकाभावस्य तद्देशाऽवृत्तित्वेन तेजोऽन्तरप्रतियोगिकाभावस्यैव एकदेशवृत्त्यभावपदेन घर्त्तव्यत्वादिति वाच्यम् । विद्यमान-तेजोऽभावस्य तत्र विरहेण यावतां तेजसामभावस्यैकदेशवृत्तेस्तत्राभावात् । प्रागभाव-ध्वंसयोरेकदेशवृत्तिपदेन वारणेऽपि तदत्यन्ताभावमुपादायैव यावतां तेजसामभावस्य तत्र सम्पादनीयत्वात् । अत एव एकदेशवृत्त्यभावेषु यावत्त्वमप्रवेश्य यावत्त्वस्य प्रतियोगिविशे-षणत्वमभिहितमिति भावः ।

अनुगतैकधर्माभावादिति । न च तावदभावगतसमुदायत्वमेवानुगतधर्म इति वाच्यम् । अविरुद्धार्थघटितसमुदायत्वस्यैकविशिष्टापरविशिष्टापरापरत्वात् ।

ननु भवतु स एवैकविशिष्टापरविशिष्टापरापरत्वमेवानुगतधर्म इत्याशङ्कते—नन्विति । एकप्रतियोगिकाभावानामेव ध्वंसादिभेदेन विविधानामेकविशिष्टापरापरवैशिष्ट्यस्य घटनायां गौरवात्प्रतियोग्यंशे एवैकत्वमपरत्वं च घटयति—एकप्रतियोगीति ।

❀ दीधितिः ❀

गौरवात्, तेजोविशेषत्वादिज्ञानस्य तेजःसामग्र्याश्च विरहेऽपि तेजोविशेषात्यन्ताभावप्रागभावानां प्रत्यक्षानभ्युपगमाच्च ।

❀ जागदीशी ❀

परप्रतियोगिकाभावेन विशिष्टमन्यप्रतियोगिकाभावमुपादाय तेनापि विशिष्टमपरापरप्रतियोगिकाभावत्वमेवानुगमकं वाच्यमत आह गौरवादिति। अनन्तानामभावानां तमःप्रतीतिविषयत्वकल्पनामपेक्ष्य तेजोविशेषसामान्याभावस्यैव तादृशप्रतीतिविषयताया लाघवादिति भावः ।

ननु तेजोविशेषसामान्याभावस्य सन्निकर्षदशायां तत्तत्तेजोऽभावस्यापि सन्निकृष्टतया तेषामपि तमःप्रतीतिविषयताध्रौव्यात् कुतो गौरवमत आह—तेजोविशेषेति । तेजोविशेषत्वादिज्ञानविरहे तेजोविशेषात्यन्ताभावप्रत्यक्षानुपगमादिति योजना । तथा च विशिष्टप्रतियोग्यनुपस्थितौ तेजस्त्वादिसामान्यलक्षणास्वीकारेऽपि नाभावसमुदायस्य प्रत्यक्षसंभव इति व्यर्थं तत्प्रत्यासत्त्येति भावः । तेजःसामग्र्या इति । तथा च प्रागभावस्य प्रतियोगिसामग्रीव्यङ्ग्यत्वात्तेजःसामग्रीविरहदशायामन्धकारप्रतीतिर्न स्यादिति भावः ।

❀ काशिकानन्दी ❀

लाघवादिति भाव इति । विशिष्टधर्मघटकविशेषणविशेष्याणां व्यत्यस्य विशेषणविशेष्यभावप्रसक्त्या तमस्त्वस्य नानाविधत्वप्रसक्तावपि यत्किञ्चित्तमस्त्वप्रकारकत्वमात्रोपगमान्न समूहालम्बनाविलक्षणतमःप्रत्ययानुपपत्तिरतस्तदुपेक्षा ।

ध्रौव्यादिति । सत्यपि सन्निकर्षे भूतलादिगतघटपटप्रभृत्यनेकवस्तूनां युगपज्ज्ञानानुत्पादेऽपि तमसस्तादृशाभावकूटात्मकत्वेन तमःप्रत्ययानुरोधेन तावदभावानां प्रतीतिविषयताध्रौव्यमस्मन्मते । न हि तथाविधानुभवविषयत्वमात्रं गौरवापादकं, घटपटादिवित्प्रत्ययस्य तदुभयविषयतायामपि गौरवापत्तेः । न च विप्रतिपद्यमाना संप्रति तमसस्तादृशाभावस्वरूपतैवेति वाच्यम् । एवमपि सामान्याभावानङ्गीकर्त्तन्येऽस्मदुक्तेरेव संभवादिति भावः । अनुपस्थिताविति । तेजस्त्वेनैव सामान्यलक्षणयोपस्थितिर्न तु तेजोविशेषत्वेनेति भावः । संभव इतीति । एवं च सामान्याभावोऽप्यवश्यमङ्गीकार्य इति भावः । व्यर्थमिति । महाप्रभात्वेन यत्किंचिन्महाप्रभोपस्थितेरेव तमःप्रत्यक्षे अपेक्षणीयत्वादिति भावः । दीधितौ— तेजःसामग्र्या इति । तेजःसामग्र्या विरहेऽपि तेजोविशेषप्रागभावस्य प्रत्यक्षानुपगमादिति योजना । व्यङ्ग्यत्वादिति । न हि सामग्रीमदृश्यत इह तेजो भविष्यति इह घटो भविष्यतीत्यादिधीरिति प्रागभावव्यञ्जकत्वं सामग्र्यामुपगन्तव्यमिति भावः । नस्यादिति । सामग्र्याः कार्योत्पत्तिपूर्वक्षण एव संभवात् संभवदपि अन्धकारप्रत्यक्षमेकमात्रं स्यात् । अयं च प्रागभावादिघटिताभावसमुदायस्य तमस्त्वपक्षे दोषः ।

❀ दीधितिः ❀

**प्रागभावप्रत्ययोऽपि च प्रतियोगिवृत्तिघटत्वादिप्रकारकज्ञानसाध्यो न प्रतियोगिज्ञानमपेक्षते ।**

❀ जागदीशी ❀

**ननु भाविप्रतियोगिकप्रागभावव्यक्तिप्रत्यक्षस्य तादृशप्रतियोगिव्यक्तिज्ञानं विनाऽनुत्पादात्तदर्थं सामान्यलक्षणा आवश्यकीत्यत आह प्रागभावेति । तथा च घटप्रागभाव इति प्रत्यक्षस्य विशिष्टवैशिष्ट्यबुद्धितया घटत्वप्रकारकज्ञानमात्रं तत्र हेतुर्न तु प्रतियोगिव्यक्तीनां तत्र प्रवेश इति भावः ।**

**ननु घटादिप्रतियोगिविशेषितप्रागभावप्रत्यक्षे घटादेर्भानार्थं तस्यावश्यं सन्निकर्षो वाच्यः । स च लौकिकप्रत्यासत्तिबाधाद् अगत्यैव ज्ञानलक्षणासम्पादकत्वेन**

❀ काशिकानन्दी ❀

भावीति । भावी प्रतियोगी यस्यास्तथाविधा या प्रागभावव्यक्तिस्तत्प्रत्यक्षस्य 'इह कपाले घटो भविष्यति' 'घटप्रागभावः' इत्याद्याकारकस्य । तादृशप्रतियोगिव्यक्तीति । भाविप्रतियोगिव्यक्तीत्यर्थः । अनुत्पादादिति । अभावप्रत्यक्षे प्रतियोगिज्ञानस्य कारणत्वादिति भावः । तदर्थं = भाविप्रतियोगिव्यक्तिभानार्थम् । ननु घटत्वादिप्रकारकज्ञानसाध्यत्वं कुत इत्यत आह—तथा चेति । इति प्रत्यक्षस्य = इत्याकारकप्रत्यक्षस्य । विशिष्टवैशिष्ट्यबुद्धितयेति । विशिष्टप्रकारताकबुद्धितयेत्यर्थः । न तु विशिष्टप्रतियोगिताकसंसर्गावगाहिबुद्धितयेत्यर्थः । प्रागभावीयप्रतियोगिताया निरवच्छिन्नत्त्वात् । प्रतियोगित्वात्मकसंसर्गनिरूपितप्रतियोगिताया अपि तत्तदभावनिष्ठानुयोगितानिरूपितायाः प्रागभावस्थले प्रत्येकघटादिपर्यवसितत्वेन अतिप्रसक्तधर्मस्य घटत्वादेस्तदवच्छेदकत्वाऽसंभवादित्याहुः । तत्र हेतुः = घटप्रागभावइत्यादिप्रत्यक्षे हेतुः । तत्र प्रवेशः = कारणतावच्छेदककोटौ प्रवेशः ।

ननु घटप्रागभाव इत्यादिप्रत्यक्षस्य विशिष्टवैशिष्ट्यावगाहिबुद्धितया तत्र घटत्वप्रकारकज्ञानमात्रस्य कारणत्वेऽपि वर्त्तमानघटप्रागभाव इत्यादिप्रत्यक्षे प्रागभावांशे भाविनो घटस्य भानात्तद्भानप्रयोजकं स्यात् । न च घटत्वप्रकारकज्ञानस्यैव विशिष्टवैशिष्ट्यावगाहिताप्रयोजकत्ववत् तद्भानप्रयोजकत्वमपीति वाच्यम् । एवं सति प्रत्यक्षे लौकिकसन्निकर्षानधिकरणविषयभासकस्य घटत्वप्रकारकज्ञानस्य प्रत्यासत्तिताया गलेपादुकान्यायेनापातादिति शङ्कते दीधितौ अथेति, जागदीश्यां नन्विति च । घटादीति । भाविघटादिव्यक्तीत्यर्थः । प्रागभावप्रत्यक्षे = घटप्रागभावइत्याद्याकारकतत्प्रत्यक्षे । तस्य = घटादेः । सन्निकर्षः = प्रत्यक्षजनकसम्बन्धः । स च = सन्निकर्षश्च । ज्ञानलक्षणासम्पादकत्वेनेति । अयं भावः—घटप्रागभाव इत्यादिप्रत्यक्षं हि सर्वानुभवसिद्धम् । तादृशप्रत्यक्षे च भाविघटो भासते । विषयभानं हि प्रत्यक्षे विना सन्निकर्षं न संभवति । न च तत्र ज्ञानलक्षणाप्रत्यासत्त्यैव निर्वाहो भविष्यतीति वाच्यम् । यस्य घटस्य पूर्वमनु-

## ❀ दीधितिः ❀

अथ घटो भविष्यतीति प्रत्यक्षं प्रतियोगिविशेषितं प्रागभाव- मवगाहते। न च प्राचीनास्तत्प्रतियोगिनः। तत्प्रतियोगित्वावगाहने च भ्रमत्वम्। न चानागते घटे प्रत्यासत्त्यन्तरमस्ति। अतः सामान्य-

## ❀ जागदीशी ❀

सामान्यलक्षणायां पर्यवस्येदित्याशङ्कते अथेत्यादिना। इति प्रत्यक्षम्= इत्याकारकशब्दप्रयोजकप्रत्यक्षं, घटीयप्रागभावो वर्त्तमान इत्याकारप्रत्यक्षमिति यावत्। यथाश्रुते घटस्य विशेष्यतयैव भानात् प्रतियोगिविशेषितमित्यादेर- संगत्यापत्तेः। भ्रमत्वमिति। प्रसज्येतेति शेषः। प्रतियोगितासम्बन्धेन तत्तद्घटाभाववति घटत्वादिप्रकारेणापि तादृशसम्बन्धेन तत्तद्घटावगाहिनो

## ❀ काशिकानन्दी ❀

भवस्तस्यैव ज्ञानप्रत्यासत्त्या भानसंभवेन भाविघटोपनायकत्वस्य भाविघटविषयकज्ञाने एव संभवेन पूर्वं भाविघटानुभवोत्पादायैव सामान्यलक्षणास्वीकारापातात्। एवं च भाविघटो- पनायकभाविघटविषयकानुभवस्य सामान्यलक्षणां विनाऽसंभवे ज्ञानलक्षणासम्पादकतया सामान्यलक्षणाऽङ्गीकरणीया। तत्स्वीकारे च घटत्वादिना निखिलघटादीनां प्राग् ज्ञाततया भाविघटस्यापि ज्ञानात्तादृशभाविघटविषयकज्ञानस्यैव घटप्रागभाव इति प्रत्यक्षे भाविघटोपना- यकत्वमिति। इत्याकारकशब्दप्रयोजकप्रत्यक्षमिति। न च वर्त्तमानप्रागभावप्रतियोगी घट इत्याद्याकारकप्रत्यक्षमेव तादृशशब्दप्रयोजकं न तु घटप्रागभाव इत्याद्याकारकं, भिन्न- विषयकत्वादिति वाच्यम्। घटनिष्ठप्रतियोगितानिरूपकप्रागभाववदित्यादिप्रत्यक्षे तुल्यवित्ति- वेद्यतया वर्त्तमानप्रागभावनिरूपितप्रतियोगिताया घटेऽपि भानात्। यथाश्रुते= वर्त्तमान- प्रागभावप्रतियोगी घट इत्याकारकप्रत्यक्षे घटो भविष्यतीति शब्दलभ्ये।

ननु तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नवत्त्वज्ञानमेव भ्रमः। घटप्रागभावे च प्रतियोगितासम्बन्धेन घटत्वावच्छिन्नस्य सत्त्वात्तत्र घटत्वेन रूपेण प्राचीनघटावगाहिनोऽपि न तस्य भ्रमत्वमित्याशङ्क्य तत्तद्व्यक्तित्वावच्छिन्नाभाववति तत्तद्व्यक्तिमत्त्वज्ञानस्यैव भ्रमत्वमिति न मूलासंगतिरिति समाधत्ते --प्रतियोगितेति। तत्तद्घटाभाववति तत्तद्व्यक्तित्वावच्छिन्नाभाववेत्यर्थः। तेन न द्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावमादाय दोषः। घटत्वादिप्रकारेणापीति। न केवलं तद्व्यक्तित्वप्रकारेणैवेत्यर्थः। तादृश- सम्बन्धेन= प्रतियोगितासम्बन्धेन।

ननु घटत्वेनानुभूतं स्मृतं चेत्यादिदीधित्या घटत्वादिसामान्यलक्षणाप्रयुक्तस्य निखिल- घटविषयकज्ञानस्यैव भाविघटप्रत्यासत्तित्वमिति लभ्यते। तच्चायुक्तम्। घटो भविष्यती- त्यादौ स्वयं सामान्यलक्षणयापि भाविघटभानसंभवेन ज्ञानलक्षणापर्यन्तानुधावनवैफल्यात्

❀ दीधितिः ❀

प्रत्यासत्त्या घटत्वेनानुभूतं स्मृतं च तं तदालम्बते ।

❀ जागदीशी ❀

ज्ञानस्य भ्रमत्वादिति भावः । स्मृतमिति ।

यद्यपि घटत्वप्रकारकानुभवस्यैव प्रत्यासत्तित्वात्तदुत्तरं घटो भविष्यतीति प्रत्यक्षमेव भाविघटं विषयीकृत्योत्पत्तुमर्हति । तथापि उक्तप्रत्यक्षे प्रागभावांशे भाविघटस्य विशेषणतया तस्य ज्ञानं पूर्वमपेक्षितमित्याशयेन स्मृतं चेत्युक्तम् । तत्रापि स्मृतत्वमविवक्षितम् । किन्तु ज्ञानमात्रम् । तेन घटत्वसामान्यलक्षणाजन्यानुभवादपि घटविशेषितप्रागभावप्रत्यक्षस्य क्वचित्संभवान्न न्यूनत्वम् ।

❀ काशिकानन्दी ❀

त्वाशयेनाशङ्कते यद्यपीति । घटत्वप्रकारकानुभवस्यैव = घटत्वप्रकारकसामान्यलक्षणात्मकानुभवस्यैव । अनुभवपदेन तदिन्द्रियकरणकबोधसामग्र्यन्तरं सूचितम् । प्रत्यासत्तित्वात् = घटोभविष्यतीति प्रत्यक्षे भाविघटभानप्रयोजकत्वसंभवात् । तदुत्तरं = घटत्वप्रकारकानुभवोत्तरम् । प्रत्यक्षमेवेति । एवकारेण मध्ये प्रत्यासत्तिविषया ज्ञानान्तरकल्पनवैफल्यं सूचितम् । घटो भवीष्यतीत्यत्र कथंचित्तथा संभवेऽपि घटप्रागभाव इत्यत्र तदसंभव इति समाधत्ते—तथापीति । उक्तप्रत्यक्षे = घटप्रागभावइतिप्रत्यक्षे । तस्य = भाविघटस्य । पूर्वमपेक्षितमिति । तद्विशेषणप्रत्यक्षे तद्विषयकज्ञानस्य हेतुत्वमित्यभिमानः । घटत्वेनानुभूतमित्यनेन ज्ञानलक्षणावश्यकत्वं न लभ्यते घटो भविष्यतीतिप्रत्यक्षकाले एव निखिलघटानुभवसंभवेनैकप्रत्यक्षविषयत्वसंभवात् । स्मृत्यनुभवौ तु न युगपदिति तेन ज्ञानलक्षणावश्यकता मूलतो लभ्यत इति मनसि कृत्याह—स्मृतं चेतीति । तत्रापीति । अयंभावः – यत्र प्रथमं घटेन सह सन्निकर्षवशाद् घटत्वप्रकारकज्ञानं ततः सामान्यलक्षणया घटत्वप्रकारेण निखिलघटप्रत्यक्षं तदेव च ज्ञानलक्षणात्मकसन्निकर्षः तत्र तदुत्तरं घटप्रागभाव इत्याकारकभाविघटविशेषितप्रागभावप्रत्यक्षं भवति । यत्र च प्रथमं घटत्वप्रकारकज्ञानोत्तरं घटत्वेन निखिलघटविषयकप्रत्यक्षं ततः कालान्तरे घटत्वेन निखिलघटविषयकस्मरणात्मकज्ञानलक्षणासन्निकर्षः तत्रापि घटप्रागभाव इत्याकारकभाविघटविशेषितप्रागभावप्रत्यक्षं भवतीति ज्ञानमात्रस्य प्रत्यासत्तित्वं वक्तव्यं न तु स्मृतिमात्रस्य ।

यद्यपि घटत्वेन सामान्येनानुभूतं तादृशानुभवात्मकज्ञानसन्निकर्षोपनीतं, स्मृतं = स्मरणात्मकज्ञानसन्निकर्षोपनीतं च तत् आलम्बते विषयीकरोति इत्येवं विवरणेनापि अनुभवोपनीतस्य स्मरणोपनीतस्य च लाभसंभवेन स्मृतमित्यत्र स्मृतत्वाविवक्षणेन ज्ञानमात्रविवक्षणमफलम् ।

तथापि घटत्वेन यत्किंचिद्घटानुभवोतरजायमानघटोभविष्यतीत्यादिप्रत्यक्षे सामान्य-

## ❀ जागदीशी ❀

सामान्यलक्षणाप्रत्यासत्तेः स्वाश्रयमुख्यविशेष्यकप्रत्यक्षं प्रत्येव जनकत्वात् तादृशप्रत्यासत्त्या प्रागभावविशेषणत्वेन घटस्य प्रत्यक्षं न संभवतीत्यतः स्मृतमित्युक्तमित्यप्याहुः। तं = भाविघटम्। तद् = घटोभविष्यतीत्याकारक-प्रत्यक्षम्।

नव्यास्तु प्रतियोगिविशेषितमित्यस्य प्रतियोगिविशेष्यकमित्यर्थः। तच्च प्रत्यक्षविशेषणम्। तेन घटो वर्त्तमानप्रागभावप्रतियोगीत्याकारकस्यैव प्रत्यक्षस्य लाभः। घटत्वेनानुभूतं स्मृतं चेत्यत्र चकारो वाकारार्थः। तेन

## ❀ काशिकानन्दी ❀

लक्षणयापि भाविघटस्य भानसंभवात् एवं घटत्वेन निखिलघटप्रत्यक्षात्मकसामान्यलक्षणया घटप्रागभाव इत्यादिप्रत्यक्षेऽपि भाविघटभानसंभवात्तदकथनेन न्यूनत्वं स्यात्। एवं च घटत्वेनानुभूतमित्येतेन घटत्वसामान्यलक्षणाप्रयोज्यभाविघटविषयताक 'घटप्रागभाव' इति प्रत्यक्षस्थलसंग्रहः। स्मृतमित्यनेन ज्ञानलक्षणाप्रयोज्यघटविषयताकनिरुक्तप्रत्यक्षस्थल-संग्रह इति न न्यूनत्वमिति ध्येयम्।

दीधितौ घटत्वेनानुभूतं = घटत्वेन पूर्वक्षणेऽनुभूतं, सामान्यलक्षणाजन्यघटत्वप्रकारकनिखिलघटविषयकानुभवोपनीतमिति यावत्। स्मृतं = पूर्वक्षणे स्मृतं, सामान्यलक्षणा-प्रयोज्यघटत्वप्रकरकनिखिलघटविषयकानुभवजन्यस्मरणोपनीतमिति यावत्। उभयत्र सामान्यप्रत्यासत्त्येति सम्बन्धात्। तत् = प्रत्यक्षं, आलम्बते = विषयीकरोति। न च घटत्वसामान्यलक्षणाप्रयुक्तविषयतावगाहिघटप्रागभाव इति प्रत्यक्षासंग्रह इति वाच्यम्। सामान्यलक्षणाप्रत्यासत्तेः स्वाश्रयमुख्यविशेष्यकप्रत्यक्षमात्रजनकतया 'घटप्रागभाव' इत्यादिप्रत्यक्षे घटादेर्मुख्यविशेष्यताविरहेण तद्विषताप्रयोजकत्वस्य सामान्यलक्षणाया-मसम्भवेन न्यूनत्वाभावादित्याशयवतां केषांचिन्मतमाह सामान्येति। तादृशप्रत्या-सत्त्या = घटत्वसामान्यलक्षणाप्रत्यासत्त्या। स्मृतमित्युक्तमिति। घटत्वेनानुभूतं स्मृत-मित्युक्तार्थकं तत्र स्मृतमिति न्यूनताभङ्गाय। यथाश्रुतार्थस्तु— तादृशेषणकप्रत्यक्षं तज्ज्ञान-हेतुतायाः प्राङ्निरस्तत्वं मन्वानानां केषांचिन्मतमाह—सामान्येति। स्मृतमित्युक्त-मिति। अत्रापि स्मृतत्वमविवक्षितमिति बोध्यम्। एवमर्थश्च शिथिलतया नाऽस्माभिराद्रियत इति ध्येयम्। नव्यमते सामान्यलक्षणाकार्यतावच्छेदककोटौ मुख्यविशेष्यत्वाऽप्रवेशात् आहुरिति। इत्याकारकप्रत्यक्षं = इत्याकारकशाब्दप्रयोजकप्रत्यक्षम्।

घटोभविष्यतीत्याकारकमेव प्रत्यक्षमभिप्रेत्य दीधितिं व्याचक्षाणानां मतमाह— नव्यास्त्ववति। इत्यर्थ इति। प्रतियोगी विशेषतो यस्मिन् प्रत्यक्षे इति व्युत्पत्ति-बलादिति भावः। तच्च = प्रतियोगिविशेष्यकमिति च। प्रत्यक्षविशेषणमिति। प्रतियोगिविशेषितं येनेति विग्रहादरेण प्रागभावविशेषणत्वं तु न संभवति। वर्त्तमान-प्रागभावप्रतियोगी घट इत्याकारकप्रत्यक्षे प्रागभावस्य प्रतियोगित्वांशे एव विशेषणतया घटविशेषणत्वविरहात्। परम्परया विशेषितत्वोपादाने तु तदपि सम्यगेव। घटत्वेनानु-

❀ जागदीशी ❀

क्वचित् सामान्यप्रत्यासत्त्या घटत्वेनानुभूतं, क्वचिच्च तादृशानुभवबलाद् घटत्वेन स्मृतमेव भाविघटं घटो भविष्यतीति प्रत्यक्षं सामान्यप्रत्यासत्ति-बलादालम्बत इत्यर्थः। तेन घटीयो वर्त्तमानप्रागभावः इति प्रत्यक्षस्य भाविघटप्रागभाव एव घटत्वप्रकारेण प्रतियोगितया घटान्तरावगाहित्वेऽपि न भ्रमत्वम्। प्रतियोगितासम्बन्धेन घटत्वावच्छिन्नाभाववत्येव तादृश-सम्बन्धेन घटत्वावच्छिन्नप्रकारताकज्ञानस्य तादृशसम्बन्धेन घटत्वाव-च्छिन्नस्य भ्रमत्वादित्युक्तावपि न क्षतिरिति प्राहुः।

❀ काशिकानन्दी ❀

भूतमिति। भाविघटमालम्बत इति योजना। तादृशानुभवबलात् = सामान्यप्रत्या-सत्तिजन्यघटत्वप्रकारकनिखिलघटविषयकानुभवबलात्। भाविघटमिति। आलम्बत इति सम्बन्धः। सामान्यप्रत्यासत्तिबलादिति। न च ज्ञानलक्षणयैव पूर्वानुभूतभावि-घटभानं तत्र संभवतीति वाच्यम्। उपनीतं विशेषणतयैव भासत इति नियमेन घटो भविष्यतीति प्रत्यक्षे घटस्योपनीततया भानासंभवात्। तस्याविशेषणत्वात्। सन्निकर्षस्य च विरहेण सामान्यप्रत्यासत्त्यैव भानसंभवात्। न चैवं पूर्वं घटत्वेन निखिलघटानुभवः तज्जन्यभाविघटस्मृतिर्वा कुतोऽपेक्षितेति वाच्यम्, तद्धर्मावच्छिन्नतन्निष्ठविशेष्यताकप्रत्यक्षे तद्धर्मप्रकारकतद्विषयकज्ञानस्य हेतुत्वमित्यभिमानात्। विशेषणनिष्ठलौकिकविषयताकभाने विशेष्यव्यक्तेर्लौकिकप्रत्यक्षसामग्री तु नापेक्षितेति हृदयम्। घटप्रागभाव इत्याकारकप्रत्यक्ष-परित्यागे बीजमाह—तेनेति। इत्युक्तावपि न क्षतिरित्यन्वयः। ननु घटत्वप्रकारेण प्राचीनघटस्य प्रागभावांशे भाने तस्य भ्रमत्वं कुतो नेत्याशंक्य भ्रमलक्षणं परिष्करोति—प्रतियोगितासम्बन्धेनेति। अभाववत्येवेति। एवकारेण तत्तद्घटा-भाववति तत्तद्घटप्रकारकज्ञानस्य भ्रमत्वमिति लक्षणव्युदासः। तादृशसम्बन्धेन = प्रतियोगितासम्बन्धेन। घटत्वाद्यवच्छिन्नस्येति। प्रागभावाद्यंशे इति शेषः। इत्युक्तावपि = इति केनचिदत्र आक्षेपोद्भावनेऽपि। तद्धर्मावच्छिन्नाभाववति तद्धर्मा-वच्छिन्नप्रकारताकप्रत्यक्षस्यैव भ्रमतया प्रागभावे घटत्वावच्छिन्नस्य भाविघटस्यैव सत्त्वेन घटत्वावच्छिन्नाभावविरहेण तत्र घटत्वेन रूपेण प्राचीनघटावगाहनेऽपि भ्रमत्वाभावात् प्राचीनघटस्य घटप्रागभाव इति प्रत्यक्षे भानस्वीकारेणैवोपपत्तिसंभवेन सामान्यलक्षणाया अनावश्यकमेवेति केनचिदत्राक्षेपोद्भावनेऽपीत्येतत्। न क्षतिरिति। घटो भवीष्यतीत्या-कारकप्रत्यक्षानुरोधेनैव सामान्यलक्षणासिद्धेरिति भावः। प्राहुरिति। प्रकर्षस्तु घटप्रागभाव इति प्रत्ययानुरोधेन सामान्यलक्षणासाधनस्यात्र विवक्षितत्वेऽग्रे भूधात्वर्थविचारादिकं दीधितिकृतो विफलं स्यात्। किंचेहेदानीं घटप्रागभाव इत्यादिप्रत्ययस्य लोकानामभावम-भिधाय पृथक् तन्निरसनमयुक्तं स्यात्। किं च यथाश्रुताऽपरित्यागप्रकर्षोऽस्त्येवेति।

तर्कालङ्कारास्तु घटोभविष्यतीति शब्दप्रयोजकप्रत्यक्षं न घटप्रागभाव इत्याकारक-मसमानविषयत्वात् किन्तु वर्त्तमानकालीनो घटोत्पत्तिप्रागभाव इत्यकारकमेव। न

❀ दीधितिः ❀

न च चरमकारणरूपसामग्रीव्यङ्ग्यः प्रागभावो वाच्यः। अन्यदा तदप्रत्ययात्। तस्याः स्वरूपसत्याः स्वरूपेण वा ज्ञातायास्तथात्वेऽतिप्रसङ्गाद् व्याप्यत्वेन गृहीतायास्तथात्वं वाच्यम्। तथा च तद्धेतुका प्रा·

❀ जागदीशी ❀

न चेति। द्वितीयवाच्यमित्यनेनान्वयः। कारणान्तरप्रवेशे गौरवादाह—चरमकारणेति। प्रतियोगिन इत्यादिः। अन्यदा = चरमकारणाऽसत्त्वदशायाम्। तस्याः = सामग्र्याः। तथात्वे = प्रागभावव्यञ्जकत्वे। अतिप्रसङ्गादिति। सामग्र्यां प्रागभावव्यभिचारग्रहदशायामपि तत्प्रत्यक्षप्रसङ्गादित्यर्थः। तथात्वं = प्रागभावव्यञ्जकत्वम्। तद्धेतुका = सामग्रीहेतुका।

❀ काशिकानन्दी ❀

चेदमध्यक्षमतीन्द्रियप्रयोजकत्वादिति घटोभविष्यतीति शब्दप्रयोजकप्रत्यक्षानुरोधेन सामान्यलक्षणासिद्धिरिति न शक्यं वक्तुमित्याशयेनाग्रे भूधात्वर्थविचारः। ननु तादृशशब्दप्रयोजकप्रत्यक्षानुरोधेन सामान्यलक्षणासिद्ध्यसंभवेऽपि घटप्रागभाव इति प्रत्यक्षानुरोधेनैव तत्सिद्धिरस्तु इत्यपि निरस्यति 'घटप्रागभाव इति च प्रत्यक्षो न लोकानामि'ति दीधितिकारः। यद्धर्मावच्छेदेन तदभावः तद्धर्मावच्छिन्ने तद्वत्त्वज्ञानं भ्रम इति स्वीकारे नव्यानामपि सामान्यलक्षणासिद्ध्यसंभवः। प्रागभावविशेषितमित्यत्र विशेषितपदस्य लक्षणा नव्यानाम्। बहुव्रीहित्वात्, क्तान्तत्वेन पूर्वनिपातापातश्च। अस्माकं तु इतिपदं सर्वनामेति न लक्षणापत्तिरित्यालोचयांबभूवुः।

दीधितौ—तदप्रत्ययात् = प्रागभावाप्रत्ययात्। घटसामग्रीमपश्यतः कपाले इह घटो भविष्यतीत्यादिप्रत्ययस्यानुभवविरुद्धत्वादिति भावः। व्यभिचारग्रहदशायामिति। इयं सामग्री प्रागभावव्यभिचारिणीत्याद्याकारकभ्रमदशायामित्यर्थः। तत्प्रत्यक्षप्रसङ्गात् = प्रागभावप्रत्यक्षप्रसङ्गात्। ननु विलक्षणकपालद्वयसंयोगाद्यात्मकचरमकारणरूपसामग्र्याः प्रत्यक्षेऽपि तत्कालं तत्तत्कपालादिरूपपक्षवृत्तित्वाज्ञानादनुमितिर्न संभवति। न च तादृशसामग्र्या सह सन्निकर्षकाले कपालादिनापि सह सन्निकर्षात् तद्वृत्तित्वज्ञानमपि तत्र दुर्वारमिति वाच्यम्। यत्र कपालप्रत्यक्षजनकसन्निकर्षविशेषो नास्ति तत्रैवानुमितेरसंभवात्। घटादिप्रत्यक्षविरहेऽपि तद्गतनीलादेरिव तद्गतसंयोगादेरपि प्रत्यक्षसंभवात्। किं च यदि प्रागभावव्याप्यत्वं चरमसंयोगकपालयोरेव यत्र गृहीतं तत्र तदुभयस्य कपालवृत्तित्वज्ञानं सर्वदा न संभवति। कपालस्य कपालवृत्तितायां सन्देहसंभवात्। एवं च प्राग् गृहीतप्रागभावव्याप्यतायाश्चरमकारणे उपनीततया भानाद् व्याप्यत्वेन गृहीततथाविधसामग्र्यात्मकव्यञ्जकसहकारेण प्रागभावप्रत्यक्षमेवेति वक्ष्यमाणानुमितिरेवेति ग्रन्थोऽसंगत

❀ दीधितिः ❀

गभावस्यानुमितिरेव ।

❀ जागदीशी ❀

न च सामग्र्याः प्रागभावव्याप्यत्वग्रहेऽपि पक्षधर्मतानिश्चयाभावात् कथमनुमितिरिति वाच्यम् । घटप्रागभावव्याप्यघटसामग्र्याः कपालवृत्तित्वसन्देहेऽपि प्रागभावप्रत्यक्षस्यानुत्पादेन प्रत्यक्षानुरोधेनापि पक्षधर्मतानिश्चयस्यावश्यं वाच्यत्वादिति भावः । अनुमितिरेवेति । तथा च तस्यां पूर्वागृहीतस्यापि घटादेः पक्षधर्मताबलादेव भानमविरुद्धम् । अनुमितौ व्यापकतावच्छेदकप्रकारेण ज्ञानस्यैव तन्त्रत्वादिति भावः ।

❀ काशिकानन्दी ❀

इत्याशङ्कायामाह न चेति । निश्चयाभावादिति । सर्वत्रेत्यादिः । तेन क्वचित्तन्निश्चयस्याप्यानुभविकत्वेऽपि न क्षतिः । सामग्र्याः प्रागभावव्यञ्जकत्वमिति मतेऽपि इह कपाले प्रागभावव्याप्यसामग्रीति ज्ञानविरहवत इह कपाले घटो भविष्यतीति प्रत्यक्षानुभवेन तन्मतेऽपि पक्षवृत्तित्वज्ञानविरहे प्रागभावप्रत्यक्षमनिष्टमेव । एवं च कपालवृत्तित्वज्ञानकाले एव व्याप्यत्वेन गृहीतायास्तस्याः प्रागभावव्यञ्जकत्वं वाच्यमिति अनुमितिसामग्र्यास्तदानीं समवधानेनानुमितिरेव स्यादिति समाधत्ते घटप्रागभावेति । सन्देहेऽपीति । अपिना पक्षवृत्तित्वाभावनिश्चये पक्षवृत्तित्वाज्ञाने च बोध्यम् । तेन पक्षधर्मत्वाभावज्ञानविरहं निवेश्यापि न निस्तारः । प्रत्यक्षानुरोधेनापि = तदीयप्रागभावप्रत्यक्षानुरोधेनापि । तत्रेति शेषः । तस्यां = घटप्रागभावानुमितौ । तन्त्रत्वादिति । तथा च कश्चित् कतिपयघटोत्पत्तिप्राक्क्षणे कपालद्वयविलक्षणसंयोगादिकमवेक्ष्य तदुत्तरं घटोत्पत्तिं च दृष्ट्वा व्याप्तिं गृह्णाति यत्रैतादृशविलक्षणसंयोगस्तत्र कश्चिद् घटो भविष्यतीति । ततश्च पक्षे तादृशविलक्षणसंयोगं दृष्ट्वा व्याप्तिं स्मरति । तदुत्तरं च घटप्रागभाववानित्यनुमितिः । तत्र च परम्परया व्यापकतावच्छेदकतामापन्नघटत्वेनापूर्वघटस्यापि भानमविरुद्धमिति ।

यद्यपि सामान्यलक्षणाया अद्याप्यसिद्धतया घटप्रागभावव्याप्यसामग्रीमानित्यादिव्याप्तिप्रकारकज्ञानविषयप्रयोज्यप्रत्यक्षानुमित्योः समानविषयकत्वं दुर्वचम् । अनुमितावपूर्वव्यक्तिभानात् । न च तादृशपरामर्शोत्तरक्षणजायमानघटप्रागभावइत्याकारकप्रमात्मकप्रत्यक्षानुरोधेन सामान्यलक्षणासिद्धौ समानविषयकत्वमपि सुवचं, तत्राप्यपूर्वव्यक्तिभानादिति वाच्यम् । उत्तरक्षणे प्रमात्मकप्रत्यक्षसिद्धौ सत्यां सामान्यलक्षणासिद्धिमुखेन समानविषयकत्वसिद्धिः, समानविषयकत्वसिद्धौ सत्यां च समानविषयकप्रत्यक्षसामग्र्या बलवत्त्वकल्पनमुखेन तदुत्तरं प्रमात्मकप्रत्यक्षसिद्धिरित्येवं परस्पराश्रयापातात् ।

तथापि निरुक्तपरामर्शोत्तरं घटप्रागभाव इत्याकारप्रत्यक्षस्य सर्वजनानुभवसिद्धतया नानुमितिर्वक्तुं शक्या इति समाधानं मनसि निधाय, वस्तुगत्या तत्रानुमितिरेव कुतो न

❀ दीधितिः ❀

तावत्कालं प्रागभावस्यासत्त्वेन प्रत्यक्षायोगाच्चेति वाच्यम्

❀ जागदीशी ❀

ननु कपालादौ प्रागभावव्याप्यसामग्र्याः परामर्शेऽपि घटप्रागभाव नानुमितिः । समानविषये लौकिकप्रत्यक्षसामग्र्याः बलवत्त्वादत आ तावत्कालमिति । सामग्र्यां प्रागभावव्याप्त्यादिग्रहकालपर्यन्तमित्यर्थः असत्त्वेनेति । न च यत्र चरमकारणोत्पत्तिक्षणे तत्पूर्वक्षणे वा प्रागभाव व्याप्यतया चरमसामग्र्याः परामर्शः तत्रोत्तरकालं प्रागभावप्रत्यक्षे बाधक भावः । पूर्वं प्रागभावात्मकविषयस्य सत्त्वादिति वाच्यम् । प्रागभाव व्याप्यचरमकारणवत्तायाः स्मृत्यादिसाधारणनिर्णयमात्रस्यातिप्रसक्तत्वा

❀ काशिकानन्दी ❀

भवति परामर्शसत्त्वादिति तटस्थजिज्ञासुजिज्ञासां निवर्त्तयति समानविषय इत्यादिना यद्वा समानविषयकत्वं समानप्रकारकत्वतात्पर्येणाभिहितं, तेन न प्रागुक्तान्योन्याश्रय इ ध्येयम् ।

दीधितौ असत्त्वेनेति । व्याप्यत्वेन गृहीतसामग्र्याः प्रागभावव्यञ्जकत्वमिति व भवतोऽपि मते सामग्रीप्रत्यक्षोत्तरमेव प्रागभावप्रत्यक्षमित्यायाति । तत्र सामग्रीप्रत्य सामग्र्युत्तरक्षणे एव वक्तव्यम् । यावच्च सामग्रीप्रत्यक्षं तावद् घटस्योत्पन्नतया प्रागभ विनाशात्तदानीं प्रागभावात्मकविषयविरहेण तदुत्तरक्षणे प्रागभावप्रत्यक्षमत्यन्तमसंभावि मिति सर्वजनानुभवसिद्धं तत्र प्रागभावप्रत्यक्षमिति कथनमुन्मत्तप्रलपनमात्रमेवेति भावः।

ननु चरमसामग्रीज्ञानं न चरमसामग्र्युत्तरक्षणे येन तदुत्तरं विषयविरहेण प्रत्यक्षा संभावितत्त्वं, किन्तु सामग्रीक्षणे तत्पूर्वक्षणे वा । एवं च विषयकाले एव तत्प्रत्यक्षं नु इत्याशङ्कां निराकरोति न चेति । चरमकारणोत्पत्तिक्षण इति । इदं प्रतियोगिनाश प्रागभावस्येति मतानुसारेण । विषयस्य प्रत्यक्षपूर्वमेवापेक्षा न तु प्रत्यक्षकालेऽपीति म नुसारेण वा । अन्यथा सामग्रीक्षणे तत्प्रत्यक्षस्य उत्तरक्षणे प्रागभावस्य विरहेण तत्प्रत्य प्रयोजकत्वायोगात् । प्रागभावस्य प्रतियोगिसामग्रीनाश्यत्वे तत्पूर्वेति । चरमसामग्रीपूर्व वेत्यर्थः । परामर्श इति । स्मरणाद्यात्मकपरामर्शो बोध्यः । सामग्र्युत्पत्तिक्षणे तदुत्प प्राक्क्षणे वा तत्प्रत्यक्षाऽसंभवात् । न च कथं स्मृत्यात्मकपरामर्शस्यापि संभवः सामग्र्या अनुत्पन्नायाः प्रागननुभवादिति वाच्यम् । तादृशसामग्रीत्वादिसामान्यलक्ष तादृशनिखिलसामग्रीणां भानसंभवेन सामान्यलक्षणावादिमतेऽनुपपत्तेरभावात् । न तत्तत्सामग्रीत्वेन सामग्रीज्ञानमावश्यकम् । तत्तत्सामग्रीत्वेन व्याप्तिग्रहस्योभयमतेऽ असंभवात् । पूर्वं=प्रागभावप्रत्यक्षपूर्वम् । प्रागभावप्रत्यक्षकाले इत्यपि बोध्य सामग्र्युत्पत्तिप्राक्क्षणे तत्स्मरणे उत्तरक्षणे विषयसंभवात् । विषयस्य सत्त्वादिति प्रागभावात्मकविषयस्य सत्त्वात्, तस्यानादित्वादिति भावः । एवं च तेन सह सन्निकर्ष ऽपि प्रागेव सुघट एव । अतिप्रसक्तत्वादिति । अयमर्थः—प्रागभावव्याप्यचर

## ❀ काशिकानन्दी ❀

कारणत्वत्ताया यदि स्मृतिभ्रमादिज्ञानसाधारणनिर्णयस्य प्रागभावव्यञ्जकत्वं तदा यत्र घटोत्पत्तितश्चिरकालं प्राक् कपाले चरमकारणवत्त्वभ्रमस्तदुत्तरं चरमकारणवत्त्वबाधस्तत्रापि घटप्रागभाववानित्याकारकप्रत्यक्षापत्तिः। विषयेण सह लौकिकसन्निकर्षस्य सत्त्वात्। न च तत्र प्रागभावप्रत्यक्षमिष्टमेवेति वाच्यम्। उत्तरक्षणे इह घटो न भविष्यतीत्यादि-बाधज्ञानसंशयादेस्तथा सति अनुत्पादापत्तेः। प्रागभावलौकिकप्रत्यक्षस्य जातत्वेन तस्यैवोत्तरक्षणे इह घटो न भविष्यतीति प्रत्यक्षप्रतिरोधित्वात्। न च चरमकारणप्रत्यक्षस्य व्यञ्जकत्वमिति मतेऽपि प्रागभावप्रत्यक्षोत्तरं बाधो न स्यादिति तुल्य उभयोर्दोष इति वाच्यम्। सामग्रीप्रत्यक्षोत्तरमुत्तरक्षणे घटप्रागभावस्य विरहेण बाधोत्पादे क्षतिविरहात्। न च प्रागभाववत्त्वाभावबुद्धिं प्रति सामग्र्यभावज्ञानविरहविशिष्टप्रागभाववत्त्वनिश्चयस्य विरोधित्वम्। यत्र घटप्रागभावव्याप्यचरमसामग्रीमानिति भ्रमबलेन प्रागभावप्रत्यक्षं तत्र इह न सामग्रीत्यादिनिश्चयसत्त्वे च तदुत्तरक्षणे इह न घटो भविष्यति इह न घटप्रागभाव इत्यादिबाधबुद्धौ बाधकाभाव एव सामग्र्यभावज्ञानविरहविशिष्टप्रागभावनिश्चयस्य तत्र विरहादिति वाच्यम्। यत्रानुमितिशाब्दाद्यात्मकप्रागभाववत्त्वनिश्चयस्तत्काले एव चरमकारणाभावज्ञानं च तत्रानुमित्याद्युत्तरक्षणे इह घटो न भविष्यतीत्यादि-बुद्ध्युत्पादापत्तेः। न हि वृद्धवचनादिभिर्जातप्रागभाववत्त्वबुद्धिकस्य चरमकारणवत्त्वाभावज्ञानेऽपि उत्तरकालं घटप्रागभावाभावबुद्धिर्दृश्यते। न च प्रागभावाभावबुद्धौ प्रागभाववत्त्वविषयकशाब्दादिनिश्चयस्य पृथक्प्रतिबन्धकत्वकल्पनान्न दोष इति वाच्यम्। एवं सति प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनस्यैवापत्तेः। चरमकारणाभावज्ञानविरहविशिष्टप्रागभाववत्त्वज्ञानत्वेन प्रतिबन्धकतायां गुरुभूतावच्छेदककल्पनापत्तेश्च। किं च घटोत्पत्त्युत्तरक्षणमपि इह चरमकारणमभूदिति ज्ञानात्प्रागभावप्रत्यक्षापत्तिः। विषयविरहादेव तदानीं व्यञ्जकसद्भावेऽपि प्रागभावस्य न प्रत्यक्षमित्युच्यमानेऽपि यत्र घटोत्पत्तिपूर्वमेव इह चरमकारणमभूदित्याकारको भ्रमस्तत्रैव घटप्रागभावप्रत्यक्षं दुर्वारम्। तदानीं विषयसत्त्वात्। न हि इह चरमकारणमभूदिति ज्ञानादिह घटो भविष्यतीति प्रत्यक्षं कस्यचिदानुभविकम्। न च वर्त्तमानकालीनसामग्रीमत्त्वज्ञानं व्यञ्जकमिति वाच्यम्। सामग्र्युत्पत्तेः प्राक्तादृशज्ञानासंभवात्। यस्य चरमकारणे वर्त्तमानत्वप्रतीतिर्नास्ति तस्य प्रागभावप्रत्यक्षानापत्तेश्च। अपि च प्रागभावव्याप्यचरमकारणवान् कपाल इत्याकारकं कपालत्वेनानेककपालादिकमवगाहमानस्मरणं कपालेन सह चक्षुःसन्निकर्षश्च तदुत्तरमिह कपाले घटो भविस्यतीतिप्रत्यक्षापत्तिः। न ह्येवं कस्यचिदनुभवः। उपस्थितकपाले चरमकारणवत्त्वस्य लौकिकानिश्चयात्। अस्मन्मते च तत्र कपालो घटप्रागभाववानित्येवानुमितिः। न तु इह कपाले घटप्रागभाव इत्येवं सन्निकृष्टकपालधर्मिकत्वेनानुमितिः। किं च घटप्रागभावव्याप्यसामग्रीमानयं कपाल इत्याकारकं भ्रमात्मकं प्रत्यक्षं ततः कालान्तरे यत्कपालस्य चाक्षुषं नायं तत्कपाल इत्येवं प्राग् दृष्टस्य स्वस्यैव स्वस्मिन्भेदग्रहश्च प्रागनुभूतव्याप्तिस्मरणं च तत्र इह कपाले घटो भविष्यतीति बुद्ध्यु-

❀ दीधितिः ❀

**यादृशकारणकलापानन्तरं कार्योत्पादो दृष्टस्तद्बुद्धेरेव** व्यञ्ज-

❀ जागदीशी ❀

**तल्लौकिकनिर्णयस्यैव हेतुतया पूर्वं तदसंभवादिति भावः।**

**तद्बुद्धेरेवेति। एवकारेण व्याप्यत्वादिधीव्युदासः। तथा च कार्योपधा-यकत्वेन चरमकारणवत्तालौकिकप्रत्यक्षमेव प्रागभावस्य व्यञ्जकमतः स्वरूप-**

❀ काशिकानन्दी ❀

त्वादापत्तिः। एतत्कपालत्वावच्छिन्ने प्राग् व्याप्यत्वज्ञानादिति दिक्।

**तल्लौकिकनिर्णयस्यैव**=लौकिकसन्निकर्षप्रयोज्यसामग्रीविषयनिर्णयस्यैव। हेतु-तया=प्रागभावव्यञ्जकतया। **पूर्वं**=सामग्र्युत्पत्तिकाले तत्पूर्वक्षणे वा। **तदसंभवात्**=सामग्रीलौकिकनिर्णयाऽसंभवात्। लौकिकप्रत्यक्षं प्रति विषयस्य कारणतया सामग्र्युत्पत्तिके तत्पूर्वक्षणे वा सामग्रीप्रत्यक्षाऽसंभवात्। एवं च सामग्र्युत्पत्त्युत्तरक्षणे एव तत्प्रत्य-वक्तव्यं, तदुत्तरं च तत्प्रयोज्यं प्रागभावप्रत्यक्षं, तावत्पर्यन्तं च विषयविरहेण तत्प्रत्यक्ष-दुरुपपादमेवेति भावः।

ननु "यादृशकारणकलापान्तरं कार्योत्पादो दृष्टस्तद्बुद्धेरेव व्यञ्जकत्वाभ्युपगमाद्" इति दीधितौ तद्बुद्धेरेवेत्येवकारेण यादृशकारणकलापानन्तरं कार्योत्पादो न दृष्टस्तादृशकारण-कलापव्युदासः प्रतीयते। स च न युक्तः। प्रागभावव्याप्यत्वेन चरमकारणवत्ताविषयक-बुद्धेरपि तथात्वेन तदव्युदासात्। न च व्याप्यत्वेन गृहीतायास्तथात्वं वाच्यमिति पूर्वो-व्याप्यत्वेव गृहीतसामग्रीव्युदासोऽपि प्रतीयत इति वाच्यम्। एवमपि पूर्वमगृहीतघटादिका-शिशूनां गृहीतघटादिकानामपि भ्रान्तानां प्रागभावव्यभिचारस्य सामग्र्यां बुध्यमानानां सामग्रीं पश्यतां प्रागभावप्रत्यक्षं दुर्वारमेव। तादृशसामग्र्युत्तरं घटोत्पत्तेर्दृष्टतया तद्विषयक-बुद्धेर्व्यञ्जकत्वाऽऽवश्यकत्वादित्याशङ्क्याह—**एवकारेण व्याप्यत्वादीति।**

नन्वेतावता किमायातं भवतापि व्याप्यत्वादिधीव्युदास एवोच्यते। न हि तत्र प्रागुक्तानां शिशूनां भ्रान्तादीनां वा तादृशप्रत्यक्षापत्तिवारणमित्याशङ्क्य व्याप्यत्वादीत्यत्रा-दिपदग्रहणान्न दोष इत्याशयेनादिपदग्राह्यं स्फुटयति—**तथा चेति।** **कार्योपधायकत्वेन** =कार्यविशिष्टत्वेन। **चरमेति।** कपालादावित्यादिः। **लौकिकप्रत्यक्षमेवेति।** एव-कारेण कार्योपधायकत्वेन चरमकारणवत्तालौकिकप्रत्यक्षेतरस्य निखिलस्यापि व्युदासः। न हि शिशूनां प्रागुक्तभ्रान्तानां वा तथाविधप्रत्यक्षमिति इदमेव दीधित्युक्तस्यैवकारस्य व्युदसनीयमिति भावः। तादृशप्रत्यक्षं तु कार्योत्पत्तिकाले एव संभवतीति तु द्रष्टव्यम्। कार्योपधायकत्वेन चरमकारणवत्ताया अलौकिकप्रत्यक्षस्य प्राक् संभवेऽपि प्रागभावप्रत्यक्षा-दर्शनाद्—**लौकिकेति।** **अतः**=कार्योपधायकत्वप्रत्यक्षयोर्निवेशेन। ननु दीधितौ

### ❀ जागदीशी ❀

स्तदनुभवे कार्योपधायकतत्स्मरणे वा न प्रागभावप्रत्यक्षम् । एतदभिप्रेत्यैवोक्तं—कार्योत्पादोदृष्ट इति ।

### ❀ काशिकानन्दी ❀

नैतादृशार्थो लभ्यते इत्याशङ्क्याह—एतदभिप्रेत्येति । कार्योपधायकत्वलौकिकप्रत्यक्षत्वयोः प्रवेशमभिप्रेत्येत्यर्थः । उक्तमिति । अन्यथा यादृशकारणकलापानन्तरं कार्योत्पादस्तद्बुद्धेरित्येव ब्रूयात् । अत्र च दृष्ट इत्यनेन लौकिकप्रत्यक्षविषयत्वमुच्यते । तथा च यादृशकारणकलापानन्तरकालीनदर्शनविषयः कार्योत्पाद इत्यर्थात् स्वानन्तरकार्योत्पाददर्शनस्यावश्यकत्वं सूच्यते । एवं च कार्योत्पाददर्शनविषयताभिन्नकारणकलापविषयकबुद्धिलाभात् कार्योपधायकत्वेन कारणलौकिकप्रत्यक्षमात्रेपवलाल्लभ्यत इति भावः ।

न चैवमपि घटोत्पत्तिक्षणे एव कारणकलापप्रत्यक्षसंभवात्तदुत्तरमेव प्रागभावप्रत्यक्षं वाच्यम् । तावत्पर्यन्तं च विषयविरहेण कथं तत्प्रत्यक्षसंभव इति वाच्यम् । प्रागभावस्य प्रतियोगिनाश्यत्वेन प्रतियोग्युत्तरक्षणे एव तन्नाशात् । विषयस्य प्रत्यक्षपूर्वक्षणवृत्तित्वेनैव प्रत्यक्षहेतुत्वात् ।

नन्वेतन्मतालम्बने प्रागभावव्याप्यचरमकारणवत्तानिश्चयस्यापि व्यञ्जकत्वसंभवात् "तावत्कालपर्यन्तं प्रागभावस्यासत्त्वेने"त्येवमुक्तक्रमेण तत्खण्डनमसंगमिति चेद् ?

न, पूर्वपक्षे तादृशपरामर्शोत्तरं प्रत्यक्षस्यानुभविकत्वमितिमताभिप्रायेणैव तादृशपरामर्शस्य प्रागभावव्यञ्जकत्वं साधनीयम् । न तु प्रत्यक्षसामग्र्या बलवत्त्वमभिधाय । परं प्रति प्रत्यक्षसमानविषयताया वक्तुमशक्यत्वात् । एतच्च यद्यपीत्यादिना प्रागेवास्माभिः प्रपञ्चितम् । कार्योपधायकत्वेन कारणप्रत्यक्षोत्तरजायमानप्रागभावज्ञानानुरोधेन प्रागभावप्रत्यक्षतायाः निरुक्तकारणप्रत्यक्षस्य व्यञ्जकतायाश्च सिद्धया सामान्यलक्षणासिद्धौ सत्यां पुनः समानविषयकत्वस्य वक्तुं शक्यत्वेऽपि व्यञ्जकद्वयस्वीकारापेक्षया कार्योपधायकत्वेन कारणप्रत्यक्षमात्रस्यैवावश्यकस्य व्यञ्जकत्वकल्पनं युक्तम् । तादृशपरामर्शोत्तरजायमानप्रागभावविषयकज्ञानस्य प्रत्यक्षतायां विवादेन परामर्शस्यानुमितिकारणतायाः क्लृप्ततया च तत्रानुमितेरेव स्वीकारौचित्याच्च । न तु तस्य व्यञ्जकत्वकल्पनं तदुत्तरजायमानज्ञानस्य प्रत्यक्षत्वकल्पनं च, गौरवात् । अस्माकमनुमितित्वमात्रं तादृशज्ञानस्य कल्पनीयमिति लाघवात् । न चैवं प्रागभावव्याप्यचरमकारणवत्त्वज्ञानस्य प्रागभावव्यञ्जकत्वविरहे "एवं चान्यत्र समानविषये प्रत्यक्षसामग्र्या बलवत्त्वेऽपि अत्र तदकल्पनात् प्रागभावस्यानुमितिरेव" इत्यादिवक्ष्यमाणजगदीशग्रन्थविरोधः । प्रत्यक्षसामग्रीसद्भावशङ्कायाः परामर्शे व्यञ्जकतां विनाऽसंभवादिति वाच्यम् । अन्यत्र = प्रत्यक्षसामग्रीस्थले । अत्र = प्रागभावव्याप्यचरमकारणवानितिपरामर्शस्थले । तदकल्पनात् = तदकल्पनादेव, प्रत्यक्षसामग्र्यकल्पनादेव, परामर्शस्य व्यञ्जकत्वाऽकल्पनादेवेति यावत् । पूर्वोक्तप्रत्यक्षापत्तिविरहादिति शेष इत्येवमर्थपरतया तद्ग्रन्थस्य नेयत्वात् ।

## ❀ काशिकानन्दी ❀

वस्तुतस्तु कार्योपधायकत्वेन चरमकारणप्रत्यक्षोत्तरजायमानप्रागभावज्ञानस्यानुरि- त्वाद्यसंभवेन प्रत्यक्षतासिद्धौ तदन्यथानुपपत्त्या प्रतियोगिनाश्यताया अपि प्रागभावे सिद्धे पुनः प्रागभावव्याप्यचरमकारणवानिति ज्ञानस्यापि व्यञ्जकत्वं तदुत्तरं प्रागभावप्रत्यक्षं च जगदीशाभिमतम्। अत एव "एवं चान्यत्र समानविषय" इत्याद्यग्रिमग्रन्थोक्तिः। अन्यथा तावत्कालपर्यन्तं विषयविरहादेव तत्प्रत्यक्षासंभवेन बलवत्त्वादिचिन्तनमफलं स्यादिति ध्येयम्।

केचित्तु प्रागभावव्याप्यचरमकारणस्य प्रागभावव्यञ्जकत्वमिति मते प्रत्यक्षसामग्री- कालेऽनुमितिसामग्र्या अवश्यभावितया तत्रानुमितिरेव भवति न तु प्रत्यक्षं, किमनुरोधेन तस्य प्रतियोगिनाश्यत्वमभ्युपेत्य प्रतियोगिकालवृत्तित्वमङ्गीकरणीयम्। न च समान- विषयकप्रत्यक्षसामग्र्या बलवत्त्वेन तत्र प्रत्यक्षमेव न त्वनुमितिरिति तादृशप्रत्यक्षानुरोधेन प्रतियोगिनाश्यत्वं प्रागभावस्य पूर्वमतेऽप्यावश्यकमिति वाच्यम्। प्रत्यक्षानुरोधेन प्राग- भावस्य प्रतियोगिनाश्यत्वकल्पनं प्रतियोगिनाश्यत्वे प्रागभावस्य सिद्धे च सति विषयसत्त्वे प्रत्यक्षकल्पनमित्येवमन्योन्याश्रयापातात्। न च कार्योपधायकत्वेन कारणकलापप्रत्यक्ष- स्थलानुरोधेनापि कथं प्रतियोगिनाश्यत्वसिद्धिरिति वाच्यम्। तत्रानुमितिसामग्र्या विरहात् प्रागभावानुभवस्य सर्वजनसिद्धत्वाच्चानन्यगतिकतया प्रागभावप्रत्यक्षस्यैव वाच्यत्वात्, तदनुरोधेन च प्रागभावस्य प्रतियोगिनाश्यत्वकल्पनाया आवश्यकत्वात्। न हि प्रागभावव्याप्यचरमकारणवत्त्वज्ञानस्थलेऽपि अगत्या प्रत्यक्षमेव स्वीकरणीयमिति शक्यं वक्तुम्। तत्र जायमानानुभवस्यानुमितिस्वरूपत्वेऽपि निर्वाहसंभवात्। न च पूर्वकल्पे प्रतियोगिनाश्यत्वमेव विनिगमकाभावात् किं न कल्प्येतेति वाच्यम्। प्रतियोगिनाश्यत्व- कल्पने कार्यस्य पुनरुत्पादवारणाय तस्य प्रतिबन्धकत्वकल्पने गौरवात्। न च कार्योपधायक- त्वेन कारणप्रत्यक्षस्य प्रागभावव्यञ्जकत्वमिति मतेऽपि इदं गौरवमिति वाच्यम्। एतन्मते प्रागभावानुभवस्यान्यथानुपपत्त्या गौरवस्याकिंचित्करत्वादित्याहुः।

तन्मन्दम्, कार्योपधायकत्वेन कारणप्रत्यक्षोत्तरजायमानप्रागभावानुभवानुरोधेन प्रागभावस्य प्रतियोगिनाश्यत्वसिद्धौ सत्यां पुनः प्रागभावव्याप्यचरमकारणवानित्याका- कारपरामर्शस्थलेऽपि अनुमितिमुद्धूय प्रत्यक्षोत्पत्तेः संभवात्। न हि एकस्मिन् स्थले प्रतियोगी प्रागभावनाशकः, अपरत्र च प्रतियोगिसामग्री प्रागभावनाशिका न तु प्रति- योगीत्यत्र काचन युक्तिरस्ति। तथा सति एकत्रैव कपाले एकेन पुरुषेण कार्योपधायक- त्वेन कारणकलापदर्शनम्, अपरेण च प्रागभावव्याप्यचरमकारणवत्त्वदर्शनं च सति तत्र प्रतियोग्युत्पत्तिकाले प्रागभावनाशाऽनाशोभयप्रसङ्गात्।

यद्यपि प्रतियोगिनाश्यतायाः प्रागभावे सिद्धौ सत्यां पुनः उक्तपरामर्शस्यापि व्यञ्जकत्वं कार्योपधायकत्वेनेत्यादिग्रन्थस्य प्रतियोगिनाश्यः प्रागभाव इति सूचनेऽपि तात्पर्यादित्यपि व्याख्यानं न समुचितम्। एवं सति तद्बुद्धेरेवेत्यत्रैवकारेण व्याप्यत्वादि-

❀ काशिकानन्दी ❀

वीत्युदास इति ग्रन्थासंगतेर्दुर्वारत्वात्।

तथापि अग्रिमग्रन्थानुरोधेन उक्तपरामर्शेऽपि व्यञ्जकताया जगदीशवाक्यतः आयातत्वात् एतामेवारुचिं मनसि निधाय व्याप्यत्वादीत्यत्र आदिपदमुपात्तम्। आदिपदमेव तथाचेत्यादिना स्फुटीकृतमित्येवं कथंचिद् ग्रन्थो नेयः।

अत्रेदं किंचिदालोचनीयम्। कार्योपधायकत्वेन चरमकारणवत्तालौकिकप्रत्यक्षं नाम कार्यविशिष्टतादृशकारणप्रत्यक्षं वा कार्योपलक्षिततादृशकारणप्रत्यक्षं वा। आद्ये कार्यवैशिष्ट्यस्य कार्योत्पत्तेः प्राग् विरहेण तदानीं विशिष्टप्रत्यक्षं दुरुपपादम्। कार्योत्पत्ति-द्वितीयक्षणे कथंचित्तत्प्रत्यक्षसंभवेऽपि कार्योत्पत्तितृतीयक्षणमेव प्रागभावप्रत्यक्षं वक्तव्यम्। तथा च तावत्पर्यन्तं प्रागभावविरहेण तत्प्रत्यक्षं कथमुपपाद्यताम्। प्रतियोगिनाश्यः प्रागभाव इति मतेऽपि प्रतियोग्युत्पत्तिद्वितीयक्षणे एव प्रागभावनाशेन तृतीयक्षणकल्प्य-मानप्रत्यक्षपूर्वक्षणेऽपि विषयविरहात्। द्वितीयपक्षे स्वरूपतः कारणज्ञानादपि प्रागभाव-प्रत्यक्षं दुरपनयम्। न चाऽव्यवहितपूर्वत्वसम्बन्धेन कार्यविशिष्टत्वमेव कार्योपधायकत्व-मिति न दोष इति वाच्यम्। कार्यस्य स्वाऽव्यवहितपूर्वक्षणेऽनुत्पन्नतया तल्लौकिक-प्रत्यक्षाऽसंभवात्। कार्योपधायकत्वेन चरमकारणलौकिकप्रत्यक्षस्यैव भवता व्यञ्जकत्वा-भ्युपगमात्। न च चरमकारणनिष्ठविशेष्यताया एव लौकिकत्वमपेक्षितं न तु कार्यनिष्ठ-विषयताया इति वाच्यम्। एवं सति घटपूर्वकालीनोऽयं कपालसंयोग इति ज्ञानादपि प्रागभावप्रत्यक्षापत्तेः। न च घटत्वेन रूपेण तत्कपालानुत्पद्यमानघटान्तरपूर्वकालीनत्व-स्यापि तादृशज्ञाने भानात्तथाविधज्ञानं न प्रागभावव्यञ्जकं किन्तु तत्कपालजन्यतद्घटप्राक्-कालीनत्वेन चरमकारणज्ञानमेवेति वाच्यम्। घटत्वेन रूपेण तस्यापि तत्र भानात्। न च तद्घटत्वेनैव तद्घटभानं तत्रापेक्षितमिति वाच्यम्। सामान्यलक्षणावादिनामपि तद्घटत्वेन भाविघटनानाऽसंभवेन तथा शङ्कितुमेवाशक्यत्वात्। न चाऽव्यवहितपूर्व-वर्त्तित्व-सामानाधिकरण्योभयसम्बन्धेन घटविशिष्टचरमकारणज्ञानमेव प्रागभावव्यञ्जकमिति वाच्यम्। एवमपि प्रथमं चरमकारणोत्पत्तिः द्वितीयक्षणे तत्क्षणे वा तेन सह सन्निकर्षः ततो निर्विकल्पकं ततः कार्यविशिष्टत्वेन चरमकारणप्रत्यक्षमिति तावत्पर्यन्तं प्रागभव-स्थितेरेवासंभवात् तदुत्तरं प्रागभावप्रत्यक्षायोगात्। किं च द्विक्षणपूर्ववर्त्तित्वसामाना-धिकरण्योभयसम्बन्धेन त्रिचतुरादिक्षणपूर्ववर्त्तित्व सामानाधिकरण्योभयसम्बन्धादिना वा उपचरमोपोत्तमचरमादिष्वपि कारणेषु कार्यवैशिष्ट्यस्य भानसंभवेन तादृशकारणज्ञानस्यापि प्रागभावव्यञ्जकत्वं सुवचम्। एवं च प्रागभावस्य प्रतियोगिनाश्यत्वमपि न कल्पनीयम्। न च द्वित्रिक्षणादिपूर्ववर्त्तिकारणेषु अनाश्वासः, कदाचित्तदुत्तरं कारणविघटनेन कार्यानु-त्पादस्यापि दृष्टत्वादिति न तत्र प्रागभावप्रत्यक्षसंभव इति वाच्यम्। चरमकारणेऽपि तुल्यत्वात्। तादृशविलक्षणकपालद्वयसंयोगात्मकचरमकारणोत्तरमपि कदाचित्कपाल-नाशेन घटानुत्पादस्य दृष्टत्वात्। समवायिकारणस्य कार्यकालवृत्तितयाऽपि कार्यं प्रति हेतुत्वेन कार्योत्पत्तिक्षणे एव तन्नाशेऽपि तदानीं कार्योत्पत्त्यसंभवात्। न च कार्योत्पत्ति-

## ❀ जागदीशी ❀

केचित्तु यादृशस्य प्रागभावप्रत्यक्षकारणकलापस्यानन्तरं कार्यीभूत

## ❀ काशिकानन्दी ❀

क्षणविशिष्टमेव चरमकारणमिति वाच्यम् । तथा सति तत्प्रत्यक्षं द्वितीयक्षणे ए वक्तव्यं तदानीं च प्रागभावनाशात्तत्प्रत्यक्षं तृतीयक्षणे दुर्घटमेव स्यात् । एवं च कपाल द्वयविलक्षणसंयोगात्मकचरमकारणवत्ताज्ञानस्य प्रागभावव्यञ्जकत्वमिति वदद्भि घटोत्पादव्यभिचाराऽग्रहसहितस्य कार्योपधायकत्वविशिष्टतज्ज्ञानस्य प्रागभावव्यञ्जकं वक्तव्यम् । तच्च उपचरमादिकारणानां कार्योपधायकत्वज्ञानस्य कारणत्वमिति स्वीकारे वक्तुं शक्यमिति तद्दर्शनकालेऽपि प्रागभावप्रत्यक्षं सुवचमेव । यत्र व्यभिचारग्र व्यभिचारसन्देहात्मकः तत्रोभयमतेऽपि प्रागभावप्रत्यक्षस्यानिष्टत्वात् । अत ए व्यभिचारग्रहविरहकाले विलक्षणचक्रभ्रम्यादिकमवलोकमानः पुमानपि इह घटोभविष्यतीत्ये प्रागभावं प्रत्येति । न चैवं यत्र प्रथमं कारणे कार्योपधायकत्वग्रहस्ततो घटो भविष्यती बुद्धिस्तस्मिन्नेव क्षणे तदुत्तरक्षणे वा व्यभिचारग्रहस्तत्र घटो न भविष्यतीति बुद्धिर्नोत्प प्रतिबन्धकसद्भावादिति वाच्यम् । प्रागभिहितदिशा प्रतिबध्यप्रतिबन्धकभावस्य कल्पनी -त्वात् । घटो भविष्यतीति निश्चयध्वंसोत्तरमेव घटो न भविष्यतीति बुद्ध्युत्पादा एवं च यादृशकारणकलापानन्तरं कार्योत्पादो दृष्ट इत्यादिदीधितिस्थं कारणकलाप न चरमकारणपरं, किन्तु विलक्षणकारणकलापपरमेव । तच्च चरमक्षणीयं तत्पूर्वक्षणी वा । एवमनन्तरपदमपि नाऽव्यवहितोत्तरपरम् । किन्तूत्तरमात्रपरम् । अनुयोगि विशेषेत्यादिदीधितिस्तु—ननु यत्र कार्योपधायकत्वेन कारणकलापप्रत्यक्षं तत्रोत्पद्यमान प्रागभावप्रतीतिरपि अनुमित्यात्मिकैव न तु प्रत्यक्षात्मिका । न च तदानीं नुमितिसामग्रीविरहात् कथमनुमितिः कार्योपधायकत्वेन कारणज्ञानस्यानुमित्यहेतुत्वादि वाच्यम् । तत्र कारणकलापे प्रागभावव्याप्यवत्ताज्ञानोत्पत्तेः कल्पनीयत्वेन अनुमि सामग्रीनिर्वाहात् । कार्योपधायकत्वेन कारणकलापदर्शनस्य प्रत्यक्षहेतुताकल्पने तत्राव्यवहितपूर्ववर्त्तित्वमनन्यथासिद्धत्वं च कल्पनीयमिति गौरवं तदपेक्षया तत्र परामर्शो त्पत्तिकल्पनाया एव युक्तत्वात् । परामर्शेऽव्यवहितपूर्ववर्त्तित्वाऽनन्यथासिद्धत्वयोः क्लृप्त त्वात् । न च कार्योपधायकत्वेन कारणकलापदर्शनेऽपि अव्यवहितपूर्ववर्त्तित्वं नियतमेव अत एवोत्तरं प्रागभावानुभवोत्पादः इति अनन्यथासिद्धत्वमात्रं कल्पनीयमिति न गौरवमिति वाच्यम् । घटव्याप्यसामग्रीमत्त्वज्ञानस्यापि व्यञ्जकत्वापत्त्या तज्जन्यप्रत्य व्यभिचारात् । कार्योपधायकत्वज्ञानेन प्रागभावप्रत्यक्षसिद्धौ सामान्यलक्षणासिद्धेः परामर्श स्यापि प्रत्यक्षजनकत्वसंभवादित्याशङ्कायामवतारणीया इति ।

यादृशकारणेत्यादिदीधितौ कारणपदं न घटादिकारणपरं किन्तु प्रागभावप्रत्यक्षकारण परं, कार्योत्पादपदं च प्रागभावप्रत्यक्षोत्पादपरं, तद्बुद्धिपदमपि न कारणकलापविषयबुद्धि परमपि तु कारणकलापान्तःपातिबुद्धिव्यक्तिपरं, तथा च यद्बुद्धिघटितकारणकलापेन प्रागभाव प्रत्यक्षं, तद्बुद्धिः प्रागभावव्यञ्जिकेत्यर्थः इत्याशयवतां केषांचिन्मतमाह—केचित्त्विति ।

❀ दीधितिः ❀

कत्वाभ्युपगमात् । अनुयोगिताविशेषादिरूपप्रागभावत्वादेः क्वचिदप्र-

❀ जागदीशी ❀

प्रागभावप्रत्यक्षस्योत्पादो दृष्टः = प्रमाणसिद्धः, तद्बुद्धेरेव = तादृशकारणकलापान्तर्गतबुद्धिव्यक्तेरेव, प्रागभावव्यञ्जकत्वोपगमादित्यर्थः । तथा च प्रागभावव्याप्यत्वाद्यविषयकस्यापि चरमकारणविषयकतज्ज्ञानस्यैव विशिष्य प्रागभावप्रत्यक्षहेतुत्वोपगमान्न तस्याप्यनुमितिरिति भावः । तेन स्वरूपतो ज्ञानादिकमादाय नातिप्रसङ्गलेशोऽपीत्याहुः ।

ननु प्रागभावव्याप्यचरमसामग्रीमत्त्वज्ञानमेव प्रागभावग्रहे हेतुः । परामर्शस्यानुमितिहेतुतायाः क्लृप्तत्वाद् न तु कार्योपधायकतया सामग्रीमत्त्वज्ञानं तथा, कारणान्तरकल्पनागौरवात् । एवं चान्यत्र समानविषये प्रत्यक्षसामग्र्या बलवत्त्वेऽपि अत्र तदकल्पनात्प्रागभावस्यानुमितिरेव जायतामतः प्रत्यक्षाऽसत्त्वेऽनुमानमपि प्रागभावस्य दुर्घटमित्याह अनुयोगितेति । अनुयोगित्वं

❀ काशिकानन्दी ❀

चरमेति । यज्ज्ञानोत्तरं प्रागभावप्रत्यक्षं दृष्टं तादृशतथाविधज्ञानव्यक्तेरित्यर्थः । न च विनिगमनाविरहात्कारणान्तरस्यापि प्रागभावव्यञ्जकत्वं स्यादिति वाच्यम् । कारणान्तरस्य प्रागभावादिना सह सन्निकर्षादेः सत्त्वेऽपि प्रागभावप्रत्यक्षानुदयेन बुद्धिव्यक्तेरेव व्यञ्जकत्वस्वीकारौचित्यादित्यभिमानः । तस्य = प्रागभावस्य । अपिकार एवकारार्थे । अनुमितिरित्यनन्तरं योज्यः । न तस्यानुमितिरेव किन्तु प्रत्यक्षमपीत्यर्थः । नातिप्रसङ्गलेशोऽपीति । स्वरूपतो ज्ञानादेः कारणकलापानन्तर्गतत्वादिति भावः । आहुरिति अरुचिबीजन्तु प्रागभावप्रत्यक्षस्य विवादग्रस्ततया परिचायकाऽप्रसिद्ध्या तत्तद्व्यक्तित्वेन प्रत्यक्षहेतुत्वकल्पनाऽयोगः । न चानुयोगिताविशेषेत्यादिना प्रत्यक्षस्य साधयिष्यमाणतया तत्र व्यञ्जकजिज्ञासायामयं ग्रन्थ इति वाच्यम् । एवंविधार्थस्य ग्रन्थतोऽप्रतीतेः ।

कार्योपधायकत्वेन कारणकलापज्ञानस्य प्रागभावग्रहहेतुत्वमेव नास्ति किमनुरोधेन प्रागभावप्रत्यक्षसिद्धिरिति शङ्कते—नन्विति । नन्वेवं प्रागभावग्रहः कुत्रापि न स्यादत आह—प्रागभावव्याप्येति । ननु प्रागभावव्याप्यचरमसामग्रीमत्त्वज्ञानस्यापि हेतुत्वं मास्त्वत आह—परामर्शस्येति । तथा = प्रागभावग्रहहेतुः । अत्र युक्तिमाह—कारणान्तरेति । गौरवादिति । कार्योपधायकत्वेन तज्ज्ञानकारणताया अक्लृप्तत्वादिति भावः । बलवत्त्वेऽपीति । प्रतियोगिनाश्यत्वं प्रागभावस्येति मत्वेदम् । अत्र = प्रागभावग्रहस्थले । तदकल्पनात् = प्रत्यक्षसामाग्र्या बलवत्त्वाऽकल्पनात् । वस्तुतस्त्वेवं सति प्रागभावव्याप्यचरमकारणवत्त्वज्ञाने प्रागभावव्यञ्जकत्वकल्पनं तन्निबन्धनसामग्रीकल्पनं च विफलमेव स्यादिति प्रत्यक्षसामग्र्या बलवत्त्वनियमभञ्जनमपि अयुक्तमेवेति तु विभावनीयम् । अतः = इत्याशङ्क्य । दुर्घटमिति । त्वन्मते प्रागभावस्य कुत्राप्यदृष्टतया प्रागभावत्वेन तदनुमानाऽ

❀ दीधितिः ❀

तीतौ ताद्रूप्येणानुमानासंभवाच्चेति चेत् ?

❀ जागदीशी ❀

घटादिनिष्ठप्रतियोगितानिरूपितस्वरूपसम्बन्धविशेषः । आदिपदादखण्डोपा-
धिरूपस्य प्रागभावत्वस्य परिग्रहः । प्रागभावत्वादेरिति । आदिपदात्तदीय-
व्याप्त्याद्युपग्रहः । ताद्रूप्येण=प्रागभावत्वरूपेण । असंभवादिति । तथा-
चानायत्यैव तत्प्रत्यक्षमास्थेयमिति भावः ।

घटो भविष्यतीतिशब्दाभिलप्यमानोऽर्थ एव यदि भविष्यत्त्वं तदा तस्या-
तीन्द्रियत्वेन प्रत्यक्षमेव नास्ति कुतस्तत्र प्रतियोगिविषयताया रक्षायै सामान्य-

❀ काशिकानन्दी ❀

संभवाद् प्राग्व्याप्तिग्रहविरहादिति भावः ।

ननु कपालोऽणुजन्यः इत्यादौ, सुखप्रत्यक्षं मनोजन्यं चाक्षुषाद्यन्यत्वे सति प्रत्यक्ष-
त्वादित्यादौ चाणुत्वादिनाऽदृष्टाणुमनआदीनामनुमितिविषयत्वदर्शनाद् दृष्टस्यैवानुमिति-
रित्ययुक्तम् । न च शब्दजन्यप्रतीतिमादायैव तत्रोपपत्तिरिति वाच्यम् । प्रागभावस्या-
तत्त्वेन शाब्दसंभवात् । सामान्यलक्षणया प्रमेयत्वादिना निखिलप्रमेयोपस्थितौ तत-
पश्चात्प्रमेयत्वादिमोषेण मनस्त्वादिप्रकारकानुमितिरुत्पद्यत इत्यपि प्रागभावस्थले तुल्यम्
द्रव्यादिजनकप्रमेयवान् कपाल इत्याद्यनुमितावपूर्वप्रागभावत्वादेरपि भानसंभवेन प्रमेयत्व-
मोषेण प्रागभावत्वेनापि व्याप्तिग्रहस्य सुवचत्वादिति चेद् ?

सत्यम्, यस्य शाब्दमानुमानिकं वा निखिलप्रमेयादिप्रत्यक्षं नोत्पन्नं तस्यैव प्रागभा-
वत्वेन तदननुमितेरभिधानादिति ।

स्वरूपसम्बन्धविशेष इति । न तु जन्याभावत्वं, घटादेरपि जन्यत्वाद् घटप्रागभा-
भावत्वाच्च घटात्यन्ताभावप्रागभावस्वरूपतापत्तेः । नापि जन्यत्वे सति भावभिन्नत्वं, घट-
घटध्वंसप्रागभावत्वानापत्तेः । एवं च जन्यत्वं घटादौ प्रतीत्य अभावत्वं भावभिन्नत्वं
वाऽत्यन्ताभावादौ प्रतीत्य ताभ्यां रूपाभ्यां व्यापकत्वग्रहादनुमितिसंभवेन प्रत्यक्षासिद्धि-
त्यपि न शक्यं वक्तुमिति भावः । मतान्तरेणाह आदिपदादिति । अखण्डेति । जन्या-
भावत्वरूपत्वे प्रागुक्तदोषादिति भावः । तदीयव्याप्त्याद्युपग्रहः=प्रागभावनिरूपितव्या-
प्त्याद्युपग्रहः । व्यापकतावच्छेदकत्वेन प्रागभावत्वस्य व्याप्तिग्रहे मानावश्यकत्वादिति भावः ।
तत्प्रत्यक्षं=प्रागभावत्वेन प्रागभावप्रत्यक्षम् ।

तस्य=भविष्यत्त्वस्य । अतीन्द्रियत्वेनेति । वक्ष्यमाणदिशेत्यादिः । तत्र=घटो
भविष्यतीतिशब्दप्रयोजके प्रत्यक्षत्वेनाभिमते । प्रतियोगिविषयतायाः=भाविघटविष-
यतायाः ।

❀ दीधितिः ❀

भविष्यत्त्वं हि न वर्त्तमानप्रागभावप्रतियोगित्वम् । श्वो भाविनि अद्य भविष्यतीति प्रत्ययप्रसङ्गात् ।

❀ जागदीशी ❀

लक्षणा स्वीकार्या इत्याशयेनाह भविष्यत्त्वं हीति । भविष्यतीति पदाभिलप्यमानं हीत्यर्थः ।

गुरवस्तु—ननु घटो भविष्यतीतिशब्देनाभिलप्यमानो योऽर्थस्तज्ज्ञानमेव प्रत्यक्षं, किं वा कार्यानुत्पाददशायामिह कपाले घटो नास्तीत्याकारकम्, इहेदानीं घटो नास्तीत्याकारकं वा ? । नाद्य इत्याह भविष्यत्त्वं हीति । द्वितीयादिवितर्कस्य पश्चाद् दूष्यत्वादिति प्राहुः ।

नष्टादावपि भविष्यतीतिप्रयोगापत्तिरत उक्तं वर्त्तमानेति प्रागभावविशेषणम् । तच्च तत्प्रयोगकालीनत्वम् । श्वोभाविनीति । श्वोभाविघटीयप्रागभावस्याद्यापि वर्त्तमानत्वात् । न चाद्यादिकालस्य प्रतियोगिन्येवान्वयः, तथा सति अद्य भाविनि परश्वो भविष्यतीति प्रसङ्गात् । अद्यभाविनः परश्वोऽपि वृत्तेः । नापि प्रागभावे प्रतियोगिनि चोभयत्र कालादेरन्वयान्नैव-

❀ काशिकानन्दी ❀

प्रत्यक्षं = प्रागभावप्रत्यक्षम् । यदीयघटविषयतानुरोधेन सामान्यलक्षणा सिद्ध्येदिति शेषः । इत्याकारकमिति । प्रत्यक्षमित्यस्यानुषङ्गः । कालाऽघटितमुक्त्वा कालघटितमाह—इहेदानीमिति । पश्चादिति । कार्यानुत्पाददशायां चाभावधीः सामयिकात्यन्ताभावमवगाहत इत्यादिनेति शेषः ।

नष्टादाविति । आदिना उत्पन्ने । घटादाविति शेषः । प्रयोगापत्तेरिति । कार्यमात्रे प्रागभावप्रतियोगित्वसत्त्वादिति भावः । वर्त्तमानेति विशेषणमिति । तथा च नष्टादौ भूतकालीनप्रागभावप्रतियोगित्वस्यैव सत्त्वान्न तत्र भविष्यतीति प्रयोगापत्तिरिति भावः । ननु भूतकालोऽपि तत्कालीनपुरुषं प्रति वर्त्तमानकाल एवेति वर्त्तमानत्वविशेषणव्यावर्त्यं दुर्वचमित्यत आह—तच्चेति । वर्त्तमानत्वं चेत्यर्थः । तत्प्रयोगकालीनत्वमिति । घटो भविष्यतीत्यादितत्तत्प्रयोगकालीनत्वमेव तत्तत्प्रयोगबोध्यवर्त्तमानत्वमित्यर्थः । अद्यापि वर्त्तमानत्वादिति । अद्यत्वस्य प्रागभावविशेषणत्वे अद्य घटो भविष्यतीति प्रयोगप्रसङ्ग इति शेषः । प्रतियोगिनि = घटादौ । एवं च घटप्रागभावस्याद्यतनत्वेऽपि घटात्मकप्रतियोगिनोऽद्यपदार्थान्वयिनोऽद्यविरहादेव न तादृशप्रयोगापत्तिरिति भावः

अद्य भाविनीति । घटादाविति शेषः । परश्वो भविष्यतीति । प्राञ्चो परश्वो गमिष्यतीत्याद्यग्रिमदीधित्यनुसारेण परश्वःपर्यन्तम् । तच्च तत्रैवोपपादयिष्यामः । नैव-

❀ दीधितिः ❀

किन्तूत्पत्स्यते भविष्यतीत्यादेः समानार्थकत्वाद् वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं, वर्त्तमानकालोत्तरकालोत्पत्तिकत्वं वा तत्त्वम् । २

❀ जागदीशी ❀

मिति युक्तम् । आद्यक्षणे घटो भविष्यतीति प्रयोगानुपपत्तेः । घटतत्प्रागभावयोरेकक्षणाऽवृत्तित्वादिति भावः

उत्पत्तिरवश्यं भविष्यत्त्वघटिकेत्यत्र हेतुः—सामानार्थकत्वादित्यन्तम् । स्वयं प्रागभावाऽस्वीकारादाह वर्त्तमानकालेति । अत्रोत्पत्तिरपि ध्वंसघटिता ग्राह्या ।

❀ काशिकानन्दी ❀

मिति । श्वोभाविघटस्याद्य सत्त्वेऽपि तत्प्रतियोगिनोऽद्य विरहान्नाद्य भविष्यतीति तत्र प्रयोगः । एवमद्य भाविघटस्य परश्वःसत्त्वेऽपि तत्प्रागभावस्य परश्वो विरहान्न दोषः । आद्यक्षणेति । उपलक्षणमिदं यत्किंचित्क्षणस्य । एवं चेत उत्तरक्षणे घटो भविष्यतीतो द्वितीयक्षणे घटो भविष्यतीत्यादिप्रयोगा न स्युः एकस्मिन् क्षणे घटतत्प्रागभावयोरसंभवादिति भावस्तदाह—घटतत्प्रागभावयोरिति । एकक्षणाऽवृत्तित्वादिति । इदं प्रतियोगिसामग्रीनाश्यत्वं प्रागभावस्येति मतेन । प्रतियोगिनाश्यत्वं तस्येति मते तु प्रतियोग्युत्पत्तिक्षणे प्रतियोगितत्प्रागभावयोरेकक्षणवृत्तित्वात् । परन्त्वेकपदार्थस्य धात्वर्थे तदन्वयानन्वयानुभवादेव तन्मतेऽपि वक्ष्यमाणार्थस्वीकार आवश्यक इति बोध्यम् ।

भविष्यत्त्वघटिका = भविष्यत्पदार्थे घटकीभूता । दीधितौ – वर्त्तमानेति । वर्त्तमानप्रागभावस्य प्रतियोगिनी उत्पत्तिर्यस्य तत्त्वमिति विग्रहः । एवं वर्त्तमानकालोत्तरकाले उत्पत्तिर्यस्य तत्त्वमिति । भवति च भाविघटे वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वम् । वर्त्तमानकालोत्तरकालोत्पत्तिकत्वं चेति तत्र घटो भविष्यतीति प्रयोगोपपत्तिः । अत्र = द्वितीयलक्षणे । उत्पत्तिरपीति । अपिना वर्त्तमानकालोत्तरत्वम् । तथा च वर्त्तमानप्रागभावध्वंसात्मककालवृत्त्युत्पत्तिकत्वमिति फलति । तेन वर्त्तमानकालध्वंसाधिकरणमहाकालवृत्त्युत्पत्तिकत्वस्यातीतघटादावपि सत्त्वेऽपि नातीतघटादौ अद्य घटो भविष्यतीत्यादिप्रयोगः । ध्वंसादेः कालत्वं नास्तीति यद्याग्रहः तदा स्वध्वंसाधिकरणत्वस्वानधिकरणत्वोभयसम्बन्धेन वर्त्तमानकालविशिष्टकालत्वं वर्त्तमानकालोत्तरकालत्वम् । ध्वंसघटितेति । स्वध्वंसानधिकरणत्वे सति स्वाधिकरणीभूतो यः क्षणः तद्वृत्तित्वं स्वोत्पत्तित्वं वक्तव्यमिति भावः । ग्राह्येति । न तु वर्त्तमानकालवृत्तिप्रागभावप्रतियोगिकालत्वं वर्त्तमानकालोत्तरकालत्वं, न वा तदुत्पत्तिस्तदधिकरणकालावृत्तिप्रागभावप्रतियोगिसमयसम्बन्धरूपा ग्राह्या । प्रागभावमनभ्युपगम्यैव द्वितीयलक्षणप्रवृत्तेरिति भावः ।

### ❁ दीधितिः ❁

वेदमध्यक्तम्, उत्पत्तेरतीन्द्रियत्वात् ।

### ❁ जागदीशी ❁

इदं = निरुक्तभविष्यत्त्वम् । अतीन्द्रियत्वादिति । तथा चानुमानादिनैव तज्ज्ञानं वाच्यमिति अनागतभानार्थं न सामान्यप्रत्यासत्त्यादरः ।

यद्यपि भविष्यत्त्वस्यातीन्द्रियत्वेऽपि भाविघटविशेषिततदलौकिकप्रत्यक्षानुरोधेनैव सामान्यप्रत्यासत्तिरावश्यकी तस्य प्राचीनघटावगाहित्वे तु भ्रमत्वापत्तेः । तथापि वक्ष्यमाणक्रमेण शब्दादनुमानाद्वा घटत्वादिप्रकारेण भाविनो घटादेर्ज्ञानोत्पत्त्या विनापि सामान्यलक्षणां भाविघटादेर्भविष्यत्त्वभानं भविष्यतीति सिद्धान्तनिगर्वः ।

### ❁ काशिकानन्दी ❁

दीधितौ उत्पत्तेरतीन्द्रियत्वादिति । घटादेरुत्पत्तिर्हि घटाधिकरणकालध्वंसानधिकरणघटाधिकरणकालनिरूपितघटप्रतियोगिकसम्बन्धरूपा । न तु तादृशकालनिरूपितसम्बन्धसामान्यरूपा । तथा सति घटोत्पत्तेः पटेऽपि सत्त्वापत्तेः । घटोत्पत्तिमान् पट इति व्यवहारापत्तेश्च । एवं च घटप्रतियोगिकसम्बन्धस्यैव घटोत्पत्तित्वे तस्यातीन्द्रियत्वम् । उत्पन्नं द्रव्यं क्षणमगुणमिति न्यायेन चक्षुःसंयोगात्मकघटप्रत्यक्षजनकगुणस्य घटे तदानीमसंभवेन तत्प्रतियोगिकत्वेन सम्बन्धस्यापि ग्रहणाऽसंभवात् । एवमतीन्द्रियमनःक्रियादिरूपत्वाधिकरणकालस्य ध्वंसोऽप्यतीन्द्रिय इति तदधिकरणत्वाभावस्याप्यतीन्द्रियत्वादिकं द्रष्टव्यम् । अनुमानादिना = कपालो घटोत्पत्तिप्रागभाववान् विलक्षणकारणवत्त्वादित्याद्यनुमानादिना । तज्ज्ञानं = भविष्यत्त्वभानम् ।

ननु भविष्यत्त्वस्यातीन्द्रियतया घटो भविष्यतीत्याद्याकारकप्रत्ययस्य लौकिकत्वासंभवेऽपि घटोभविष्यतीत्यादिव्यवहारप्रयोजक-घटविशेषितभविष्यत्त्वविषयकमानसप्रत्यक्षानुरोधेनैव सामान्यलक्षणासिद्धिरित्याशङ्कते—यद्यपीति । भाविघटेति । घटो भविष्यतीतिव्यवहारप्रयोजकेत्यादिः पूरणीयः । तदलौकिकप्रत्यक्षेति । भविष्यत्त्वविषयकमानसप्रत्यक्षेत्यर्थः । आवश्यकीति । न च सामान्यप्रत्यासत्त्यापि उत्पत्तिघटकतत्तद्व्यक्तित्वभानं कथमिति वाच्यम् । प्रमेयत्वादिसामान्यलक्षणया तत्प्रत्यक्षोत्तरं मानसप्रत्यक्षानुरोधेन प्रमेयत्वमोषेण तद्व्यक्तित्वस्य स्वरूपतो भानस्यागत्या स्वीकार्यत्वादिति भावः । तस्य= घटविशेषितभविष्यत्त्वमानसस्य ।

योग्यताबलात् पक्षधर्मताबलाद्वा प्रमेयत्वादिना निखिलप्रमेयविषयकात् शब्दाद् अनुमानाद्वा पश्चात्तज्जन्यसंस्कारेण प्रमेयत्वमोषेण स्वरूपतस्तद्व्यक्तित्वस्मृतौ तदुपनीततया भाविघटस्य तद्व्यक्तित्वेन भानसंभवात्सामान्यलक्षणा व्यर्थेति समाधत्ते—तथापीति ।

अनुमानाद्वेति । कालःप्रमेयवानित्याद्यनुमानाद्वेत्यर्थः । घटत्वादीति । आदिना प्रमेयत्वादिः । घटादेरिति । आदिना तद्व्यक्तित्वादिकम् । भानं भविष्यतीति ।

❀ दीधितिः ❀

**इहाद्य घटो भविष्यतीत्यादौ च तादृशोत्पत्तेर्देशविशेषः कालविशेषश्चाधिकरणत्वेन प्रतीयते, न तु प्रागभावस्योत्पत्तिमतो वा।**

❀ जागदीशी ❀

ननूक्तेऽपि भविष्यत्त्वे कालादेस्तद्घटकप्रागभावान्वयित्वे पूर्वोक्तातिप्रसङ्गतादवस्थ्यमत आह इहेति। इत्यादौ=इत्यादिप्रयोगे। तादृशोत्पत्तेः=विद्यमानप्रागभावप्रतियोग्युत्पत्तेः। देशविशेषः=कपालादिः। कालविशेषश्च=अद्येत्यादिः। अधिकरणत्वेनेति। प्राचां मते भेदार्थकविभक्तिसमवधानस्थले नामार्थधात्वर्थयोरपि भेदेनान्वयस्योपगमात्। अधिकरणताविशेषणत्वेनेति वाऽर्थः। तथा च इहाद्य घटो भविष्यतीत्यादौ वर्त्तमानप्रागभावप्रतियोगिनी या एतत्कपालादिवृत्तिरद्यादिकालवृत्तिरुत्पत्तिः तदाश्रयो घट इत्याकारः शाब्दबोधः। उत्पत्तिमतो वेति। अधिकरणत्वेन प्रतीयत इत्यनुषञ्जनीयम्।

❀ काशिकानन्दी ❀

तादृशानुमितिप्रभृतिजन्यस्मरणोपनीतत्वेनैव मानसप्रत्यक्षे भाविघटविशेषितभविष्यत्त्वमानसंभवादिति भावः।

तद्घटकेति। भविष्यत्त्वघटकेत्यर्थः। पूर्वोक्तातिप्रसङ्गेति। श्वोभाविनि अद्य भविष्यतीति प्रत्ययापत्तिरूपातिप्रसङ्गेत्यर्थः। तादवस्थ्यमिति। श्वोभाविघटोत्पत्तिप्रागभावस्याप्यद्य सत्त्वादिति भावः। ननु इहपदमद्यपदं चाव्ययत्वेऽपि नामार्थ एव। तत्र उत्पत्तेः कथमधिकरणत्वसम्बन्धेनान्वयः। नामार्थधात्वर्थयोर्भेदान्वयस्याऽव्युत्पन्नत्वादित्याशङ्क्याह—प्राचामिति। भेदार्थकविभक्तीति। इहेत्यादौ देशादिवाचकेदंशब्दात् सप्तम्यर्थे 'ह' प्रभृतिप्रत्ययः। "प्रागदिशोविभक्तिः" इति सूत्रेण विभक्तित्वं च। अन्वयस्योपगमादिति। निपातातिरिक्तनामार्थधात्वर्थयोरेव भेदान्वयाभावनियमे तु नैतच्छङ्कावकाशः। अधिकरणताविशेषणत्वेनेति। एतद्देशनिष्ठाधिकरणतानिरूपितवृत्तितावान् इति शब्दार्थः। तत्र च देशविशेषोधिकरणताविशेषणम्। एवमद्येत्यत्रापि द्रष्टव्यम्। तदेव स्फुटयन्नाह—तथाचेति। एतत्कपालादिवृत्तिः=एतत्कपालनिष्ठाधिकरणतानिरूपितवृत्तितावती। अद्यादिकालवृत्तिः=अद्यादिकालनिष्ठाधिकरणतानिरूपितवृत्तितावती। एतावदर्थस्वीकारेण न भेदान्वयोऽपि स्वीकर्त्तव्य इति भावः। उत्पत्तिमत इति। उत्पत्तिमान्—घटादिः। न तु प्रागभावस्य उत्पत्तिमतो वा कालविशेषो देशविशेषश्चाधिकरणत्वेन प्रतीयत इत्यन्वयः।

ननु 'देशविशेषः कालविशेषश्चाधिकरणत्वेन प्रतीयते न तु प्रागभावस्योत्पत्तिमतो वा' इत्येतदनन्तरम् 'अतएवे'त्यनेन देशविशेषकालविशेषयोरधिकरणत्वेन प्रत्ययादित्यर्थः प्रतीयते। स च न युक्तः। तादृशप्रत्ययस्य वक्ष्यमाणबुद्ध्यभावेऽप्रयोजकत्वात्

❀ दीधितिः ❀

अत एव कपालनाशजन्यघटनाशस्य घटाद्यात्मकतत्प्रागभाववत्यपि तत्र कपाले न 'इह घटध्वंसो भविष्यती'ति बुद्धिः।

❀ जागदीशी ❀

कालस्य प्रागभावान्वये श्वोभाविन्यद्य भविष्यतीति प्रयोगप्रसङ्गस्य पूर्वमुक्तत्वाद् देशस्य प्रागभावान्वये दोषमाह अत एवेति। यतो न प्रागभावे देशकालयोरन्वयोऽत एवेत्यर्थः। घटादीति। आदिना घटप्रागभावसंग्रहः। तत्रापि घटध्वंसप्रागभावत्वस्य प्राच्यैः स्वीकारात्। तत्प्रागभावेति। घटनाशप्रागभावेत्यर्थः। तत्र = स्वनाशनाश्यघटके कपाले। नेति। अस्य बुद्धिरित्यनेन सम्बन्धः। न च घटध्वंसस्य प्रागभावो न घटादिः, किन्त्वतिरिक्त एव। स च तादृशकपाले नास्तीति नोक्तदोष इति वाच्यम्। प्राचां

❀ काशिकानन्दी ❀

व्याचष्टे—यतो नेति। प्रागभावे इति। उपलक्षणमिदम्। उत्पत्तिमति तदन्वयाभावफलस्यापि न वेत्यादिनाऽग्रे दर्शयिष्यमाणत्वात्। तत्रापि = घटप्रागभावेपि। स्वीकारादिति। घटध्वंसप्रागभावो घट-घटप्रागभावोभयस्वरूपः। न तु घटमात्रस्वरूपो घटप्रागभावस्वरूप एव वा। प्रागभावस्यानादितया प्रतियोगिप्राक्क्षणपर्यन्तस्थायितया तदेकस्वरूपत्वाऽसंभवात्। घटस्यानादित्वविरहात्। घटप्रागभावस्य तु घटध्वंसप्राक्क्षणपर्यन्तस्थायित्वविरहाच्चेति भावः। स्वनाशनाश्यघटके। स्वं = कपालः। तन्नाशेन नाश्यो घटो यस्य तस्मिन्नित्यर्थः। घटनाशो हि द्विविधः। कपालनाशं विनैव मुद्गरादिपातजन्यः। कपालनाशजन्यश्च। तत्र मुद्गरपातजन्यघटध्वंसस्थले इह कपाले घटध्वंसो भविष्यतीति धीर्जायते ध्वंसस्य समवायिकारणवृत्तितया कपाले तत्सत्त्वात्। कपालनाशजन्यघटध्वंसस्थले तु इह कपाले घटध्वंसो भविष्यतीति न बुद्धिः। कपालस्यैव तदानीमसंस्थास्यमानतया तत्र तद्बुद्ध्यसंभवात्। यदि च इह कपाले घटध्वंसो भविष्यतीत्यादिप्रत्यये एतद्देशवृत्तित्वं प्रागभावे एव भासेत तदा कपालनाशजन्यघटध्वंसस्थलेऽपि इह कपाले घटध्वंसो भविष्यतीति बुद्धिः स्यात् घटध्वंसप्रागभावस्य लाघवेनात्यन्ताभावाभाववत् घट-घटप्रागभावोभयस्वरूपत्वात्तदुभयस्य च कपाले सत्त्वात्। उत्पत्तौ देशस्यान्वये तु नायं दोषः। तथा हि कपालवृत्तित्वं घटध्वंसोत्पत्तौ तदा वक्तव्यम्। तच्च न संभवति। कपालस्य घटनाशप्राक्क्षणे तत्क्षण एव वा विनष्टतया घटध्वंसस्य कपालवृत्तित्वाऽसंभवादिति भावः।

घटादिः = घटतत्प्रागभावस्वरूपः। अतिरिक्तः = सप्तमपदार्थरूपः। स च = घटध्वंसप्रागभावश्च। तादृशकपाले = स्वनाशनाश्यघटके कपाले। नोक्तदोषः = न कपालनाशनाश्यघटके कपाले इह घटध्वंसो भविष्यतीति बुद्ध्यापत्तिरूपदोषः।

❀ दीधितिः ❀

**न वा भवने श्वः समुत्पद्य प्राङ्गणे परश्वो गमिष्यति मैत्रे प्राङ्गणे परश्वो भविष्यतीति धीः ।**

❀ जागदीशी ❀

मतेनोक्तत्वात् । नव्यमतेऽपि देशविशेषस्य उत्पत्तिविशेषणतयैवाऽन्वयस्य आनुभविकत्वादिति भावः ।

उत्पत्तिमति देशकालयोरधिकरणत्वेनान्वये दोषमाह **न वेति** । न चोत्पत्तिमति प्रागभावे चोभयत्रैव देशकालयोरन्वयो वक्तव्य इति प्रागभावस्य परश्वःप्राङ्गणयोरसत्त्वान्न दोष इति वाच्यम् । आद्यक्षणे घटो भविष्यतीति प्रयोगानुपपत्तेः । घटतत्प्रागभावयोरेकक्षणाऽवृत्तित्वादिति भावः ।

परश्वः प्राङ्गणे गच्छति गते वा मैत्रे तदीयोत्पत्तेर्विद्यमानप्रागभावप्रतियोगित्वमेवाऽसंभवीत्यत उक्तं **गमिष्यतीति** ।

❀ काशिकानन्दी ❀

**इति भाव इति** । इतिप्रागेवाभिहितत्त्वादिति भाव इत्यर्थः । **परश्व इति** । परश्वो-दिनं प्रति परश्वोभूताद्यदिवस इत्यर्थः । अन्यथा परश्वो गच्छतीत्यादिप्रयोगस्यानुपपन्नत्वात् । वस्तुतस्तु परश्वःप्रभृतीनां शब्दानां तत्तत्प्रयोगाधिकरणदिनतृतीयदिने शक्तत्वात् परश्वो गच्छति गत इत्यादिप्रयोगानुपपत्तिरिति गमिष्यतीत्युक्तम् ।

**दीधितौ परश्वो भविष्यतीति धीरिति** । अत्राद्य समुत्पद्य श्वो गमिष्यति मैत्रे श्वो भविष्यतीति बुद्ध्यापत्तिरेव कुतो नाभिहितेति तु चिन्तनीयम् ।

नन्व'नद्यतने लुट्' इति सूत्रेण श्वःपदप्रयोगे 'भविता' इति रूपं स्यात् । न च तथैव प्रयोगापत्तिरुच्यतामिति वाच्यम् । यतोऽनद्यतनभविष्यत्त्वम्— अद्यतनभिन्नवृत्तिप्रागभावप्रतियोग्युत्पत्तिमत्त्वम् । वृत्त्यन्तं उत्पत्तिमत्त्वविशेषणम् । अद्य भवः अद्यतन इति व्युत्पत्त्याऽद्यकालवृत्तिवस्तुन एवाद्यतनत्वात् । तथा च श्वो घटो भविता इत्यत्र अद्यतनभिन्नवृत्तिर्या वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिः तदाश्रयः श्वो घटः इत्यन्वयबोधात् अद्यभाविघटे न तादृशप्रयोगापत्तिः । अद्यतनघटे वर्त्तमानप्रागभावप्रतियोग्युत्पत्तेरद्यतनभिन्नवृत्तित्वविरहात् । न चाद्यतनभिन्ने श्वोऽपि तादृशप्रतियोग्युत्पत्तिसंभवः । उपत्तेः तत्तद्क्षणसम्बन्धत्त्वात् इति चेन्न । परश्वःशब्दप्रयोगेऽपि भविता इति रूपप्रसङ्गात् । यदि च अनद्यतने लुडिति सूत्रं 'लुट्' 'अनद्यतने' इति योगविभागेन अनद्यतने एव लुडिति नियमार्थं तदा श्वःपदप्रयोगेऽपि भविष्यतीति प्रयोगः सुघट एवेति परश्वः पर्यन्तगमनमनर्थकम् । अत्रेदं युक्तमापश्यामः । परश्वो भविता इति प्रयोगापत्तिरेव वाऽन्था । श्व उत्पत्स्यमाने अद्यतनभिन्नवृत्तेः वर्त्तमानप्रागभावप्रतियोग्युत्पत्तेः सत्त्वेन तदधिकरणमैत्रस्य परश्वः सत्त्वात् । अद्य भाविनि श्वो भविता इति न प्रयोगः उत्पत्तेरद्यदिवसभिन्नवृत्तित्वविरहादिति । यद्वा परश्वो भविता भविष्यतीत्युभयप्रयोगापत्तिः । श्वस्तु भविष्यतीत्येवेत्यालोच्य, स्वमते श्वःशब्दप्रयोगे एव लुडन्तप्रयोगनियम इत्यतो वा परश्वःपर्यन्तम् ।

❀ दीधितिः ❀

अत्र च धातुना उत्पत्तिः प्रत्याय्यते, प्रत्ययेन च धात्वर्थनिष्ठं तादृशप्रतियोगित्वं तादृशकालीनत्वं वा ।

❀ जागदीशी ❀

ननु भूधातुस्यतिप्रत्ययाभ्याम् उत्पत्तिद्वयोपस्थापनाद् घटो भविष्यतीत्यादौ विद्यमानप्रागभावप्रतियोग्युत्पत्तिकोत्पत्तिमानित्यन्वयबोधेऽनुभवविरोध इत्यत आह अत्र चेति । गगनं द्रव्यं भवतीत्यादौ द्रव्यात्मकविशेषणसम्बन्धस्यानुभवाद् द्रव्यादितादात्म्यमेव भुवः शक्यम् । समभिव्याहृतद्रव्यादिपदस्य तत्तदर्थे तात्पर्यग्राहकत्वात् । तादात्म्यमात्रस्य भूशक्यत्वे नामार्थस्य द्रव्यादेः धातूपस्थाप्ये तत्र भेदान्वयानुपपत्तेः । अस्तु वाऽस्तित्वलक्षणं स्वरूपसत्त्वमेव भुवः शक्यम् । न तूत्पत्तिर्गौरवादित्याशयेनोच्यत इत्यपहाय प्रत्याय्यतइत्येवोक्तम् । प्रतीतिस्तु लक्षणयाऽपि संभवतीति भाव. । तादृशेति । विद्यमानप्रागभावप्रतियोगित्वमित्यर्थः । स्वयं प्रागभावाऽस्वीकारादाह तादृशेति । वर्त्तमानकालोत्तरकालीनत्वं वेत्यर्थः । प्रत्याय्यत इत्यनुषज्यते ।

प्राञ्चस्तु भूसत्तायामिति शाब्दिकस्मृतेरिहाद्य घटो भविष्यतीत्यादौ धातोः कालसम्बन्धरूपं सत्तामात्रमर्थः । तदुत्तरप्रत्ययस्य तु वर्त्तमानप्रागभावप्रतियोगित्वं, कालादिबोधकाद्यादिपदस्थसप्तम्यास्तु उत्पत्तिरर्थः । "शरदि पुष्पन्ति

❀ काशिकानन्दी ❀

उत्पत्तिद्वयेति । भूधातोरप्युत्पत्त्यर्थकत्वात् लृटो भविष्यत्त्वार्थकत्वेन तस्याप्युत्पत्तिघटितत्वादिति भावः । उत्पत्तिकेत्यन्तं प्रत्ययार्थः । उत्पत्तिमानिति । घट इति शेषः । दीधितौ उत्पत्तिरुच्यते इत्येव कुतो नोक्तमत आह—गगनमिति । द्रव्यात्मकं यद्विशेषणं तत्सम्बन्धस्य—तत्तादात्म्यस्य । अनुभवादिति । न तूत्पत्तिः गगनोत्पत्तेरभावात् । द्रव्यादितादात्म्यमेवेति । नन्वेवं द्रव्यपदस्यापि द्रव्यार्थकतया द्रव्य-द्रव्यतादात्म्यवद् गगनमित्यन्वयबोधः स्यादित्यत आह—समभीति । तत्तदर्थे = द्रव्यादितादात्म्ये । ननु द्रव्यघटादितादात्म्यानां भूशक्यत्वे गौरवात् तादात्म्यमात्रं शक्यमस्त्वित्यत आह—तादात्म्येति । तत्र=तादात्म्ये । भेदान्वयेति । प्रकृते निरूपकत्वादिसम्बन्धेनैव तादात्म्ये द्रव्यान्वयादिति भावः । स्वरूपसत्त्वमेवेति । एवं च स्वरूपसत्तावद्द्रव्याऽभिन्नगगनमित्यन्वयबोधः । उच्यत इति । वाच्यत्वं शक्यत्वमित्यनर्थान्तरम् ।

धातोः = भूधातोः । तदुत्तरप्रत्ययस्य = भूधातूत्तरस्यत्यादिप्रत्ययस्य । प्रतियोगित्वमिति । अर्थ इति योजना । सप्तम्याः = सप्तम्यर्थकप्रागुद्दिशीयप्रत्ययस्य । ननु सप्तम्या उत्पत्त्यर्थकत्वं कुत्रापि न दृष्टमित्याशङ्कां समादधद् इहाद्य घटो भविष्यतीत्यादिवाक्यजन्यान्वयबोधाकारमाह—शरदीत्यादि । शरत्कालोत्पत्तिकपुष्पाश्रयाः सप्तच्छदा इत्यन्वयबोधः । अत्र सप्तम्या उत्पत्त्यर्थकत्वविरहे शरत्कालिकपुष्पाश्रयाः सप्तच्छदा

❀ दीधितिः ❀

नङ्क्ष्यति, नश्यति, नष्ट इत्यादौ तु प्रत्ययेन यथायथमनागता वर्त्तमाना अतीता चोत्पत्तिः।

❀ जागदीशी ❀

सप्तच्छदा" इत्यादौ सप्तम्यास्तदर्थकत्वव्युत्पादनादेव च 'एतद्देशोत्पत्तिका एतत्कालोत्पत्तिका च या विद्यमानप्रागभावप्रतियोगिनी स्वरूपसत्ता तदाश्रयो घट' इत्यन्वयाकार इत्याहुः।

तत्पुनरिह अद्य घटो भविष्यतीत्यादावन्वयबोधस्य सकृदेवोत्पत्तिविषयकत्वानुभवात् स्वरूपसत्त्वाननुभवाच्च दीधितिकृता उपेक्षितमिति समत्तव्यम्।

ननु वर्त्तमानप्रागभावप्रतियोगितामात्रस्यैव प्रत्ययार्थत्वे स्यसंहितत्यादेर्भविष्यत्तायामनुशासनविरोधः स्याद्। अतो नशादिधातूत्तरस्यैव स्यतिप्रभृतेर्भविष्यत्ताबोधकत्वमुपपादयति—नङ्क्ष्यतीति। ननु धातूत्तरप्रत्ययस्योत्पत्त्यर्थकत्वं न कुत्रापि दृष्टचरमतो दृष्टान्तमाह नश्यति नष्ट इत्यादौ चेति। आख्यातकृद्भेदेन दृष्टान्तद्वयोपन्यासः। यथायथं = यथाक्रमम्। उत्पत्तिरिति।

❀ काशिकानन्दी ❀

इत्येवान्वयबोधः स्यात्, शरत्कालिकसप्तच्छदाः पुष्पाश्रया इति वा। न ह्येतावता पुष्पे शरत्कालोत्पत्तिकत्वस्यानुभवसिद्धस्य लाभसंभव इति भावः। तदर्थकत्वव्युत्पादनात्= उत्पत्त्यर्थकत्वव्युत्पादानात्। एतद्देशोत्पत्तिकेति इहपदार्थः। एतत्कालोत्पत्तिकेति अद्यपदार्थः। विद्यमानप्रागभावप्रतियोगिनीति स्यतिप्रत्ययार्थः। स्वरूपसत्तेति भूधात्वर्थः। तदाश्रय इति आख्यातार्थः।

ननु प्राचीनमतमेवंक्रमेण सुष्ठु भासत इति भविष्यत्त्वस्यैतादृशार्थकरणं दीधितिकृतोऽयुक्तम्। एवं च घटो भविष्यतीतिशब्दप्रयोजकप्रत्ययानुसारेण सामान्यलक्षणाभिर्द्धिरपि निष्प्रत्यूहैव। एवं घटो भविष्यतीत्याकारप्रत्यक्षानुरोधादपि। उपनीतस्य विशेषणतयैव भानसंभवादित्याशङ्कयाह—तत् पुनरिति। सकृदेवोत्पत्तिविषयिकेति। एतत्कालोत्पत्तिका एतद्देशोत्पत्तिकेत्येवं द्विधोत्पत्तेरननुभवादिति भावः। स्यसंहितत्यादेः= स्यतीत्यादेः। भविष्यत्तायां = विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वे। विरोध इति। भूधातूत्तरस्यतिप्रत्ययस्य विद्यमानप्रागभावप्रतियोगित्वमात्रार्थकत्वे तस्य भविष्यत्त्वानात्मकत्वात् 'लृट् शेषे च' त्याद्यनुशासनविरोध इत्यर्थः। उत्तरस्यैवेति। एवकारेण भूप्रभृत्युत्तरस्यतिप्रत्ययादेर्व्युदासः। विशिष्टवाचकपदानां विशेष्यवाचकपदसमभिव्याहारे विशेषणमात्रपरत्वस्यापि दृष्टत्वादिति भावः। एवं च भूधातूत्तरप्रत्ययस्य वर्त्तमानप्रागभावप्रतियोगित्वे लक्षणेति भावः। अनुशासनचारितार्थ्यस्य नङ्क्ष्यतीत्यत्रैव संभवे नश्यति नष्ट इति प्रयोगद्वयप्रदर्शनं विफलमित्याशङ्कय प्रकारान्तरेण तदवतारयति—नन्विति।

❀ दीधितिः ❀

तस्यामेव च कालविशेषादिर्विशेषणत्वेनान्वेति। एतेन ध्वोभाविनाशके

❀ जागदीशी ❀

प्रत्याय्यत इत्यनुषज्जते। अत्र च वर्त्तमानत्वादौ क्लृप्तशक्तिकानां प्रत्ययानामुत्पत्तौ लक्षणा। शक्यलक्ष्ययोस्तु परस्परमन्वयाद् विशिष्टलाभ इत्यवधातव्यम्।

यद्यपि कारकविभक्त्यर्थस्य धात्वर्थान्वयित्वानुरोधेन धातुनैवोत्पत्तिर्नाशश्च प्रत्याय्यत इत्येव वक्तुमुचितम्। तथापि प्रत्ययं विना कृतात् केवलनशधातोः उत्पत्तिविशिष्टनाशस्याऽप्रतीतेः, प्रत्ययसत्त्वे च प्रतीतेः अन्वयव्यतिरेकाभ्यां ऽत्ययस्यैवोत्पत्तिरर्थः। स्वभाववैचित्र्याच्च प्रत्ययार्थेनापि क्वचित् कारकसप्तम्यर्थस्यान्वय इत्याशयः। एवं च नङ्क्ष्यतीत्यस्य वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिको यो नाशः तत्प्रतियोगितावानित्यर्थः। नश्यतीत्यस्य वर्त्तमानोत्पत्तिको यो नाशः तत्प्रतियोगितावानित्यर्थः। नष्ट इत्यादौ च वर्त्तमानध्वंसप्रतियोग्युत्पत्तिको यो नाशः तत्प्रतियोगितावानित्यर्थ इति ध्येयम्। तस्यामेवेति। प्रत्ययोपस्थाप्योत्पत्तावेव, न तु प्रकृत्यर्थे नाशे इत्यर्थः।

ननु भविष्यत्त्वादौ यत् स्यतिप्रभृतेरनुशासनं तत्र विद्यमानप्रागभावप्रति-

❀ काशीकानन्दी ❀

उत्पत्तौ लक्षणेति। तथा च नश्यतीत्यादौ प्रत्ययस्य वर्त्तमानत्वमुत्पत्तिश्चार्थः। ननु तयोर्विशिष्टलाभः कथमित्यत आह—शक्यलक्ष्येति। वर्त्तमानत्वाद्यात्मकशक्यार्थस्य उत्पत्तिरूपलक्ष्यार्थस्य चेत्यर्थः। परस्परमन्वयादिति। न च खण्डशः वर्त्तमानत्वादौ उत्पत्तौ च शक्तिलक्षणोभयस्वीकारापेक्षया वर्त्तमानोत्पत्त्यादावेव लक्षणा कुतो नोक्तेति वाच्यम्। आश्रयत्वादौ खण्डशः शक्त्यादिस्वीकारस्यात्यन्तमपेक्षितत्वेन विशिष्टे लक्षणामपेक्ष्य विशेष्यमात्रे लक्षणास्वीकारे लाघवादिति।

कारकविभक्त्यर्थस्येति। इहेत्यादौ सप्तम्यर्थे हादिप्रत्यय इति तस्यापि कारकविभक्त्यर्थत्वम्। धात्वर्थान्वयित्वानुरोधेनेति। एवं च प्रत्ययार्थोत्पत्तौ एतत्कालवृत्तित्वाद्यन्वयस्याऽव्युत्पन्नस्य स्वीकारोऽनुचित इति भावः। धातुना = नशप्रभृतिना। कृतात् = प्रयुक्तात्। न च प्रत्ययं विना नशधातोः प्रयोगस्य अशुद्धतया ततोऽभ्रान्तस्य प्रत्ययाऽसंभवादिदमसंगतं भ्रान्तप्रत्ययस्य वस्त्वसाधकत्वादिति वाच्यम्। तिस्यतिप्रभृतिप्रत्ययं विनेत्यत्र तात्पर्यात्। एवं च घञाद्यन्तनशधातुना 'नाश' इत्यादिरूपकेण उत्पत्तिविशिष्टनाशाऽप्रतीतिः नश्यतीत्यादेः तत्प्रतीतिश्चेति अन्वयव्यतिरेकः। तत्प्रतियोगितावानिति। अयमपि आख्याताद्यर्थः।

दीधितौ—ध्वोभाविनाशके = ध्वोभावी नाशो यस्य तथाभूतघटादौ।

अनुशासनमिति। "भविष्यति गम्यादयः" इति सूत्राद् भविष्यतिपदानुवृत्त्या

❀ दीधितिः ❀

परश्वो नङ्क्ष्यतीति नष्टे च नश्यतीति च व्यवहारः स्यात्; न स्याच्च नाशस्य विद्यमानत्वाद् नष्ट इत्यादि[व्यवहारः]। न च तत्रातीतकालसम्बन्धित्वं वर्तमानत्वं वा निष्ठादेरर्थः।

❀ जागदीशी ❀

योगित्वादिपरमेवास्तु भविष्यत्त्वादिपदम्। आख्यातस्योत्पत्त्यर्थकत्वं व्यर्थम-त आह एतेनेति। एतेन=उत्पत्तावेव कालविशेषादेर्वर्त्तमानत्वादेश्चान्व-येन। इदं च परास्तमित्यन्वयि। नङ्क्ष्यतीति। व्यवहारः स्यादिति योजना। श्वोभाविनाशस्य परश्वोऽपि सत्त्वादिति भावः। नष्टे चेति। चिरोत्पन्ननाशस्य विद्यमानत्वादिति भावः। न स्याच्चेति। नष्टे इत्यनुषज्जते। इत्यादिरिति। व्यवहार इत्यनुषज्जते। आदिपदेन नष्टवानित्यादिसंग्रहः। क्तप्रत्ययार्थतीत-त्वस्य नाशेऽसंभवादिति भावः।

तत्र=नष्ट इत्यादौ। अतीतेति। तथा च नाशस्य विद्यमानत्वेपि अतीत-कालसम्बन्धित्वान्नष्ट इत्यादिव्यवहारो नानुपपन्न इति भावः। लाघवादाह—वर्तमानत्वं वेति। प्रथमे चिरविनष्टेऽपि पूर्वेद्युर्नष्ट इति स्यात्। चिरोत्पन्न-नाशव्यक्तेरतीतकालसम्बन्धित्वपूर्वदिनवृत्तित्वयोः सत्त्वात्। द्वितीये तु चिर-

❀ काशिकानन्दी ❀

लृट्शेषे चेति सूत्रं तथानुशासयति। भविष्यत्त्वादिपदं=भविष्यत्वादिबोधकपदं, श्वो-भविष्यत्पदमिति यावत्। नष्टवानिति क्तवतुप्रत्ययान्तप्रयोगः। एवं नश्यन्-नङ्क्ष्यन्नित्यादयोऽपि बोध्याः। अतीतत्त्वस्य नाशेऽसंभवादिति। वर्त्तमान-कालवृत्तिध्वंसप्रतियोगित्वमतीतत्वम्। तच्च नाशे न संभवति। नाशस्य नाशाभावा-दिति भावः।

अतीतकालसम्बन्धित्वादिति। अतीतत्त्वस्य नाशेऽसंभवेऽपि अतीतकालसम्बन्धि-त्वस्य तत्र सुघटत्वादिति भावः। ननु नाशेऽतीतत्वविरहेण नष्ट इत्यादिव्यवहारानुपपत्ति-र्या प्रसक्ता तद्वारणमेव यद्यभिमतं तदाऽतीतकालसम्बन्धित्वपर्यन्तमनावश्यकम् किन्तु वर्त्तमा-नत्त्वमात्रस्य निष्ठार्थकत्वं युक्तम्। नच कालवृत्तित्वमात्रं तदर्थोऽस्त्विति वाच्यम्। अति-नष्टेऽपि नष्ट इति व्यवहारापत्तेः। न च नाशोत्पत्तिक्षणेऽपि नष्ट इति व्यवहारः स्याद् नाशस्य वर्त्तमानत्त्वादिति वाच्यमिष्टत्वादित्याशङ्कयेदमेव बीजं वर्तमानत्त्वं वेत्युत्तरकल्पोत्थाने इत्याह—लाघवादाहेति। प्रथमे=अतीतकालवृत्तित्वस्य निष्ठार्थकत्त्वकल्पे। द्वितीये=वर्त्तमानत्त्वस्य निष्ठार्थकत्त्वकल्पे। न च चिरोत्पन्ननाशव्यक्तेः पूर्वकालसम्बन्धित्वाधुनात-त्वयोः सत्त्वात् प्रथमकल्पेऽपि अधुना नष्ट इति व्यवहारापत्तिः, तत्रैव च वर्त्तमानत्वपूर्व-दिनवृत्तित्वयोः सत्त्वाद् द्वितीयकल्पेपि पूर्वेद्युर्नष्ट इति व्यवहारापत्तिः संभवतीति विभाव्यम्।

## ❀ दीधितिः ❀

चिरविनष्टेऽपि पूर्वेद्युर्विनष्टोऽधुना वेति व्यवहारप्रसङ्गादिति परास्तम्। कर्त्तरि विहितेन आख्यातेन कृता वा यथायथमाश्रयत्वप्रतियोगित्वलक्षणं कर्तृत्वमाश्रयप्रतियोगिरूपश्च कर्त्ताऽभिधीयते।

## ❀ जागदीशी ❀

विनष्टेऽपि अधुना नष्ट इति स्यात्। तादृशनाशस्य वर्तमानत्वादधुनातनत्वाच्चेत्याह चिरविनष्टेऽपीत्यादिना।

ननु घटो भविष्यति नङ्क्ष्यतीत्यादौ धात्वर्थोत्पत्तिविनाशादेः कथं घटाद्यन्वयः धात्वर्थनामार्थयोर्भेदेन अन्वयस्याऽव्युत्पन्नत्वादत आह कर्त्तरीति।

## ❀ काशिकानन्दी ❀

जगदीशस्याऽसंगत इति वाच्यम्। यतोतीतकालसम्बन्धित्वविशिष्टत्वं, वर्त्तमानत्वविशिष्टत्वं वा निष्ठादेरर्थ इति तात्पर्येण विभागकरणं जगदीशस्य। न च विशिष्टशुद्धयोरनतिरेकेणातीतकालसम्बन्धित्ववैशिष्ट्योक्तावपि एतत्कालवृत्तित्वादिकं दुर्वारमेव गुणे गुणकर्मान्यत्वविशिष्टसत्त्वेति प्रतीतिविषयवत्। पूर्वकालवृत्तित्ववैशिष्ट्ये अद्यादिकालवृत्तितावच्छेदकत्वाऽन्वयस्तु शब्दाऽलभ्य इति वाच्यम्। एवं सति भेदार्थकविभक्तिसमवधानस्थले नामार्थयोरपि भेदेनान्वयाद्, निपातिरिक्तनामार्थयोरेव वा भेदान्वयाभावनियमाद् इहाद्येत्यादिसप्तम्यर्थकप्रत्ययान्तनिपातार्थस्याधिकरणत्वेनैवान्वयमभिमत्य ग्रन्थोऽयं कथंचिन्नेयः। यद्वा उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयव्युत्पत्तेः नाशविशेषणपूर्वकालावच्छेदेन अधुनापदार्थान्वयायोगान्न प्रथमे अद्य नष्ट इति; नाशविशेषणवर्त्तमनत्वावच्छेदेन पूर्वेद्युपदार्थान्वयायोगान्न द्वितीये पूर्वेद्युर्नष्ट इति व्यवहारः। अधुना नष्ट इति स्यादित्यस्य चाधुना नष्ट इत्येव स्यादित्यर्थ इति ध्येयम्।

कालवाचकाद्यादिपदानां निष्ठादिप्रत्ययार्थघटककालेनाभेदान्वयाभिप्रायेणेदं, तथा चातीतकाले अधुनापदबोध्यैतत्कालाद्यभेदविरहान्न प्रथमकल्पे चिरविनष्टेऽधुना नष्ट इति व्यवहारापत्तिः, एवं द्वितीयकल्पे निष्ठाप्रत्ययबोध्यवर्त्तमानकाले पूर्वेद्युपदबोध्यपूर्वदिनाऽभेदविरहान्न पूर्वेद्युर्विनष्ट इति व्यवहारापत्तिरित्यपि कश्चित्।

इदं तु बोध्यम्। नाशत्वं न जन्याभावत्वं, घटादेरपि जन्यत्वाद् घटाभावाभावत्वाच्च घटाभावनाशस्वरूपतापत्तेः। नापि जन्यत्वे सति भावभिन्नत्वम्। प्रागभावध्वंसस्य घटादिस्वरूपतानापत्तेः किन्त्वखण्डोपाधिरेवेत्यभिप्रायेण नङ्क्ष्यतीत्यादिदीधितिः। अन्यथा नाशत्वस्योत्पत्तिमदभावत्वात्मकत्वेन प्रागभावप्रतियोगित्वमात्रस्य स्यतिप्रत्ययार्थत्वेऽपि अद्यत्वादेर्धात्वर्थोत्पत्तावन्वयेनैव दोषवारणसंभवेन नामार्थप्रत्ययार्थयोरन्वयकल्पनानावश्यक्यप्रसङ्गात्। प्रत्ययस्योत्पत्त्यर्थकत्वदृष्टान्तत्वाऽसंभवप्रसङ्गाच्चेति। घटः संयोक्ष्यतीत्यादिकं तूदाहरणान्तरं बोध्यम्।

❀ दीधितिः ❀

कार्यानुत्पाददशायां चाभावधीः सामयिकात्यन्ताभावमवगाहते। न च प्रतियोगिसमवायिनि समयावच्छेदेनात्यन्ताभाववृत्तौ मानाभावः। भाविनि नष्टे वा घटे इह कपाले घटो नास्तीति प्रत्ययात्। नह्ययं

❀ जागदीशी ❀

भविष्यतीत्यादावाश्रयत्वरूपं नङ्क्ष्यतीत्यादौ च प्रतियोगित्वरूपं कर्तृत्वमा- ख्यातेन प्रत्याय्यते। भविष्यन्नित्यत्र आश्रयरूपो नष्ट इत्यत्र च प्रतियोगिरूपः कर्त्ता कृता कथ्यते। तथा च प्रकृते धात्वर्थनामार्थयोरन्वयबोध एव नेति भावः। कृतिस्वरूपकर्तृत्वस्य आख्यातकृद्भ्यामनभिधानाद् घटादिपदोत्तर- मनभिहिताधिकारीयतृतीया स्यादित्याशङ्काव्युदासाय कर्तृत्वं कर्त्ता चेति द्वयोरुपन्यासः। तेन मुख्यभाक्तकर्तृत्वमात्रानभिधानस्थले एव तृती- येति भावः।

ननु घटानुत्पाददशायामिह कपाले घटो नास्तीति प्रतियोगिविशेषितप्राग- भावप्रत्यक्षानुरोधादेव सामान्यलक्षणा वाच्येत्यत आह कार्यानुत्पादेति। समयावच्छेदेनेति—कालिकाऽव्याप्यवृत्तित्वसूचनाय। अयं = घटोनास्तीत्या- कारकप्रत्ययः। तादृशेति। घटो नास्तीत्याकारेत्यर्थः। घटान्तरप्रतियोगिकत्वं

❀ काशिकानन्दी ❀

आख्यातेन कृता वेत्यादिदीधितिं विभज्य व्याचष्टे—भविष्यतीति। भविष्यन्निति। शत्रन्तः। कृता = कृत्प्रत्ययेन। कथ्यते = प्रत्याय्यते। तेन आश्रयत्वाश्रयादेराख्यातवाच्यत्वविरहेऽपि न दोष इति भावः। नैयायिकानां मते तिङः कृतौ, कृतश्च कर्त्तरि शक्तिः। आश्रयतात्वादेरखण्डत्वे शक्तिरेव तत्रापि। अन्वयबोध एव नेति। धात्वर्थस्य आख्यातार्थाश्रयत्वादावेवान्वयः। आश्रय- त्वादेश्च नामार्थेऽन्वयः। परम्परया भेदेनान्वयस्तु इष्ट एवेति बोध्यम्। ननु विरुद्ध- मुच्यते। प्राक् स्यत्यादीनां वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वार्थकत्वमभिधायाधुनाऽऽश्रय- त्वादिरर्थ इति। नैष दोषः। उभय एव प्रत्ययार्थः। तत्र वर्तमानप्रागभावप्रतियोग्यु- त्पत्तिकत्वं लृट्त्वावच्छिन्नशक्यम्। आश्रयत्वादिकं च आख्यातत्वावच्छिन्ननिरूपित- शक्यमिति रीत्या द्रष्टव्यम्। तत्रैकस्य धात्वर्थेऽपरस्य नामार्थेऽन्वय इति तु व्युत्पत्ति- वैचित्र्यात्। भाक्तेति। गौणेत्यर्थः। "अनभिहिते" इत्यधिकृत्य "कर्तृकरणयोस्तृतीया" इति सूत्रमप्रत्यायितमुख्यगौणभावसाधारणकर्त्तरि तृतीयां विधत्त इति भावः।

एतावता इह घटो भविष्यतीत्याद्याकारकलौकिकप्रत्यक्षाऽसंभवमुपपाद्य तदर्थं सामान्य- लक्षणानावश्यकत्वं च समर्थ्य संप्रति कपालादौ इदानीमिहघटोनास्तीत्याद्याकारकप्रागभाव- विषयकप्रत्यक्षानुरोधेन सामान्यलक्षणां सिषाधयिषोर्मतं निरसितुं तन्मतमुपन्यस्यति— नन्विति। कालिकाऽव्याप्यवृत्तित्वसूचनायेति। एकदेशावच्छेदेन कालिकाऽव्याप्य-

❈ दीधितिः ❈

घटप्रतियोगिकाभावमात्रमवगाहते। यत्किंचिद्घटवत्यपि तादृशप्रत्ययप्रसङ्गात्। परन्तु घटत्वावच्छिन्नप्रतियोगिताकम्। न च ध्वंसप्रागभावौ तथा।

❈ जागदीशी ❈

सप्रागभावयोस्तत्र सत्त्वादिति भावः।

यद्यपि घटप्रतियोगिकाभावमात्रावगाहनेऽपि न सामान्यलक्षणासिद्धिः। पूर्वावगतघटव्यक्तीनां ज्ञानादेव तादृशबुद्धिसंभवात् तथापि वस्तुगतिमनुरुध्येदम्।

प्रतियोगिताकमिति। अभावमवगाहत इत्यनुषञ्जनीयम्। तथेति। घटत्वावच्छिन्नप्रतियोगिताकावित्यर्थः। न च भाविनष्टयोरत्यन्ताभावस्येव

❈ काशिकानन्दी ❈

वृत्तित्वं बोध्यम्। अत्यन्ताभावस्य नित्यत्वेन सामान्यतः कालिकाऽव्याप्यवृत्तित्वाऽसंभवात्। उत्पादविनाशशालिचतुर्थाभावस्वीकारे तु वरं प्रागभावस्यैव तादृशप्रत्ययविषयत्वस्वीकार इति ध्येयम्। तत्र = यत्किंचिद्घटवति कपाले।

ननु घटानुत्पादकालीन "कपाले घटो नास्तीति" प्रत्ययेन घटप्रतियोगिकाभावमात्रावगाहनेऽपि न सामान्यलक्षणासिद्धिः; पूर्वावगतघटप्रतियोगिकाभावमात्रस्य तद्विषयत्वसंभवादिति दीधिकारस्य तादृशप्रत्ययनिषेधो व्यर्थायास एवेति शङ्कते—यद्यपीति। घटानुत्पाददशायां कपाले इति शेषः। तादृशबुद्धिसंभवात् = घटो नास्तीति बुद्धिसंभवात्। भविष्यद्घटस्येव प्राचीनघटस्यापि तत्प्रतियोगित्वेन भ्रमत्वायोगादिति भावः। यद्यपि प्राचां मते ध्वंसप्रागभावयोरधिकरणेऽत्यन्ताभावाऽसंभवेन घटोनास्तीति प्रत्ययेन अत्यन्ताभावावगाहनं न सम्भवति। घटप्रागभावस्य तादृशप्रत्ययेनावगाहनेऽवगतघटविशेषिततदवगाहिप्रत्ययस्य भ्रमत्वं स्यात्। न च घटो नास्तीत्यनेन पूर्वावगतस्य घटस्य ध्वंस एव विषयीक्रियत इति नोक्तदोष इति वाच्यम्। कपालोत्पत्त्युत्तरक्षणजायमानेहघटोनास्तीतिप्रत्ययस्य ध्वंसावगाहिताया अपि वक्तुमशक्यत्वात्। अत्यन्ताभावस्य च विरोधित्वेनैव तदवगाहिताऽसंभवादिति प्रागभावस्यैव तादृशप्रत्ययविषयत्वस्वीकारावश्यकत्वात्। एवं च विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानमात्रस्य कारणतया निरुक्तप्रत्ययोत्पत्तौ ज्ञानलक्षणाऽनपेक्षणेऽपि निरुक्तप्रत्ययस्य प्रमात्वानुरोधेन तत्र भाविघटस्य विशेषणतया भानार्थमेव ज्ञानलक्षणासम्पादकतया सामान्यलक्षणाऽऽवश्यकी। तथापि शब्दादनुमानाद्वाऽवगतघटस्यैवोपनीततया तत्र भानं भविष्यतीति सिद्धान्तनिगर्वाभिप्रायेण ग्रन्थोऽयं कथंचन नेयः।

न चेति। बाधकाभाव इत्यन्वयः। भाविनष्टयोरिति। घटोनास्तीत्याद्याकारका-

## ❀ जागदीशी ❀

ध्वंसादेरपि सामान्यावच्छिन्नप्रतियोगिताकत्वे बाधकाभाव:। कस्यचिद् घटस्य नाशदशायामेव भाविघटो नष्ट: कस्यचिद् घटस्योत्पत्तिदशायां च प्रनष्टघटो भविष्यतीति प्रत्ययापत्तेरेव बाधकत्वादिति भाव:।

ध्वंसप्रागभावयोः सामान्याभावत्वस्वीकारेऽपि तत्र कपाले न तत्संभव

## ❀ काशिकानन्दी ❀

स्यन्ताभावप्रत्यये भाविनो नष्टस्य च घटादेरभावस्य भानादिति भाव:। बाधकाभाव इति। न च ध्वंसीयप्रतियोगिताया: प्रागभावीयप्रतियोगितायाश्चैकैकव्यक्तिवृत्तितयाऽति-प्रसक्तघटत्वादेस्तदवच्छेदकत्वासंभव इति वाच्यम्। घटध्वंसीयप्रतियोगितात्वेन प्रतियोगि-त्वानतिरिक्तवृत्तित्वस्य घटत्वे संभवात्। घटो ध्वस्त:, घटो नास्तीत्यादिप्रत्ययानुरोधेना-नतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य तत्र विरहेऽपि स्वरूपसम्बन्धरूपावच्छेदकत्वस्य तत्र कल्पने बाधकाभावात्।

घटो नष्ट इत्यादौ प्रकारतावच्छेदकतयैव घटत्वादेर्भानं, न तु स्वरूपसम्बन्धरूप-प्रतियोगितावच्छेदकतया। एकघटवत्यपि घटोनास्तीत्यत्यन्ताभावाऽप्रतीतेस्तु अनतिरिक्तवृत्ति-घटत्वेऽवच्छेदकत्वमङ्गीक्रियत इति मानाभावस्य स्फुटत्वाद् बाधकमाह— कस्यचिदिति। घटध्वंसीयप्रतियोगितात्वेन प्रतियोगित्वानतिरिक्तवृत्तित्वरूपावच्छेदकताया घटो नष्टो घटो नास्तीत्यादिप्रतीत्यावगाहने भाव्यादिघटनिष्ठप्रतियोगिताया अपि प्रतियोगितात्वेन घटत्वावच्छिन्नतया तादृशप्रत्ययेनावगाहनाद् घटो नास्तीत्याकारकात्यन्ताभावविषयकज्ञानोत्तरं भाविघटो नास्ति भूतघटो नास्तीत्यादि: यथा प्रत्यय: तथा भाविघटो नष्ट इत्यादिप्रतीतिरपि स्यादिति भाव:।

ननु भाविघटो नष्ट इत्यादिप्रतीत्या भाविघटत्वाद्यवच्छिन्नप्रतियोगित्वमेव विषयीक्रियते। तदानींतनध्वंसादौ भाविघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वविरहादेव न तथा प्रतीति:। यत्र भाविघटत्वावच्छिन्नप्रतियोगिताकाभावस्तस्य तत्र विरहादित्याशयेनाह— ध्वंसेति। सामान्याभावत्वस्वीकारेऽपि = सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावत्वस्वीकारेऽपि। तत्र कपाले न तत्संभव इति। यत्किंचित्पूर्वघटध्वंसाधिकरणे उत्पत्स्यमानघटके कपाले सामान्यावच्छिन्नप्रतियोगिताकध्वंसप्रागभावौ न संभवत: ध्वंसप्रागभावयोः सामान्याभावत्व-स्वीकर्तृ मतेऽपि सामानाधिकरण्यकालिकोभयसम्बन्धेन सामान्यधर्मावच्छिन्नविशिष्टान्यध्वंस-प्रागभावयोरेव तथात्वम्। तादृशश्च कपाले आद्यघटप्रागभावोऽन्त्यघटध्वंसश्चैव। मध्य-घटप्रागभावकालिकत्वस्य तत्सामानाधिकरण्यस्य चाद्यघटे सत्त्वाद् एवं अन्त्यघटकालिकत्व-तत्सामानाधिकरण्ययोर्मध्यघटध्वंसे सत्त्वात्तादृशसम्बन्धाभ्यां सामान्यधर्मावच्छिन्नविशिष्टान्य-त्वस्य मध्यघटप्रागभावध्वंसयोर्विरहात्। एवमस्वीकारे मध्यघटकालेऽपि आद्यघटध्वंसमन्त्य-घटप्रागभावं वाऽऽदाय घटो नास्तीति प्रत्ययप्रसङ्गात्। अत्यन्ताभावस्य प्रागभावध्वंसविरो-धितामते घटो नास्तीतिप्रत्ययेन ध्वंसप्रागभावयोरेवावगाहनसंभवादिति भाव:।

❀ दीधितिः ❀

**संभवतो वा तत्र कपाले। ततः पूर्वं परतश्च बहूनां घटानां नष्टत्वादुत्पत्स्यमानत्वाच्च।**

❀ जागदीशी ❀

इत्याह संभवतो वेति। इदमपि वस्तुगतिमनुरुध्य। अन्यथा घटत्वावच्छिन्नध्वंसादेः सत्त्वेऽपि तत्प्रत्यक्षस्य घटत्वेन यत्किंचिद्व्यक्तिज्ञानादेव संभवेन तदनुरोधात् सामान्यप्रत्यासत्तेरसिद्धेरिति ध्येयम्। तत्र कपाले। न च इत्यनुषज्यते। ततःपूर्वमिति। तादृशप्रतीतिपूर्वमित्यर्थः।

ननु पटात्यन्ताभावस्य पटध्वंसाद्यविरोधित्वे पटध्वंसात्यन्ताभावस्वरूपस्य पटात्यन्ताभावस्य पटध्वंसदशायामपि तन्तौ सत्त्वात्, तदानीमपि तन्तौ पटध्वंसो नास्तीति प्रतीतिः स्यात्। अन्यथा तदानीं तन्तौ पटो नास्तीत्यपि प्रतीतिर्न स्यादिति अकामेनापि ध्वंसात्यन्तभावयोर्विरोधो वाच्य इत्याशयेन

❀ काशिकानन्दी ❀

वस्तुगतिमनुरुध्येति। अयमपि ग्रन्थः प्रागुक्तदिशैव नेयः। अन्यथा कपालोत्पत्त्युत्तरक्षणजायमाने'इहघटोनास्तीति'प्रत्ययस्योत्पत्तौ घटत्वेन यत्किंचिद्घटज्ञानस्य हेतुतया तदर्थं सामान्यलक्षणानपेक्षणेऽपि भाविघटस्य तादृशप्रत्यये भानार्थमेव सामान्यलक्षणाया आवश्यकतया असंगतेर्दुर्वारत्वादिति मन्तव्यम्।

प्राचीनः शङ्कते—नन्विति। पटध्वंसात्यन्ताभावस्वरूपस्य पटात्यन्ताभावस्येति। ध्वंसप्रागभावात्यन्ताभावाश्च प्रतियोग्यादित्रितयप्रतियोगिका इति प्रागुक्तेरिति भावः। अयं परमतानालोचननिबन्धनः प्राचीनस्याभिमानः। प्राचीनमते पटात्यन्ताभावस्य पटध्वंसादिविरोधित्वेन तन्तौ पटात्यन्ताभावस्यासंभवात् कपालादौ पटध्वंसात्यन्ताभावस्य पटात्यन्ताभावस्य च समनियततया तदैक्यम्। न च पटकाले पटध्वंसाभावस्य कपाले सत्त्वात्पटात्यन्ताभावस्य च विरहात् कथं तयोः समनैयत्यमिति वाच्यम्। पटकाले पटध्वंसात्यन्ताभावस्यापि कपालेऽसंभवात्। पटध्वंसात्यन्ताभावविरोधिपटाद्यात्मकपटध्वंसप्रागभावस्यैव तत्र सत्त्वात्। एवं च कपालादावेव तदुभयमिति भवति तयोः समनैयत्यम्। नव्यमते पुनः पटध्वंसकाले पटध्वंसात्यन्ताभावविरहात् पटात्यन्ताभावसत्त्वाच्च तयोरसमनियततया ऐक्याऽसंभवेनाचोद्यायोगात्। न च पटात्यन्ताभाववृत्तिपटध्वंसात्यन्ताभावस्य स्वाधिकरणपटात्यन्ताभावस्वरूपताया नव्यमतेऽपि सत्त्वान्न दोष इति वाच्यम्। पटध्वंसाभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः पटात्यन्ताभावे एव सत्त्वात्। अन्यथा घटभेदवृत्तिपटध्वंसात्यन्ताभावस्य घटभेदात्मकतया घटभेदाधिकरणे तन्तौ पटध्वंसात्यन्ताभावस्य प्राचीनानामपि दुर्वारतापत्तेः। तदानीमपि=पटध्वंसदशायामपि। न स्यादिति। अन्यथा=पटध्वंसात्यन्ताभावस्य तत्राऽस्वीकारे। तदानीं=पटध्वंसदशायाम्। ध्वंसपटध्वंसाभावाऽभिन्नस्य पटात्यन्ताभावस्याप्यस्वीकारापातादिति भावः।

### ❀ दीधितिः ❀

अथैवं कपालादौ कथं पटध्वंसादिशून्यताबुद्धिः । अत्यन्ताभावस्य ध्वंसाद्यविरोधित्वादिति चेत् ? तत्तदधिकरणस्वरूपाद्, अतिरिक्तादेवानुगतादभावाद्वा ।

### ❀ जागदीशी ❀

शङ्कते अथैवमिति । एवं = पटसमवायिन्यपि तदत्यन्ताभावसत्त्वे । कपालादावित्ति सावधारणम् । तथा च तन्तावपि पटध्वंसदशायां तादृशबुद्धिः स्यादिति भावः । अत्रैव हेतुः—अत्यन्ताभावस्येत्यादि । त्वन्मते इत्यादिः ।

तत्तदिति । कपालाद्यात्मकेत्यर्थः । स्वरूपाणामननुगमाद् अभावत्वप्रतीतेर्भ्रमत्वापत्तेः तन्तुस्वरूपाणामतथात्वे पटस[मवायि]त्वदशायां तत्र पटध्वंसशून्यताप्रतीत्यपलापापत्तेश्चाह अतिरिक्तेति । [ तथा च पटध्वंसात्यन्ताभावो न पटात्यन्ताभावस्वरूपः किन्त्वतिरिक्तः ] स च पटस्वदशायां तन्तावप्यस्तीति भावः ।

### ❀ काशिकानन्दी ❀

प्रागभावयोरत्यन्तभावविरोधित्वस्वीकारे च पटात्यन्ताभावस्यापि तत्र विरहेण न तद्ध्वंसात्यन्ताभावसत्त्वापत्तिरित्याशयः ।

पटध्वंसात्यन्ताभावस्य पटात्यन्ताभावात्मकत्वे पटध्वंसदशायां तन्तौ पटात्यन्ताभावसत्त्वेन तदभिन्नपटध्वंसात्यन्ताभावप्रतीतिः स्यात । तदेव नास्ति । अस्मन्मते पटात्यन्तभावस्य पटध्वंसात्यन्ताभावस्य चाऽसमनियततयैवानैक्यादिति नव्यः प्राचीनं पराचष्टे—दीधितौ—तत्तदिति । पटध्वंसात्यन्ताभावो न पटात्यन्ताभावस्वरूपः पटध्वंसदशायां तन्तौ पटात्यन्ताभावसत्त्वेऽपि पटाध्वंसात्यन्तभावविरहेणाऽसमनियतत्वात् । किन्तु तत्तत्कपालाद्यात्मक एव, तन्तुश्च न कपाल इति कथं तत्र पटध्वंसात्यन्ताभावप्रतीतिः । न च पटसत्त्वदशायां तन्तौ पटध्वंसात्यन्ताभावस्य नव्यमते सत्त्वात्तन्तुस्वरूपत्वमपि तस्यावश्यकमिति पटध्वंसदशायामपि तदत्यन्ताभावप्रतीतिर्दुर्वारेति वाच्यम् । तत्तत्कालीनतत्तदधिकरणस्वरूपात्मकत्वस्वीकारादिति भावः ।

अननुगमादिति भ्रमत्वापत्तौ हेतुः । भ्रमत्वापत्तेरिति । अनुगतधर्माभाववति अनुगतधर्मप्रतीतेर्भ्रमत्वावश्यकत्वादिति भावः । नन्वभावत्वमेव तत्रानुगतधर्मोऽस्त्वित्यत आह—तन्त्विति । यद्वा— अननुगमादिति । तथा चानुगतप्रतीतिर्न स्यादिति भावः । नन्वभावत्वमेवानुगतधर्म इत्यत आह— अभावत्वेति । भ्रमत्वापत्तेरिति । भावात्मककपालादावभावत्वस्य नव्यैरनुपगमादिति भावः । प्राचीनमतेनैतद्दोषाभावादाह— तन्त्विति । अतथात्वे = पटध्वंसात्यन्ताभावानात्मकत्वे । तत्र = तन्तौ । अपलापापत्तेरिति । प्राचीनानां तादृशापलापस्येष्टत्वेऽपि नव्यमते न तदिष्टमित्याशयेनेदम् । एवं च घटकाले पटध्वंसशून्यताप्रतीतेः तन्तुस्वरूपतापि तस्यावश्यकीति पटध्वंसकालेऽपि तच्छून्यताप्रतीतिर्दुर्वार तत्तत्कालीनतन्त्वादीनामेव तथात्वे पटध्वंसाभावत्वस्याव्याप्यवृत्तितापत्तिः स्यात् ।

❀ दीधितिः ❀

इहेदानीं घटप्रागभाव इति च प्रत्ययो न लोकानाम्। अथैवं

❀ जागदीशी ❀

नन्विहेदानीं घटप्रागभाव इति प्रत्यये भाविनो घटस्य भानार्थं सन्निकर्ष-सम्पादकतया सामान्यप्रत्यासत्तिरावश्यकीत्यत आह इहेति। न लोकाना-मिति। तथा च किमनुरोधात् सामान्यलक्षणा स्वीकार्येति भावः।

एवमिति। भविष्यति नास्तीत्यादिप्रत्ययानामन्यविषयकत्वे प्रागभावत्वेन प्रतीतेश्चानुपगमे इत्यर्थः। प्रागभावस्येव ध्वंसस्याप्यसत्त्वे तद्घटितस्य पूर्वत्वादेः

❀ काशिकानन्दी ❀

परे तु—ननु ध्वंसादिमति प्रतियोग्यत्यन्ताभावो न वर्त्तत इति वदतामस्माकं मते प्रतियोग्यत्यन्ताभावस्य ध्वंसादिविरोधित्वाद् ध्वंसात्यन्ताभावस्वरूपत्वमिति कपाले पटध्वंसो नास्तीति बुद्धेः पटध्वंसात्यन्ताभावावगाहिन्याः पटात्यन्ताभाव एव विषय इत्युपपद्यते। नव्यानां भवतां मते तु प्रतियोग्यत्यन्ताभावस्य ध्वंसाद्यविरोधितया तस्य ध्वंसात्यन्ताभाव-स्वरूपता न वक्तुं शक्येति कपाले घटध्वंसो नास्तीति प्रत्ययस्य विषयो निर्वक्तुमशक्यः। न चातिरिक्त एव पटध्वंसात्यन्ताभावस्तद्विषय इति वाच्यम्। अभावप्रतियोगिकाभावोऽ-तिरिक्तो नाभ्युपगम्यत इति सिद्धान्तभङ्गप्रसङ्गादित्याशङ्कते दीधितौ अथेति। (पृ० २१८) एवम्=वक्ष्यमाणहेतौ सति। कथं पटध्वंसशून्यताबुद्धिरिति। जायत इति शेषः। विषयविरहादिति भावः। ध्वंसाद्यविरोधित्वादिति। तस्य ध्वंसात्यन्ताभावरूपत्वाऽ-संभवात्। अतिरिक्तस्य चाऽसत्त्वादिति शेषः। विषयनिर्वचनमेव कुरुते—तत्तदिति। तत्तदधिकरणस्वरूपमभावं विषयीकृत्येति ल्यब्लोपे पञ्चमी। कपालादौ घटध्वंसादि-शून्यताबुद्धिरित्यनुषङ्गः। जायत इति शेषः। एतच्चाभावप्रतियोगिकाभावमात्रस्यानति-रिक्तत्वमिति मतेन अभावाधिकरणकोऽभावमात्रप्रतियोगिकोऽभाव एव नानतिरिक्त इति मतेनाह—अतिरिक्ताद्वेति। पूर्ववद् ल्यब्लोपपञ्चमी अनुषङ्गश्चेति रीत्या दीधितिं व्याकुर्वते। रोचते चास्मभ्यमपीयमेव व्याख्या। नव्यं प्रति जगदीशोक्तरीत्या कृतायाः प्राचीनशङ्कायाः परमतानालोचननिबन्धनत्वस्योपपादितत्वात्।

अन्यविषयकत्वे इति। भविष्यतीतिप्रत्ययस्य वर्त्तमानकालोत्तरकालोत्पत्तिकत्व-विषयकत्वेन निर्वाहसंभवे, घटो नास्तीत्यादिप्रत्ययस्यात्यन्ताभावविषयकत्वे चेत्यर्थः। प्रतीतेः=लौकिकप्रत्यक्षस्य। प्रागभावस्येव ध्वंसस्याप्यसत्त्वे इति। घटध्वंसोत्तर-जायमानकपालधर्मिकघटोनास्तीतिप्रत्ययस्यापि अत्यन्ताभावविषयकत्वेनैव निर्वाहेण ध्वंससत्त्वे मानाभावः। न च ध्वंसं विना वक्ष्यमाणतत्पूर्वत्वादिनिर्वचनाऽसंभवात् तत्पूर्वत्वादिव्यवहार एवान्यथानुपपन्नो ध्वंसे प्रमाणमिति वाच्यम्। विनिगमनाविरहेण प्रागभावस्यैव ततः सिद्ध्यापत्तेः। उभयस्यैवं क्रमेण स्वीकारापत्तेर्वा। यदि च पूर्वत्वाद-

### ❀ दीधितिः ❀

**जातो घट इत्यादिवदुत्पन्नो घटध्वंस इत्यादिविलक्षणप्रत्ययबलेन नाशोऽतिरिच्यतां, न तु प्रागभावः।**

### ❀ जागदीशी ❀

पश्चान्निर्वचनमसंगतं स्याद् अतो ध्वंसे प्रमाणोपन्यासपूर्वकं प्रागभावमपाकरोति जात इत्यादिना। उत्पन्नो घटध्वंस इत्याकारकबुद्धेरुत्पत्त्यंशे उपनीतभानतया न वस्तुव्यवस्थापकत्वमिति यदि ब्रूयात्तदा घटादेरप्युत्पत्तिर्न स्यात् तत्तुल्यत्वादित्यावेदयितुं **जातो घट इत्यादिवदित्युक्तम्।** अतिरिच्यतामिति। अत्यन्ताभावादित्यादिः। न त्विति। प्रागभावशब्दोऽपि प्राक्कालस्यभावबोधकतया वाक्यमेव न तु पदमिति भावः।

ननु प्रागभावकालवृत्तित्वरूपं सामान्यतः पूर्वत्वं, तत्प्रागभावकालवृत्ति-

### ❀ काशिकानन्दी ❀

कमतिरिक्तमेव स्वरूपसम्बन्धविशेषः इति न प्रागभावस्य सिद्धिप्रसक्तिस्तदा ध्वंसस्यापि सिद्धिरेव स्यादिति भावः। तद्घटितस्य=ध्वंसघटितस्य। पश्चान्निर्वचनमिति। पूर्वत्वादीनामतिरिक्तत्वस्वीकारापेक्षया ध्वंसस्वीकारस्यैवौचित्यमभिमत्येत्यादिः। प्रमाणोपन्यासेति। तत्पूर्वत्वादिव्यवहारान्यथानुपपत्त्यतिरिक्तप्रमाणोपन्यासेत्यर्थः। उपनीतभानतयेति। उत्पत्तेरतीन्द्रियतया लौकिकविषयत्वाऽसंभवादिति भावः। न वस्तुव्यवस्थापकत्वमिति। प्रागभावोऽतिरिक्त इति मन्वानानां प्रागभावत्वोपनीतभानस्वीकारेऽपि यथा न तस्य वस्तुव्यवस्थापकत्वं तथा घटध्वंसादिस्वीकर्तृनये उत्पत्तिस्वीकर्तृनये च तादृशप्रतीतिस्वीकारमात्रस्य न वस्तुव्यवस्थापकत्वमिति भावः। प्रागभावत्वोपनीतभानं न सर्वजनसिद्धमिति तस्य वस्तुव्यवस्थापकत्वाभावेऽपि आपामरसाधारणोत्पत्त्युपनीतभानसप्रत्ययस्य वस्तुव्यवस्थापकत्वमावश्यकमतो— यदीत्युक्तम्। न तु पदमितीति। न च प्राक्शब्दाभावशब्दात्मकपदद्वयस्योभयमतेऽपि पदत्वं दुर्घटमिति वाच्यम्। शक्तं पदमिति सिद्धान्तेन प्रागभावत्वावच्छिन्नशक्तस्य तस्य पूर्वमते पदत्वादिति भावः।

महाप्रलयस्य किंचित्पूर्वत्ववारणाय प्रागभावेति, अभेदेन कालविशेषणम्। तेन प्रागभावाधिकरणमहाकालवृत्तित्वस्य महाप्रलये सत्त्वेऽपि न दोषः। तत्प्रागभावेति। घटादिप्रागभावेत्यर्थः। ननु तत्पूर्वत्वं तदधिकरणकालवृत्तिध्वंसप्रतियोगिकालवृत्तित्वमेव। न च घटाद्यधिकरणद्वितीयतृतीयादिक्षणवृत्तिध्वंसप्रतियोगिप्रथमादिक्षणवृत्तिवस्तुविशेषस्यापि घटपूर्वत्वापत्तिरिति वाच्यम्। स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगिकालवृत्तित्वस्य तथात्वात्। अग्रे एतस्मिन्नेव लक्षणे एव च निर्भरस्य दर्शयिष्यमाणत्वात् उत्पत्तिघटितलक्षणं दीधितिकृतोऽद्युक्तम्। अतएव चाग्रे उत्पत्तिपरिष्कारोऽपि

❀ दीधितिः ❀

**पूर्वत्वतत्पूर्वत्वादिव्यवहारश्चातीतकालवृत्तित्व-तदुत्पत्तिकालीन-**

❀ जागदीशी ❀

स्वरूपं च तत्पूर्वत्वं विना प्रागभावं दुर्वचमत आह **पूर्वत्वेति**। **तत्पूर्वत्वादी-ति**। आदिपदेन तदव्यवहितपूर्वत्वसंग्रहः। तच्च तदुत्पत्तिक्षणोत्पत्तिकध्वं-सप्रतियोगिकालवृत्तित्वम्। सामान्यतः पूर्वत्वमतीतकालवृत्तित्वम्। तच्च ध्वंसप्रतियोगिकालवृत्तित्वम्। महाप्रलयवारणाय प्रतियोग्यन्तस्याऽऽवश्यक-त्वादिति भावः। **तदुत्पत्तीत्यादि**। स्वस्यापि स्वद्वितीयक्षणादिवृत्तिध्वंसप्रति-योगिनि प्रथमादिक्षणे वृत्तेः सर्वस्यैव स्वपूर्वत्वापत्तिरत उक्तं **तदुत्पत्तीति**।

**अत्र च तदुत्पत्तिस्तदधिकरणसमयध्वंसानधिकरणसमयमात्रं न तु तत्स-**

❀ काशिकानन्दी ❀

एवेत्याशङ्क्याह—तत्पूर्वत्वादीत्यादिपदेनेति। एवं चाऽव्यवहितपूर्वत्वमुत्पत्त्यघटितं दुर्व-चमिति तदनुरोधेनाग्रे उत्पत्तिपरिष्कार इति भावः। तच्च = तदव्यवहितपूर्वत्वं च। घटोत्प-त्तिक्षणे घटपूर्वक्षणस्य ध्वंस उत्पद्यते। न तु घटपूर्वद्वितीयक्षणादेः। घटपूर्वप्रथमक्षणे एव तदुत्पत्तेः। एवं तदानीमुत्पन्नध्वंसप्रतियोगित्वं घटपूर्वप्रथमक्षण इति तस्य घटाव्यवहितपूर्व-कालत्वम्। तच्च = सामान्यतः पूर्वत्वं च। ननु सर्वस्यापि अनित्यवस्तुनो यत्किंचिद्वस्तु-पूर्वत्वात् सामान्यातः पूर्वत्वं कालवृत्तित्वमेवास्त्वित्यत आह—महाप्रलयवारणायेति। महाप्रलयस्य पूर्वत्ववारणायेत्यर्थः। महाप्रलयोत्तरं कस्यापि वस्तुनोनुत्पत्स्यमानतया तत्र कंचिद्वस्तुपूर्वत्वाऽसंभवेन महाप्रलयस्य सामान्यतः पूर्वत्वमपि नास्ति, महाप्रलयोत्तरत्व-व्यवहारोप्यसिद्ध एवेति भावः। ध्वंसप्रतियोगिकालत्वं ध्वंसप्रतियोग्यभिन्नकालत्वम्। स्वस्यापि = घटादेरपि। स्वद्वितीयक्षणेति। घटाद्युत्पत्तिद्वितीयक्षणेत्यर्थः। सर्वस्यैव—घटादेः। स्वपूर्वत्वापत्तिः=घटादिपूर्वत्वापत्तिः। अत इति। एवं तदव्यवहितपूर्वत्वलक्षणे तदधिकरणयावत्क्षणोत्पत्तिध्वंसप्रतियोगित्वं न निवेशयितुं शक्यते। द्वित्र्यादिक्षणवृत्तिघटाद्यधिकरणयावत्क्षणोत्पत्तिकत्वस्य कस्मिंश्चिदपि ध्वंसेऽसंभवात्। तदधिकरणयावत्क्षणवृत्तित्वमात्रप्रवेशे चिरकालात् प्राग् जातध्वंसस्यापि घटाधिकरणयावत्कालवृत्तितया तत्प्रतियोगिचिरकालप्राग्वर्त्तिवस्तुनोऽपि तदव्यवहितपूर्वत्वापत्तिरिति तल्लक्षणे उत्पत्तिप्रवेश आवश्यक एव।

अत्र च = तत्पूर्वत्वलक्षणे च। तदधिकरणसमयध्वंसानधिकरणसमयसम्बन्धस्त-दुत्पत्तिः। घटाधिकरणसमयध्वंसानधिकरणीभूतस्य घटोत्पत्तिक्षणपर्यवसायिनादिकालवर्त्ति-यावत्क्षणस्य तदुत्पत्तित्ववारणाय समयसम्बन्धनिवेशः। तन्निवेशे घटोत्पत्तिक्षणातिरिक्ता-नामन्येषां निरुक्तक्षणानां विभिन्नकालीनतया तदीयकालिकसम्बन्धस्य घटे विरहेण तेषां तदुत्पत्तित्ववारणम्। प्रकृते च तत्पूर्वत्वं निरुक्तनिखिलक्षणेषु इष्टमेवेति तद्वारणाय समय-सम्बन्धप्रवेशो न कर्त्तव्य इत्याह—तदुत्पत्तीत्यादि। समयमात्रमिति। तत्पूर्वत्वलक्षणे

❀ दीधितिः ❀

ध्वंसप्रतियोगिकालवृत्तित्वादिविषयक एवास्तु ।

❀ जागदीशी ❀

-म्बन्धोऽपि निवेश्यो वैयर्थ्यात् । स्वोत्पत्तिकालीनात्यन्ताभावप्रतियोगित्वद्वितीयक्षणादिवृत्तित्वमपि सर्वस्यास्तीति पूर्वदोषतादवस्थ्यमतो ध्वंसेत्युक्तम् । नष्टघटादिगोचरज्ञानादिव्यक्तीनां स्वोत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिनि घटादौ विषयतया वर्त्तमानत्वेन स्वपूर्वत्वापत्तिरतः कालेति—

❀ काशिकानन्दी ❀

निवेश्यमिति शेषः । तत्सम्बन्धः = तदधिकरणसमयध्वंसानधिकरणसमयसम्बन्धः । निवेश्य इति । तत्पूर्वत्वलक्षणे इत्यादिः । वैयर्थ्याद् = गौरवात् । तेन तदुत्पत्त्यात्मकालवृत्तिध्वंसप्रतियोगिकालवृत्तित्वलक्षणे तादृशकालवृत्तिध्वंसाऽप्रवेशेपि न दोषः । न च तदुत्पत्त्यात्मककालः कुतः प्रवेश्यते ननु तदुत्पत्त्यधिकरणकाल इति वाच्यम् । महाकालमादाय स्वस्य स्वपूर्वत्वप्रसङ्गात् । न च कालिकसम्बन्धस्यैक्यात्तादृशसम्बन्धात्मककालप्रवेशेऽपि दोषः, तथा सति तत्तत्क्षणानुयोगिकत्वविशिष्टसम्बन्धस्यैवोत्पत्तित्वात् । अन्यथा मतान्तरेपि दोषात् । घटोत्पत्तिक्षणे घटीयद्वितीयक्षणो नास्तीति प्रतीतिविषयात्यन्ताभावो लभ्यते । तत्प्रतियोगिद्वितीयक्षणवृत्तित्वं घटस्यास्तीति स्वस्य स्वपूर्वत्वापत्तिरिति तद्वारणाय ध्वंसेत्युक्तं, तदुक्तौ च द्वितीयक्षणध्वंसो न प्रथमक्षणे किन्तु तृतीयादिक्षणे एवेति न दोष इत्याह—स्वोत्पत्तिकालीनेति । ध्वंसेत्युक्तमिति । ननु ध्वंसप्रवेशेऽपि तद्दोषतादवस्थ्यमेव । घटोत्पत्तिक्षणे वर्त्तमानो यो घटपूर्वक्षणध्वंसस्तस्मिन् ध्वंसे घटोत्पत्तिक्षणध्वंसभेदस्य सत्त्वात्तस्य चाधिकरणात्मकस्य प्रतियोगिनि प्रथमक्षणध्वंसे कालिकेन घटस्य वृत्तेरिति चेन्न, स्वोत्पत्तिकालनिरूपितवृत्तितावच्छेदकध्वंसतानिरूपितप्रतियोगिताश्रयवृत्तित्वस्य विवक्षितत्वात् । प्रथमक्षणध्वंसवृत्तिप्रतियोगित्वं हि अन्योन्याभावतानिरूपितं न तु ध्वंसतानिरूपितम् । न च पूर्वक्षणध्वंसस्यानन्तकालपर्यन्तस्थायिनः प्रथमादिक्षणध्वंसाधिकरणतया ध्वंसतानिरूपितप्रतियोगित्वमपि प्रथमक्षणे वर्त्तत इति वाच्यम् । कालिकेन प्रथमक्षणध्वंसाधिकरणत्वस्य पूर्वक्षणध्वंसे सत्त्वेऽपि तस्याधिकरणस्वरूपत्वानभ्युपगमात् । अभावमात्रप्रतियोगिकत्वाभावाच्च ।

नष्टघटविषयकं स्मरणाद्यात्मकं यद् ज्ञानं तादृशज्ञानस्य तादृशज्ञानपूर्वत्वापत्तिः । स्वोत्पत्तिकालवृत्तिर्या घटध्वंसस्तत्प्रतियोगिनि घटे विषयतया तादृशस्मरणाद्यात्मकज्ञानस्य वृत्तित्वादिति तद्वारणाय स्वोत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं कालिकसम्बन्धेन बोध्यम् । तथा च सति ज्ञानोत्पत्तिकालवृत्तिध्वंसप्रतियोगिघटस्य ज्ञानाऽसमानकालिकतया कालिकसम्बन्धेन तद्वृत्तित्वं न ज्ञानस्येति न दोष इत्याह—नष्टघटादीति । स्वोत्पत्तिक्षणेति । ज्ञानोत्पत्तिक्षणेत्यर्थः । स्वपूर्वत्वापत्तिरिति । स्वस्येत्यादिः । तादृशज्ञानपूर्वत्वापत्तिरित्यर्थः । कालेतीति । ननु घटस्यापि जन्यतया कालोपाधित्वात्कालपदोपादानेऽपि

❀ दीधितिः ❀

**दुःखात्यन्ताभावस्य स्वस्मिन्नुत्तरकालानुवृत्तिं,**

❀ जागदीशी ❀

कालिकसम्बन्धेन वृत्तित्वप्रापकम्।

ननु दुःखप्रागभावस्योत्तरकालानुवृत्तिमुद्दिश्य प्रायश्चित्तादौ प्रवृत्त्यन्यथानुपपत्त्यैव प्रागभावः सेत्स्यतीत्यत आह दुःखात्यन्ताभावस्येति। अत्यन्ताभावस्य स्वत एवोत्तरकालानुवृत्तेः संभवात् प्रायश्चित्तमनुपयुक्तं स्याद् अत उक्तं स्वस्मिन्निति।

❀ काशिकानन्दी ❀

गतिविरह एवेत्याशङ्क्याह— कालिकसम्बन्धेनेति।

सामान्यतः पूर्वत्वलक्षणे तु महाप्रलयस्य पूर्वत्ववारणाय कालपदं कालिकसम्बन्धेन वृत्तित्वप्रापकं बोध्यम्। अन्यथा महाप्रलयोत्पत्तिक्षणवृत्तिध्वंसप्रतियोगि यन्महाप्रलयविषयकज्ञानं विषयितया तद्वृत्तित्वस्य महप्रलये सत्त्वात्तस्यापि पूर्वत्वापत्तिः स्यात्।

अत्रेदं बोध्यम्। पूर्वो घट इत्यादौ ध्वंसप्रतियोगिकालवृत्तिर्घट इति बोधः। तत्र पूर्वपदस्य ध्वंसप्रतियोगिकालवृत्तिरर्थः। तत्पूर्वो घटः एतत्पटपूर्वः स घट इत्यादौ एतत्पटपदस्य एतत्पटोत्पत्त्यधिकरणकालवृत्तिरर्थः। तस्य पूर्वपदार्थध्वंसप्रतियोगिकालवृत्तित्वैकदेशे ध्वंसेऽन्वयः, तथा चैतद्पटोत्पत्तिकालवृत्तिध्वंसप्रतियोगी स घट इत्यन्वयबोधः। अथ वा पूर्वपदस्यैव एतत्पटोत्पत्तिकालवृत्तिध्वंसप्रतियोगिकालवृत्तिरर्थः। एतत्पटपदं च तात्पर्यग्राहकम्। एतत्पटाव्यवहितपूर्वः स घट इत्यत्र एतत्पटपदस्य एतत्पटोत्पत्तिकालवृत्तिरर्थः। तस्य अव्यवहितपदार्थोत्पत्तिमदेकदेशे उत्पत्तौ, उत्पत्तिमतश्च पूर्वपदार्थैकदेशे ध्वंसेऽन्वयः। पूर्वपदस्यैव वा एतत्पटोत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगिकालवृत्तिरर्थः। एतत्पटाव्यवहितेति च तात्पर्यग्राहकम्।

उत्तरकालानुवृत्तिम्=उत्तरकालसम्बन्धात्मकोत्तरकालसत्त्वम्। उद्दिश्य=अभिलक्ष्य। भवति हि इच्छा सर्वस्य दुःखं मे मा भूदिति। न च दुःखात्यन्ताभाव एव तद्विषय इति वाच्यम्। तस्य नित्यत्वेन सिद्धायां तस्यामिच्छाऽसंभवात्। न च प्रागभावस्यापि सिद्धतया न तत्रापीच्छेति वाच्यम्। उत्तरकालसत्त्वस्यैवेच्छाविषयत्वात्। न त्वत्यन्ताभावस्य तदपि संभवति। नित्यतया अननुवृत्तेरसंभवात्।

दुःखात्यन्ताभावस्य सामान्यत उत्तरकालानुवृत्तेस्तन्नित्यत्वेन प्रायश्चित्ताऽसाध्यत्वेऽपि स्वस्मिन्नुत्तरकालानुवृत्तेः प्रायश्चित्तसाध्यत्वं सुघटमित्याशयेनाह—दीधितौ—स्वस्मिन्नुत्तरेति। प्रायश्चित्तानुष्ठातृपुरुषावच्छेदेनोत्तरकालानुवृत्तिमित्यर्थः। अत्यन्ताभावस्य नित्यत्वेऽपि एकदेशावच्छेदेन तस्य, अपरदेशावच्छेदेन तदभावस्य, एकस्मिन्नेव च देशे कालभेदेन तदुभयस्यानुभवविषयतया जन्यायास्तदनुवृत्तेः प्रायश्चित्तसाध्यत्वं संभवतीति भावः।

स्वत एव=साधारणकारणत एव। उत्तरकालानुवृत्तेः=उत्तरकालसम्बन्धस्य।

**❀ दीधितिः ❀**

**दुःखसाधनध्वंसं वा समुद्दिश्य क्रियाविशेषे प्रवृत्तिरस्तु ।**

**❀ जागदीशी ❀**

ननूत्तरकालसम्बन्धात्मिकायां तदनुवृत्तौ प्रायश्चित्तं न हेतुः, तस्याः क्लृप्तकारणाधीनत्वाद् । दुःखात्यन्ताभावस्य तु नित्यत्वान्न तत्र प्रायश्चित्तस्य हेतुत्वं संभवतीत्यत आह **दुःखसाधनेति** । तथा च दुःखसाधनीभूतपापनाशं प्रत्येव प्रायश्चित्तं हेतुः । तस्य च दुःखात्यन्ताभावसुखतत्साधनान्यत्वेऽपि द्विष्टाभावत्वेनैवेष्टत्वमिति स्वयमेव बौद्धाधिकारटिप्पण्यां व्यवस्थापितमिति भावः ।

**❀ काशिकानन्दी ❀**

नन्विति । आत्मनि दुःखात्यन्ताभावस्योत्तरकालसम्बन्धः नात्मस्वरूपो दुःखात्यन्ताभावस्वरूपो वा तयोर्नित्यत्वेन सर्वदैवात्मनि दुःखात्यन्ताभावप्रसक्तेः । नापि सम्बन्धान्तरमुत्पत्तिविनाशशालि गौरवात् । नापि क्षणात्मक एव सः । तादृशक्षणस्य निखिलात्मसाधारणत्वेन एकस्मिन्नात्मनि दुःखविरहकालेऽपरस्मिन्नपि तदापत्तेः । तस्य संसर्गत्वनिरुक्तौ दुःखविरहवत्यपि दुःखविरहानापत्तेः किन्तु तत्तत्क्षणकालीनतत्तदात्मादिकमेव दुःखक्षणकालिकत्वविशिष्टातदात्मादेः संसर्गत्वाऽकल्पनान्न दोषप्रसक्तिः । स च सम्बन्धो न प्रायश्चित्तसाध्यः । क्षणेषु जन्यत्वसत्त्वेऽपि तत्कालिकात्मनि जन्यत्वविरहात् । नांशे क्षणोत्पादकतयैव चारितार्थ्यं प्रायश्चित्तस्येति युक्तम् । क्रियाद्यात्मकक्षणस्य तत्तद्द्रव्यादिरूपक्लृप्तकारणैरेवोत्पादेन प्रायश्चित्तस्यान्यथासिद्धत्वात् ।

ननु पापनाशो न दुःखात्यन्ताभावस्वरूपः, न वा सुखस्वरूपः, नापि सुखसाधनस्वरूपः, यागादेरेव सुखसाधनत्वात् । न च पापस्य सुखप्रतिबन्धकतया प्रतिबन्धकसंसर्गाभावविधया तन्नाशस्य सुखसाधनत्वमिति वाच्यम् । यागादिसत्त्वे पापसत्त्वेऽपि स्वर्गोत्पत्तेः पापे दुःखसाधनत्वमात्रकल्पनात् । कथमन्यथा प्रायश्चित्तमकृतवतः "अग्नीषोमीयं पशुमालभेते"त्यादिवेदबोधितपशुवधघटितयागात् स्वर्गोत्पत्तिरिति कथं तदर्थं प्रवृत्तिरित्याशङ्क्याह—तस्य चेति । पापनाशस्य चेत्यर्थः । तत्साधनेति । सुखसाधनेत्यर्थः । दुःखात्यन्ताभावस्य अजन्यत्वात् । अत्र च दुःखाभावस्य सुखस्य च साक्षात्पुरुषार्थत्वम्, अन्यस्य परम्परया । एवं च कथं पापनाशप्रयोजकप्रायश्चित्ते प्रवृत्तिरिति भावः । द्विष्टाभावत्वेन = द्वेषविषयप्रतियोगिकाभावत्वेन । इष्टत्वमिति । दुःखे तत्साधने च द्वेषः सर्वेषाम् । अतश्चैव तद्ध्वंसफलकामनया प्रायश्चित्तादौ प्रवृत्तिः, दृश्यते हि दुःखात्यन्ताभावादिभिन्नद्वेषविषयदुःखकारणशत्रुमरणकारणतद्विशरणादौ प्रवृत्तिरिति भावः ।

ननु मानान्तरसिद्धं हीत्यादिना प्रागभावस्य प्रवृत्त्यनुमेयत्वेऽन्योन्याश्रयदोषं मूलकारो दर्शयिष्यति । तन्न युक्तम् । अन्यदीयप्रायश्चित्तप्रवृत्तिमवगत्य तदन्यथानुपपत्त्या प्रयोजनं परिकल्प्यान्यस्य प्रवर्त्तनेऽन्योन्याश्रयाभावात् । न चैवमन्योन्यस्येत्येवं क्रमेणानवस्थापत्तिः ।

❀ दीधितिः ❀

**मानान्तरसिद्धं हि प्रयोजनमुद्दिश्य पुमांसः प्रवर्त्तन्ते,**

❀ जागदीशी ❀

[ननु यद्यपि इयं प्रवृत्तिः सफला प्रेक्षावत्प्रवृत्तित्वादित्यनुमानस्य दुःखसाधनध्वंसादिफलकतया न तथासिद्धिः। तथापि इयं प्रवृत्तिः प्रागभावफला प्रागभावोद्देश्यकप्रवृत्तित्वादित्यनुमानात् फलत्वेन प्रागभावः सिद्ध्येदित्यत आह **मानान्तरेति**। मानान्तराभावात् साध्यसाधनयोरप्रसिद्ध्या न तादृशानुमितिरिति भावः।

❀ काशिकानन्दी ❀

संसारस्यानादितया तादृशानवस्थाया अकिंचित्करत्वात्। अपि च विधिवाक्येन प्रायश्चित्ते इष्टसाधनताकृतिसाध्यतयोर्ज्ञानानन्तरं तदन्यथानुपपत्त्या प्रयोजनं परिकल्प्य प्रवृत्तिसंभवान्नान्योन्याश्रयः। अन्यथा पापध्वंसस्य फलत्वमिति वदतोऽप्यन्योन्याश्रयः कथं वार्यः। निषिद्धकर्मणः स्वध्वंसद्वारा निर्व्यापारेणैव वा नरकजननसंभवेन पापे मानाभावात् प्रायश्चित्तान्यथानुपपत्त्यैव तत्कल्पने अन्योन्याश्रयात्। एवं च प्रायश्चित्तफलध्वंसप्रतियोगितया विधिवाक्यान्यथानुपपत्त्या पापकल्पने तत्फलभूतानुवृत्तिप्रतियोगितया प्रागभावोऽपि सिद्ध्येदिति गदाधराक्षेपं प्रतिक्षिपन्नन्योन्याश्रयं स्फुटयितुं शङ्कते—**नन्विति**। क्षेपोऽयम्। फलकतयेति। अन्यथोपपत्तेरिति शेषः। न तथासिद्धिः=न प्रागभावत्वेन प्रागभावसिद्धिः। न च पापध्वंसस्य वा फलत्वं प्रागभावानुवृत्तेर्वा फलत्वमित्यत्र विनिगमनाविरहात्प्रागभावत्वेन प्रागभावसिद्धिरपि स्यादिति वाच्यम्। प्रागभावसत्त्वेऽपि तस्य स्वत एवानुवृत्तिसंभवात्तदनुवृत्तेः पुरुषार्थत्वाऽसंभवेन तदर्थं प्रायश्चित्ते प्रवृत्तेरसंभवात्। अत एव च प्रागभावस्याप्यसिद्धेः। कथंचित् पुरुषार्थत्वस्वीकारेऽपि प्रागभावानुवृत्तौ मानाभाव एव। न च पापध्वंसेऽपि मानाभाव एवेति वाच्यम्। "यत् पशुर्मायुमकृतोरो वा पद्भिराहते अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वं ह सः" इत्यादिश्रुतेरेव मानत्वात्। न च तत्रैनआदिपदस्य पादाहत्यादिरर्थः। तस्या द्वित्र्यादिक्षणवर्त्तिन्याः कालान्तरभाविहोमाऽध्वंस्यत्वेन वाक्यवैयर्थ्यप्रसङ्गात्। एवं च प्रायश्चित्तफलध्वंसप्रतियोगितया निषिद्धकर्मजन्यपापात्मकादृष्टविशेषकल्पनमावश्यकमिति दिक्। **प्रागभावफलेति**। उत्तरकालानुवृत्तिविशिष्टप्रागभावफलेत्यर्थः। एवं चोत्तरकालानुवृत्तेः साध्यत्वमादाय कथंचिद्विशिष्टस्यापि प्रायश्चित्तफलत्वं कल्पनीयमिति भावः। न चैवं स्वस्मिन्नुत्तरकालानुवृत्तिविशिष्टात्यन्ताभावस्यापि फलत्वं सिद्ध्येदिति वाच्यम्। तथापि विनिगमनाविरहादुत्तरकालानुवृत्तिविशिष्टप्रागभावस्य फलत्वमपि दुरपनयमित्याशयः। **मानान्तराभावादिति**। प्रागभावे इत्यादिः। **साध्येति**। हेतुसिद्धौ साध्यप्रसिद्धिरपि सुघटेत्यत आह—**साधनेति**। न तादृशानुमितिः=न प्रागभावफलानुमितिः। एवं च प्रागभावसिद्धौ सत्यां हेतुसिद्धिः। तत्सिद्धौ च साध्यसिद्धिः। तत्सिद्धौ च प्रागभावसिद्धिरित्येवमन्योन्याश्रयः स्फुट इति भावः।

❀ दीधितिः ❀

**न तु प्रवृत्त्यैव तत्सिद्धिः ।**

❀ जागदीशी ❀

न त्विति । प्रवृत्तेः प्रयोजनाधीनतया तदन्यथानुपपत्त्या प्रयोजनकल्पनेऽन्योन्याश्रयप्रसङ्गादिति भावः ।

ननु प्रागभावाऽसत्त्वे जातस्यापि घटस्य द्वितीयादिक्षणे पुनरुत्पादप्रसङ्गः । कपालसंयोगाद्यात्मकसामग्र्यास्तदानीमपि सत्त्वात् । न चाऽऽपाद्यस्य पुनरुत्पादस्याऽप्रसिद्धिः । एतद्घटद्वितीयक्षणो यद्येतद्घटसामग्रीक्षणः स्याद् एतद्घटोत्पत्तिप्राक्क्षणः स्यात् इत्यापादनसंभवात् । न चात्र

❀ काशिकानन्दी ❀

न त्वितीति । इत आरभ्य मूलम् । प्रयोजनाधीनतया = प्रयोजनज्ञानाधीनतया । तदन्यथानुपपत्त्यां = प्रवृत्त्यन्यथानुपपत्त्या । अन्योन्याश्रयप्रसङ्गादिति भाव इति । इयं प्रवृत्तिः प्रयोजनवती, प्रागभावात्मकप्रयोजनवती वा एतत्प्रवृत्तित्वादित्यनुमाने प्रागभावात्मकप्रयोजनज्ञाने सति हेतौ तद्व्यापकत्वज्ञानं, तज्ज्ञाने च सति साध्यानुमितिरिति तद्घटकतया प्रागभावसिद्धिः तत्र च सति तद्व्याप्यत्वज्ञानमित्यन्योन्याश्रय इति भावः ।

तदानीमपि = घटोत्पत्तिक्षणेऽपि । घटोत्पत्तिद्वितीयक्षणेऽपीति वा । न चेति । अप्रसिद्धिरित्यन्वयः । पुनरुत्पादस्येति । पुनरुत्पादो नाम उत्पादविशिष्टोत्पादः । वै० स्वोत्तरकालवृत्तित्व-स्वसामानाधिकरण्योभयसम्बन्धेन । केवलोत्पादमात्रं नापादयितुं शक्यम् । घटादेरुत्पादस्येष्टत्वाद् । न च पुनरुत्पादो नोक्तरूपः । किन्तु उत्तरकालवृत्तित्वसम्बन्धेनोत्पादविशिष्टोत्पाद एव स च कार्यान्तरे प्रसिद्ध एवेति वाच्यम् । उत्तरकालवृत्तित्वसम्बन्धेन यत्किञ्चित्पटाद्युत्पत्तिविशिष्टोत्पत्तेर्घटादौ सर्वैः स्वीकारात् । न च तद्घटोत्पत्तिक्षणानन्तरोत्पत्तिरापाद्यत इति वाच्यम् । उत्पत्तित्वस्यानुगतत्वात्, आपादकाऽसिद्धेश्च । न चैतद्घटसामग्रीक्षणत्वमापादकमिति वाच्यम् । दृष्टान्तासिद्धेः । स्वरूपासिद्धेश्च । सामग्रीपदेन दण्डचक्रादिमात्राभिधाने घटोत्पादक्षणे सर्वैरेव तत्स्वीकाराच्च । प्रागभावघटितसामग्र्यभिधानेऽप्रसिद्धेश्च । एतेन एतत्क्षणावृत्तित्वसामग्रीकं यद्यत् तद्भेदकूटस्यापादकत्वं, एतत्क्षणानुत्तरत्वोत्पत्तिकं यद्यत्तद्भेदकूटस्यापाद्यत्वमित्यादिकमपि परास्तम् । यद्यपि अयं दोषो वक्ष्यमाणकल्पेऽप्यस्ति । तथापि तस्याग्रे परिहरिष्यमाणत्त्वादाह— एतद्घटेति । एतद्घटद्वितीयक्षणः = एतद्घटोत्पत्तिद्वितीयक्षणः । इदं च प्रतियोगिनाश्यत्वं प्रागभावस्य कार्योत्पादकालवृत्तितया च प्रागभावस्य प्रयोजकत्वमुत्पादे इत्यभिमत्य । अन्यथा तु एतद्घटीयाद्यक्षण एव निवेश्यः । वस्तुतोऽग्रे घटोत्पत्तिप्राक्क्षणत्वस्यैवापादनीयत्वाद् द्वितीयक्षणपर्यन्तगमनं चिन्त्यप्रयोजनम् । एतद्घटसामग्रीद्वितीयक्षण इति वा पाठः उत्तरत्राप्येवम् । प्राक्क्षणः स्यात् । दृष्टं हि निखिलसामग्रीसमवधानोत्तरं घटोत्पत्तेः तादृशसामग्रीक्षणस्य घटोत्पत्तिप्राक्क्षणत्वमिति भावः । ननु केयं सामग्री । दण्डचक्रादिकारणकलापमात्रं वा प्रागभावघटितदण्डचक्रादिकारणकलापो वा । नाद्य इत्याह— अत्र

❀ जागदीशी ❀

सामग्रीपदेन दण्डचक्रादिमात्राभिधाने सर्वैरेव घटद्वितीयक्षणस्यैव तद्वत्त्वोपगमाद् विपर्ययाऽपर्यवसायित्वम्, प्रागभावादिघटितकारणकूटस्याभिधाने चाऽपादकाऽप्रसिद्धिरिति वाच्यम् । स्वकारणीभूतदण्डचक्रादिविशिष्टोऽयं घटो यदि दण्डचक्राद्यतिरिक्तकारणको न स्याद् जन्यत्वे सति तद्घटोत्पत्त्युत्तरोत्पत्त्यत्यन्ताभाववान् न स्याद् । दण्डचक्रादिजन्यस्य तत्सत्त्वे जनननियमादित्यस्य विवक्षितत्वाद् ।

वस्तुतो घटोत्पत्तिक्षणो यदि तद्घटजनकतावच्छेदकधर्मावच्छिन्नाभाववान्

❀ काशिकानन्दी ❀

सामग्रीपदेनेति । मात्रेति । मात्रपदेन प्रागभाववर्जनम् । सर्वैरेव = प्रागभाववादिभिः तदनङ्गीकर्तृभिश्च । घटद्वितीयक्षणस्यैव = घटद्वितीयक्षणस्यापि । तद्वत्त्वोपगमात् = दण्डचक्रादिकारणकलापवत्त्वोपगमात् । विपर्ययाऽपर्यवसायित्वमिति । आपादनस्येत्यादिः । पर्वतो यदि वह्न्यभाववान् स्यात्तर्हि धूमाभाववान् स्यादित्यापादनं विपर्ययपर्यवसायि । विपर्ययस्तत्र—नास्ति धूमाभावोऽतो नास्ति वह्न्यभाव इति । प्रकृते चापादानं दण्डचक्रादिमान् स्याद् एतद्घटोत्पत्तिप्राक्क्षणः स्यादिति । विपर्ययश्च नास्ति घटोत्पत्तिप्राक्क्षणत्वमतो न दण्डचक्रादिमत्त्वमिति । एवं विपर्ययस्तु न संभवति । दण्डचक्रादिमत्त्वस्य घटद्वितीयक्षणे सर्वैरेवाङ्गीकारेण बाधादिति ।

ननु सामग्रीपदेन केवलदण्डचक्रादेर्न ग्रहणमपि तु प्रागभावघटितदण्डचक्रादेः । तथा च घटोत्पत्तिप्राक्क्षणत्वाभावेन तादृशसामग्र्यभावरूपविपर्ययः संभवतीति द्वितीयं पक्षं निरस्यति—प्रागभावेति । अप्रसिद्धिरिति । प्रागभावस्याप्यसिद्धेस्तद्घटितसामग्रीरूपापादकाप्रसिद्धिरित्यर्थः । दण्डचक्राद्यतिरिक्तकारणकत्वाभावरूपापादकसत्त्वेऽपि तद्घटोत्पत्त्युत्तरोत्पत्त्यत्यन्ताभावाऽभावरूपापाद्यस्य गगनादौ विरहादाह—जन्यत्वे सतीति । जन्यत्वविशिष्टो यः तद्घटोत्पत्त्युत्तरोत्पत्त्यत्यन्ताभावः तद्भिन्नत्वमापाद्यम् । जन्यत्वविशिष्टतद्घटोत्पत्त्युत्तरोत्पत्तिरपि गगनादौ व्यभिचरित इति अभावद्वयम् । अत्रापाद्यं पटादौ प्रसिद्धम् । तद्घटोत्पत्त्युत्तरोत्पत्तिके पटे जन्यत्वसत्त्वेऽपि तद्घटोत्पत्त्युत्तरोत्पत्त्यत्यन्ताभावविरहात् तादृशो यो घटः पूर्वोत्पन्नपटादिश्च तद्भिन्नत्वस्य उत्तरकालोत्पत्स्यमानपटादौ सत्त्वात् । दण्डादिविरहकाले तद्विरहादेव पुनरुत्पत्त्यप्रसक्त्या प्रागभावासिद्धिरित्यतः स्वकारणीभूतदण्डचक्रादिविशिष्टेतद्घटस्य पक्षत्वम् । तत्सत्त्वे = दण्डचक्रादिसत्त्वे । जनननियमात् = उत्पत्तिनियमात् ।

ननु विपर्यये अयं घटः दण्डचक्राद्यतिरिक्तकारणकः जन्यत्वे सति तद्घटोत्पत्त्युत्तरोत्पत्त्यत्यन्ताभाववत्त्वात् । उत्तरोत्पन्नपटवदित्यत्र जन्यत्वस्यैव हेतुत्वसंभवेनाधिकवैयर्थ्यम् । न च तावानेव हेतुः । अप्रयोजकत्वात् । न च दण्डचक्राद्यतिरिक्तकारणको न स्याद् जन्यो न स्यात् आकाशवदिति युक्तम् । कारणवान् न स्याज्जन्यो न स्यादित्यस्यैव सम्यक्त्वेन प्रागभावाऽसिद्धेरित्याशङ्क्याह—वस्तुत इति । घटोत्पत्तिक्षणः = तद्घटोत्पत्तिक्षणः । तद्घटजनकतावच्छेदकधर्मावच्छिन्नाभाववान् = तद्घटजनकतावच्छेदकधर्माव-

## ❀ दीधितिः ❀

उत्पन्न[स्य]पुनरुत्पादप्रसङ्गश्च लाघवात् कार्यादेः प्रतिबन्धकत्वे·

## ❀ जागदीशी ❀

न स्यात्तद्घटोत्पत्तिप्राक्क्षणः स्यादित्येवापादनीयमतो न कश्चिद्दोष इत्यत आह उत्पन्नेति। तथा च जन्यद्रव्यसामान्यं प्रत्येव द्रव्यादिसामान्याभावत्वेन हेतुत्वादुत्पन्नस्य घटादेर्द्वितीयादिक्षणे पुनर्नोत्पादः।

नचैवमेकतन्तुसंयोगनाशान्महापटनाशोत्तरमवस्थितेभ्यस्तन्तुसंयोगेभ्य एव पटान्तरोत्पाददशायां पुनर्महापटोत्पत्तिवारणार्थं प्रागभावस्य हेतुत्वमावश्यकं, द्रव्यसामान्याभावस्य प्राक् सत्त्वात्, कार्योत्पत्तिक्षणे कार्येण प्रतिबन्धाऽसंभवादिति वाच्यम्। तत्र विनष्टतन्तुसंयोगव्यक्तेर्महापटं प्रति विशिष्य हेतुत्वात्।

## ❀ काशिकानन्दी ❀

च्छिन्नप्रतियोगिताकाभाववान्। न तु तादृशधर्मावच्छिन्नत्वावच्छिन्नप्रतियोगिताकाभाववान्। यत्किंचित्कारणस्य तदानीं सत्त्वात्। अत्र च विपर्ययः घटोत्पत्तिक्षणो घटजनकतावच्छेदकधर्मावच्छिन्नाभाववान्। घटोत्पत्तिप्राक्क्षणान्यत्वात्। प्राचीनक्षणवदिति। अत्र च दण्डाद्यभावस्य बाधात् अतिरिक्तः कश्चिदभावः सिद्ध्यति, तत्प्रतियोगितया च प्रागभाव, इति भावः। पुनर्नोत्पाद इति। घटोत्पत्तिद्वितीयक्षणे पुनर्घटोत्पत्तिश्चेत् तदा सा कपाले स्यात्। सा तु न संभवति। प्रथमक्षणे समुत्पन्नघटस्यैव तत्र प्रतिबन्धकत्वादिति भावः। एवं = द्रव्यादिसामान्याभावस्य हेतुत्वमुपगत्य प्रागभावहेतुत्वखण्डने। पटान्तरोत्पाददशायां = खण्डपटोत्पाददशायाम्। हेतुत्वमावश्यकमिति। तथा च महापटप्रागभावस्य महापटोत्पत्तिकाले एव नष्टतया तदानीं महापटप्रागभावविरहादेव न दोष इति भावः।

ननु महापटनाशानन्तरं खण्डपटोत्पत्तिर्भवतीति स एव पुनर्महापटोत्पत्तौ प्रतिबन्धको भविष्यतीत्यत आह—कार्योत्पत्तिक्षणे इति। खण्डपटोत्पत्तिः महापटोत्पत्तिश्चैककालिकेव क्षणे प्राप्ता। नहि तत्र महापटोत्पत्तिं प्रति खण्डपटः प्रतिबन्धको भवितुमर्हति। प्रतिबन्धकस्य पूर्वमपेक्षणात्। अन्यथा वैपरीत्येन खण्डपटं प्रति कार्योत्पादकाक्षणावच्छेदेन महापटस्यैव प्रतिबन्धकत्वं किं न स्यादिति भावः। कार्योत्पत्तिक्षणे = कार्योत्पत्तिक्षणवृत्तितया। कार्येण = खण्डपटादिना। असंभवादिति। कार्योत्पत्तिक्षणवृत्तितया कार्यस्य प्रतिबन्धकत्वे कुत्रापि कार्यं नोत्पद्येत। स्वात्मककार्यस्य सर्वत्रैव संभवादिति भावः। तत्र = एकतन्तुसंयोगनाशजन्यमहापटनाशस्थले। विनष्टेति। यः तन्तुसंयोगो विनष्टः स तद्व्यक्तित्वेन महापटं प्रति कारणमुपेयते। तद्विरहादेव च न पुनर्महापटोत्पादापत्तिः। यद्यपि सहस्रतन्तुकपटस्थले युगपदेव शत-द्विशतादितन्तुसंयोगनाशेन महापटनाशे तदुत्तरं पुनर्महापटोत्पत्तिवारणाय तावत्तन्तुसंयोगव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुत्वापेक्षया लाघवादेकः प्रागभावः कारणत्वेन सिद्ध्येत्। तथापि वक्ष्यमाणदिशा

## ❀ जागदीशी ❀

तदभावादेव तदानीं महापटोत्पत्त्यसंभवाद् । अतिरिक्तस्य प्रागभावधर्मिणः कल्पनामपेक्ष्य क्लृप्तायास्तन्तुसंयोगव्यक्तेरेव विशिष्य महापटं प्रति हेतुतायाः कल्पनार्हत्वात् । न च तन्तुसंयोगव्यक्तेरिव तत्समनियतसंयोगान्तराणामपि विनिगमनाविरहाद् विशिष्य हेतुत्वापत्तिः । तेषामन्यथासिद्धत्वस्य सर्वसम्मतत्वात् । न चैवमपि महापटोत्पत्तिदशायामेवोक्तस्थले भाविखण्डपटोत्पत्तिः स्यात्, कार्यस्य पूर्वमसत्त्वेन प्रतिबन्धाऽयोगादिति वाच्यम् । महापटध्वंसस्यापि उत्तरपटं प्रति विशिष्य हेतुत्वात् । अन्यथा प्रागभाववादिनामपि तत्र प्रतिकारानुपपत्तेरिति संक्षेपः । लाघवादिति । न च प्रागभावस्वीकारेऽपि

## ❀ काशिकानन्दी ❀

कार्यसमकालोत्पन्नध्वंसादेस्तत्र प्रतिबन्धकत्वसंभवान्न दोषः । वस्तुतस्तु ध्वंसादीनामनन्तानां प्रतिबन्धकत्वकल्पनामपेक्ष्य तावत्तन्तुसंयोगव्यक्तीनां तत्तद्व्यक्तित्वेन विशिष्यैव कारणत्वं युक्तम् । प्रागभावसिद्धिस्तु न । मण्यभावादीनामननुगतानां दाहादिकं प्रति हेतुत्वे गौरवेण पदार्थान्तरसिद्धिप्रसङ्गस्य यथा वारणं तद्वदत्रापि संभवादित्यग्रे स्फुटीभविष्यति ।

**तदभावादेव**=विनष्टतन्तुसंयोगव्यक्तेरभावादेव । **तदानीं**=खण्डपटोत्पाददशायाम् । **प्रागभावधर्मिणः**=प्रागभावात्मकधर्मिणः । **कल्पनार्हत्वादिति** । प्रागभाववादिनां, प्रागभावात्मकधर्मी तत्रानन्यथासिद्धनियतपूर्ववर्त्तित्वात्मकधर्मश्च कल्पनीयः । परेषां च क्लृप्तसंयोगव्यक्तौ अनन्यथासिद्धनियतपूर्ववर्त्तित्वमात्रं कल्पनीयमिति प्रागभाववादिनामेव गौरवमिति भावः । तन्तुसंयोगव्यक्तेर्विशिष्य हेतुत्वे एव गौरवमिति आशयानं पराचष्टे—**न चेति** । हेतुत्वापत्तिरित्यन्वयः । **तत्समनियतसंयोगान्तराणामपीति** । तत्संयोगव्यक्तिसमनियतानां कालगगनादिप्रतियोगिकतत्तन्त्वनुयोगिकसंयोगानामित्यर्थः । यद्यपि तन्तुद्वयसंयोगस्तन्तुद्वये, गगनादिसंयोगस्तु प्रत्येकतन्तौ गगनादौ चेति न समनियतत्वं, सोऽपि वा न हेतुः प्रागपि तत्सत्त्वात् । तथापि तत्कालोत्पन्नवाय्वादिसंयोगास्तथा ज्ञेयाः । **हेतुत्वापत्तिरिति** । तथा चानेकेषु धर्मकल्पनेन गौरवमिति भावः । **तेषां**=तत्कालोत्पन्नवाय्वादिसंयोगानाम् । **उत्तरपटं प्रति**=खण्डपटं प्रति । तेन एकतन्तुनाशोत्तरं पुनस्तत्तन्तोः संयोगोत्तरजायमानमहापटं प्रति पूर्वमहापटध्वंसस्य हेतुत्वविरहेऽपि न क्षतिः । न च महापटध्वंसस्य तदहेतुत्वे उत्तरमहापटः पूर्वमहापटोत्पत्तिकाले एवोत्पद्येतेति वाच्यम् । पूर्वमहापटध्वंसोत्तरजायमानसंयोगव्यक्तेर्विशिष्योत्तरमहापटहेतुत्वेनैव तद्दोषवारणात् । न च महापटध्वंसस्यैव विशिष्य तत्र हेतुत्वमस्तु न तूत्तरसंयोगस्येति वाच्यम् । तथा सति उत्तरसंयोगोत्पत्तेः प्रागेव महापटध्वंसमादाय उत्तरमहापटोत्पादापत्तेः । **अन्यथा**=महापटध्वंसस्य उत्तरपटं प्रत्यहेतुत्वे । **प्रतीकारानुपपत्तेरिति** । प्रागभावस्यानादितया महापटोत्पत्तिपूर्वक्षणे तस्यापि सत्त्वादिति भावः । शेषस्याग्रे वक्तव्यत्वात्—**संक्षेप इति** ।

## ❀ जागदीशी ❀

कार्यस्य प्रतिबन्धकत्वमावश्यकम्। अन्यथा यत्र पटोपष्टब्धतन्तावेव तन्त्वन्तरस्य पटान्तरारम्भकः संयोगः तत्र पूर्वं पटसत्त्वेऽपि तन्नाशोत्तरभाविपटस्य पटोपष्टब्धतन्तावुत्पत्तिप्रसङ्गात्। तत्प्रागभावस्य सत्त्वात्। तथा च लाघवोपन्यासोऽनुचित इति वाच्यम्। तत्रैव पटानुपष्टब्धोदासीनतन्तौ उत्तरपटस्य तदानीमुत्पत्तिवारणार्थं पूर्वपटध्वंसस्योत्तरपटं प्रति हेतुतावश्यकत्वे

## ❀ काशिकानन्दी ❀

कार्यस्य = पटादेः। अन्यथा = कार्यस्य प्रतिबन्धकत्वानङ्गीकारे। पटोपष्टब्धतन्तौ = पटाक्रान्ततन्तौ = समवायेन पटविशिष्टतन्तौ। पटान्तरारम्भकः = उपष्टम्भत्पटातिरिक्तपटजनकः। पूर्वपटसत्त्वेऽपि = तन्त्वन्तरसंयोगपूर्वं तन्तुषूपष्टम्भतः पूर्वपटस्य सत्त्वेऽपि। तन्नाशोत्तरभाविपटस्य = पूर्वपटनाशोत्तरजायमानतन्त्वन्तरप्रयोज्यपटान्तरस्य। पटोपष्टब्धतन्तावुत्पत्तिप्रसङ्गादिति। विनापि पूर्वपटनाशं पटान्तरोत्पत्तिः स्यादिति समुदितार्थः। प्रागभावस्वीकारेऽपि नात्र गतिरिति सूचयितुमाह—तत्प्रागभावस्य सत्त्वादिति। पटान्तरप्रागभावस्य सत्त्वादित्यर्थः। एवं च तत्र पटान्तरोत्पत्तिवारणाय पूर्वपटस्य प्रतिबन्धकत्वं तदभावस्योत्तरपटहेतुत्वं च स्वीकार्यमिति भावः। लाघवोपन्यासोऽनुचित इति। उत्पन्नस्य पुनरुत्पादप्रसङ्गश्च कार्यादेः प्रतिबन्धकत्वेनैव निरस्त इत्येव परं वक्तुं युक्तमिति भावः। कार्यस्य प्रतिबन्धकत्वकल्पनेऽपि नोक्तस्थले गतिरित्याह—तत्रैवेति। उदासीनतन्ताविति। पटान्तरजनके इत्यादिः। तदानीं= पटोपष्टम्भकाले। हेतुतावश्यकत्वे इति। अयं भावः— कार्यस्य प्रतिबन्धकत्वस्वीकारेऽपि कार्यकाले एव तन्त्वन्तरे पटान्तरोत्पत्तिर्दुर्वारा तथाहि शतसंख्याकतन्तुभिः एकः पटः कृतः। तत्रैव तन्त्वन्तरं संयोज्य पटान्तरं विधेयम्। तत्र शतसंख्याकतन्तुषु पटोपष्टम्भेन पटान्तरोत्पत्त्यसंभवेऽपि संयोजनीये तन्त्वन्तरे एव पटान्तरोत्पत्तिः कुतो न भवति। न हि तत्रापि पटो वर्त्तते येन स तत्र पटोत्पत्तौ प्रतिबन्धकः स्यात्। एवं चाऽगत्या पूर्वपटध्वंसोऽपि पटान्तरोत्पत्तौ कारणं वक्तव्यम्। एवं च तत एवोपपत्तौ पटस्य प्रतिबन्धकत्वकल्पनं न प्रागभाववादिनाम्।

ननु पूर्वपटध्वंसः समवायिकारणमात्रवृत्तिः तन्त्वन्तरे न वर्त्तत इति कारणविरहेण संयोजनीयतन्त्वन्तरे पटो नोत्पद्येत। न च पूर्वपटध्वंसस्य स्वसमानाधिकरणैकाधिकशतत्वसंख्यासम्बन्धेन कारणत्वमिति तेन सम्बन्धेन तन्त्वन्तरेऽपि तत्सत्त्वान्न दोष इति वाच्यम्। तथा सति स्वसमानाधिकरणैकाधिकशतत्वसम्बन्धेन कार्यस्य प्रतिबन्धकताया अपि वक्तुं शक्यतया ध्वंसस्य हेतुत्वासिद्धेरिति। एतेन कालिकसम्बन्धेन पूर्वपटध्वंसस्य कारणत्वसंभवोऽपि समाहितः। न च कालिकेन पूर्वपटस्य तन्त्वन्तरेष्वपि सत्त्वात्तत्रापि पटान्तरं नोत्पद्येतेति वाच्यम्। तत्तदुत्तरपटं प्रत्येव तत्तत्पूर्वपटस्य कालिकेन प्रतिबन्धकत्वाद्। अन्यथा त्वन्मतेऽपि दोषादिति चेद्? न,

❀ जागदीशी ❀

प्रागभाववादिना कार्यस्य क्वापि प्रतिबन्धकत्वाऽकल्पनात् । अन्यथा उदासीनतन्तौ द्रव्यसामान्याभावस्य तदानीमपि सत्त्वात्तत्रोत्तरपटस्य तदानीमुत्पत्तौ एकतन्तुकपटस्वीकारापत्तेरिति भावः ।

कार्यादेरिति (पृ० २२८) आदिपदेन कार्यसमकालोत्पत्तिकध्वंसानां परिग्रहः । तेन निर्विकल्पकव्यक्तीनां तृतीयक्षणे नाशेऽपि चतुर्थक्षणे पुनर्नोत्पादः । तत्तन्निर्विकल्पकसमकालोत्पन्नध्वंसैः प्रतिबन्धात् । अन्यथा निर्विकल्पकहेतुभूतायाः सन्निकर्षादिव्यक्तेस्तृतीयक्षणेऽप्यनुवृत्तेश्चतुर्थक्षणे पुनस्तदुत्पत्तिप्रसङ्गात् ।

यद्यपि निर्विकल्पकसमकालोत्पन्नानन्तध्वंसव्यक्तीनां तत्तन्निर्विकल्पकं प्रति विशिष्य प्रतिबन्धकत्वकल्पनामपेक्ष्य लाघवादेकः प्रागभाव एव हेतुः कल्पयितुमुचितः । तस्य च कारणत्वेनैव धर्मिग्राहकप्रमाणतः सिद्ध्या नेतरै-

❀ काशिकानन्दी ❀

वृत्यनियामकसम्बन्धस्य प्रतिबन्धकतानवच्छेदकत्वात् । एकाधिकशतत्वादीनां नानात्वेन नानासम्बन्धैः प्रतिबन्धकत्वकल्पनापेक्षया कार्यध्वंसस्य तद्व्यक्तित्वेन कारणतायां लाघवात् । नानासम्बन्धावच्छिन्नप्रतियोगिताकप्रतिबन्धकीयनानाऽभावस्य कारणत्वस्वीकारपातादिति दिक् । अन्यथा=पूर्वपटध्वंसस्याऽहेतुत्वे । एकतन्तुकपटस्वीकारापत्तेरिति । इतरतन्तुषु पटसत्त्वेन प्रतिबन्धकसद्भावात्तत्र पटोत्पत्तिर्न भवितुमर्हति । तन्त्वन्तरे च कारणसमवधानात्पटोत्पत्तिश्च स्यादिति एकतन्तुकत्वं पटस्य स्यादिति भावः । न च पूर्वपटनाशस्योत्तरपटहेतुत्वमिव तत्पटीयद्वितीयाद्युत्पत्तिं प्रति तत्पटध्वंसस्य हेतुत्वोपगमादेव न जातस्य पुनरुत्पादप्रसङ्ग इति न प्रागभावस्य सिद्ध्यवकाशः । न वा कार्यस्य प्रतिबन्धकत्वकल्पनावश्यकत्वमिति शङ्क्यम् । यतः पुनरुत्पादाप्रसिद्धेरेव तद्व्यक्तित्वेन तस्य कार्यत्वाऽसंभवः । क्षणसम्बन्धात्मकोत्पत्तेः ध्वंसादिकार्यतावच्छेदकानाक्रान्त्वं चैवेति भावः ।

ध्वंसानां परिग्रह इति । एवं च विनष्टसंयोगव्यक्तेस्तद्व्यक्तित्वेन हेतुत्वानङ्गीकारेऽपि न दोष इति बोध्यम् । नोत्पाद इति । निर्विकल्पकव्यक्तीनामित्यनुषङ्गः । जातानामेव निर्विकल्पकव्यक्तीनामनुत्पादो बोध्यः । तेन धारावाहिकस्थले चतुर्थक्षणे निर्विकल्पकान्तरस्योत्पादेऽपि न क्षतिः । एतदेवावेदयितुं पुनःपदम् । समकालोत्पन्नध्वंसैरिति । घटादिध्वंसाः तत्तत्क्षणादिध्वंसाश्च तथाभूताः । द्वितीयक्षणोत्पन्नध्वंसस्य तत्क्षणे उत्पत्तिप्रतिबन्धकत्वं न स्यादित्यतः समेति । तदुत्पत्तिप्रसङ्गात्=निर्विकल्पकोत्पत्तिप्रसङ्गात् । ननु सिद्धस्यापि प्रागभावस्य ध्वंसाभावैः सह कथं न विनिगमनाविरहोऽत आह—तस्येति । प्रागभावस्येत्यर्थः । इतरैः=तत्तत्कार्यसमकालोत्पन्नध्वंसप्रतियोगिकाभावैः । एकतमस्य कारणत्वनिश्चायकयुक्तिविरहे एव विनिगमनाविरहेण सर्वस्य कारणत्वमापद्यते । इह तु प्रागभावसाधकलाघवप्रमाणस्य कारणत्वविषयैव प्रागभावसाधकत्वा-

## ❀ जागदीशी ❀

र्विनिगमनाविरहः । न च तत्तन्निर्विकल्पकसमकालोत्पन्नवस्त्वन्तरप्राग-भावव्यक्तीनां तत्तन्निर्विकल्पकप्रागभावस्य वा तत्तन्निर्विकल्पकं प्रति हेतुत्व-मित्यत्र विनिगमनाविरहस्तदवस्थ एवेति वाच्यम् । जन्यभावत्वावच्छिन्नं प्रत्येव प्रागभावत्वेन हेतुत्वं, तत्र कार्यस्य तादात्म्यं, कारणस्य प्रतियोगित्वं सम्बन्ध इत्यनुगतरूपेण हेतुतायाम् एकवस्तुप्रागभावस्य वस्त्वन्तरहेतुत्वाऽसं-भवात् । तथापि यदि अन्वयव्यतिरेकसिद्धविरोधिनामपि निर्विकल्पकसम-कालोत्पन्नध्वंसानां प्रतिबन्धकत्वं परित्यज्य निर्विकल्पकहेतुत्वेन पदार्थान्तरं कल्प्यं तर्हि दाहादावपि मणिमन्त्रादीनां बहूनां प्रतिबन्धकत्वमपेक्ष्य लाघवाद् दाहोपधायकत्वेन वस्त्वन्तरकल्पनाप्रसङ्गः । तस्मात्क्लृप्तवस्तूनां नियामकत्वाऽ-संभवस्थल एव कारणत्वेन वस्तुसिद्धिरित्याशयः । शेषमशेषमग्रे वक्ष्यामः ।

## ❀ काशिकानन्दी ❀

तस्यैव च कारणत्वनिश्चायकप्रमाणत्वान्न विनिगमनाविरह इति भावः । वस्त्वन्तरप्राग-भावव्यक्तीनामिति । तदात्मनि समुत्पन्नसंस्कार-निर्विकल्पकान्तरादिप्रागभावव्यक्तीना-मित्यर्थः । तेन तत्तन्निर्विकल्पकसमकालोत्पन्नानां घटादीनां प्रागभावस्य समवायस्वरूपयोः कार्यकारणभावावच्छेदकसम्बन्धत्वस्वीकारेण कारणत्ववारणसंभवेऽपि नासंगतिः । जन्यभावत्वावच्छिन्नं प्रतीति । न च ध्वंसाऽसंग्रहः तस्य भावत्वाभावादिति वाच्यम् । तदसंग्रहेऽपि क्षतिविरहात् । उत्पन्नध्वंसस्य पुनरुत्पादप्रसङ्गस्तु न, प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन घटादेः कारणतया ध्वंसोत्पत्तिक्षणे प्रतियोगिविरहादेवोत्तरक्षणे ध्वंसस्य पुनरुत्पादानापत्तेः ।

परे तु कार्यसामान्यं प्रत्येव प्रागभावस्य हेतुत्वं, जन्यभावत्वापेक्षया जन्यत्वस्य कार्यतावच्छेदकत्वे लाघवादिति प्राहुः । अनुगतरूपेणेति । न च प्रतियोगितासम्बन्धेन प्रागभावस्य तद्व्यक्तौ विरहेण तादात्म्येन तद्व्यक्तेरुत्पादवारणेऽपि प्रतियोगि-समवायिदेशे तदुत्पादो दुर्वार इति वाच्यम् । तादात्म्येन तद्व्यक्त्युत्पादप्रयोजक-तत्प्रागभावस्य सहकारिणो विरहाद् । तत्तत्प्रागभावत्वेन तत्तन्निर्विकल्पकत्वेन विशिष्यापि कार्यकारणभावकल्पनात् । तावतापि तत्तन्निर्विकल्पकं प्रति अनन्तध्वंसानां कारणत्व-कल्पनामपेक्ष्य लाघवस्याक्षतेः । न चैवं समवायेन जन्यं प्रति स्वरूपेणापि प्रागभाव-कारणतासिद्धिः स्यादिति वाच्यम् । ध्वंसाऽसंग्रहप्रसङ्गात् । वस्त्वन्तरहेतुत्वाऽसंभवादिति । प्रतियोगितासम्बन्धेन वस्त्वन्तरे प्रागभावविरहादिति भावः । अन्वयव्यतिरेकसिद्धेति । निर्विकल्पकसमकालोत्पन्नध्वंससत्त्वे तन्निर्विकल्पकस्य पुनर्नोत्पत्तिः । ध्वंसाभावे चेतरकारण-समवधाने निर्विकल्पकोत्पत्तिरित्येवमन्वयव्यतिरेकः स्फुट एव । वस्त्वन्तरेति । मीमांस-काद्यभिमतशक्त्याख्यवस्त्वित्यर्थः । अग्रे इति । अत्र वदन्तीत्यादिना प्रागभावसाधनसमये इत्यर्थः ।

## ❀ जागदीशी ❀

सामग्रीक्षणत्वं न कार्योत्पत्तिप्राक्क्षणत्वव्याप्यम्। अप्रयोजकत्वाद् अतिरिक्तप्रागभावकल्पनापत्तिरूपप्रतिकूलतर्कपराहतत्वाच्च। किंतु कार्योत्पत्तिद्वितीयक्षणो यदि सामग्र्यव्यवहितोत्तरक्षणः स्यात् कार्योत्पत्तिमान् स्यादित्येव व्याप्तिः। तत्र च सामग्र्यव्यवहितोत्तरत्वं सामग्रीसमयध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति सामग्रीकालध्वंसाधिकरणत्वरूपं कार्यद्वितीयक्षणादावसिद्धं कार्योत्पादक्षणेनैव व्यवधानादिति कुतस्तेन पुनरुत्पादः

## ❀ काशिकानन्दी ❀

कार्यजनकसामग्री स्वाऽव्यवहितोत्तरक्षणे कार्योत्पत्तिमेव प्रयोजयति न तु स्वतृतीयादिक्षणे इति स्वीकारेणैवोपपत्तौ कार्यस्य प्रतिबन्धकत्वमपि न कल्पनीयमित्याशयेनाह—सामग्रीक्षणत्वमिति। न प्राक्क्षणत्वव्याप्यमिति। एवं च कार्योत्पत्तिकाले सामग्रीसत्वेन तदुत्तरक्षणे च कार्योत्पत्तिविरहेण कार्योत्पत्तिक्षणात्मकसामग्रीक्षणत्वस्य कार्योत्पत्तिप्राक्क्षणत्वव्यभिचारो न क्षतिकर इति भावः। न केवलं प्रयोजकाभावोऽपि तु प्रतिकूलतर्को बाधकोऽपीत्याह—अतिरिक्तेति। कार्योत्पत्तिक्षणेऽपि दण्डचक्रादीनां सत्त्वात् सामग्रीक्षणत्वस्य कार्योत्पत्तिप्राक्क्षणत्वव्याप्यताङ्गीकर्तृभिस्तत्र सामग्री नास्तीति वक्तव्यम्। सामग्र्यभावश्च दण्डचक्राद्यतिरिक्तकारणविशेषाभावप्रयुक्तो वाच्यः। कारणविशेषश्च प्रागभावात्मक एव भवेत्। एवं च प्रागभावः कारणान्तरतयाऽऽयेत। तथा च दण्डचक्रादिविशिष्टोऽयं घटो यदि एतद्घटजनकतावच्छेदकधर्मावच्छिन्नाभावव्याप्यः स्याद् दण्डचक्राद्यतिरिक्तकारणकः स्यात्। व्यापकत्वं कालिकेनैव व्याप्यत्वमपि कालिकेनैव। दण्डाद्यतिरिक्तत्वे सति घटकारणत्वं चेत्तत्र बाधात् प्रागभावमापादयेद्। दण्डाद्यतिरिक्तघटकारणं द्रव्यादि-ध्वंसादिभेदनवकवद् द्रव्याद्यवृत्तिघटकारणताश्रयत्वादिति। तथा च गौरवम्। नन्वेवं सामग्रीव्यभिचारस्य घटादौ ज्ञानात्तदुपादाने पुरुषप्रवृत्तिर्न स्याद् इष्टसाधनत्वाऽनिश्चयादत आह—किन्त्विति। अथवा ननु सामग्रीक्षणत्वस्य कार्योत्पत्तिप्राक्क्षणत्वव्याप्यताविरहे घटचिकीर्षोः सामग्र्युपादानं न स्याद् व्यभिचारज्ञानादित्यकामेनापि तादृशव्याप्तिः स्वीकरणीयेत्याशङ्कयान्यथा प्रवृत्तिप्रयोजिकां व्याप्तिमुपपादयति किन्त्विति। एवं च सामग्र्यव्यवहितोत्तरक्षणवृत्त्यत्यन्ताभावाऽप्रतियोगित्वस्य घटादिरूपकार्ये ज्ञानादेव सामग्र्युपादाने पुरुषप्रवृत्तिरिति तदनुरोधेन सामग्र्यव्यवहितोत्तरक्षणे कार्योत्पत्तिमत्त्वस्यैवापादानं संभवतीति भावः। ननु कार्योत्पत्तिक्षणे सामग्रीसत्त्वे कार्यद्वितीयक्षणस्य सामग्र्यव्यवहितोत्तरक्षणत्वं कुतो नेत्यत आह—तत्र चेति। असिद्धमिति। सामग्रीसमयो घटोत्पत्तिपूर्वक्षणोऽपि। तद्ध्वंसाधिकरणं—कार्योत्पत्तिक्षणः। तद्ध्वंसः कार्यद्वितीयक्षणे वर्त्तत इति न तत्तादृशध्वंसानधिकरणमिति न तत्राऽव्यवहितोत्तरक्षणत्वमिति भावः। नन्वेवं धारावाहिकस्थले क्षणान्तरे पुनर्निर्विकल्पकादिकं न स्यात्। सामग्र्यव्यवहितोत्तरक्षणत्वस्य तत्र विरहादिति चेन्न। तत्र प्रागभावत्वादिनामपि प्रथमक्षणे

### ❀ दीधितिः ❀

**नापि निरसनीयः ।**

**तदुत्पत्तिश्च महाप्रलयमनङ्गीकुर्वतां मते स्वाधिकरणसमयध्वंसा-**

### ❀ जागदीशी ❀

प्रसञ्जनीय इत्यादिकं प्रतिबन्धकत्वेनाभीत्यपिकारेण ध्वनितम् ।

ननु तत्पूर्वत्वं तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वरूपं प्रागुक्तम् । तत्र चोत्पत्तिः तदधिकरणाऽवृत्तिप्रागभावप्रतियोगिसमयसम्बन्धरूपैव निविष्टा, सा च विना प्रागभावं दुर्वचेत्यत आह तदुत्पत्तिश्चेति । स्वाधिकरणेति । यस्योत्पत्तिर्लक्ष्या तदेव घटादिकं स्वपदेन ग्राह्यम् । तथा च तदधिकरणसमयध्वंसानधिकरणेन सार्धं तस्य समयसम्बन्धः कालिकसम्बन्धस्तदुत्पत्तिरित्यर्थः । घटाद्युत्पत्तिक्षणस्यापि विषयित्वव्यभिचारादिसम्बन्धेन घटाद्यधिकरणीभूतं यत् पूर्वोत्पन्नज्ञानादिकं तद्ध्वंसाधिकरणत्वादुत्पत्तिमात्रेऽसंभवः स्यादतः कालिकसंम्बन्धेन स्वाधिकरणत्वलाभार्थमाद्यं समयपदम् ।

### ❀ काशिकानन्दी ❀

एव तदुत्पत्तिवारणाय अदृष्टादिविशेषरूपप्रतिबन्धकाभावस्य, सन्निकर्षान्तरस्यैव वा कारणत्वं स्वीकार्यम् । तथा च सति प्रागभावकल्पनमप्यनावश्यकमित्याशयेनाह इत्यादिकमिति ।

तदधिकरणाऽवृत्तिप्रागभावेति । घटाधिकरणेऽवृत्तिप्रागभावो घटीयप्रथमक्षणपूर्वक्षणादिप्रागभाव एव, न तु द्वितीयादिक्षणप्रागभावः, तस्य प्रथमादिक्षणे एव घटाधिकरणे सत्त्वात् । प्रथमादिक्षणप्रागभावप्रतियोगिषु प्रथमक्षणेन सहैव च घटसम्बन्ध इति घटीयप्रथमक्षणसम्बन्धो घटीयोत्पत्तिः । अनुगमस्तु घटविशिष्टसम्बन्धो घटोत्पत्तिः । वैः स्वाधिकरणाऽवृत्तिप्रागभावप्रतियोग्यनुयोगिकत्वस्वप्रतियोगिकत्वोभयसम्बन्धेन । स्वं-घटादि । सा च=निरुक्तोत्पत्तिश्च । घटाद्यधिकरणसमयध्वंसानधिकरणघटपूर्वक्षणानुयोगिकपटादिप्रतियोगिकसम्बन्धस्य घटोत्पत्तित्ववारणायाह—तस्य समयसम्बन्ध इति । तस्य = घटादेः । घटाद्युत्पत्तीति । घटपूर्वक्षणोत्पन्न "घट" इत्याकारकं यद् ज्ञानं तद्विषयितया उत्तरमुत्पत्स्यमानो घटो वर्तते । एवं व्यभिचारसम्बन्धेनापि । कालिकेन तद्घटाभाववद्वृत्तित्वस्य पूर्वक्षणे सत्त्वात् । तादृशज्ञानध्वंसाधिकरणमेव घटोत्पत्तिक्षणोत्पन्नधिकरणमित्येवं क्रमेण सर्वत्रासंभवः स्यादित्यर्थः । ज्ञानस्यापि जन्यतया कालोपाधितया कालपदोक्तावपि तद्दोषतादवस्थ्यमिति कालिकसम्बन्धस्तेन लभ्यत्व इत्याह—कालिकसम्बन्धेनेति । ननु विषयित्वव्यभिचारादिकं न वृत्तिनियामकं ततः स्वाधिकरणत्वस्य पूर्वोत्पन्नज्ञानादौ विरहादेव न दोषः । न च स्वप्रकारेणैव निवेशो न तु स्वाधिकरणत्वप्रकारेण गौरवादिति उक्तदोष इति वाच्यम् । कालिकसम्बन्धप्रवेशेन तथापि गौरवात् । कालिकत्वेन कालिकस्य प्रवेशनीयत्वात् । अस्मकं तु संसर्गांश

## ❀ जागदीशी ❀

इह हेतावुपाधिर्नेहोपाधिरित्यादिप्रतीत्या व्यभिचारादिसम्बन्धस्यापि अधिकरणत्वनियामकतायाः स्वमेवाग्रे वक्ष्यमाणत्वात् । अस्तु वा नष्टघटादिगोचरस्य ज्ञानादेरुत्पत्तावव्याप्तिवारकं तत् । अन्यथा तादृशज्ञानोत्पत्तिक्षणस्यापि विषयतया तज्ज्ञानाधिकरणीभूतं यन्नष्टघटादि तद्ध्वंसाधिकरणत्वेनाऽव्याप्तिप्रसङ्गात् । घटे ज्ञानमित्यादिव्यवहारबलेन विषयताया वृत्तिनियामकत्वादिति ध्येयम् । तत्तद्घटादिसमयध्वंसानधिकरणीभूतेन तत्तद्घटादिपूर्वोत्पन्नज्ञानादिना विषयत्वादिसंबन्धस्य पूर्वमपि तत्तद्घटादौ सत्त्वात्तत्रातिव्याप्तिवारणाय द्वितीयसमय-

## ❀ काशिकानन्दी ❀

स्वरूपतोऽपि भानस्वीकारेण कालिकत्वादेरप्रवेशाद् । न च संयोगेन घटादिमतः पटादेर्ध्वंसाधिकरणतान्त्वादिभेदस्य द्वितीयक्षणादौ सत्त्वात्तत्सम्बन्धस्योत्पत्तित्वापत्तिरिति वाच्यम् । स्वाधिकरणध्वंसाधिकरणसामान्यभेदस्य प्रवेशनीयत्वाद् । अन्यथा कालिकनिवेशपक्षेऽपि स्वाधिकरणतृतीयादिक्षणध्वंसाधिकरणान्यत्वस्य द्वितीयक्षणादौ सत्त्वेन दोषप्रसङ्गादित्याशङ्क्य व्यभिचारादेरपि वृत्तिनियामकत्वं साधयति इह हेताविति । आर्द्रेन्धनसंयोगादिरूपोपाधिर्व्यभिचारितत्त्वसम्बन्धेनैवायोगोलकीयवह्न्यादौ वर्त्तितुं प्रभवति न तु समवायादिना । इह हेतावित्येवमधिकरणतया अयोगोलकीयवह्न्यादेः प्रतीतेः सिद्धं व्यभिचारस्यापि वृत्तिनियामकत्वम् । ननु सम्बन्धित्वमात्रं सप्तम्यर्थो न ह्येतावता वृत्तिनियामकत्वं व्यभिचारस्येत्यत आह—नेहेति । तथा च व्यभिचारस्य वृत्त्यनियामकत्वे तत्सम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्या तादृशप्रतीतिरेव न स्यादिति भावः ।

ननु एवं सति अयोगोलकीयवह्निः आर्द्रेन्धनसंयोगवानिति प्रतीतिर्व्यवहारश्च स्यात् । व्यभिचारसम्बन्धेनार्द्रेन्धनसंयोगस्य तत्र सत्त्वात् । तस्मादिहहेतावुपाधिरित्यत्रापि सप्तम्या नाधिकरणत्वादिकमर्थः । किन्तु साध्यव्यापकत्वविशिष्टसमानाधिकरणाभावप्रतियोगित्वरूपोपाधिपदार्थैकदेशसामानाधिकरण्यान्वयिनिरूपितत्वमर्थः । क्वचिदेकदेशान्वयस्यापि स्वीकारात् । नेहोपाधिरित्यत्रापि सप्तम्यर्थनिरूपितत्वाभावस्यैव बोधः । न चेहोपधयो न सन्तीत्यादिप्रयोगत उपाधीनामेवाभावः प्रतीयत इति वाच्यम् । सद्धेतुस्थले उपाधिपदार्थस्य साध्यव्यापकीभूतस्य साधनाऽव्यापकस्याऽप्रसिद्धेरुक्तव्युत्पत्तिमत्त्वेन गतिविरहादत आह— अस्तु वेति । तत् = समयपदम् । घटे ज्ञानमिति । एवं घटे मम ध्यानं गतमित्यादिकमपि द्रष्टव्यम् । तत्तद्घटादिपूर्वोत्पन्नज्ञानादिनेति । तत्तद्घटादिपूर्वोत्पन्नतत्तद्घटादिविषयकज्ञानादिनेत्यर्थः । सामान्यलक्षणाविरहेऽपि अनुमानादिना तत्तदनागतघटविषयकज्ञानमपि पूर्वकाले सुघटमेव । भवति च तादृशज्ञानस्यापि कालत्वं जन्यपदार्थत्वात् । कालिकसम्बन्धविवक्षणे च तत्तद्घटध्वंसानधिकरणीभूतस्यापि पूर्वोत्पन्नज्ञानस्य कालिकसम्बन्धो न घटे विभिन्नकालीनत्वादित्यदोषः । यस्य कस्यचित्क्षणयोगस्य

❀ दीधितिः ❀

नधिकरणसमयसम्बन्धः। तदुक्तम् :—"अध्वस्तक्षणयोगस्य क्षणयोगो जनिर्मता" इति। क्षणः = समयः।

❀ जागदीशी ❀

पदम्। ननु ध्वंसघटितोत्पत्तिलक्षणे किं मानमित्याशङ्कायामाचार्यस्य संवादमाह अध्वस्तेति। न ध्वस्तः क्षणयोगस्तदीयक्षणसम्बन्धो यत्र काले तादृशस्य क्षणयोगः कालिकसम्बन्धस्तस्य जनिरुत्पत्तिरित्यर्थः। तदीयक्षणयोगध्वंसाभावावच्छिन्नस्य वस्तुनः क्षणयोगो जनिरिति वाऽर्थः। क्षणद्वयप्रवेशे वैयर्थ्याद् व्याचष्टे—क्षणः समय इति। महाप्रलयसत्त्वे तदुत्पत्तावव्याप्तिरतदधिकरणसमयस्य महाकालादेर्ध्वंसाऽप्रसिद्धेरत उक्तं महाप्रलयानङ्गीकार इति। [ अत्र नीलादिविशिष्टघटादेरुत्पत्तिस्तन्नीलादिविशिष्टघटाद्य-

❀ काशिकानन्दी ❀

ध्वंसः सर्वत्रैव स्यादत आह—तदीयक्षणसम्बन्ध इति। उत्पत्तिप्रतियोगित्वेनाभिमतस्तत्पदार्थः। तादृशस्य = तादृशकालानुयोगिकः। तस्य = तत्प्रतियोगिकः। सम्बन्धान्वयी जनिपदार्थान्वयी चायम्। तथा च तदीयक्षणसम्बन्धध्वंसानधिकरणनिरूपितत्प्रतियोगिककालिकसम्बन्धस्तदुत्पत्तिरित्यर्थः। अध्वस्तः क्षणयोगो यस्मिन् घटादौ तदीयक्षणयोगध्वंसाभावावच्छिन्नघटादिरिति यावत् तस्य क्षणयोग इत्याशयेन व्याख्यान्तरमाह—तदीयेति। प्रथमक्षणावच्छिन्नघटादिरेव तादृशध्वंसाभावावच्छिन्नः। न चैवं विघोत्पत्तिपरिष्कारे घटीयप्रथमक्षणपर्यन्तावसायिस्थूलकालेन सह घटस्य यः सम्बन्धस्तस्यापि घटोत्पत्तित्वं स्यादिति वाच्यम्। इष्टत्वात्। अन्त्यक्षणावच्छेदेनैव तादृशस्थूलकालस्य घटेन सह सम्बन्धात्। एवं च तद्वस्तुविशिष्टसम्बन्धस्तदुत्पत्तिः। वै० स्वाधिकरणक्षणध्वंसानधिकरणसमयवृत्तित्वस्वप्रतियोगिकत्वोभयसम्बन्धेन। घट उत्पद्यत इत्यादौ घटादिपदं तत्तद्घटादिपरम्। सामान्यतो घटोत्पत्तेर्वर्त्तमानकालेऽसंभवात्। तत्तद्घटविशिष्टसम्बन्ध एव वा उत्पादस्तत्र। तस्य च घटत्वसामानाधिकरण्येनान्वयः। परे तु क्षणयोग उत्पत्तिः। घट उत्पद्यत इत्यादौ स्वानुयोगिसमयवृत्त्यभावप्रतियोग्यधिकरणताकध्वंसप्रतियोगिसमयनिष्ठाधिकरणताकत्वस्वप्रतियोगित्वोभयसम्बन्धेनोत्पादस्य घटेऽन्वयः। तादृशोभयसम्बन्ध एव वाऽऽख्यातार्थः। घटोत्पत्तिरित्यत्र च स्वाधिकरणसमयध्वंसानधिकरणसमयनिरूपितत्वस्वप्रतियोगिकत्वोभयसम्बन्धेन घटत्वाश्रयसम्बन्ध्युत्पत्तिरिति बोध इति वदन्ति।

ननु उत्पन्नेऽपि घटे पुनरुत्पत्तिव्यवहारो दृश्यते। यथा उत्पन्नघटे पश्चा'दधुनाऽयं रक्तघटो जात' इत्यादि। तत्कथमुपपद्यताम्। तद्घटाधिकरणसमयध्वंसाधिकरणत्वस्य तदानीं काले सत्त्वादत आह—अत्रेति। क्षेपोऽयम्। तथा च नीलत्वविशिष्टघटाधिकरण-

❀ दीधितिः ❀

तदङ्गीकारे तु क्वचिदपि यदीयसमयसम्बन्धे यत्समयवृ-

❀ जागदीशी ❀

धिकरणसमयमन्तर्भाव्य निर्वाच्या तेन पूर्वोत्पन्नेऽपि घटे पाकान्नीलघटो जातः, कर्मणा भूतसंयुक्तो जात इत्यादयो व्यवहारा इति ध्येयम् ।]

तदङ्गीकारे = महाप्रलयाङ्गीकारे। क्वचिदित्यादि। अत्र यत्पदं यस्य घटादेरुत्पत्तिर्लक्ष्या तत्परम्। तद्घटीयतृतीयादिक्षणसम्बन्ध एव द्वितीयक्षण-ध्वंसप्रतियोगित्वाभावात्तद्घटीयद्वितीयादिक्षणसंबंधेऽतिव्याप्तिरतः क्वचिदपी-

❀ काशिकानन्दी ❀

समयध्वंसानधिकरणक्षणवृत्तित्वं तत्राक्षतमिति भावः। कर्मणेति। आत्मेति शेषः। भूतसंयुक्तः भूतेन शरीरेण सह उपभोगजनकविलक्षणसंयोगेन संयुक्तो जात इत्यर्थः। अथवा कर्मणा = प्राक्तनकर्मजन्यादृष्टवशेन भूतसंयुक्तः भूताविष्टो जात इत्याद्यर्थः। तदङ्गीकार इति। इत आरभ्य मूलम्।

दीधितौ—क्वचिदपीत्यादि। घटीयप्रथमक्षणसम्बन्धो लक्ष्यः। तत्र च लक्षण-समन्वयः। तथा हि यत्पदग्राह्यस्तद्घटः। तदीयसमयसम्बन्धाः प्रथम-द्वितीय-तृतीयादि-क्षणसम्बन्धाः। तेषु क्वचिदपि प्रथमक्षणवृत्तिध्वंसप्रतियोगित्वं नास्ति। प्रथमक्षणे पूर्वक्षणसम्बन्धध्वंसस्यैव सत्त्वेन तत्प्रतियोगित्वस्य पूर्वक्षणसम्बन्धेष्वेव संभवात्। स च प्रथमक्षणो यत्समयपदेन गृहीतः। तत्समयसम्बन्धश्च घटस्योत्पत्तिः। द्वितीयक्षणसम्बन्धे नातिव्याप्तिः। द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वस्य प्रथमक्षणसम्बन्धे सत्त्वात्। घटीय-सम्बन्धे क्वचित् तादृशप्रतियोगित्वस्यैव स्थितत्वात्। घटविशिष्टसम्बन्धो घटोत्पत्तिः। वै० स्वप्रतियोगिकत्व-स्वीयसम्बन्धत्वव्यापकीभूताभावप्रतियोगिप्रतियोगिताकध्वंसाधिकरण-समयानुयोगिकत्वोभयसम्बन्धेन। घटीयप्रथमक्षणसम्बन्धे घटप्रतियोगिकत्वस्य, घटीय-प्रथमद्वितीयादिक्षणसम्बन्धत्वव्यापकीभूतो यः प्रथमक्षणवृत्तिध्वंसप्रतियोगित्वं नास्तीति प्रतीतिसिद्धोऽभावस्तदीयप्रतियोगिभूता या प्रथमक्षणवृत्तिध्वंसीया प्रतियोगिता तन्निरूपक-प्रथमक्षणवृत्तिध्वंसा-धिकरणीभूतप्रथमक्षणानुयोगिकत्वस्य च सत्त्वाल्लक्षणसंगतिः। तृतीया-दिक्षणसम्बन्ध इति। न च द्वितीयक्षणसम्बन्धेऽपि द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वाभाव-सत्त्वात्तृतीयादिक्षणेत्ययुक्तं, द्वितीयादिक्षणेत्येव वक्तुं युक्तत्वादिति वाच्यम्। स्ववृत्तिध्वंसाऽ-प्रतियोगि स्वान्यानुयोगिकतदीयसमयसम्बन्धकसमयानुयोगिकस्तत्प्रतियोगिकसम्बन्ध उत्पत्ति-रित्युक्ते द्वितीयक्षणस्य घटुमशक्यत्वात्। घटादीनामन्त्यक्षणसम्बन्धस्योत्पत्तित्ववारणाय स्वान्यपदसार्थक्यम्। न च महाप्रलयोत्पत्तावव्याप्तिः स्वपदेन महाप्रलयक्षणस्यैव घटत्व्य-तया स्वान्यमहाप्रलयसमयाऽप्रसिद्धेरिति वाच्यम्। स्वत्व-ध्वंसप्रतियोगित्वोभयाभावस्य स्वान्यत्वस्थाने निवेश्यत्वात्। न चैवमपि क्षणिकान्त्यशब्दाद्युत्पत्तावव्याप्तिः। तदीयक्षणस्य

❀ दीधितिः ❀

त्तिध्वंसप्रतियोगित्वं नास्ति तस्य तत्समयसम्बन्धः,

❀ जागदीशी ❀

त्युक्तम्। तथा च यदीयसमयसम्बन्धसामान्ये यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्तीत्यर्थलाभात् सामान्यान्तर्गतप्रथमक्षणसम्बन्धे एव द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वाभावविरहान्न तत्रातिव्याप्तिः। चरमध्वंसीयसमयसम्बन्धसामान्य एव तदुत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वाभावाच्च न महाप्रलयोत्पत्तावव्याप्तिः। तत्तद्घटादेः स्वपूर्वोत्पन्नज्ञानादीनां विषयत्वादिसम्बन्धस्यापि सामान्यान्तर्गतत्वात् तत्र च तत्तद्घटाद्युत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वस्यैव सत्त्वादुत्पत्तिमात्रेऽसंभवः स्यादतः प्रथमं समयपदम्। तथा च तदीयकालिकविशेषणताख्यसमयसम्बन्धसामान्ये इत्यर्थः। तेन जन्यमात्रस्यैव समयतया ज्ञानस्यापि तथात्वात्समयपदोक्तावपि ज्ञानविषयत्वादावतिव्याप्तिरिति प्रत्युक्तम्। प्रत्युक्तं च यदीयसमयसामान्य इत्यस्यैव सम्यक्त्वे सम्बन्धपदं

❀ काशिकानन्दी ❀

ध्वंसप्रतियोगित्वान्निरुक्तोभयाभाववत्तदीयसमयाऽप्रसिद्धेरिति वाच्यम्। क्षणिकपदार्थानुपगमात्। अत एव दीधिकारैरग्रे प्रथमं क्षणलक्षणमुपेक्षिष्यते। न च स्वत्वस्य तत्तत्क्रियादिवर्त्तिनोऽभावस्य तत्कालीनापरक्रियायां सत्त्वान्नैतत्संगतिसंभव इति वाच्यम्। क्षणत्वस्यानुगतस्य कथंचिद् वक्तव्यत्वात्। स्वत्वस्थाने स्वाधिकरणत्वं वा प्रवेश्यम्। तच्च कालिकेन स्वस्मिन्नपीत्यदोषात्। द्वितीयादिक्षणेत्यत्र तात्पर्यात्, तृतीयस्यादिः तृतीयादिरिति व्युत्पत्त्या द्वितीयक्षणस्यैवाभिधानाद्वा। तत्र = द्वितीयक्षणे।

अत्र यदीयसमयेत्यत्र समयपदानुपादाने घटोत्पत्तिपूर्वकालोत्पन्नघटविषयानुमित्याद्यात्मकज्ञानेन सह घटस्य विषयताख्यो यः सम्बन्धस्तस्यापि यावदन्तर्गतत्वाद् ज्ञाने क्षणं नष्टे तस्मिन् घटोत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वस्यैव सत्त्वेन तदभावविरहात् घटोत्पत्तिक्षणोऽपि यत्पदेन धर्तुं न शक्येतेति असंभवापत्तिरित्याह—तत्तद्घटादेरिति। तत्र च = विषयत्वादिसम्बन्धे च। एवं च समयपदं कालिकसम्बन्धलाभायेत्याह—तथा चेति। एवं च पूर्वकालोत्पन्नज्ञानस्य कालोपाधितया कालत्वेऽपि न तदीयविषयतासम्बन्धग्रहणम्। कालिकस्यैव ग्राह्यत्वात्। कालिकस्तु न लभ्यते विभिन्नकालीनयोः कालिकसम्बन्धायोगादित्याह— तेनेति। समयसम्बन्धपदस्य कालिकसम्बन्धार्थकत्वेनेत्यर्थः। ज्ञानविषयत्वादावतिव्याप्तिरिति। ज्ञानविषयत्वादेर्यदीयसमयसम्बन्धपदग्राह्यत्वापत्तिरित्यर्थः। तेनाऽसंभवस्यैव दोषत्वेऽपि न दोषः। समयसम्बन्धपदस्य कालिकसम्बन्धार्थकत्वे सम्बन्धपदं व्यर्थमिति शङ्कापि नोदेति। केवलसमयपदस्य कालिकसम्बन्धार्थत्वाभावात्। तथात्वेऽपि संयोगसम्बन्ध इत्यादिप्रयोग इव सम्बन्धपदस्य नानर्थक्यमित्याह— प्रत्युक्तं चेति। इत्यादि दूषणमित्यन्वयः। सम्यक्त्वे इति। यदीयसमयसामान्ये इत्यत्र यस्यायं यदीय इति

### ❁ जागदीशी ❁

व्यर्थमित्यादिदूषणम्। यत्पदार्थेन समयस्यानन्वयेन वैयर्थ्यानवकाशादिति ध्येयम्।

यत्र घटोत्पत्तिप्राक्क्षणे सर्वे ध्वंसा इत्याकारकं ज्ञानमुत्पन्नं तत्र तज्ज्ञानव्यक्त्या समं घटीयकालिकसम्बन्धस्यापि लक्ष्यत्वात्तत्राऽव्याप्तिः, घटीयकालिकसम्बन्धसामान्ये एव विषयितया तज्ज्ञाने वर्त्तमानस्य ध्वंसस्य प्रतियोगित्वादतः कालिकसम्बन्धेन वृत्तेर्ज्ञाभाय द्वितीयसमयपदम्।

### ❁ काशिकानन्दी ❁

व्युत्पत्त्या यत्सम्बन्धीत्यर्थो लभ्यते। सम्बन्धस्तु तत्र कालिकः, समयादत्वज्ञाद्। तथा च कालिकसम्बन्धेन यत्सम्बन्धिसामान्ये यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्तीति लभ्यते। पूर्वोत्पन्नज्ञानस्य कालत्वेऽपि कालिकेन तस्य उत्तरोत्पन्नघटादिसम्बन्धित्वविरहादेवाऽदोषः। व्यर्थम् = अनावश्यकम्। यत्पदार्थेन = यदीयपदार्थेन। वैयर्थ्यानवकाशात् = सन्दर्भविरोधानवकाशात्। अयमर्थः—यदीयः समयः यदीयसमयः। तदनुयोगिकसम्बन्धसामान्ये इति यदि विवक्षितोऽर्थः स्यात्तदा सम्बन्धपर्यन्तगमनमनर्थकं स्यात्। न तु तथा। किन्तु यदीयः समयसम्बन्धः यदीयसमयसम्बन्धस्तत्सामान्ये इत्येवार्थः समयसम्बन्ध इत्यस्य कालिकसम्बन्ध इत्यर्थः। तथा च यत्प्रतियोगिककालिकसम्बन्धसामान्ये इत्येवार्थो लभ्यते। अत्र च प्रत्युत कालिकसम्बन्धेन यत्सम्बन्धिसामान्ये इति वदत एव गौरवम्। कालिकसम्बन्धेन तत्सम्बन्धिसामान्ये ध्वंसप्रतियोगित्वाभावकथनापेक्षया तदीयकालिकसम्बन्धे ध्वंसप्रतियोगित्वाभावप्रवेशस्य लघुत्वादिति।

तज्ज्ञानव्यक्त्या = घटपूर्वक्षणोत्पन्न'सर्वेध्वंसा'इत्याकारकज्ञानव्यक्त्या। लक्ष्यत्वादिति। ज्ञानस्य द्विक्षणावस्थायितया घटाऽव्यवहितपूर्वक्षणोत्पन्नज्ञानं घटोत्पत्तिक्षणेऽपि वर्त्तत इति घटोत्पत्तिक्षणावच्छेदेन तादृशज्ञानेन सह घटस्य यः कालिकसम्बन्धः सोऽपि घटोत्पत्तिलक्षणलक्ष्य एवेति भावः। तत्र = तादृशज्ञानव्यक्त्या समं घटीयकालिकसम्बन्धे। अव्याप्तिरिति। प्रथमं तावत् 'सर्वे ध्वंसा' इत्याकारकं निखिलध्वंसावगाहि अनुमित्याद्यात्मकं ज्ञानम्। तदुत्तरं घटोत्पत्तिः तत्र तादृशध्वंसविषयकज्ञानीयस्थितिक्षणसम्बन्धोऽपि घटोत्पत्तिरेव। तादृशसम्बन्धे च लक्षणसमन्वयस्तदैव भवितुमर्हति यदि यत्समयवृत्तिध्वंसेत्यत्र यत्पदेन तादृशज्ञानात्मककालो धर्तुं शक्येत। परन्तु कालिकेन यत्समयवृत्तीत्यनुक्तौ यत्पदेन तादृशज्ञानव्यक्तिर्धर्तुं न शक्येत। यतः ध्वंसविषयकतादृशज्ञाने विषयितया निखिलानां ध्वंसानां वर्त्तमानतया तत्प्रतियोगित्वमेव घटीयसमयसम्बन्धसामान्ये वर्त्तते न तु तदभावः। एवं च यत्पदेन तादृशज्ञानव्यक्त्यग्रहणेन घटेन सह तादृशज्ञानव्यक्त्याः सम्बन्धेऽव्याप्तिरिति। कालिकसम्बन्धेन यद्वृत्तित्वस्य ध्वंसे लाभे च नोक्तदोषः। विषयितासम्बन्धेन निखिलध्वंसानां तादृशज्ञाने सत्त्वेऽपि कालिकेन घटीयसमयध्वंसस्य कस्यापि तत्राऽवर्त्तमानत्वादिति।

## ❀ जागदीशी ❀

यदि च विषयिताया वृत्त्यनियामकत्वात् स्ववृत्तिध्वंसप्रतियोगित्वं नास्तीत्युक्तावपि नोक्तदोष इति विभाव्यते तदा अयं कालो घटद्वितीयक्षणवान् घटोत्पत्तिक्षणवत्त्वादित्यत्र हेतौ घटाद्यक्षणसम्बन्धध्वंस उपाधिरिति प्रतीत्या व्यभिचारादिसम्बन्धेन घटोत्पत्तिक्षणेऽपि घटोत्पत्तिध्वंसस्य सत्त्वादुत्पत्तिमात्रेऽसंभव एव स्यादतो द्वितीयं समयपदम्। घटादेः स्वपूर्वोत्पन्नज्ञानादिविषयतायामतिव्याप्तेस्तृतीयं समयपदम्।

ननु समयसम्बन्धः कालिकविशेषणता। सा च यदि समवायादिसम्बन्धवदेकैव नित्या न तु स्वरूपसम्बन्धः, तदा तयदीसम्बन्धसामान्ये एव तदीयद्वितीयक्षणवृत्तिध्वंसाऽप्रतियोगित्वात्तत्रातिव्याप्तिरत आह–

## ❀ काशिकानन्दी ❀

न्यायसिद्धान्ता मम बुद्धौ वर्त्तन्ते, न सन्तीत्यादिप्रत्ययबलेन विषयित्वस्य वृत्तिनियामकत्वमावश्यकमतो यदीत्युक्तम्। नोक्तदोषः = नोक्तज्ञानसम्बन्धेऽव्याप्तिदोषः। व्यभिचारसम्बन्धस्य वृत्तिनियामकत्वं साधयन्नाह—अयं काल इति। घटोत्पत्तिक्षणवत्त्वादिति। असद्धेतुरयम्। हेत्वधिकरणे घटोत्पत्तिक्षणे घटद्वितीयक्षणस्य कालिकेन विरहात्। घटाद्यक्षणसम्बन्धध्वंस उपाधिरिति। यत्र घटोत्पत्तिक्षणवत्त्वं तत्र घटाद्यक्षणसम्बन्धध्वंस इति साध्यव्यापकत्वम्। हेत्वधिकरणे घटाद्यक्षणे घटाद्यक्षणसम्बन्धध्वंसो नास्तीति साधनाऽव्यापकत्वम्। इति प्रतीत्या = इत्याकारकाऽभ्रान्तप्रतीतिप्रामाण्येन। एवं च घटोत्पत्तिक्षणात्मकहेतौ घटाद्यक्षणसम्बन्धध्वंसरूपोपाधेर्व्यभिचारसम्बन्धेन सत्त्वाद् प्रथमक्षणवृत्तिध्वंसपदेन प्रथमक्षणसम्बन्धध्वंसस्यापि ग्रहणात्तत्प्रतियोगित्वमेष घटीये समयसम्बन्धे आयातं न तु तदभाव इति यत्पदेन प्रथमक्षणाऽलाभादसंभव इति भावः। अधिकमभिहितं प्राक्। स्वपूर्वोत्पन्नज्ञानविषयतायां = घटादिपूर्वोत्पन्नघटादिविषयकज्ञानविषयतायाम्। अतिव्याप्तेरिति। यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्तीत्यत्र यत्पदेन घटपूर्वोत्पन्नज्ञानं धर्त्तुं शक्यते। यतः घटीयसमयसम्बन्धे कालिकेन पूर्वोत्पन्नज्ञानवृत्तिध्वंसस्य प्रतियोगित्वं न संभवति। तादृशं यत् पूर्वोत्पन्नज्ञानं तेन सह घटस्य विषयतासम्बन्धोऽस्त्येव तत्रातिव्याप्तेरित्यर्थः। तृतीयं समयपदमिति। तथा च तेन कालिकसम्बन्धलाभाद् न विषयतायामतिव्याप्तिरिति भावः।

सा च = कालिकविशेषणता च। एकैव नित्येति। रूपप्रतियोगिकसमवायस्य समवायाविव विभिन्नकालीनवस्तुप्रतियोगिककालिकस्यान्यत्राभावाददोष इति भावः। न तु स्वरूपसम्बन्ध इति। अनन्तानां स्वरूपाणां सम्बन्धत्वकल्पने गौरवादिति भावः। तदीयद्वितीयक्षणेति। तदीयद्वितीयादिक्षणेत्यर्थः। ध्वंसाऽप्रतियोगित्वादिति। कालिकस्य नित्यत्वादेवेति भावः। तत्र = द्वितीयादिक्षणानुयोगिकत्वविशिष्टघटप्रतियोगिककालिकसम्बन्धे। प्रथमक्षणानुयोगिकत्वघटप्रतियोगिकत्वैतदुभयविशिष्टस्य तु कालिक-

❀ दीधितिः ❀

**तदधिकरणक्षणाऽवृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वं वा**

❀ जागदीशी ❀

तदधिकरणेत्यादि । यत्तु महाप्रलयवृत्तिध्वंसप्रतियोगितात्वावच्छिन्नाभावाऽप्रसिद्ध्या तदुत्पत्तावव्याप्तिः । ध्वंसप्रतियोगितात्वेन लघुधर्मेणैव तादृशप्रतियोगित्वावच्छेदात् अतस्तदधिकरणेत्यादीति । तच्चुच्छम् । गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेऽग्रिमलक्षणेऽपि तदधिकरणक्षणाऽवृत्तित्वस्याऽप्रसिद्धिप्रसङ्गात् । तदधिकरणक्षणवृत्तित्वनिष्ठप्रतियोगिताया: कालिकसम्बन्धावच्छिन्नतद्वृत्तित्वत्वेनैव लघुधर्मेणावच्छेदात् । जन्यमात्रस्यैव कालोपाधित्वात् । समयवृत्तिध्वंसप्रतियोगित्वं नास्तीत्यत्र तादृशप्रतियोगित्वाभावकूटस्यैव विवक्षणे गुरुधर्मस्यानवच्छेदकत्वेऽपि उक्ताऽव्याप्तेरभावाच्चेति दिक् । स्ववृत्तीति ।

❀ काशिकानन्दी ❀

सम्बन्धस्योत्पत्तित्वं युज्यत इति भावः । अभावाऽप्रसिद्ध्येति । सर्वेषां ध्वंसानां महाप्रलये वर्त्तमानतया महाप्रलयवृत्तित्वविशेषणस्य व्यर्थत्वेनाऽतिप्रसङ्गाद्यनापादकध्वंसप्रतियोगितात्वस्यैवावच्छेदकत्वादिति भावस्तदाह—लघुधर्मेणेति । तादृशप्रतियोगित्वावच्छेदात् = महाप्रलयवृत्तिध्वंसप्रतियोगताया अवच्छिन्नत्वात् । अग्रिमलक्षणेपि = तदधिकरणक्षणेत्याद्युत्पत्तिलक्षणेऽपि । तदधिकरणक्षणावृत्तित्वं तदधिकरणक्षणवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः । तत्पदेन हि घटादेर्धारणम् । तत्र घटाधिकरणक्षणवृत्तित्वत्वापेक्षया घटवृत्तित्वमेव लघुधर्मः । घटाधिकरणक्षणवृत्तीनां कालिकेन घटेऽपि वृत्तेः । ननु घटे कालिकेन किमपि न वर्त्तते तस्य कालत्वाभावादित्यत आह—जन्यमात्रेति ।

ननु क्रियाया एव कालत्वं न तु घटादेरिति न दोषः । न चैवमपि महाप्रलयेऽव्याप्तिः तदानीं क्रियाऽभावादिति वाच्यम् । चरमध्वंसावच्छेदेन महाकालस्यापि क्षणत्वस्य वक्ष्यमाणत्वेन तमादायैव लक्षणसंगमनात् । एवं च तद्वृत्तित्वत्वावच्छिन्नत्वस्य निवेशासंभवान्न गुरुधर्मत्वमिति चेद् ? न, एवमपि महाप्रलयाधिकरणक्षणवृत्तित्वत्वापेक्षया महाप्रलयवृत्तित्वत्वस्य लघुत्वात्तत्रैव लक्षणगमनाऽसंभवात् । एवं क्रियोत्पत्तावपि अव्याप्तिः । तत्राति तत्तत्क्रियावृत्तित्वस्य लघुत्वात् ।

ननु अग्रिमलक्षणे कालिकेन तद्वृत्तित्वनिवेशे तात्पर्यान्न गुरुधर्मस्यानवच्छेदकत्वस्वीकारापत्तिः । जन्यामात्रस्य कालोपाधित्वाददोष इत्यत आह—समयवृत्तीति । प्रथमोत्पत्तिलक्षणे इत्यादिः । कूटस्यैवेति । तादृशकूटत्वं चानुगतधर्मो नातो घटोत्पत्तिरित्यनुगतप्रतीत्यनुपपत्तिः । न च दुर्ज्ञेयत्वापत्तिः । तदधिकरणक्षणवृत्तिध्वंसप्रतियोगितात्वादिनानुमित्युत्तरं पश्चात्तादृशप्रतियोगितात्वमोषेण तद्व्यक्तित्वेनपि भानसंभवात् । अन्यथा तदधिकरणक्षणेत्यादिलक्षणेऽपि घटादीनां तत्तद्व्यक्तित्वेनैव प्रवेशनीयतया घट उत्पद्यत इत्यादौ अपूर्वतद्व्यक्तित्वप्रकारेण तद्व्यक्तिघटितोत्पत्तेर्भाननापत्तेः । अपि च घटाद्युत्पत्तिलक्षणे घटादीनां तत्तद्व्यक्तित्वेनैव

### ❀ जागदीशी ❀

तथा च यत्समयवृत्तिध्वंसप्रतियोगित्वं यद्व्यक्त्यधिकरणक्षणाऽवृत्तित्व-

### ❀ काशिकानन्दी ❀

प्रवेशसंभवेन लक्ष्यभेदेन लक्षणानन्त्यात् महाप्रलयोत्पत्तिलक्षणे यत्समयवृत्तित्वविशेषणं न देयमिति न कोऽपि दोषः, भवतु वा यत्समयवृत्तिध्वंसप्रतियोगितात्वसमनियतधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव प्रवेशः महाप्रलये ध्वंसप्रतियोगितात्वं महाप्रलयवृत्तिध्वंसप्रतियोगितात्वसमनियतधर्मः। अन्यत्र तु तत्तत्समयवृत्तिध्वंसप्रतियोगितात्वमेवेति कुत्रापि दोषाऽप्रसक्तेः इत्याद्यूहनार्थं दिगित्युक्तम्।

दीधितौ तदधिकरणक्षणेति (पृ० २४१) तदधिकरणक्षणाऽवृत्तित्वव्याप्या या स्ववृत्तिध्वंसप्रतियोगिता तादृशप्रतियोगिता यस्य स्वस्य समयस्य तादृशसमयवृत्तित्वमित्यर्थः। घटोत्पत्तौ लक्षणसमन्वयः—तत्र तत्पदग्राह्यस्तद्घटः। तदधिकरणक्षणवृत्तिषु क्वचिदपि प्रथमक्षणवृत्तिध्वंसप्रतियोगित्वं नास्ति। घटीयप्रथमद्वितीयादिक्षणवृत्तीनां ध्वंसस्य द्वितीयादिक्षणमारभ्यैव संभवेन प्रथमक्षणे घटीयक्षणवर्त्तिनः कस्यापि ध्वंसाभावात्। तथा च घटीयप्रथमक्षणवृत्तिध्वंसप्रतियोगित्वस्य घटीयपूर्वक्षणादौ वर्त्तमानस्य घटीयक्षणवर्त्तिनि कुत्राप्यवर्त्तमानतया घटीयक्षणाऽवृत्तित्वव्याप्यत्वं तत्रायातम्। तथाविधस्वपदग्राह्यप्रथमक्षणवृत्तित्वं घटस्य यदस्ति तदेव घटोत्पत्तिर्नामेति तत्र लक्षणगमनात्। द्वितीयक्षणसम्बन्धे नातिव्याप्तिः। घटीयप्रथमक्षणपर्यन्तवर्त्तिनि द्वितीयक्षणे ध्वंसं प्राप्नुवति वस्तुनि द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वसत्त्वात्। तादृशप्रतियोगित्वस्य घटीयक्षणाऽवृत्तित्वव्याप्यताविरहात्।

ननु प्रथमक्षणवृत्तित्वं घटनिष्ठमेव वाच्यम्। अन्यथा चिरकालप्रागुत्पन्नपटादिव्यक्तावपि वर्त्तमानायां घटीयप्रथमक्षणवृत्तित्वसत्त्वेन पट उत्पद्यत इत्यादिव्यवहारस्यापत्तेः। तच्च वृत्तित्वं घटे एवायाति न तु क्षणे। तथा च प्रथमक्षणे घटोत्पत्तिरित्यादिव्यवहारो भज्येत। न च घटस्यापि प्रथमक्षणावच्छेदेन क्षणत्वमस्तीत्यदोष इति वाच्यम्। मध्याह्ने घटोत्पत्तिरित्यादौ मध्याह्नादिपदस्य सूर्यादिस्पन्दस्यैव विषयत्वात्तादृशव्यवहारस्यैव विलोपप्रसङ्गः। प्रत्युत घटे उत्पत्तिः घटोत्पत्तिनिरूपको मध्याह्नकाल इत्यादिव्यवहार एव स्यादित्याशङ्क्य तादृशसमयवृत्तित्वपदेन तादृशसमयेन समं घटस्य कालिकसम्बन्ध एव विवक्षणीय इत्याशयेन व्याचष्टे—तथा चेति। यत्समयवृत्तीति। यत्क्षणवृत्तीत्यर्थः। अन्यथा कालिकसम्बन्धस्यैक्यमते घटोत्पत्तिपर्यन्तावसायिस्थूलकालस्यापि यत्समयपदेन ग्राह्यतया 'तादृशस्थूलकालानुयोगिकघटप्रतियोगिकसम्बन्धस्याप्युत्पत्तित्वापत्तेः। न चेष्टापत्तिः प्रहरो घटोत्पत्तिमानित्यादिव्यवहारादिति वाच्यम्। प्रहरः आद्यक्षणावच्छेदेन घटोत्पत्तिमानिति व्यवहारस्यैवापत्तेः। न च कालिकस्यैक्यमते तस्य व्याप्यवृत्तितया तदवच्छेदकाऽप्रसिद्ध्यैव नोक्तदोषः। न चैवं घटोत्पत्तिपर्यन्तावसायिप्रहरेऽन्त्यक्षणावच्छेदेन घटोत्पत्तिव्यवहारोऽपि न स्यादिति शङ्क्यम्। घटीयाद्यक्षणानुयोगिकत्वघटप्रतियोगित्वोभयविशिष्टकालिकस्य तादृशप्रत्ययविषयत्वाद्। शुद्धस्य कालिकस्य व्याप्यवृत्तित्वेऽपि विशिष्टस्याव्याप्यवृत्तिताया अविरुद्धत्वादिति वाच्यम्। एवमपि प्रहरीयाद्यक्षणेऽधिक-

### ❀ जागदीशी ❀

व्याप्यं तेन साधं तद्व्यक्तेः समयसम्बन्धस्तद्व्यक्तेरुत्पत्तिरित्यर्थः। घटाद्युत्पत्तिकालीनध्वंसप्रतियोगित्वं न घटाद्यधिकरणकालावृत्तित्वव्याप्यं, नष्टमात्रस्यैव घटाद्यधिकरणस्थूलकालवृत्तित्वादित्यसंभववारणाय क्षणपदम्। घटादिद्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वस्य चिरातीते घटाद्यधिकरणक्षणाऽवृत्तित्वसामानाधिकरण्याद् द्वितीयादिक्षणसम्बन्धेऽतिव्याप्तिरतो व्याप्यपदम्।

यद्यपि चिरविनष्टनिष्ठं द्वितीयादिक्षणवृत्तिध्वंसस्य यत्किंचित्प्रतियोगित्वं घटाद्यधिकरणक्षणाऽवृत्तित्वव्याप्यमेव तथापि तदधिकरणक्षणाऽवृत्तित्वं यत्समयवृत्तिध्वंसप्रतियोगित्वव्यापकं तत्समयसम्बन्धत्वं विवक्षितम्।

### ❀ काशिकानन्दी ❀

सत्त्वस्यैव दुर्वारतया प्रहरीयाद्यक्षणे घटोत्पत्तिमानिति व्यवहारस्यैव दुरपनयतापत्तेः।

घटाद्यधिकरणीभूतो यो घटादिपूर्वसमारब्धमासवर्षाद्यात्मककालस्तस्यापि तदधिकरणसमयपदेन धर्तुं शक्यतया तद्वृत्त्यवृत्तित्वपर्यवसितं तद्वृत्तित्वव्याप्यत्वमपि स्ववृत्तिध्वंसप्रतियोगितायां सम्पादनीयं, तच्च न संभवति च, घटादेराद्यक्षणस्यैव स्वपदेन धर्तव्यतया घटपूर्वारब्धमासवर्षाद्यात्मककालवृत्तिवस्तूनां केषांचिद् ध्वंसस्य स्वपदग्राह्यतादृशक्षणे सत्त्वेन तादृशध्वंसप्रतियोतायामेव तादृशमासाद्यवृत्तित्वस्य व्यभिचारादिति असंभवापत्तिवारणाय तदधिकरणसमयेत्यनुक्त्वा तदधिकरणक्षणेत्युक्तमित्याह—घटाद्युत्पत्तिकालीनेति। स्ववृत्तिध्वंसेत्यत्र स्वपदेन घटादेराद्यक्षण एव लम्भनीयः। द्वितीयादिक्षणलाभे तद्वृत्तित्वे एवातिव्याप्तिः स्यात्। व्याप्यपदमनुक्त्वा समानाधिकरणपदं तत्स्थाने उच्येत चेत्त्व द्वितीयादिक्षणोऽपि स्वपदग्राह्यतां भजेत। तद्वृत्तिध्वंसपदेन दिनमासादेः प्राक् नाशं गतवस्तुनो ध्वंसस्यापि धर्तुं शक्यतया तत्प्रतियोगित्वस्य घटाधिकरणक्षणाऽवृत्तित्वसमानाधिकरणत्वादित्यतिव्याप्तिरित्याह—घटादिद्वितीयेति। चिरातीते = घटीयक्षणावृत्त्यतीतवस्तुनि। व्याप्यपदमिति। एवं च घटीयद्वितीयक्षणवृत्तिध्वंसप्रतियोगितायाः प्रथमक्षणवृत्तिवस्तुन्यपि संभवाद् घटाधिकरणक्षणाऽवृत्तित्वव्याप्यत्वं न द्वितीयक्षणवृत्तिध्वंसप्रतियोगितायामित्यदोष इति भावः।

यद्यपीति। ध्वंसीयप्रतियोगिताया नानाव्यक्तिनिष्ठाया एकस्या विरहेण स्ववृत्तिध्वंसप्रतियोगितापदेन तत्तत्प्रतियोगिताया एव धारणसंभवाद् द्वितीयक्षणवृत्तिर्यश्चिरातीतवस्तुध्वंसः तत्प्रतियोगित्वे घटाधिकरणक्षणाऽवृत्तित्वव्याप्यताया अक्षततया द्वितीयक्षणवृत्तित्वेऽतिव्याप्तिरित्यर्थः। ध्वंसप्रतियोगित्वव्यापकमिति। न च तदधिकरणक्षणाऽवृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगितासामान्यसमयवृत्तित्वमित्येव परिष्कार्यमिति न पूर्वोक्तदोषावकाशः। द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वसामान्यान्तर्गतप्रथमक्षणवृत्तिवस्तुन एव तदधिकरणक्षणवृत्तित्वादिति वाच्यम्। तदधिकरणक्षणवृत्तित्वव्याप्यत्वं यद्वृत्तिध्वंसप्रतियोगितात्वव्यापकं तस्य तद्वृत्तित्वमित्येव सामान्यघटितलक्षणार्थतया एतत्कल्पापेक्षया गौरवात्।

## ❀ जागदीशी ❀

न च जन्यमात्रस्य कालोपाधित्वात्तदवृत्तित्वं यत्समयवृत्तिध्वंसप्रतियोगित्व-व्यापकं तत्समयसम्बन्ध एवोत्पत्तिरस्तु । यथासन्निवेशे वैयर्थ्यविरहादिति भावः । चिरातीतज्ञानवृत्तिध्वंसप्रतियोगिनः सर्वस्यैव घटाद्यधिकरणक्षणाऽवृत्तित्वाद् घटादिनिष्ठे तदीयविषयत्वादिसम्बन्धेऽतिव्याप्तिरतः समय-सम्बन्धेति । ननु तदधिकरणक्षणाऽवृत्तित्वेत्यत्र क्षणत्वं स्ववृत्तिप्रतियो-गिकप्रागभावानधिकरणसमयत्त्वं तच्च प्रागभावं विना दुर्वचमत आह—

## ❀ काशिकानन्दी ❀

यद्यपि चिरातीतवस्तुवृत्ति यद् द्वितीयादिक्षणवृत्तिध्वंसप्रतियोगित्वं तद्व्यापकत्वस्य घटाधिकरणक्षणाऽवृत्तित्वेऽक्षततयाऽतिव्याप्तितादवस्थ्यमेव । न च तदधिकरणक्षणाऽवृत्तित्वं यत्समयवृत्तिध्वंसप्रतियोगितात्वावच्छिन्नव्यापकं तद्वृत्तित्वविवक्षणेनादोष इति वाच्यम् । तथा सति तदधिकरणक्षणाऽत्तित्वव्याप्यतावच्छेदकस्ववृत्तिध्वंसप्रतियोगितात्वक-समयवृत्तित्वपरिष्कारेणैव दोषवारणं सुकरम् । तथापि तदधिकरणक्षणाऽवृत्तित्वं यत्समय-विशिष्टान्यत् तत्समयसम्बन्धवत्त्वं विवक्षितमिति न दोषः । वैशिष्ट्यं च स्ववृत्तिध्वंस-प्रतियोगित्त्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वसम्बन्धेनेति ध्येयम् ।

न चेति । अस्त्वित्यन्वयः । तद्वृत्तित्वमिति । यस्योत्पत्तिः स तत्पदग्राह्यः । घटाऽवृत्तित्वं घटीयपूर्वकालादिमात्रवृत्तिवस्तुनि, अस्ति च प्रथमक्षणवृत्तिध्वंसप्रतियोगित्व-व्यापकत्वं तत्र । यथासन्निवेशे वैयर्थ्यविरहादिति । तत्पदार्थस्य वृत्तितायामनन्व-यादिति भावः ।

केचित्तु प्रतियोगितायां व्याप्यत्वं तादात्म्यसम्बन्धेन विवक्षितम् । तथा च तदधि-करणक्षणाऽवृत्तित्वं यत्समयवृत्तिध्वंसप्रतियोगितात्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदक-भिन्नं तत्समयसम्बन्धवत्त्वस्य तदर्थतया द्वितीयादिक्षणवृत्तिध्वंसीया या क्रियादिनिष्ठ प्रतियोगिता तन्निष्ठान्योन्योन्याभावप्रतियोगितानवच्छेदत्त्वस्य घटाऽवृत्तितायामक्षततयाऽ-तिव्याप्तिः स्यात् । वृत्तित्वं हि स्वरूपसम्बन्धेन न तु कालिकेन । तदधिकरणक्षणेत्याद्युक्तौ नातिव्याप्तिः । प्रथमक्षणध्वंसस्यापि द्वितीयक्षणे सत्त्वेन द्वितीयक्षणवृत्तिध्वंसप्रतियोगिताया तदधिकरणप्रथमक्षणे एव वर्त्तमानतया तत्र तदधिकरणक्षणाऽवृत्तित्वविरहात् । प्रथमक्ष-णसम्बन्धे च लक्षणसमन्वयः प्रथमक्षणवृत्तिध्वंसप्रतियोगितायाः पूर्वक्षणादिवर्त्तिन्या तदधिकरणक्षणाऽवृत्तित्वनियमात् । एतेन तदधिकरणक्षणाऽवृत्तित्वव्याप्यत्वं तदधिक-रणक्षणनिरूपितवृत्तित्वाभावाभाववदवृत्तित्वं, तदधिकरणक्षणवृत्त्यवृत्तित्वमिति यावत् । तदपेक्षया तदधिकरणक्षणाऽवृत्ति यत्समयवृत्तिध्वंसप्रतियोगितासामान्यमित्येव वक्तव्य-मित्यपि समाहितम् । सामान्यपदस्योक्तार्थं एव पर्यवसनादिति वदन्ति । अत्रापि क्षणत्वेन क्षणप्रवेशसार्थक्यं न संभवतीति अखण्डाभावघटकतयैव तत्सार्थक्यं बोध्यम् ।

स्ववृत्तिप्रागभावप्रतियोग्यनधिकरणत्वस्य महाप्रलयक्षणाऽव्याप्तत्वाल्लक्षणान्तरमाह स्ववृत्तिप्रतियोगिकप्रागभावेति । स्ववृत्तिः प्रतियोगी यस्य तथाविधो यः प्रागभावस्त-

❀ दीधितिः ❀

क्षणत्वं च स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वम्,

❀ जागदीशी ❀

क्षणत्वं चेति । यत्तु स्वजन्यविभागप्रागभावावच्छिन्नकर्मत्वरूपं क्षणत्वं प्रागभावाऽसत्त्वे दुर्वचमतोऽन्यथा निर्वक्ति क्षणत्वं चेति इति, तन्न, प्रलयोत्पत्त्यावव्याप्तिभिया विभागप्रागभावावच्छिन्नकर्मणः क्षणत्वशङ्काया एवानुत्थानात्। स्ववृत्तीति। स्ववृत्तिर्यो ध्वंसस्तत्प्रतियोग्यधिकरणं यद्यत्तदन्यसमयत्वमर्थः। स्ववृत्तित्वं प्रतियोग्यधिकरणत्वं च कालिकसम्बन्धेन बोध्यम्। तेन क्षणानां यथाकथंचित्सम्बन्धेन स्वस्मिन् वर्त्तमानस्य स्वोत्तरोत्पन्नध्वंसस्य प्रतियोगित्वेऽपि नाऽव्याप्तिः। न वा स्वस्मिन् कालिकतया वर्त्तमानस्यैव ध्वंसस्य प्रति-

❀ काशिकानन्दी ❀

दनधिकरणसमयत्वम्। समयविशिष्टसमयत्वमिति यावत्। वैशिष्ट्यं च स्वतादात्म्य-स्ववृत्तिप्रतियोगिकप्रागभावानधिकरणत्वोभयसम्बन्धेन। स्वपदं क्षणत्वेनाभिमतम्। स्थूलकालस्य न क्षणत्वम्। स्थूलकालान्तःपातिद्वितीयादिक्षणप्रागभावानधिकरणत्वस्य तदन्तःपातिप्रथमक्षणावच्छेदेन तत्र सत्त्वात्। उत्तरक्षणवृत्तिप्रतियोगिकप्रागभावाधिकरणत्वस्य पूर्वपूर्वक्षणेषु सर्वत्र सत्त्वादव्याप्तिरतः स्वतादात्म्येति। स्वजन्यविभागेति। या काचन क्रिया स्वदेनोपादेया तज्जन्यविभागप्रागभावावच्छिन्नतत्कर्मत्वमेकक्षण एव तत्कर्मत्वस्य त्रिचतुःक्षणेषु सत्त्वेऽपि तज्जन्यविभागप्रागभावस्य तदीयद्वितीयादिक्षणे विरहात्। तज्जन्यविभागप्रागभावस्यानादित्वेऽपि तत्कर्मत्वस्य तावत्क्षणनिचयेषु विरहात्। एवं क्रियान्तरमादाय क्षणत्वं सम्पादनीयम्। प्रलयोत्पत्तौ = महाप्रलयोत्पत्तौ। अव्याप्तीति। महाप्रलयक्षणे विभागप्रागभावसत्त्वे पुनर्विभागात्मककार्यपदार्थ एव महाप्रलयविघातक उत्तरमुत्तिष्ठेतेति भावः। स्ववृत्तिध्वंसप्रतियोनि चिरातीतयत्किंचिद्वस्त्वनाधारत्वस्य स्थूलसमये सत्त्वाद्, स्ववृत्तिध्वंसप्रतियोगित्वविषयकज्ञानीयविषयत्वावच्छिन्नानाधारत्वस्य क्षणादौ विरहाच्चातिव्याप्त्यसंभावावतो व्याचष्टे—स्ववृत्तिर्य इति। तथा च समयविशिष्टसमयत्वम्। वैशिष्ट्यं च स्वतादात्म्य–स्वविशिष्टान्यत्वोभयसम्बन्धेन। अत्र वैशिष्ट्यं स्ववृत्तिध्वंसप्रतियोग्यधिकरणत्वसम्बन्धेन। स्ववृत्तिध्वंसप्रतियोग्यधिकरणतात्वावच्छिन्नव्यापकीभूतप्रतियोगिताकभेदाधिकरणसमयत्वं वा। स्ववृत्तित्वस्य कालिकसम्बन्धेन प्रवेशफलमाह—क्षणानामिति। प्रतियोगित्वेऽपीति सम्बन्धः। यथाकथंचित्सम्बन्धेन = व्यभिचारादिसम्बन्धेन। नाऽव्याप्तिरिति। यत्र क्षणे लक्षणसमन्वयः कार्यस्तद्ध्वंसस्य स्वोत्तरक्षणे वर्त्तमानस्यापि व्यभिचारादिसम्बन्धेन स्वस्मिन् वर्त्तमानतया तत्प्रतियोगिभूतो यः स्वात्मकक्षणस्तस्य स्वस्मिन्नेव कालिकेन वर्त्तमानत्वस्वीकारेण तदधिकरणभिन्नत्वविरहेण प्राप्ताऽव्याप्तिर्नेत्यर्थः। कालिकेन स्वस्मिन् स्वध्वंसविरहादिति भावः। असंभवस्तु नास्ति। प्रलयक्षणे लक्षणसमन्वयात्। अत्र च प्रतियोग्यधिकरणत्वस्य कालिकसम्बन्धावच्छिन्नत्वविवक्षणफलमाह—न वेति। अत्र च

❀ जागदीशी ❀

योगिनः पूर्वोत्पन्नज्ञानादेर्विषयतयाऽधिकरणत्वेऽप्यसंभवः। नित्यवस्तुव्युदासाय समयपदम्।

लक्षणमिदं क्षणिकान्त्यशब्दादेरङ्गीकारे एव। अन्यथा क्रियादेः स्ववृत्तिध्वंसप्रतियोग्यधिकरणत्वात् प्रलयान्यलक्षणमात्रे एवाऽव्याप्तिः।

❀ काशिकानन्दी ❀

प्रलयलक्षणेऽपि लक्षणसमन्वयो न भवति। स्ववृत्तिध्वंसप्रतियोगिनः स्वविषयकज्ञानस्य विषयतया स्वस्मिन् सत्त्वेन तदधिकरणभेदविरहादिति मन्तव्यम्। नित्यवस्तुव्युदासाय= आत्मादिव्युदासाय। समयपदमिति। कालिकसम्बन्धेन वृत्तित्वाधिकरणत्वयोः प्रापकमिति शेषः। यथाश्रुतन्तु न युक्तम्। स्ववृत्तित्वादेः कालिकसम्बन्धेन प्रागुक्ताख्याततया तत एव दोषवारणसंभवात्। आत्मादिनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्ध्यैव स्वपदेन तस्योपादातुमशक्यत्वात्। या च क्रियाऽन्त्यशब्दादिः स्वपदग्राह्यः तत्तादात्म्यस्यात्मादौ विरहादेवादोषात्। न च वस्तुविशिष्टान्यवस्तुत्वं क्षणत्वम्। वैशिष्ट्यं स्ववृत्तिध्वंसप्रतियोग्याधारत्वसम्बन्धेन। न तु स्वतादात्म्यमपि निवेशनीयमिति वाच्यम्। अव्याप्त्यापत्तेः। यत्र क्षणे लक्षणं नेयम् तदुत्तरक्षणं वस्तुपदेनोपादाय तद्वृत्तिध्वंसप्रतियोग्याधारत्वस्यैव तत्र नेतुं शक्यत्वात्। केवलं महाप्रलयलक्षणमात्रे लक्षणं स्यादिति ध्येयम्।

इदं = स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वात्मकम्। क्षणिकान्त्यशब्दादेरिति। क्षणिकपदार्थानङ्गीकारे इति कस्यचिदुक्तिस्तु नादरणीया। महाप्रलयस्यैव क्षणिकत्वात्। एकक्षणमात्रवृत्तिपदार्थस्यैव क्षणिकत्वेन महाप्रलयस्य क्षणात्मकस्यैकक्षणमात्रवृत्तित्वादित्याशयेन अन्त्यशब्दादेरित्युक्तम्। अङ्गीकारे एवेति। भेदस्याव्याप्यवृत्तित्वाङ्गीकारे इत्यपि बोध्यम्। क्रियादीनामन्त्यक्षणावच्छेदेन स्ववृत्तिध्वंसप्रतियोग्याधारभेदसत्त्वादन्त्यक्षणावच्छेदेन क्रियादेः क्षणत्वसिद्धेः। न च स्ववृत्तिध्वंसप्रतियोग्याधारभूतं यद्यत् तत्तद्व्यक्तिभेदकूट एव निविष्ट इति वाच्यम्। अव्याप्तिदानाय तथालक्षणस्याऽकरणीयत्वात्।

यद्यपि स्ववृत्तिध्वंसप्रतियोग्यधिकरणत्वस्याऽऽद्यादिक्षणावच्छेदेनैव क्रियायां सत्त्वादन्त्यक्षणावच्छेदेन तदत्यन्ताभावः सुलभ एवेति अत्यन्ताभावघटितलक्षणं सुवचमेव। दीधितौ स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वमपि स्ववृत्तिध्वंसप्रतियोग्याधारत्वात्यन्ताभाव एव विवक्षणीयः। न चान्त्यक्षणावच्छेदेन क्रियायां क्षणत्वसत्त्वेन तदभिन्नायां द्वित्रादिक्षणावस्थायिन्यां तस्यां क्षणत्वव्यवहारः स्यादिति वाच्यम्। अग्रिमलक्षणेऽप्येतद्दोषसत्त्वेन तत्रत्यैतद्दोषपरिहारदिशा अत्रापि दोषवारणसंभवात्। अपि चोत्पत्तिघटकतया प्रविष्टक्षणत्वस्योत्पत्तिव्यवहारोपयोगित्वमेवेति न तादृशशङ्काया एवावकाशः। तथा च तदधिकरणतावच्छेदकं यत् स्ववृत्तिध्वंसप्रतियोग्यधिकरणत्वमात्रविशिष्टसमयत्वं तदवच्छिन्नाधिकरणतानिरूपितवृत्तित्वाभाव एव तदधिकरणक्षणाऽवृत्तित्वपदार्थ इति न दोषप्रसक्तिः। न नाऽव्याप्यवृत्तिपदार्थस्याप्यधिकरणत्वं व्याप्यवृत्त्यैवेति मते न क्रियादीना-

❀ दीधितिः ❀

स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयत्वम्,

❀ जागदीशी ❀

सङ्गाद्, अतस्तदनङ्गीकारेऽप्याह स्ववृत्तीति। स्ववृत्तिर्यो ध्वंसस्तत्प्रतियोगि-

❀ काशिकानन्दी ❀

मन्त्यक्षणावच्छेदेनापि क्षणत्वसंभव इति वाच्यम् । तथा सति स्ववृत्तिध्वंसप्रतियोग्यभाव एव प्रवेष्टव्य इत्यदोषात् ।

तथापि लक्षणान्तरमिदं न लक्षणान्तरसमर्थनसहम् । स्ववृत्तिध्वंसप्रतियोगियत्किञ्चित्प्रतियोगिकाभावप्रवेशे स्थूलकालस्यापि क्षणत्वापत्तिभिया स्ववृत्तिध्वंसप्रतियोगित्वव्यापकीभूतप्रतियोगिताकाभावः प्रवेशनीय इति तन्निष्कर्षः ।

यत्तु स्ववृत्तिध्वंसप्रतियोगित्वाद्यवच्छिन्नाभावस्य स्थूलकाले क्षणत्ववारणाय प्रवेशनीयतया महाप्रलयक्षणेऽव्यप्तिः । महाप्रलयवृत्तिध्वंसप्रतियोगित्वाद्यपेक्षया ध्वंसप्रतियोगित्वस्य तत्समनियतलघुधर्मतया तस्यावच्छेदकत्वसंभवेन महाप्रलयवृत्तिध्वंसप्रतियोगित्वस्यानवच्छेदकत्वादिति गदाधरमतम् । तच्चिन्त्यम् । तदधिकरणक्षणाऽवृत्तित्वेत्याद्युत्पत्तिलक्षणघटकक्षणत्वस्यैव निरुच्यमानतया गुरुधर्मस्यावच्छेदकत्वमङ्गीकृत्यैव लक्षणोत्थानात् । अन्यथा तदधिकरणक्षणवृत्तित्वत्वापेक्षया कालिकसम्बन्धावच्छिन्नतद्वृत्तित्वत्वस्य लघुत्वात् । स्वयमेव तदधिकरणक्षणेति लक्षणावतरणमुक्तं—"उत्पत्तिनिर्वचनोपयोगितयैव क्षणलक्षणमवतारयितुं गुरुशरीरामपि क्षणघटितामुत्पत्तिं निर्वक्ति तदधिकरणेति" इति । अग्रे च "तदधिकरणक्षणाऽवृत्तित्वस्थले कालिकसम्बन्धेन तद्वृत्तित्वनिवेशेनाप्युपपत्तौ उक्तयुक्त्या क्षणघटनानुरोधेन गुरुतरारम्भ" इति ।

तदधिकरणक्षणनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभावनिरूपिततादात्म्यसम्बन्धावच्छिन्नव्याप्यतावत्स्ववृत्तिध्वंसप्रतियोगितायाः निवेशे गुरुधर्मावच्छिन्नप्रतियोगित्वानङ्गीकारेण क्षणलक्षणान्तरारम्भावतरणं कर्तुं शक्यमित्यपि न सत् । तत्रापि महाप्रलयोत्पत्तिलक्षणे तद्वृत्तित्वाभावव्याप्यत्वस्य प्रवेशयितुं शक्यत्वात् । क्षणत्वप्रवेशमन्तरापि उपपत्तेर्गुरुधर्मस्य तत्राप्यवच्छेदकत्वावश्यकत्वाच्च । तदनङ्गीकारेऽपि = क्षणिकान्त्यशब्दमेदाऽव्याप्यवृत्तित्वाद्यनङ्गीकारेऽपि ।

दीधितौ स्ववृत्तीति। तथा च समयविशिष्टसमयत्वं क्षणत्वम् । वैशिष्ट्यं च स्वतादात्म्य-स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकध्वंसत्वव्यापकीभूताधिकरणतावत्त्वोभयसम्बन्धेन । व्यापकता च स्वनिरूपिताधेयत्वसम्बन्धेन । अधिकरणत्वं चैकमव्याप्यवृत्तीति ज्ञेयम् । तदनङ्गीकारे यावत्त्वस्य बुद्धिविशेषविषयत्वात्मकानुगतधर्मस्य सत्त्वाभिप्रायेण लक्षणं नेयम् । स्ववृत्तित्वस्य ध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसान्वयित्वे ध्वंसप्रतियोगिप्रतियोगिकान्तं व्यर्थविशेषणं स्यादतः प्रथमध्वंसपदार्थे स्ववृत्तित्वं विशेष्य दर्शयति—स्ववृत्तिर्यो ध्वंस

### ❀ जागदीशी ❀

प्रतियोगिको यावान् ध्वंसस्तद्विशिष्टसमयत्वमित्यर्थः। तथा च क्षणिक-पदार्थाऽसत्त्वेऽपि स्थिराणामेवान्त्यक्षणावच्छेदेन तादृशयावद्ध्वंसविशिष्टतया क्षणत्वमिति भावः। यावद्ध्वंसविशिष्टसमयत्वं महाप्रलयान्यक्षण-मात्रेऽव्याप्तमतः प्रतियोगिकान्तं, तदपि ध्वंसविशेषणम्। सृष्टिकालीनक्षण-

### ❀ काशिकानन्दी ❀

इति। यथासन्निवेशे च न वैयर्थ्यं तद्दलस्य। क्षणिकपदार्थाऽसत्त्वेपि = द्वितीय-क्षणवृत्तिध्वंसप्रतियोगिपदार्थानङ्गीकारेऽपि। स्थिराणां = द्वित्रादिक्षणावस्थायिनाम्। अन्त्यक्षणावच्छेदेनेति। न च क्षणस्तावत्स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंस-विशिष्टसमयः। तस्यैव स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसावच्छेदकत्वं कथमुपपन्नम् इति वाच्यम्। कालिकसम्बन्धेन स्वस्य स्वाधिकरणत्वमिव स्वविशिष्टसमयस्य स्वावच्छेद-कत्वेऽपि क्षतिविरहात्। एवं तादृशयावद्ध्वंसविशिष्टक्रियान्तरमप्यवच्छेदकम्। तादृशेति। स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकेत्यर्थः। क्षणत्वमिति। ननु तादृशयावद्ध्वंसवैशिष्ट्य-स्यान्त्यक्षणावच्छेदेन क्रियादिषु सत्त्वे तदभिन्ने द्वित्रक्षणावस्थायिनः स्थिरस्य क्षणत्वापत्तिः। न च तादृशयावद्ध्वंसावच्छेदकावच्छिन्नक्रियादिस्तथा। तत एव। तत एव च तादृश-यावद्ध्वंसस्वत्वोभयवत्त्वमपि। क्रियादौ उभयस्य सत्त्वात्। घटकालः क्षणः इति व्यवहारश्च स्यात्। न हि कपिसंयोगविशिष्टवृक्षत्वं, कपिसंयोगवृक्षत्वोभयवत्त्वं वा न वृक्षे किन्तु शाखावच्छिन्नवृक्ष एवेति लोकव्यवहारः। तथा च मूलावच्छिन्नवृक्षः कपिसंयोगवृक्षत्वो-भयवानित्यादिव्यवहारविरहेऽपि वृक्षस्तादृशोभयवानितिवत्, द्वित्रिक्षणावस्थायिपदार्था-त्मकवस्तुविशेषावच्छिन्नो घटकालः क्षण इति व्यवहाराभावेऽपि पटकालः क्षण इति व्यवहारः स्यादेव। न च स्ववृत्तिध्वंसावच्छेदकीभूतो यः स्वावच्छेदककालः स एव क्षणः। स्ववृत्तियावद्ध्वंसावच्छेदकत्वस्योत्तरकाले सत्त्वेऽपि तस्य स्वकालत्वविरहाददोष इति वाच्यम्। कोऽयमवच्छेदकीभूतकालः। तस्यैव स्वरूपं जिज्ञास्यत इति चेद् ?

अत्राहुः। स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंस-स्वैतदुभयत्वमेव क्षणत्वम्। स्ववृत्तियावद्ध्वंसः स्वं चैकक्षणमेव तिष्ठति। उत्तरक्षणे स्वस्याभावात्, पूर्वक्षणे यावद्-ध्वंसविरहाद्। न च तन्निष्ठोभयत्वमेव तदा क्षणिकपदार्थः सिद्ध्यतीति वाच्यम्। बुद्धिविशेषविषयत्वरूपोभयत्वस्य विषयविरहकालेऽपि स्थितिसंभवेन तस्य क्षणिकत्वाभावेऽपि क्षतिविरहात्। कालिकेन तादृशोभयत्वस्योत्तरक्षणादौ सत्त्वेऽपि पर्याप्त्या उत्तरक्षणादौ विरहेणैव दोषासंभवात्। न च तर्हि पर्याप्तिरेव क्षणिकी स्यादिति वाच्यम्। तस्या उभयस्वरूपत्वेन क्षणिकत्वाभावाद् योगिनामपेक्षाबुद्धिमादायैव सृष्टिकाले उभयत्वस्य समा-दनीयत्वात्। क्षणो नष्ट इत्यादिव्यवहारश्च तादृशक्षणविघटनमात्रमादायेति दिक्।

ननु स्ववृत्त्यभावप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयत्वं लक्षणमस्त्वित्यत आह—सृष्टीति। स्वोत्तरोत्पन्नवस्तुनोऽत्यन्ताभावः स्वस्मिन् वर्तते न तु तद्ध्वंसः।

❀ जागदीशी ❀

मात्रस्यैव स्वोत्तरोत्पन्नपदार्थात्यन्ताभाववत्त्वात्तत्प्रतियोगिकध्वंसवैशिष्ट्या-भावाच्चाऽव्याप्तितादवस्थ्यमतो ध्वंसपर्यन्तम्।

अत्र ध्वंसस्य स्ववृत्तित्वं कालिकसम्बन्धेन बोध्यम्। तेन यथाकथंचिद्-व्यभिचारादिसम्बन्धेन तत्तत्क्षणवृत्तीनां तत्तत्क्षणोत्तरोत्पन्नध्वंसानां कालिकसम्बन्धेन वैशिष्ट्यस्य तत्तत्क्षणेषु विरहेऽपि नाऽव्याप्तिः। प्रहरादी-नामपि स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयत्किंचिद्ध्वंसविशिष्टत्वादतिव्याप्ति-रतो यावत्पदम्। नष्टघटप्रतियोगिकसंयोगादेरपि स्ववृत्तिध्वंसप्रतियोगि-

❀ काशिकानन्दी ❀

तत्प्रतियोगिकेति। स्वोत्तरोत्पन्नपदार्थप्रतियोगिकेत्यर्थः। अव्याप्तीति। कालिकेन गगनादीनां वृत्तित्वविरहपक्षेऽपि प्रलयवृत्त्यत्यन्ताभावप्रतियोगिगगनादिध्वंसाऽप्रसिद्ध्या तस्य कूटाऽप्रवेशादेव न तत्राऽव्याप्तिः। ध्वंसपर्यन्तमिति। प्रथमध्वंसपदफलमिदम्। चरमध्वंसपदफलस्याग्रे वक्तव्यत्वात्।

अत्र = स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकेत्यादिलक्षणे। स्ववृत्तित्वं = लक्षणघटक स्ववृत्तिपदग्राह्यवृत्तित्वम्। बोध्यमिति। अन्यथा स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयाव-द्ध्वंसवैशिष्ट्यस्य कालिकसम्बन्धेनाग्रे वक्तव्यतया स्ववृत्तित्वस्य कालिकसम्बन्धेनानुक्तौ यद्वस्तूपादाय लक्षणं नेयं तदुत्तरोत्पन्नध्वंसस्यापि व्यभिचारादिसम्बन्धेन तद्वस्तुवृत्तितया-ऽव्याप्तिः स्यात्। तादृशवस्तुवृत्त्युत्तरोत्पन्नध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसस्य कालिकेन तद्वस्तुनि विरहादिति तदाह—तेनेति। महाप्रलये लक्षणसमन्वयादव्याप्तिरिति।

एकं प्रहरं स्वपदेनोपादाय तत्रापि क्षणलक्षणं नेतुं शक्यम्। स्ववृत्तिर्यस्तादृशप्रहर-पूर्वनष्टवस्तुध्वंसः तत्प्रतियोगिप्रतियोगिकध्वंसस्य समस्तप्रहरकाले सत्त्वादतो यावत् पदमु-पात्तम्। तदुपादाने तस्मिन् प्रहरेऽपि बहूनां वस्तूनां नष्टत्वात् प्रहरस्य चरमक्षणे उत्पन्न-ध्वंसोऽपि यावदन्तर्गततया लाभात्तद्वैशिष्ट्यस्य चरमक्षणावच्छेदेनैव प्रहरे सत्त्वान्न सकलस्य प्रहरस्य क्षणत्वापत्तिरित्याह—प्रहरादीनामिति। निरवच्छेदेनेत्यादिः। तेनान्त्य-क्षणावच्छेदेन प्रहरस्यापि क्षणताया इष्टत्वेऽपि नासंगतिः।

ननु स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्विशिष्टत्वं लक्षणमस्तु किं ध्वंसपदोपादा-नेनात आह—नष्टेति। संसर्गीयम् अभावीयं चेति प्रतियोगित्वं द्विविधम्। ध्वंसपदा-नुपादाने उभयमपि ध्रियेत। तथा च स्वपदग्राह्यं यत् क्रियादि महाप्रलयादिश्च तद्वृत्तिध्वंस-प्रतियोगी यश्चिरातीतघटादिस्तत्प्रतियोगिकत्वेन तदीयध्वंस इव तदीयसंयोगोऽपि लभ्येत। न हि तादृशसंयोगादिवैशिष्ट्यं स्वपदग्राह्ये क्रियादौ। घटीयसंयोगस्यापि घटेन सह नष्टतया उत्तरकालीनक्रियादिषु कालिकेन तद्वैशिष्ट्यासंभवादित्यसंभवः स्यादित्यर्थः। नन्वेवमपि ध्वंसपदोपादानमयुक्तमेव अभावपदोपादानं तु युक्तम्। तत एव संयोगादेर्वा-रणसंभवात्। न च स्वपदग्राह्यक्रियादिवृत्तिध्वंसप्रतियोगिघटादिप्रतियोगिकप्रागभावस्यापि

## ❀ जागदीशी ❀

प्रतियोगिकत्वाद् यावत्तद्वैशिष्टयस्य च क्वचिदपि क्षणे विरहादसंभवः स्यादतो- ऽभावनिरूपितस्य प्रतियोगिताविशेषस्य लाभाय चरमध्वंसपदम्। तेनाभाव- त्वमपेक्ष्य जन्याभावत्वरूपस्य ध्वंसत्वस्य गुरुत्वेऽपि न क्षतिः। तस्या- ऽप्रविष्टत्वाद्।

## ❀ काशिकानन्दी ❀

यत्तु शक्यतया तस्य चान्त्यक्षणावच्छेदेन क्रियादौ विरहादसंभवतादवस्थ्यमिति वाच्यम्। प्रागभावस्यैव निरस्यमानतया तमुपादाय दोषाऽप्रसक्तेः। न च ध्वंसपदविरहेऽभावपदमेव निवेशनीयमिति किं लाघवं लब्धमिति वाच्यम्। ध्वंसत्वं हि जन्याभावत्वम्। तत्र जन्याभावत्वेनाभावप्रवेशापेक्षयाऽभावत्वेनाभावप्रवेशस्य लघुत्वादित्याशङ्क्याह—अभाव- निरूपितस्येति। एवं च ध्वंसपदस्याभावत्वेनाभावप्रतिपादने एव तात्पर्यमिति भावः। तस्य = जन्याभावत्वेनाभावस्य। अप्रविष्टत्वादिति। न चैवं प्रथमध्वंसत्वनिवेशोऽफलः, स्ववृत्त्यभावप्रतियोगिस्वोत्तरवर्त्तिनोऽभावस्य स्वस्मिन्नवृत्तेरिति वाच्यम्। स्ववृत्त्यभावप्र- तियोग्युत्तरकालोत्पन्नवस्तुध्वंसस्यापि यावदन्तर्गमात्तस्य स्वस्मिन् विरहेणाऽव्याप्तेः।

ननु स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावदभावत्वं निवेशयितुमशक्यम्। स्ववृत्ति- ध्वंसप्रतियोगिनो व्यभिचारादिसम्बन्धेनान्त्यक्षणावच्छेदेनाभावविरहाद्। प्रतियोगिकाले व्यभिचारादिसम्बन्धेन तदभावः प्रसिद्ध एव। तथा च कथं ध्वंसत्वेनाऽप्रवेशकथनसंगतिः। न च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकयावदभावः प्रविष्ट इति वाच्यम्। तथा सति प्रथमध्वंसत्वनिवेशसार्थक्यानुपपत्तेः। न च प्रथमाभावस्य सम्बन्धानियन्त्रितत्वाद् स्ववृत्तेर्व्यभिचारसम्बन्धेन स्वाभावस्य प्रतियोगिभूतं यत्स्वं कालिकसम्बन्धेन तदभावस्य स्वस्मिन् विरहादसंभववारणाय प्रथमध्वंसत्वनिवेशसार्थक्यमिति वाच्यम्। तथा सति अन्त्याभावस्यापि सम्बन्धानियन्त्रितत्वेन दोषप्रसक्तेर्युक्ततया ध्वंसनिवेशस्य युक्तत्वात्। पूर्वग्रन्थविरोधाच्च।

अत्राहुः। ध्वंसत्वाऽप्रवेशे व्यभिचारादिसम्बन्धेनाभावमादाय दोषवारणाय कालि- केतरसम्बन्धानवच्छिन्नत्वं प्रतियोगितायां देयम्। ध्वंसीया प्रतियोगिता न किंचित्सम्बन्धा- वच्छिन्नेत्यदोषः। तथा च कालिकेतरसम्बन्धानवच्छिन्नस्ववृत्त्युत्तरकालीनपदार्थात्यन्ता- भावप्रतियोगिप्रतियोगिकध्वंसस्य यावदभावान्तर्गतस्य विरहादव्याप्तिरिति प्रथमध्वंसप- दसार्थक्यं पूर्वग्रन्थसंगतिश्च द्वितीयध्वंसत्वनिवेशस्यानतिप्रयोजनकत्वादेतद्ग्रन्थसंगतिश्च परन्तु कालिकेतरसम्बन्धानवच्छिन्नत्वघटितस्य लक्षणान्तरतया ध्वंसत्वघटित- लक्षण दूषकत्वमिति चिन्त्यम्।

वस्तुतस्तु व्यभिचारविषयत्वादीनां वृत्त्यनियामकत्वाभिप्रायेणैतद्ग्रन्थसंगतिः। सर्वे ध्वंसा इत्याद्यग्रिमग्रन्थस्तु तेषां वृत्तिनियामकत्वाभिप्रायेणेति ध्येयम्।

परे तु व्यभिचारादिसम्बन्धावच्छिन्नात्यन्ताभावस्यापि नित्यत्वेन त्रैकालिकत्वम- वश्यं वक्तव्यमिति चिरपूर्वघटानां स्ववृत्तिध्वंसप्रतियोगिनां व्यभिचारसम्बन्धावच्छिन्नाभावोऽपि

❀ जागदीशी ❀

अभावत्वस्यैव ध्वंसत्वस्याप्यखण्डत्वमते वैयर्थ्यानवकाशाच्च । सर्वे ध्वंसा इति ज्ञानेऽपि निरुक्तयावद्ध्वंसानां विषयितया वैशिष्ट्यस्य क्षणद्वयावच्छेदेन सत्त्वाच्चत्रातिव्याप्तिरतः समयपदं कालिकसम्बन्धेन वैशिष्ट्यलाभाय ।

यत्तु महाप्रलयावच्छेदेन गगनादेरपि निरुक्तयावद्ध्वंसविशिष्टत्वादतिव्याप्तिः, अतः समयपदं जन्यार्थकमिति, तन्न, यथाकथंचित्सम्बन्धेन स्ववृत्तित्वमादायाऽव्याप्तिभिया कालिकसम्बन्धेन स्ववृत्तित्वस्य वाच्यतया तत्सम्बन्धेन गगनवृत्तित्वाऽप्रसक्त्यैव तत्रातिव्याप्त्यसंभवात् ।

❀ काशिकानन्दी ❀

स्वस्मिन् वर्त्तत एव । न चैवमियं प्रथमघटिका द्वितीयघटिकात्वादित्यादौ प्रथमघटिकामात्रवृत्तितद्घटादिरुपाधिरिति प्रतीतिर्भवति । संप्रति तद्घट उपाधिर्नास्तीत्यपि प्रतीतिः स्यादिति वाच्यम् । इष्टत्वात् । तादृशव्यवहाराभावस्तु प्रागुक्तदिशाऽन्वयबोधादित्याहुः ।

अखण्डत्वेति । जन्यभावत्वस्य तथात्वे घटादेरपि जन्यत्वाद् घटाभावाभावत्वाच्च घटाभावध्वंसात्मकत्वं स्यादतोऽखण्डत्वं ध्वंसत्वस्येति भावः । जन्यत्वे सति भावभिन्नत्वं ध्वंसत्वं, न चैवं घटात्मकस्य घटप्रागभावध्वंसस्य ध्वंसत्वानापत्तिः । प्रागभावानङ्गीकारेण तथाशङ्कितुमशक्यत्वादित्याशयेनोक्तं—मते इति । इदमुपलक्षणं, व्यभिचारादीनां वृत्तिनियामकत्वपक्षेऽपि वैयर्थ्यानवकाशात् ।

निरुक्तयावद्ध्वंसानां = स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसानाम् । क्षणत्वं तादृशज्ञानस्यान्त्यक्षणावच्छेदेनेष्टमेवात आह—क्षणद्वयावच्छेदेनेति । अतिव्याप्तिरिति । इदं च विभिन्नकालीनवस्तुवैशिष्ट्यमपि ज्ञाने वर्त्तत इति मतेन । न च ज्ञानीयसमवायस्यात्मनि सत्त्वेऽपि ज्ञानविरहकाले ज्ञानवैशिष्ट्यं यथा नात्मन्यङ्गीक्रियते किन्तु ज्ञानोपलक्षितत्वमेव तथा विषयिताख्यध्वंसीयसम्बन्धस्य ज्ञाने सत्त्वेऽपि तद्वैशिष्ट्यं तत्र दुर्घटमिति वाच्यम् । ज्ञानविरहकाले ज्ञानप्रतियोगिकसमवायानङ्गीकारात् । विषयविरहेऽपि विषयप्रतियोगिकविषयितास्वीकाराच्चोपपत्तेः । न चात्रैवंविधवैलक्षण्ये प्रमाणाभाव इति वाच्यम् । पूर्वकालीनज्ञानेच्छादिकमादाय अधुना ममेच्छास्तीत्यप्रत्ययात्, ममेच्छा नास्तीतिप्रत्ययाच्च आत्मनि इच्छादिविरहकाले इच्छाप्रतियोगिकसमवायो नाङ्गीक्रियते । मम ज्ञाने सर्वे ध्वंसा वर्त्तन्ते मम बुद्धौ पूर्वकालीनघटो वर्त्तते इत्यादिप्रत्ययाच्च ज्ञाने विषयविरहकालेऽपि विषयितया वस्तुवैशिष्ट्यमुररीक्रियते । अथ किं पुनरत्र बीजमिति चेद् ? तत्तज्ज्ञानस्य क्षणद्वयवर्त्तिनः पूर्वकालीनघटादिवैशिष्ट्यविरहे तदुपलक्षितत्वमपि दुर्घटमेव स्यादिति कदापि तद्वत्त्वप्रतीतिर्न स्यादिति स्वभावविशेष एव विषयितासम्बन्धस्य पूर्वकालीनवस्तुवैशिष्ट्यसम्पादकत्वमिति ।

यत्तु शब्दादिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसवैशिष्ट्यं महाप्रलयावच्छेदेन गगनादेरस्तीति तत्रातिव्याप्तिवारणाय समयपदमिति गदाधरीयव्याख्यानं, तत्तु विषयत्व-

❀ दीधितिः ❀

स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वं, स्ववृत्तियावदभावविशिष्टसम-

❀ जागदीशी ❀

महाप्रलयावच्छेदेन महाकालस्य तु तादृशयावद्ध्वंसविशिष्टतया क्षणत्वं न क्षतिकरमिति ध्येयम्।

लाघवादाह स्ववृत्तियावदिति। ध्वंसत्वं यदि जन्याभावत्वं नाखण्डोपाधिस्तदा जन्यत्वप्रवेशे वैयर्थ्यं प्रागभावानङ्गीकारेणाभावत्वघटितस्यैव सम्यक्त्वादित्याशयेन लक्षणान्तरमाह स्ववृत्तीति। यावदभाववैशिष्ट्यं न कस्यापि क्रियादेरतः-स्ववृत्तीति। स्ववृत्तियावत्पदार्थवैशिष्ट्यमपि न कस्यचित्स्थिरस्येत्यव्याप्तिरत उक्तमभावेति।

कार्योत्पत्तिक्षणे सामग्रीक्षणो नष्ट इत्यादिव्यवहारौपयिकं विनश्यदवस्थ-

❀ काशिकानन्दी ❀

व्यभिचारादीनां वृत्तिनियामकत्वे स्ववृत्त्युत्तरकालीनध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसस्य महाप्रलयान्यक्षणमात्रेऽसंभवादव्याप्तिसंभवे तत्परित्यागान्नातिरमणीयम्।

ननु समयपदस्य जन्यत्वार्थकत्वेऽस्वीकारे महाकालस्य महाप्रलयावच्छेदेन क्षणत्वं न स्यात्, तत्र कालिकसम्बन्धेन वृत्तिप्रसिद्धेः स्ववृत्तियावद्ध्वंसवैशिष्ट्यस्य महाप्रलयावच्छेदेन महाकाले सत्त्वादित्याशङ्कामिष्टापत्त्या परिहरति—महाप्रलयावच्छेदेनेति।

लाघवात् = ध्वंसप्रतियोगिप्रतियोगिकत्वाऽप्रवेशप्रयुक्तलाघवात्। स्ववृत्तियावदिति। स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वमितिलक्षणान्तरमित्यर्थः। समयविशिष्टसमयत्वं, वैशिष्ट्यं च स्वतादात्म्य-स्ववृत्तिध्वंसत्वव्यापकाधिकरणतावत्त्वसम्बन्धाभ्याम्। व्यापकत्वं प्रागुक्तम्। उत्तरलक्षणमवतारयति—ध्वंसत्वमिति। जन्याभावत्वं = जन्यत्वे सति भावभिन्नत्वम्। प्रागभावानङ्गीकारेणेति। तदङ्गीकारे तु क्रियादिवृत्तेरन्त्यक्षणवृत्तिपदार्थप्रागभावस्यान्त्यक्षणेऽभावेनाऽसंभवः स्यादिति भावः। अत इति। अव्याप्तिवारणायेति शेषः। महाप्रलयाभावस्य कालिकेन महाप्रलयवृत्तौ क्षतिविरह एव। ननु स्ववृत्तियावद्विशिष्टत्वमेव लक्षणमस्तु किमभावपदोपादानेनेत्यत आह—स्ववृत्तीति। द्व्यादिक्षणावस्थायिपदार्थेषु स्वीयाद्यक्षणे वर्त्तमानस्य द्वितीयादिक्षणे ध्वंसं च प्राप्नुवतोऽपि यावदन्तर्गततया तस्य तद्ध्वंसस्य चैकक्षणावच्छेदेनाऽवर्त्तनादिति भावः। अभावेतीति। भावभिन्नार्थकमिति शेषः। तेन घटादीनां घटाभावाभावात्मकतया न तद्दोषतादवस्थ्यम्। व्यभिचारादिसम्बन्धावच्छिन्नाभावानां प्रागुक्तैव सरणिः।

कार्योत्पत्तिक्षणे = तत्तद्घटादिरूपकार्योत्पत्तिक्षणे। सामग्रीक्षणः = तत्तत्कार्यसामग्रीक्षणः। इत्यादिव्यवहारौपयिकमिति। अन्त्यक्षणावच्छिन्नक्रियादेरुत्तरक्षणे नाशादिति भावः। ननु स्वस्वपूर्ववर्त्तित्वं स्वस्मात् स्वस्मात् पूर्वं वृत्तिमत्त्वम्। न च वीप्सावै-

❀ दीधितिः ❀

**यत्वम्, स्वस्वपूर्ववर्त्तियावत्पदार्थविशिष्टसमयत्वं वा।**

❀ जागदीशी ❀

क्रियायाः क्षणत्वमुक्त्वा घटपूर्वं तत्सामग्रीक्षणो जायत इत्यादिव्यवहारोपयुक्तमुत्पत्त्यवच्छिन्नक्रियादीनां क्षणत्वमाह स्वस्वेति। स्ववृत्तिः सन् स्वपूर्ववृत्तिर्यावान् पदार्थस्तद्विशिष्टसमयत्वमित्यर्थः। स्ववृत्तियावत्पदार्थवैशिष्ट्यं, स्वपूर्ववृत्तियावत्पदार्थवैशिष्ट्यं वा न कस्यापि स्थिरस्य क्रियादेः संभवति। स्वोत्तरोत्पन्नस्वपूर्वनष्टयोः स्वस्मिन्नसत्त्वादित्युभयमुपात्तम्।

❀ काशिकानन्दी ❀

यत्यम्। अनुगमनसूचनाय वीप्सादरात् तत्र संसर्गाणां नानात्वस्य सूचनात्। तथा च समयविशिष्टसमयत्वं क्षणत्वमिति प्रतीयते, वै० स्वपूर्ववर्त्तियावत्पदार्थवत्त्वसम्बन्धेन। तच्चानुपपन्नम्। स्वपूर्ववर्तियावत्पदार्थवैशिष्ट्यस्य कुत्रापि क्षणेऽसंभवादित्याशङ्क्य स्वं च स्वपूर्वं च स्वस्वपूर्वं तत्र वर्त्तन्ते यावत्पदार्था इति व्युत्पत्त्या वृत्तित्वस्योभयान्वयितया व्याचष्टे—स्ववृत्तिरित्यादि। तत्रापि स्ववर्त्तिनां स्वपूर्ववर्त्तिनामेकत्राऽसंभवात्तद्दोषादेकत्र विशेषयति—सन्निति।

अत्र स्ववृत्तियावत्पदार्थविशिष्टसमयत्वमिति वा स्वपूर्ववृत्तियावत्पदार्थविशिष्टसमयत्वमिति वा लक्षणस्वीकारे आद्येऽव्याप्तिः, द्वितीयेऽसंभवः। क्रियादिवृत्तियावत्पदार्थवैशिष्ट्यस्य प्रथमक्षणावच्छेदेनायोगात्। प्रलयक्षणे तु लक्षणसमन्वयः। अन्त्यध्वंसस्य स्वपदेनोपादाने स्ववृत्तियावत्पदार्थस्य तत्र संभवाद्। द्वितीयं तु प्राग् व्याख्यातमेवेति स्वस्वपूर्वयोरुभयोरुपादानं तदुपादाने स्वस्मिन् स्वपूर्वस्मिंश्च वर्त्तमानपदार्थविशेषा एव धर्त्तव्याः। तदन्तःपाती च स्वपदग्राह्यक्रियाद्यव्यवहितपूर्वक्षणोत्पन्नज्ञानादिकं तादृशक्रियोत्पत्तिद्वितीयक्षणोत्पत्तिकनाशप्रतियोगिवस्तुमात्रमेवापि धर्त्तव्यं स्यात्। स्वस्मिन् स्वपूर्वक्षणे च तत्सत्त्वात्। तादृशयावत्पदार्थविशिष्टत्वं क्रियाद्वितीयक्षणादौ न संभवति किन्तु क्रियोत्पत्तिक्षणे एवेति आद्यक्षणावच्छिन्नक्रियादेः क्षणत्वमुपपन्नम्। स्वपूर्वक्षणस्वोत्पत्तिक्षणतत्क्षणद्वयस्यैकक्षणत्वापत्तिरिति तु नाऽऽशङ्कनीयम्। स्वपूर्वक्षणे स्वतादात्म्यविरहाद्। समयविशिष्टसमयत्वमित्यनुगमात्। वैशिष्ट्यं च स्वतादात्म्य—स्वविशिष्टयावत्पदार्थवत्त्वोभयसम्बन्धेन। अत्र वैशिष्ट्यं स्ववृत्तित्वस्वपूर्ववृत्तित्वोभयसम्बन्धेनेति तदाह—स्ववृत्तीत्यादि। आद्यलक्षणस्य प्रलये संभावात्—क्रियादेरिति। आद्ये—स्वोत्तरोत्पन्नेति। स्वोत्तरोत्पन्नस्य स्वस्मिन्नसत्त्वादिति। योजना अत्र स्वोत्तरोत्पन्नत्वं न स्वध्वंसाधिकरणक्षणोत्पन्नत्वम्। तस्य स्ववृत्तिकत्वविरहात्। किन्तु स्वाधिकरणक्षणध्वंसाधिकरणक्षणोत्पन्नत्वम्। तच्च क्रियाद्युत्पत्तिद्वितीयादिक्षणोत्पन्नस्यैव। तस्य स्ववृत्तित्वेन धर्त्तुं शक्यत्वात्। एवं च स्वस्मिन्नसत्त्वादित्यस्य प्रथमकल्पनुसारेण स्वस्मिन् प्रथमक्षणावच्छेदेनाऽसत्त्वादित्यर्थो बोध्यः। द्वितीयकल्पानुसारेण तु यथाश्रुतम्। एवं "न कस्यापि स्थिरस्य क्रियादे" रिति

## ❀ जागदीशी ❀

पदार्थेति तु स्वरूपकथनं न तु प्रविष्टं वैयर्थ्यात्। न च स्वस्वोत्तरवर्तियावत्पदार्थविशिष्टत्वमित्येव सम्यक्, वक्ष्यमाणस्वपूर्वत्वापेक्षया स्वध्वंसकालीनत्वरूपस्वोत्तरत्वप्रवेशे लाघवात्, अन्त्यक्षणावच्छिन्नक्रियादेरेव तथात्वादिति वाच्यम्। स्वोत्तरवर्तित्वस्याऽप्रसिद्धया प्रलयक्षणाऽव्याप्तिप्रसंगादिति

## ❀ काशिकानन्दी ❀

पूर्वपङ्क्तिरपि व्याख्येया।

**स्वस्वोत्तरवर्तीति**। अनुगमस्तु समयविशिष्टसमयत्वम्। वै० स्वतादात्म्य—स्वविशिष्टयावत्पदार्थवत्त्वोभयसम्बन्धेन। अत्र वैशिष्ट्यं स्ववृत्तित्वस्वोत्तरवृत्तित्वोभयसम्बन्धेन। स्वपदग्राह्यक्रियाद्यन्त्यक्षणावच्छेदेन समुत्पन्नपदार्थविशेषोऽपि यावदन्तःपाती। न हि तद्विशिष्टत्वे सति स्वत्वमन्त्यक्षणावच्छिन्नक्रियां विहायान्यत्रेति अन्त्यक्षणावच्छिन्नक्रियात्मकक्षणे लक्षणसमन्वयो ज्ञेयः। **वक्ष्यमाणेति**। अनुपदं दीधितिकारैरित्यादिः। **स्वध्वंसकालीनत्वेति**। स्वध्वंसकालीनसमयत्वेत्यर्थः। तेन गगनादेर्न क्रियोत्तरत्वम्।

ननु क्रियादिध्वंसकालवृत्तित्वं महाकालस्य। अस्ति च समयत्वमपि तस्य। तथा च तद्वृत्तियावत्पदार्थस्य क्रियादौ विरहेणासंभवः। न च समयपदं जन्यार्थकमेव योज्यमिति न दोषः। महाकालस्याजन्यत्वादिति वाच्यम्। क्रियाध्वंसकालवर्त्तिपूर्वोत्पन्नघटाद्यात्मकव्यक्तेरपि निरुक्तस्वोत्तरत्वात्तद्वृत्तियावत्पदार्थवैशिष्ट्यस्यैवान्त्यक्षणावच्छेदेन क्रियायां दुर्घटत्वात्। तथा हि यो घटः क्रियोत्पत्तिपूर्वमेव समुत्पन्नः क्रियाध्वंकालेऽपि च वर्त्तते सोऽपि क्रियाध्वंसकालीनत्वात्क्रियोत्तरत्ववान् तद्वृत्तित्वे सति क्रियावृत्तिपदार्थः क्रियाप्रथमद्वितीयादिक्षणे वर्त्तमानः क्रियाकाले एव ध्वंसमानो यः पदार्थस्तादृशज्ञानादिरूपपदार्थोऽपि यावदन्तर्गतो न हि सोऽन्त्यक्षणावच्छेदेनेति। न च स्वध्वंसकालीनत्वं स्वध्वंसाधिकरणक्षणत्वमिति न दोषः। तादृशघटादेः क्षणत्वविरहादिति वाच्यम् क्षणलक्षणे क्षणप्रवेशापत्तेरिति चेन्न। स्वोत्तरत्वं स्वध्वंसकालीनत्वे सति स्वीकालीनान्यत्वमिति न कोऽपि दोषः। वस्तुतस्तु स्वध्वंसकालीनत्वमिति न स्वोत्तरत्वपदार्थः। अपि तु स्वोत्तरवर्त्तित्वपदार्थो जगदीशाभिमत इति ध्येयम्।

**तथात्वात्**=क्षणत्वात्। अत्रेयमाशङ्का। ननु घटपूर्वं सामग्रीक्षणे जायत इति व्यवहारस्याऽनिर्वाहादेवंविधशङ्कैव निरास्पदेति। यच्चूक्तं स्वपूर्वत्वापेक्षया स्वोत्तरत्वप्रवेशस्य लघुत्वेनान्त्यक्षणावच्छिन्नक्रियादेः क्षणत्वमायातं यदि तदा तादृशव्यवहारोऽपि सिद्ध एवेति। तत्तुच्छम्। एवं सति पूर्वलक्षणस्यैव सम्यक्त्वे लक्षणान्तरानुधावनवैफल्यात्। स्ववृत्तियावदभावविशिष्टसमयत्वस्यैव क्षणलक्षणत्वसंभवात्। न च घटाद्यात्मकचिरकालस्थायिवस्तुनः स्वपदेनोपादाने तद्वृत्तियावदभावेत्यनेनानन्ता अभावा लभ्येरन्। तदपेक्षया स्वस्वोत्तरोभयवर्तिपदार्थमात्रग्रहणे किंचिल्लाघवमिति वाच्यम्। व्यापकत्वघटितलक्षणस्य वक्ष्यमाणतया एतादृशलाघवस्याऽकिंचित्करत्वात्। प्रत्युत स्ववृत्तित्व-स्वोत्त-

## ❀ जागदीशी ❀

भावः । प्रहरादेरपि स्वस्वपूर्ववर्त्तियत्किंचित्पदार्थविशिष्टत्वात्तद्वारणाय यावदिति । न च यावत्त्वस्यैकस्याभावात् प्रातिस्विकरूपेणोपादानेऽनतिप्रसक्तयत्किंचित्पदार्थप्रवेशावश्यकत्वे शेषवैयर्थ्यमिति वाच्यम् । स्वस्वपूर्वो-

## ❀ काशिकानन्दी ❀

त्तरवर्त्तित्वयोः प्रवेशेन तवैव गौरवम् । अन्यथा स्वस्वोत्तरवर्त्तियावद्ध्वंसानामेव प्रवेशनीयत्वे स्वस्वोत्तरवर्तियावत्पदार्थप्रवेशे एव बीजाभावापत्तेरिति ।

**प्रहरादेः** = निरवच्छिन्नप्रहरादेः । यत्किंचित्पदार्थेति । प्रहरपूर्वोत्पन्नध्वंसाद्यात्मकपदार्थेत्यर्थः । **तद्वारणाय** = प्रहरादिवारणाय = प्रहरादेः क्षणत्ववारणाय । एकस्याभावादिति । घटपटमठादिगतयावत्त्वं गजतुरगगवयगोगतयावत्त्वमित्येवमनेकयावत्त्वस्य सत्त्वादिति भावः । एवं च स्वस्वपूर्ववर्तियावत्पदार्थपदेन घटपटमठादिगतयावत्त्वोपादाने तादृशयावत्पदार्थवत्त्वस्य क्रियादिद्वितीयतृतीयादिक्षणेऽपि सत्त्वादतिप्रसङ्गः स्यादिति भावः । ननु स्वस्वपूर्ववर्त्तिनो ये घटपटमठप्रभृतयः स्वद्वितीयक्षणोत्पत्तिनाशप्रतियोगिभूत-स्वपूर्वोत्पन्नज्ञानादिव्यक्तयश्च तावद्गतयावत्त्वं प्रवेशितमिति न दोषः । घटादीनां क्रियाद्वितीयादिक्षणेषु सत्त्वेऽपि तादृशज्ञानादिव्यक्तीनामेवातथात्वात् । अथवा घटाधिकरणत्वे सति पटमठादिस्वस्वपूर्ववर्त्तित्वेन लब्धव्याखिलव्यक्तीनां तत्तद्व्यक्तित्वेनाधिकरणत्वमेव प्रविष्टं तावतापि लक्षणं सुघटमेवेत्याशङ्क्याह—प्रातिस्विकरूपेणोपादाने इति । स्वस्वपूर्ववर्त्तिपदार्थानामित्यादिः । अनतिप्रसक्तयत्किंचित्पदार्थप्रवेशावश्यकत्वे इति । अतिप्रसक्त्यनापादकयत्किंचित्पदार्थप्रवेशावश्यकत्वे इत्यर्थः । शेषवैयर्थ्यमिति । अयं भावः—केवलं घटपटमठादीन् प्रातिस्विकरूपेणोपादायातिप्रसक्तिवारणं न संभवति । स्वपदग्राह्यक्रियादौ द्वितीयक्षणाद्यवच्छेदेनापि तादृशपदार्थानां सत्त्वेन स्थूलकालस्यापि क्षणत्वापत्तेः । तस्मात् प्रथमक्षणमात्रावच्छेदेन पदार्थवैशिष्ट्यलाभाय स्वस्वपूर्ववर्त्तिपदार्थास्तादृशा अपि प्रातिस्विकरूपेण घर्त्तव्याः ये खलु क्रियोत्पत्तिद्वितीयक्षणे नाशं व्रजन्ति । तथा च यावदन्तर्गततदधिकरणत्वस्य द्वितीयादिक्षणावच्छेदेन क्रियायां विरहान्नातिप्रसक्तिः । एवं स्थिते सति अतिप्रसङ्गभङ्गनिदानभूतां क्रियाद्वितीयक्षणवृत्तिध्वंसप्रतियोगिनीं तादृशीमेकां व्यक्तिमेव तद्व्यक्तित्वेन लक्षणे प्रवेशेनैव सकलानर्थवारणसंभवेऽन्यासां घटपटादिव्यक्तीनां प्रवेशवैयर्थ्यमिति । एवं च सति स्वपूर्ववृत्तित्वप्रवेशवैयर्थ्यमिति । स्वतादात्म्यस्ववृत्तितद्व्यक्त्यधिकरणत्वोभयसम्बन्धेन समयविशिष्टसमयस्यैव लक्षणत्वसंभवात् । न च स्ववृत्तित्वमपि व्यर्थम् । तद्व्यक्त्या समं सम्बन्धालाभाय तन्निवेशावश्यकत्वात् । स्वकालीनत्वप्रवेशे गौरवात् । कालिकेन स्ववृत्तित्वस्यैवास्मल्लक्षणे प्रविष्टत्वात् । न च तद्व्यक्त्यधिकरणसमयत्वमित्येव लक्षणमस्त्विति वाच्यम् । तद्व्यक्त्यधिकरणत्वस्य क्षणद्वयादावपि संभवात् । न च तद्व्यक्त्यधिकरणतत्क्रियात्वमेव लक्षणमस्तु । निखिलक्षणानामनुगमस्य कर्त्तुमशक्यत्वाद् । तत्तद्व्यक्तेराधेयभूतायाः

## ❀ जागदीशी ❀

वर्त्तिपदार्थत्वव्यापकतावच्छेदकाधिकरणतावत्त्वस्यैव लक्षणत्वात्। यावत्पदेन तादृशव्यापकत्वलाभात्।

समयपदं तु स्ववृत्तित्वस्य स्वपूर्ववृत्तित्वस्य तादृशयावत्पदार्थवैशिष्ट्यस्य च कालिकसम्बन्धावच्छिन्नत्वलाभाय। तेन विषयत्वादिसम्बन्धेन स्वनिष्ठस्य

## ❀ काशिकानन्दी ❀

प्रवेशावश्यकत्वादिति वाच्यम्। तत्क्रियाकालोत्पन्नक्रियान्तराणामपि अनन्तानां संभवेन यावत्क्रियाणां तत्तद्व्यक्तित्वेन प्रवेश्य क्षणानां सम्पादने गौरवादेकक्षणोत्पन्नयावत्पदार्थानां तत्तत्क्षणावच्छेदेनानुगतक्षणत्वसम्पादनाय समयविशिष्टसमयत्वस्य लक्षणत्वावश्यकत्वात्।

व्यापकतावच्छेदकाधिकरणतेति। व्यापकतावच्छेदकसम्बन्धश्च स्वनिरूपितत्वात्मको बोध्यः। आधेयताया आधेयभेदेन भिन्नत्वे कस्या अप्याधेयतायाः स्वस्वपूर्ववर्त्तिपदार्थत्वव्यापकत्वाऽसंभवेनाधिकरणतायां व्यापकतावच्छेदकत्वनिवेशः। एवं च निरूपितत्वसम्बन्धेन तत्तत्क्रियानिष्ठाधिकरणत्वेन रूपेणाधेयताया व्यापकत्वात्क्षतेरदोषः। यत्र लक्षणं नेयं तत्तत्क्रियानिष्ठाधिकरणताया अनुगत्वात्। न च तत्तत्क्रियानिरूपिताधेयतात्वेनापि आधेयतायां व्यापकत्वं संभवतीति वाच्यम्। स्वस्वपूर्ववर्त्तिपदार्थत्वव्यापकतावच्छेदकाधेयतात्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः स्थूलकालेऽपि सत्त्वात्, तत्तत्क्रियानिरूपिताधेयतात्वप्रवेशेऽननुगमाद् गौरवाच्च।

न च स्वस्वपूर्ववर्त्तिनां नानात्वेन तत्तदधिकरणताया अपि नानात्वात् कस्या अप्यधिकरणताया व्यापकतावच्छेदकत्वं न संभवतीति वाच्यम्। स्व-स्वपूर्ववर्तियावत्पदार्थगतयावत्त्वावच्छिन्नाधिकरणताया एव स्वस्वपूर्ववर्त्तिपदार्थत्वव्यापकतावच्छेदकत्वसंभवात्। यावत्त्वं बुद्धिविशेषविषयत्वम्। न चैवं तादृशावच्छिन्नाधिकरणत्वप्रवेशेनैवोपपत्तौ शेषवैयर्थ्यमिति वाच्यम्। यावत्त्वावच्छिन्नाधिकरणतात्वेन तदप्रवेशात्। स्वस्वपूर्ववर्त्तिपदार्थत्वव्यापकतावच्छेदकत्वेनैव तत्प्रवेशात्। न चेदमधिकरणत्वमधिकरणस्वरूपमितिरिक्तो वा, आद्ये चतुःक्षणस्थायिन्यास्तस्याःक्षणत्वापत्तिः। अन्त्ये तदेवाधिकरणत्वं क्षणिकमापतितमिति प्रथमलक्षणपरित्यागे बीजाभावापत्तिरिति वाच्यम्। स्व-स्वपूर्ववर्त्तियावत्पदार्थस्वरूपतायाः, तत्क्रियाद्वितीयक्षणवृत्तिध्वंसप्रतियोग्येतदुभयस्वरूपताया वा उपगमे दोषाभावादिति दिक्।

यद्यपि निरूपकत्वसम्बन्धेनाधिकरणताया एव व्यापकत्वमेव वक्तुं शक्यं, तथापि वृत्त्यनियामकसम्बन्धस्य व्यापकतानवच्छेदकत्वाद् उभयाभावादिवारकनिवेशान्तरे गौरवाच्च निरुक्तव्यापकतावच्छेदकतापर्याप्त्यधिकरणतावत्त्वमेव प्रवेशितमित्यवधेयम्।

स्वस्वपूर्ववर्त्तियावत्पदार्थो न क्रियाद्वितीयक्षणे इत्यादिप्रत्ययबलेनोक्तार्थो यावत्पदलभ्य एवेत्याह—यावत्पदेनेति। स्ववृत्तित्वस्य सम्बन्धनियन्त्रणफलमाह— विषयत्वादिसम्बन्धेनेति। स्वपदग्राह्यक्रियादिविषयकचिरपूर्वकालोत्पन्नज्ञानं विषयतया स्वनिष्ठं

❀ दीधितिः ❀

स्वपूर्वत्वं च स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगित्वम् ।

❀ जागदीशी ❀

चिरातीतज्ञानादेः उत्पत्त्यवच्छिन्नक्रियादौ कालिकसम्बन्धेन वैशिष्ट्यविरहेऽपि नाऽसंभवः, न वा क्षणमात्रस्यैव विषयतया स्वपूर्ववर्तिनः कालिकसम्बन्धेन च स्थितिक्षणावच्छेदेन स्ववृत्तेर्ज्ञानस्याद्यक्षणावच्छेदेन कालिकतया वैशिष्ट्यविरहेऽप्यव्याप्तिः । नापि सर्वे पदार्था इति ज्ञानस्याप्युत्पत्त्यवच्छिन्नस्य क्षणत्वाद् विषयितया तदीयवैशिष्ट्यस्य क्षणद्वयावच्छेदेन सत्त्वात्तत्रातिव्याप्तिरिति ।

ननु लक्षणान्तर्गतं स्वपूर्वत्वं स्वोत्पत्तिकालीनध्वंसप्रतियोगित्वं तदन्तर्गता चोत्पत्तिः क्षणघटितेत्यन्योन्याश्रय इत्यत आह स्वपूर्वत्वं चेति । स्वाधिकरणीभूततृतीयादिक्षणवृत्तिध्वंसप्रतियोगिकालवृत्तेः स्ववृत्तिपदार्थ-

❀ काशिकानन्दी ❀

स्वपूर्वकालनिष्ठं च कालिकेनेति यावदन्तर्गतं तादृशज्ञानमपि । न पुनस्तद्वैशिष्ट्यं क्रियादौ विभिन्नकालीनत्वादित्यसंभव इत्यर्थः । विरहेऽपीति । एकेन सम्बन्धेन स्ववृत्तित्व-स्वपूर्ववृत्तित्वयोर्विवक्षणेऽपि स्वपदग्राह्यतत्तत्क्रियादि - तत्पूर्वोत्पन्नघटाद्येतदुभयविषयक-समूहालम्बनज्ञानं चिरातीतमादाय दोषः । तद्वैशिष्ट्यस्यापि एकेन सम्बन्धेन विवक्षणेऽपि व्यभिचारादिसम्बन्धेन स्वपूर्ववर्त्ति यत्स्वोत्तरोत्पन्नवस्तु तद्वैशिष्ट्यस्य व्यभिचारसम्बन्धेन स्वपदग्राह्यस्थूलकाले सत्त्वादतिव्याप्त्यादिकमूह्यम् । स्वपूर्ववर्त्तित्वस्य कालिकेन विवक्षण-फलमाह—न वेति । स्वपदग्राह्यक्रियाद्वितीयक्षणोत्पन्नं यत् स्वपूर्वकालविषयकज्ञानं तस्य कालिकेन स्ववृत्तित्वं विषयतया स्वपूर्वकालवृत्तित्वं चेति यावदन्तर्गतं तदपि । न हि तद्वैशिष्ट्यं प्रथमक्षणावच्छेदेन क्रियायाम् । द्वितीयक्षणे समुत्पन्नस्य प्रथमक्षणावच्छेदेन वैशिष्ट्यासंभवादित्यव्याप्तिरित्यर्थः । महाप्रलये लक्षणसमन्वयः । वैशिष्ट्यस्य सम्बन्धनि-यन्त्रणफलमाह—नापीति । सर्वेषां पदार्थानां तादृशज्ञाने सत्त्वात् स्वस्वपूर्ववर्त्तियावत्पदा-र्थवैशिष्ट्यं सुतरामिति क्षणद्वयात्मकज्ञानस्य क्षणत्वापत्तिरित्यर्थः । तत्र=क्षणद्वयात्यकज्ञाने ।

लक्षणानुगमस्तु समयविशिष्टसमयत्वम् । वै० स्वविशिष्टपदार्थत्वव्यापकतावच्छेदकाधि-करणतावत्त्व-स्वतादात्म्योभयसम्बन्धेन । स्ववै० स्ववृत्तित्वस्वपूर्ववर्त्तित्वोभयसम्बन्धेनेति । वृत्तित्वादिकं कालिकेन । अवच्छेदकत्वं निरूपितत्वेन ।

स्वोत्पत्तिकालीनेति । प्राग्व्याख्यातम् । क्षणघटितेति । तदधिकरणक्षणाऽवृत्ति-ध्वंसप्रतियोगिताकसमयवृत्तित्वस्यैवोत्पत्तितायाः सिद्धान्तितत्वादिति भावः । स्वपूर्वत्वलक्षणे यावत्पदानिवेशे तद्घटितक्षणलक्षणस्याव्याप्तिमाह—स्वाधिकरणेति । स्वं क्रियादिकम् । स्वाधिकरणद्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वीयप्रथमक्षणस्य स्वपूर्वत्वा-पत्तिसत्त्वेऽपि तादृशप्रथमक्षणवृत्तित्वस्ववृत्तित्वोभयवद्यावत्पदार्थवैशिष्ट्यस्यैकस्मिन् क्षणे एव सत्त्वात्क्षणलक्षणस्य तदादाय दुष्टत्वं न स्यादित्यतः—तृतीयादिक्षणेति ।

❀ जागदीशी ❀

स्याद्यक्षणावच्छेदेन स्वस्मिन् वैशिष्ट्याभावात् प्रलयान्यक्षणमात्राऽव्याप्तिरतः स्वपूर्वत्वोक्तौ यावदिति कालविशेषणं दत्तम्।

ननु क्रियामात्रस्यैव कालोपाधित्वाल्लक्षणमिदं प्रलयक्षणाऽव्याप्तम्।

❀ काशिकानन्दी ❀

प्रलयान्यक्षणमात्राऽव्याप्तिरिति। स्वपदेन क्रियादिग्रहणे स्वीयतृतीयक्षणवृत्तिध्वंसप्रतियोगिवृत्तित्वे सति स्ववृत्तिर्यावान् पदार्थो, नहि स प्रथमक्षणावच्छेदेनेत्यव्याप्तिः। द्वितीयक्षणाद्यवच्छेदेनैव क्रियायाः क्षणत्वं सम्पत्स्यत इति तु नाशङ्कनीयम्। क्रियाद्वितीयक्षणवृत्तिध्वंसप्रतियोगिज्ञानाद्यात्मकवस्तुनोऽपि यावदन्तर्गततया तस्यैव द्वितीयक्षणावच्छेदेन विरहात्।

यद्यपि द्विक्षणमात्रावस्थायिज्ञानादिकं स्वपदेनोपादाय स्वाधिकरणद्वितीयक्षणवृत्तिध्वंसप्रतियोगिप्रथमक्षणवृत्तित्वे सति स्ववृत्तिर्यावान् पदार्थस्तद्वैशिष्ट्यं प्रथमक्षणावच्छेदेन ज्ञाने सम्पाद्य प्रथमक्षणावच्छिन्नज्ञाने लक्षणं नेतुं शक्यमिति प्रलयान्यक्षणमात्रेऽव्याप्तिकथनमसङ्गतम्। न च तादृशज्ञानस्य स्वपदेनोपादानेऽपि तदधिकरणीभूतप्रकाराद्यात्मककालवृत्तिध्वंसप्रतियोगिस्वद्वितीयक्षणवृत्तित्व-स्ववृत्तित्वोभयवद्यावत्पदार्थवैशिष्ट्यस्य प्रथमक्षणावच्छेदेन ज्ञानेऽसत्त्वान्न तत्रापि लक्षणसमन्वय इति वाच्यम्। स्वाधिकरणत्वविशिष्टकालवृत्तिध्वंसप्रतियोगिकालवृत्तित्वस्य वक्तव्यत्वात्। स्वपदग्राह्यज्ञानद्वितीयक्षणस्य तु स्वाधिकरणत्वविशिष्टकालवृत्तिध्वंसप्रतियोगित्वविरहेणादोषात्।

तथापि क्रियाया एव कालत्वं न तु ज्ञानादेः प्रलये क्षणत्वव्यवहारस्तु अनन्यगत्या ध्वंसस्यापि कालत्वमङ्गीकृत्योपपादनीय इति मताभिप्रायेणायं ग्रन्थः। वस्तुतस्तु या क्रिया स्वोत्पत्तितृतीयक्षणनाशप्रतियोगिनी तत्र लक्षणसमन्वयस्यैवमपि सत्त्वेनासंगतिरस्त्येव। न च तादृशक्रियायां मानाभावः। यादृशक्रियोत्पत्तिद्वितीयक्षणे उपादानद्रव्यनाशस्तस्यास्तथात्वात्। अतः प्रलयान्यक्षणमात्रेत्यस्य प्रलयान्यध्वंसात्मकक्षणमात्रेत्यर्थो व्याख्येयः, ध्वंसानामप्याद्यक्षणावच्छेदेन क्षणत्वात्। स्वाधिकरणत्ववैशिष्ट्याऽनिवेशेन यथाश्रुते दोषाभिधानद्वा।

यद्यपि स्वाऽवृत्तित्वे सति स्ववृत्तिध्वंसप्रतियोगित्वमेव स्वपूर्वत्वं वक्तुं शक्यम्। स्वाधिकरणकालत्वव्यापकध्वंसप्रतियोगित्वापेक्षया लाघवात्, तथापि लक्षणस्य लक्षणान्तरादूषकत्वान्नासंगतिः। एतेन स्वाधिकरणकालवृत्त्यभावाऽप्रतियोगित्वात्मक-स्वाधिकरणावत्कालवृत्तित्वप्रवेशापेक्षया स्ववृत्त्यभावाऽप्रतियोगित्वमेव निवेशयितुं युक्तम्। अभावे प्रतियोगिवैयधिकरण्यं न देयम्। तादृशश्च स्वपूर्ववर्त्तिनो ध्वंस एव। स्वकालवर्त्तिप्रतियोगिकध्वंसस्य प्रथमक्षणावच्छेदेन स्वस्मिन्नभावस्यापि सत्त्वादिति निरस्तम्। लक्षणस्य लक्षणान्तरादूषकत्वात्। यावद्ध्वंसस्य प्रतियोगित्वं नैकत्र, न वा यावत्प्रतियोगित्वमित्यतः—कालविशेषणमिति। अनुगमस्तु तत्समयविशिष्टप्रतियोगित्वम्। वैशिष्ट्यं च स्वाधिकरणत्वव्यापकीभूतध्वंसीयत्वसम्बन्धेन। अन्ये तु समयविशिष्टत्वम्। वै० स्वानधिकरणस्ववृत्तिध्वंसप्रतियोगित्वोभयसम्बन्धेनेति वदन्ति।

❀ दीधितिः ❀

**जन्यमात्रस्यैव कालोपाधित्वाददोषः।**

❀ जागदीशी ❀

एवं तदुत्पत्तावुत्पत्तिलक्षणेऽपीत्यत आह जन्येति। मात्रपदं कृत्स्नार्थकम्। तथा च तदानीं क्रियाया अभावेऽपि चरमध्वंसरूपकालोपाधिमादायैव लक्षणसमर्थनमिति। नित्यस्य कालिकसम्बन्धेनाऽव्यावर्त्तकतया जन्यावच्छिन्नस्यैव कालोपाधित्वं वाच्यमतो जन्यस्यैव तथात्वमुचितमित्याशयेन पदार्थमात्रं परित्यज्य जन्यमात्रस्येत्युक्तम्।

केचित्तु— ननु महाप्रलयावच्छेदेन स्ववृत्तियावद्ध्वंसविशिष्टेत्यादिलक्षणाक्रान्तस्य महाकालस्यापि लक्ष्यत्वात्तत्रेदं लक्षणमव्याप्तं निरुक्ततत्पूर्वत्वाऽप्रसिद्धेरत आह—जन्मात्रस्येति। तथाचोत्पत्तिघटकक्षणत्वस्य महाका-

❀ काशिकानन्दी ❀

तदुत्पत्तौ = प्रलयत्पत्तौ। स्वाधिकरणक्षणाऽप्रसिद्धेरिति भावः। कृत्स्नार्थकमिति। न तु व्यवच्छेदार्थकं प्रकृतानुपयोगित्वादिति भावः। ननु जन्यमात्रस्यैव कुतः कालोपाधित्वम्। आत्मादेरपि तथात्वसंभवादित्यत आह—नित्यस्येति। अव्यावर्त्तकतयेति। एतद्घटकाले एतद्वह्निरित्यादिव्यवहारे एतद्घटाद्यात्मकालोपाधेः स्वानधिकरणकालव्यावर्त्तकत्वं वर्त्तते। आत्मादिनित्यपदार्थानां पुनरनाद्यनन्तानां स्वानधिकरणकालाऽप्रसिद्ध्या न तथात्वम्। एवं च व्यावर्त्तकत्वेन घटाद्युपाधेः कालस्वरूपत्वम्। अव्यावर्त्तकत्वाच्च नात्मादेस्तथात्वमिति भावः। तथात्वं = कालत्वम्।

महाप्रलयावच्छेदेनेति। महाकालस्यापीत्यन्वयः। लक्ष्यत्वाद् = क्षणलक्षणलक्ष्यत्वात्। ननु कथं महाकालस्य महाप्रलयावच्छेदेन क्षणलक्षणलक्ष्यत्वमित्याशङ्कायां हेतुगर्भविशेषणं— स्ववृत्तीति। स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वं क्षणत्वमित्यनुपदं लक्षणान्तरमुक्तम्। तच्च लक्षणं महाप्रलयावच्छेदेन महाकालेऽपि गच्छति। एवं च तल्लक्षणलक्ष्यत्वस्य महाकाले सत्त्वेन तत्र लक्षणसंगमनं युक्तम्। तल्लक्षणं परित्यज्य लक्षणान्तरानुसरणे तल्लक्षणलक्ष्याव्याप्तेरसोढव्यत्वादिति भावः। तत्र = महाप्रलयावच्छेदेन महाकाले। इदं लक्षणम् = इदं क्षणत्वलक्षणम्। निरुक्ततत्पूर्वत्वाऽप्रसिद्धेः = स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगित्वाऽप्रसिद्धेः। महाकालस्यादेरभावेन यावत्कालवृत्तिः कश्चन ध्वंसोऽलभ्य एव। यो ध्वंसो गृह्येत तस्य प्रतियोग्यपि कश्चित् स्यादिति प्रतियोग्यधिकरणकालोऽपि महाकालाधिकरणमेव तत्रैव तद्ध्वंसाभावेन स्वाधिकरणयावत्कालवृत्तिध्वंसाऽसंभवादिति तत्पूर्वत्वाऽप्रसिद्ध्या तद्घटितक्षणत्वमप्यप्रसिद्धमिति भावः। तथा चेति। भवतु नाम महाप्रलयावच्छेदेन महाकाले क्षणत्वलक्षणाऽव्याप्तिः। न ह्येतावता प्रकृते कोऽपि दोषो भवितुमर्हति। उत्पत्तिलक्षणस्यैव

## ❀ जागदीशी ❀

लेऽसत्त्वेऽपि न क्षतिः। जन्यं कालोपाधिरूपं क्षणमादायैव सर्वत्रोत्पत्तिलक्षणसंभवादिति भाव इत्याहुः।

## ❀ काशिकानन्दी ❀

प्रकृततया महाप्रलयावच्छेदेन महाकालाऽव्याप्तक्षणलक्षणघटितोत्पत्तिलक्षणस्यापि अव्याप्त्यादिदोषाऽप्रसक्तत्वात्। न च महाप्रलयोत्पत्तौ महाप्रलयावच्छेदेन महाकालाऽव्याप्तक्षणलक्षणघटितोत्पत्तिलक्षणमव्याप्तमिति शङ्क्यम्। महाप्रलयावच्छेदेन महाकालस्य क्षणत्वविरहेऽपि महाप्रलयस्यैव उक्तक्षणलक्षणक्रान्ततया महाप्रलयाधिकरणमहाप्रलयात्मकक्षणमादायैव स्वाधिकरणक्षणाऽवृत्तित्वव्याप्येत्यादिलक्षणस्य महाप्रलयोत्पत्तौ घटनसंभवात्। जन्यमात्रस्य कालोपाधितया स्वपदग्राह्यो यश्चरमध्वंसस्तद्वृत्तित्वे सति तत्पूर्ववर्तियावान् पदार्थस्तद्वैशिष्ट्यस्य तादृशध्वंसे सत्त्वादिति भावः।

आहुरिति। अत्रारुचिबीजन्तु अन्त्यक्षणावच्छेदेन क्रियादावपि स्ववृत्तिधावद्ध्वंसविशिष्टेत्यादिलक्षणाक्रान्ते लक्षणमिदमव्याप्तमिति तदकथनेन न्यूनत्वम्। उत्पत्तिक्षणावच्छेदेनैव क्रियायामेतल्लक्षणगमनात्। न च क्रियाया अन्त्यक्षणावच्छेदेन क्षणलक्षणाव्याप्तावपि तत्कालोत्पन्नक्रियान्तरमादायैवोत्पत्तिलक्षणं निर्वहतीति वाच्यम्। प्रतिक्षणं कस्याश्चित् क्रियाया उत्पत्तिः कस्याश्चिद्ध्वंस इत्यत्र मानाभावात्। खण्डप्रलयादौ क्रियाविरहेऽपि ब्रह्मणो योगिप्रभृतेश्च जन्यज्ञानमादायैव ब्रह्मणो वर्षशतमायुरित्यादेर्निर्वाहसंभवात्। जगदीशस्यापि न्यूनत्वमिति न वाच्यम्। प्रलयक्षणाऽव्याप्तेरेव तेनाभिधानात्। प्रलयस्थाः क्षणाः प्रलयक्षणास्तेष्वव्याप्तिरिति विग्रहात्। खण्डप्रलयस्यापि प्रलयपदेनोपादानात्। तदुत्पत्तावित्यस्य प्रलयक्षणस्थानां ज्ञानादीनामुत्पत्तावित्यर्थात्। चरमध्वंसरूपेत्यत्र च चरमे=प्रलये ये ध्वंसाः ध्वंसप्रभृतय इति व्याख्यानादित्यादिकमूहनीयम्।

अत्रेदं बोध्यम्। एवंरीत्या तदव्यवहितपूर्वत्वं नाम तदधिकरणीभूतो यः समयविशिष्टसमयः तदवृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयेन सह यः प्रथमतत्पदग्राह्यस्य सम्बन्धः तदधिकरणीभूतो यः समयविशिष्टसमयः तद्वृत्तिध्वंसप्रतियोगित्वमिति पर्यवसितम्। समयवैशिष्ट्यमुभयत्र स्ववृत्तित्व-स्वाधिकरणकालत्वव्यापकध्वंसप्रतियोगित्वोभयसम्बन्धेन स्वविशिष्टपदार्थत्वव्यापकाधिकरणतावत्वसम्बन्धेन। समयवृत्तित्वं ध्वंसे "प्रथमतत्पदग्राह्यस्य सम्बन्ध" इत्यन्तेनोक्तार्थसम्बन्धेन। अत्र तत्पदेन ध्वंसो ग्राह्य इति विशेषः।

यद्यपि तदव्यवहितपूर्वत्वं स्वाधिकरणकालत्वव्यापकध्वंसप्रतियोग्यवृत्तित्व-स्वाधिकरणकालत्वव्यापकत्वोभयसम्बन्धेन स्वविशिष्टध्वंसप्रतियोगित्वमिति; स्ववृत्त्यभावाप्रतियोगिध्वंसप्रतियोग्यवृत्तित्वस्ववृत्त्यभावाप्रतियोगित्वोभयसम्बन्धेन स्वविशिष्टध्वंसप्रतियोगित्वमिति वा वक्तुं शक्यम्। चिरपूर्ववारणाय स्वकालीनवारणाय च सम्बन्धद्वयमुभयत्र।

तथापि लक्षणेन लक्षणान्तरदूषणाऽसंभवात् उत्पत्तिलक्षणत्वादिघटकतयापि प्रागभावानुपयोगं सूचयितुं गुरुतरलक्षणारम्भ इति ध्येयम्।

❀ दीधितिः ❀

यो यत्कालवृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि

❀ जागदीशी ❀

केषांचिदुत्पत्तिलक्षणमाह यो यदित्यादि। सर्वे ध्वंसा इत्याकारविनश्यदवस्थबुद्ध्या सार्धं घटीयकालिकसम्बन्धस्यापि लक्ष्यतया तत्राऽव्याप्तिस्तादृशबुद्धौ विषयितया वर्त्तमानस्य ध्वंसस्य प्रतियोगिनि भाविकाले घटस्य वृत्तेरतो ध्वंसस्य कालिकसम्बन्धेन वृत्तिमत्त्वलाभाय कालपदम्। एवं तादृशध्वंसप्रतियोगिवृत्तित्वं, तस्य तद्वृत्तित्वमित्यत्र वृत्तिमत्त्वं च कालिकसम्बन्धेन बोध्यम्। तेनातीतविषयकज्ञानस्योत्पत्तौ नाऽव्याप्ति-

❀ काशिकानन्दी ❀

केषांचिदिति। तत्पूर्वत्वादिव्यवहारप्रयोजकीभूततदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वाद्यात्मकविषयघटकोत्पत्तिं प्रागभावाऽवृत्तितां वदतां केषांचिदित्यर्थः। दीधितौ—यो यत्कालेति। यस्योत्पत्तिर्विवक्षिता स प्रथमयत्पदग्राह्यः। द्वितीययत्पदेन कालः। एवं तस्य तद्वृत्तित्वमित्यत्रः द्वितीयक्षणवृत्तिध्वंसप्रतियोगिनि प्रथमक्षणे घटादेर्वृत्तेस्तदवृत्तित्वं नायातमिति यत्कालपदेन द्वितीयादिक्षणो न धर्त्तुं शक्यः। प्रथमक्षणस्तु धर्त्तुं शक्यः। स्ववृत्तिध्वंस प्रतियोगिनि पूर्वक्षणे घटस्याऽवृत्तित्वात्। तादृशयत्पदग्राह्यप्रथमक्षणवृत्तित्वं यद् घटस्य सा घटोत्पत्तिरिति। घटीयपूर्वक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वस्य घटादौ सत्त्वाद् घटीयपूर्वक्षणोऽपि यत्कालपदग्राह्यः, तद्वृत्तित्वं चापरत्र प्रसिद्धं घटोत्पत्तिर्मा भूदिति तस्येत्युक्तम्।

सर्वे ध्वंसा इति। घटीयप्रथमक्षणेन सह घटस्य यः कालिकाख्यः सम्बन्धः स एव घटोत्पत्तिर्नाम। तत्र प्रथमक्षणो विनश्यदवस्थक्रियादिरूपः। न तु क्षणत्वेन प्रवेशः। घटोत्पत्तिद्वितीयक्षणोत्पत्तिकध्वंसप्रतियोगिवस्त्विति यावत्। तादृशवस्तूनि चानेकानि। क्रियारूपाणि ज्ञानादिरूपाणि च। एवं च घटीयद्वितीयक्षणोत्पत्तिकध्वंसप्रतियोगि यद् सर्वे ध्वंसा इत्याकारकं ज्ञानं तेन सह घटीयसम्बन्धोऽपि घटोत्पत्तिरेव। तत्राऽव्याप्तिः। सर्वध्वंसविषयके तादृशानुमित्याद्यात्मकज्ञाने भाविकालध्वंसस्यापि विषयितया वर्त्तमानतया तादृशध्वंसप्रतियोगिनि भाविकाले एव घटस्य वृत्तेः अतः कालिकसम्बन्धेन तत्कालवृत्तित्वं वाच्यम्। तदुक्तौ भाविकालध्वंसो न कालिकेन तादृशज्ञाने। यश्च पूर्वकालध्वंसः कालिकेन तत्प्रतियोगिपूर्वकालाऽवृत्तित्वं घटेऽस्त्येवेति सामञ्जस्यमित्यर्थः। तादृशध्वंसप्रतियोगिनि कालिकेन वृत्तित्वविवक्षणफलमाह—अतीतविषयकेति। अतीतघटादिविषयकं यद् ज्ञानं तस्य ज्ञानोत्पत्तिक्षणवृत्तिर्योऽतीतघटध्वंसस्तत्प्रतियोगिनि अतीतघटे विषयतया वृत्तित्वमेव न तु तदवृत्तित्वमिति घटीयोत्पत्तिक्षणस्य यत्पदेन धर्त्तुमशक्यतया तत्राऽव्याप्तिः। कालिकेन वृत्तित्वविवक्षणे कालिकेनातीतवस्तुनि ज्ञानस्याऽवृत्तेर्यत्पदेन ज्ञानोत्पत्तिक्षणो धर्त्तुं शक्य इत्यदोषः। नाऽव्याप्तिरिति। इदं व्यभिचारादिसम्बन्धस्य वृत्त्यनियामकत्वमित्यभिमानेन। अन्यथा तु असंभवो वक्तुं युक्तः तस्य तद्वृत्तित्व-

❀ दीधितिः ❀

केचिदिति चेत् ? नैवमपचीयते किंचिदस्माकमित्येकदेशिनो वर्णयन्ति।

❀ जागदीशी ❀

विषयतासम्बन्धेऽतिव्याप्तिर्वा।

अत्र तत्तत्समयवृत्तिध्वंसप्रतियोग्यवृत्तित्वे सति तत्तत्समयवृत्तित्वरूपा तत्तत्क्षणोत्पन्नयावद्वस्तूनामेकैवोत्पत्तिर्न स्वाश्रयभेदेन विभिन्ना। यो यद्वित्यनयोर्लक्ष्यप्रदर्शनमात्रपरत्वात्। न च ध्वंसप्रतियोगिवृत्तित्वमपेक्ष्य महाप्रलयवृत्तिध्वंसप्रतियोगिवृत्तित्वस्य गुरुत्वात्तदवच्छिन्नाभावाऽप्रसिद्ध्या महाप्रलयोत्पत्तावव्याप्तिरिति वाच्यम्। प्रागेव दत्तोत्तरत्वादिति ध्येयम्।

❀ काशिकानन्दी ❀

मित्यत्र वृत्तिमत्त्वस्य कालिकेन विवक्षणे फलमाह—विषयतासम्बन्धेऽतिव्याप्तिर्वेति। घटपूर्वकालोत्पन्नं यद् घटविषयकं ज्ञानं तस्मिन् वर्त्तमानध्वंसप्रतियोग्यवृत्तित्वस्य घटे सत्त्वाद् यत्पदग्राह्यं तादृशज्ञानमपि। तादृशज्ञानस्य घटेन सह विषयताख्यो यः सम्बन्धः सोऽपि घटोत्पत्तिः स्यादित्यर्थः।

अत्र यो यत्कालवृत्तीत्यत्र घटपटादीन् प्रातिस्विकरूपेण यत्पदेनोपादाने एकक्षणे उत्पन्नानामेव घटादिभेदेनोत्पत्तिभेदः स्यात्। तथास्वीकारस्तु न युक्तः। किन्तु एकक्षणे उत्पन्नघटपटादिनिखिलवस्तुनिष्ठा उत्पत्तिरेकैव स्वीकर्त्तुं युक्तेत्याशयवानाह—अत्रेति। तथा च तत्तत्समयविशिष्टसम्बन्ध उत्पत्तिः। वैशिष्ट्यं च स्ववृत्तिध्वंसप्रतियोग्यवृत्तिप्रतियोगिकत्वस्वानुयोगिकत्वोभयसम्बन्धेन। आश्रयभेदेन = उत्पत्त्याश्रयीभूतघटपटादिभेदेन। क्षणभेदेनोत्पत्तिभेदस्त्वस्त्येव। न विभिन्नेति सम्बन्धः। अनुयोगिभूतानां जन्यानां भेदेनोत्पत्तिभेदस्तु स्यादेव तत्तद्घटपटज्ञानक्रियाद्यात्मकसमयेषु अनुगतैकधर्माभावात्। स्ववृत्तिध्वंसप्रतियोग्यवृत्तित्वं स्ववृत्तिध्वंसप्रतियोगिवृत्तित्वसम्बन्धेन स्वविशिष्टान्यत्वं ज्ञेयम्। उत्पत्तीनामनुगतलक्षणं तु समयविशिष्टसम्बन्धत्वम्। वै० उक्तसम्बन्धाभ्याम्। गुरुत्वादिति। महाप्रलयवृत्तित्वस्याऽव्यावर्त्तकत्वादिति भावः। तदवच्छिन्नेति। महाप्रलयवृत्तिध्वंसप्रतियोगिवृत्तित्वावच्छिन्नेत्यर्थः। दत्तोत्तरत्वादिति। गुरुधर्मस्यावच्छेदकत्वमङ्गीकृत्येदं लक्षणम्। स्ववृत्तिध्वंसप्रतियोगिवृत्ति यद्यत्तत्तद्भेदकूटाश्रयप्रतियोगिकत्वं वा लक्षणे प्रवेश्यम्। अथवा स्ववृत्तिध्वंसप्रतियोगिवृत्तित्वव्यापकीभूतप्रतियोगिताकभेदवत्प्रतियोगिकत्वमेव निवेश्यम्। सृष्टिकाले च तादृशी प्रतियोगिता तत्तत्कालवृत्तिध्वंसप्रतियोगिवृत्तित्वावच्छिन्ना। महाप्रलये च केवलध्वंसप्रतियोगिवृत्तित्वावच्छिन्ना ज्ञेयेति दिक्। घटोभविष्यतीत्यादिप्रत्ययस्य प्रागभावाविषयकत्वे प्रमाणान्तरविरहात्प्रागभावो न सिद्ध्येत् स्वीक्रियते च प्रागभावः सिद्धान्तिभिरिति प्रागभावसिद्ध्यर्थं घटो भविष्यतीत्यादेः प्रागभावविषयकत्वं वक्तव्यम्। घटप्रागभाव इत्यादिप्रत्ययो वा लोकानामङ्गीकार्यस्तथा च सति सामान्यलक्षणाऽपि सिद्ध्यतीत्यत आह — दीधितौ— नैवमिति। एवं चोदक्रमेण प्रागभावे प्रमाणाभावे सिद्धे तदनङ्गीकारेऽपि न क्षतिः। निर्युक्तिकप्रवा-

❀ दीधितिः ❀

अथ पटस्य स्वानधिकरणेषु तन्तुषूत्पत्तिवारणाय सहस्रा-

❀ जागदीशी ❀

स्वानधिकरणेति । तन्तुमात्रस्यैव तन्तुत्वेन तत्पटस्वरूपयोग्यत्वात् तदनधिकरणतन्तुष्वपि तत्सामग्रीसत्त्वादिति भावः । न च तत्पटत्वस्य कार्यतानवच्छेदकत्वात्तदवच्छिन्नस्यान्यत्रापत्त्यसंभवः, पटत्वावच्छिन्नसामग्रीसत्त्वे पटत्वावच्छिन्नमन्यत्रोत्पद्यत एवेति वाच्यम् । पटमात्रस्यैव तत्तत्पटत्वेन कार्यत्वस्या-

❀ काशिकानन्दी ❀

दस्याश्रद्धेयत्वादिति भावः ।

तदनधिकरणतन्तुष्वपीति । भेदस्य व्याप्यवृत्तित्वे तत्पटाधिकरणान्यतन्तुष्वपीत्यर्थः । तदव्याप्यवृत्तित्वे तत्पटाधिकरणानि यावन्तस्तन्तवस्तत्तद्व्यक्तिभेदकूटवत्तन्तुष्वित्यर्थः । न तु तत्पटाधिकरणत्वाभाववत्तन्तुष्विति तदर्थः । तत्पटाधिकरणत्वकाले तदीयतन्तुषु तत्सामग्रीविरहेण तत्पटाधिकरणत्वविरहकाले एव तदीयसमग्रीसत्त्वेन तदधिकरणत्ववत्तन्तुषु तत्सामग्रीसत्त्वात्मकापिकारलभ्यार्थाऽसंगतिप्रसङ्गात् । कार्यतानवच्छेदकत्वादिति । पटत्वमेव कार्यतावच्छेदकं न तु तत्पटत्वमिति भावः । न च तन्तुत्वावच्छिन्नकारणतानिरूपितकार्यतायां तत्पटत्वस्यानवच्छेदकत्वेऽपि तत्तत्तन्तुत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वं तत्तत्पटत्वेऽस्तीति वाच्यम् । तत्तत्तन्तुत्वस्य कारणतानवच्छेदकतयैव शङ्कानवकाशात् । न च भाविपटस्याधुनैव पटान्तरोत्पादसामग्रीकाले उत्पादापत्तिवारणाय तत्तत्संयोगकार्यतावच्छेदकत्वमुभयमतेऽपि तत्पटत्वे आवश्यकमिति वाच्यम् । एवंविधकार्यकारणभावस्वीकारे प्रागभावस्यैव तवाऽसिद्धिप्रसङ्गादिति भावः । तदवच्छिन्नस्य = तत्पटत्वावच्छिन्नस्य । अन्यत्र=तत्पटानधिकरणतन्तुषु । ननु तत्पटत्वस्य कार्यतानवच्छेदकतया तत्पटत्वावच्छिन्नस्यान्यत्रापत्त्यसंभवेऽपि पटत्वस्य कार्यतावच्छेदकतया पटत्वावच्छिन्नमेवान्यत्रोत्पत्स्यत इत्यत आह—पटत्वावच्छिन्नेति । तत्पटानधिकरणतन्तुषु पटसामग्रीसत्त्वे पटत्वावच्छिन्नमुत्पद्यत एव । पटान्तरस्यापि पटत्वावच्छिन्नत्वादिति भावः ।

यद्यपि तत्पटत्वादेः कार्यतानवच्छेदकत्वे पटत्वेन तत्पटोत्पादस्तत्पटानधिकरणतन्तुषु स्यात् न हि तत्तत्पटातिरिक्तं पटसामान्यं नाम । अन्यथा तत्पटाधिकरणेऽपि पटसामान्यमेवोत्पद्येत न तु तत्पटः । यदि च तत्पटत्वस्य कार्यतानवच्छेदकत्वेऽपि तस्याकस्मिकतया तत्पटाधिकरणतन्तुषूत्पद्यमानपटे तत्पटत्वमायातीत्युच्यते तदा तत्पटानधिकरणतन्तुजायमानपटेऽपि आकस्मिकतत्पटत्वं दुर्वारमेव । एतेन व्यापकधर्मप्रयोजकसामग्र्या एव व्याप्यधर्मप्रयोजकत्वमिति न तत्पटत्वादेराकस्मिकत्वमित्युक्तावपि न निस्तारः तत्पटानधिकरणतन्तुषु व्यापकधर्मप्रयोजकसामग्रीसत्त्वात् ।

तथापि तत्तत्तन्त्वनुयोगिकसमवायेन पटसामान्यं प्रति तत्तत्तन्तुत्वेन यदि कारणत्वमुच्येत तदा नैषापत्तिः संभवति । तत्पटानधिकरणतन्त्वनुयोगिकसमवायेन तत्पटस्य

❀ जागदीशी ❀

वश्यकत्वाद् अन्यथा यत्र तन्तुत्रयारब्धपटस्यैकतन्तुनाशाद्विनाशे सत्युत्तरक्षणे एव तदारम्भकतन्त्वन्तरस्य नाशस्तत्र तदानीमेवावस्थिततन्तौ पटान्तरोत्पादप्रसङ्गात्। पटत्वावच्छिन्नस्य सामग्रीसत्त्वात्। न चेष्टापत्तिः। एकतन्तुकपटस्यानङ्गीकारात्। न च विनश्यत्तन्तुमादाय पटोत्पादः, कार्यकालाऽवृत्तेः समवायित्वायोगात्। तस्मात्प्रसिद्धतत्तत्पटव्यक्तिं प्रति विशिष्य क्लृप्तकारणस्य विरहात्तत्र पटसामान्यस्यानुत्पत्तिः; अतस्तत्पटत्वावच्छिन्नस्यापि स्वानधिकरणेऽवा-

❀ काशिकानन्दी ❀

कुत्राप्यसत्त्वात्। तत्पटाधिकरणतन्त्वनुयोगिकसमवायेन तत्पटस्य प्रसिद्धत्वेऽपि तत्तन्तुतादात्म्यस्य तत्पटानधिकरणतन्तौ विरहेणापत्त्यसंभवात्। तथा च वक्ष्यमाणनिष्कृष्टकार्यकारणभावेऽपि तत्पटत्वस्यैव कार्यतावच्छेदकत्वं यादृशापत्त्या अवश्यमुपगन्तव्यं तामापत्तिमाह—अन्यथेति। यत्र तन्तुत्रयेति। इदमुपलक्षणम्, एकतन्तुकपटापत्तिस्थलमात्रस्य। यत्र तन्तुचतुष्टयाद्यारब्धपटस्यापि युगपद्द्वितन्त्वादिनाशेन नाशे सत्युत्तरक्षणे एव तदारम्भकतन्त्वन्तरनाशस्तथाविधस्थलेऽपि दोषात्। पटान्तरोत्पादप्रसङ्गादिति। खण्डपटं प्रति महापटध्वंसस्य अवस्थिततन्तूनां च कारणतया उक्तस्थले त्रितन्तुकपटध्वंसस्य तन्तुद्वयस्य चैकस्मिन्नेव क्षणेऽवस्थानाद् खण्डपटोत्पादप्रसङ्गः। तन्त्वन्तरनाशस्योत्तरक्षणे एव जायमानत्वात्। कार्यनियतपूर्ववर्त्तिन एव कारणत्वात्। सति च कारणसमुदाये कार्यस्यावश्यंभावादिति भावः। न च यत्र तन्तुद्वयसंयोगोत्तरक्षणमेकतन्तुनाशस्तत्राप्यापत्तिसंभवे त्रितन्तुकपटध्वंसपर्यन्तमयुक्तमिति वाच्यम्। तत्रत्यतन्तुद्वयसंयोगस्यारम्भकत्वाऽस्वीकारेणापि आपत्तिवारणसंभवात्। तन्तुमादायेति। एवं च तन्तुद्वयं सम्पन्नमिति नैकतन्तुकपटप्रसङ्ग इति भावः। समवायित्वायोगादिति। तत्र तन्तुद्वयेन पटोत्पादस्वीकारे तु एकतन्तोः कार्योत्पादकालीननाशप्रतियोगितया कार्यकालेऽवर्त्तमानस्यापि समवायिकारणत्वस्वीकारप्रसङ्ग इति भावः। तत्तत्पटत्वस्य कार्यतावच्छेदकत्वे तु तत्तत्तन्तुद्वयारब्धपटव्यक्तेरप्रसिद्धतया नापत्तिसंभवः। प्रसिद्धपटान्तरव्यक्तेस्तु कारणविरहादेव नापत्तिसंभव इत्याशयः।

क्लृप्तकारणस्येति। ननु किं तत् क्लृप्तकारणम्? न च तन्तुमात्रम्। तस्य तत्सत्त्वेन पटोत्पत्तिवारणायोगात्। न च तत्तत्तन्तुत्वावच्छिन्नं, तस्य तत्पटानधिकरणतन्त्वसंभवेन "अतस्तत्पटत्वावच्छिन्नस्यापि स्वानधिकरणेऽवापत्तिः" इत्युत्तरपङ्क्त्यसंगतेः। नापि तन्तुसंयोगत्वावच्छिन्नम्। उक्तस्थले पूर्वक्षणे तन्तुसंयोगस्य स्थितत्वात्। कार्यकालवृत्तितया तन्तुसंयोगस्य कारणत्वं चेत् तत्पटत्वस्य कार्यतानवच्छेदकत्वेऽपि नैकतन्तुकपटापत्तिः, कार्यकाले तन्तुसंयोगस्य नाशात्। तन्तुनाशे एकक्षणं तत्संयोगस्तिष्ठतीति चेत्! तदा तत्पटत्वस्य कार्यतावच्छेदकत्वेऽपि कथं वारणम्?

सत्यम्, संप्रति यत्किंचित्क्लृप्तकारणमवश्यं स्वीकार्यमित्येतावन्मात्रं विचिन्त्यते। किन्तु तत्तत्पटत्वस्य कार्यतावच्छेदकत्वमवश्यमेवोपगन्तव्यमिति स्थितं भवतीति तत्पटानधिकरणे तत्पटस्यापत्तिर्विशिष्य वक्ष्यमाणकारणविरहे स्यादेवेति निश्चयात्सापत्तिरुक्ता। तथा च तत्तत्पटं प्रति

❀ दीधितिः ❀

दीनां तत्तत्तन्तुत्वेन तत्तत्पटजनकत्वं वाच्यम्। तथा च लाघवा-

❀ जागदीशी ❀

पत्तिसंभव इति भावः। सहस्रादीनामिति। तदारम्भकेत्यादिः। तत्तत्-तन्तुत्वेनेत्यादि। न च समवायेन तत्पटं प्रति तादात्म्येन तत्तत्तन्तुत्वेन हेतुत्वे मिथो व्यभिचारः। कालिकसम्बन्धेनैव विशेषतः कार्यकारणभावस्तु न तत्पटानधिकरणतन्तुषु उत्पत्तिवारकः

❀ काशिकानन्दी ❀

यत्किंचिदेकैकतन्तोर्विशिष्य कारणत्वोपगमेऽपि एकतन्तुकपटवारणं संभवति तत्तत्पटकारण-तन्त्वन्तरव्यक्तेस्तत्र विरहात्। न चैवं तत्पटानधिकरणतन्तुषु कथं तत्पटापत्तिस्तत्पटकारण-तन्तुविशेषाभावादिति वाच्यम्। तादृशतन्तुविशेषघटितेषु तत्पटानाधिकरणतन्त्वन्तरेषु आपत्ति-संभवात्। ननु प्रागभावाङ्गीकर्तृभिरेवैतच्छङ्कायाः क्रियमाणतया तैः तत्पटत्वस्य कार्यता-वच्छेदकत्वं कुत उपगन्तव्यमेकतन्तौ पटप्रागभावविरहादिति चेन्न। तत्रैव तन्त्वन्तरसंयोगेन पटान्तरोत्पत्तेः प्रागभावसत्त्वात्। परमतमालम्ब्य प्रागभाववादिभिर्दोषाभिधानेनैतादृशा-शङ्काया अनवकाशाच्च।

सहस्रादीनां तत्पटानारम्भकाणां तत्तत्तन्तुत्वेन तत्पटहेतुत्वं विफलम् तदनारम्भकेषु तत्पटविरहेण व्यभिचारश्चात आह—तदारम्भकेति। तत्पटारम्भेत्यर्थः। मिथो व्यभि-चार इति। सहस्रादितन्तुजन्याः पटा हि सहस्रादितन्तुषु वर्त्तन्ते। तत्र समवायेन तदधि-करणतत्तत्तन्तुषु अपरापरतन्तूनां तादात्म्यविरहाद् व्यतिरेकव्यभिचार इत्यर्थः। ननु सम-वायेन तत्पटत्वावच्छिन्नं प्रति कालिकेन तत्तत्तन्तुत्वेन कारणत्वं वक्तव्यम्, तथा च नोक्त-दोषः, सहस्रतन्तुकपटस्थले प्रत्येकस्यापि तन्तोः कालिकसम्बन्धेन सहस्रतन्तौ वर्त्तमानत्वा-दित्याशङ्क्याह—कालिकसम्बन्धेनैवेति।

यद्यपि कालिकसम्बन्धेन तन्त्वादीनां कारणत्वमङ्गीकृत्योक्तस्थले व्यभिचारवारणेऽपि तत्तद्व्यणुकस्य स्वानधिकरणपरमाणुषूत्पत्तिवारणायैव प्रागभावः कल्पनीयः स्यात्। नित्येषु कालिकसम्बन्धेन कस्यचिदपि वस्तुनोऽवृत्तितया एकपरमाणोः कालिकसम्बन्धे-नापरपरमाण्वसंभवात्। तादात्म्यसम्बन्धेन च व्यभिचारित्वात्। तथापि तत्र परमाणुद्व-यसंयोगस्यैव तत्तद्व्यणुकं प्रति विशिष्य कारणत्वं वक्तव्यमिति न दोषः। संयोगस्य द्विष्ठत्वात्। न च सहस्रादिपरमाणुजन्यवस्तुविशेषस्थले परमाणुद्वयसंयोगस्य सहस्रपर-माणौ विरहात्तत्रैव व्यभिचारात्प्रागभावकल्पनापत्तिरिति वाच्यम्। सहस्रपरमाणुभिः कस्यचिद् वस्तुन उत्पादानभ्युपगमात्। परमाणुभ्यां द्व्यणुकं ततस्त्र्यणुकमिति क्रमेणैव वस्तूत्पादाङ्गीकारादिति। उत्पत्तिवारकः=तत्पटोत्पत्तिवारकः। न संभवतीति योजना। तत्पटानधिकरणतन्तुष्वपि तत्पटहेतुभूततत्तत्तन्तुव्यक्तेः कालिकेन सत्त्वा-त्कारणसत्त्वे कार्यावश्यंभावादिति भावः। न च जन्यद्रव्यत्वावच्छिन्नकारणीभूतविजातीय-

❀ जागदीशी ❀

संभवतीति वाच्यम्। तत्तत्तन्तुनिरूपितसमवायेन तत्पटं प्रत्येव तादात्म्येन तत्तत्तन्तोर्हेतुत्वात्। तादृशसमवायेन तत्पटस्यान्यत्र तन्तावसत्त्वेन व्यभिचारा।

❀ काशिकानन्दी ❀

संयोगस्य तन्त्वन्तरे विरहात्सामान्यसामग्रीविरहात्कथमापत्तिरिति वाच्यम्। तत्सत्त्वकाले एवापत्तेः। पटान्तरजनकसंयोगकाले सामान्यसामग्र्याः संभवात्।

केचित्तु कार्यतावच्छेदकसम्बन्धोऽपि कालिक एवेत्यभिप्रायेण कालिकेत्यादिग्रन्थः। तेन परमाणुस्थले नोक्तशङ्कावकाशः। न चैवं समवायेन तत्पटानधिकरणतन्तुष्वपि कालिकेन तत्पटसत्त्वात् कालिकेन तत्रापत्तिदानं न युज्यते, इष्टापत्तित्वात्, समवायस्य कार्यतानवच्छेदकत्वाच्च न समवायेन तदापत्तिरिति वाच्यम्। संप्रति समवायसम्बन्धेन कार्यसत्ताया सामान्यसामग्रीमात्रप्रयोज्यतया सामान्यसामग्रीभूतविजातीयसंयोगस्य तत्पटानधिकरणतन्तौ सत्त्वेनापत्तेः संभवादिति वदन्ति। तत्तत्तन्तुनिरूपितेति। तत्तत्तन्त्वनुयोगिकेत्यर्थः।

ननु तादात्म्येन तत्पटं प्रति समवेतत्वसम्बन्धेन तत्तत्तन्तोः कारणतोपगमान्नोक्तव्यभिचारः। न च पटोत्पत्तिप्राक्क्षणे तत्तत्तन्तुसमवेतत्वस्य तन्तुत्वद्रव्यत्वादावेव सत्त्वेन पटे विरहेण तेन सम्बन्धेन कारणत्वं नोपपन्नमिति वाच्यम्। प्रतियोगित्वसम्बन्धेन प्रागभावस्येवास्यापि पटे सत्त्वे बाधकाभावदिति चेद्? न, एवं सति तन्तुत्वद्रव्यत्वादावपि कारणसत्त्वेन तादात्म्येन तत्पटोत्पादापत्तेः। न च प्रतियोगितासम्बन्धेन प्रागभावस्य तत्र विरहाददोष इति वाच्यम्। प्रागभावानङ्गीकारानुरोधेनोक्तविशिष्यकार्यकारणभावोक्तेः। न च द्रव्यवृत्तिसमवायेन तन्तूनां हेतुत्वान्न दोष इति वाच्यम्। एतदपेक्षया तत्तत्तन्तुनिरूपितसमवायस्य कारणतावच्छेदकसम्बन्धत्वौचित्यात्।

ननु तादात्म्येन तत्तत्तन्तुत्वेन हेतुत्वस्वीकारेऽपि परस्पराऽसंयुक्तेषु कथं तत्पटोत्पत्तिवारणम्। न च सामान्यकारणतन्तुसंयोगविरहादेव नापत्तिरिति वाच्यम्। द्वित्रादितन्तुषु संयुक्तेषु तदुत्पादापत्तेरिति चेद्? न, तत्र चरमसंयोगस्य विशिष्य कारणत्वस्वीकारेण दोषाभावात्। अन्यथा प्रागभावस्य हेतुत्वस्वीकारेऽपि तदानीं तत्पटोत्पादापत्तेरवारणादित्यग्रे स्पष्टीभविष्यति।

अथ तद्धर्मावच्छिन्नोत्पादे तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदका यावन्तो धर्मास्तदवच्छिन्नसमुदायस्य प्रयोजकत्वं, तद्धर्मावच्छिन्नानुत्पादे च तदभावस्य प्रयोजकत्वमिति न शक्यते वक्तुम्। तत्पटत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतत्तत्तन्तुत्वावच्छिन्नसमुदायस्य तादात्म्येन कुत्रापि तन्तावसत्त्वात्पटानुत्पादापत्तेः। न च तत्सम्बन्धेन तद्धर्मावच्छिन्नोत्पादे तत्सम्बन्धेन तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकसकलधर्मावच्छिन्नस्तोमस्य प्रयोजकत्वं तदभावे तदभावस्य च, तत्तत्तन्त्वनुयोगिकसमवायाद्यवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतत्तत्तन्तुत्वाद्यवच्छिन्नस्तोमस्यैकत्र संभवादित्यपि युक्तम्। द्वित्रितन्तुषूत्पन्नेषु संयुक्तेषु च सहस्रतन्तुकपटोत्पादापत्तेः। न च चरमसंयोगव्यक्तेर्विशिष्य कारणत्वाददोषोऽनुपदमुक्त

## ❀ काशिकानन्दी ❀

इति वाच्यम् । तस्य चरमतन्तुद्वये एव सत्त्वात्प्रथमद्वितीयादितन्त्वनुयोगिकसमवायावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकानाक्रान्तत्वात् तत्तन्त्वनुयोगिकसमवायावच्छिन्नसहस्रतन्तुकतत्पटत्वावच्छिन्नानुत्पादायोगात् । न च चरमसंयोगस्य कालिकसम्बन्धेनापेक्षास्वीकारात् तद्विरहकाले न सहस्रतन्तुकपटापत्तिरिति वाच्यम् । उक्तप्रयोज्यप्रयोजकभावे जाग्रति चरमसंयोगापेक्षाया एवाऽसिद्धेः । अन्यथा उक्तप्रयोज्यप्रयोजकभावे व्यभिचारापत्तेरिति चेद् ?

मैवम्, तद्धर्मावच्छिन्नोत्पादो हि तद्धर्मावच्छिन्नस्य स्वीयप्रथमक्षणेन सह सम्बन्धः, तत्क्षणे तादृशसम्बन्धात्मकतद्धर्मावच्छिन्नोत्पादं प्रति अव्यवहितप्राक्क्षणे तद्धर्माश्रययत्किंचिद्व्यक्तिनिष्ठकार्यतानां स्वस्वावच्छेदकसम्बन्धेन स्वावच्छिन्नाधिकरणे स्वनिरूपितकारणावच्छेदकसम्बन्धेन वृत्तित्वविशिष्टानि यावन्ति स्वनिरूपितकारणतावच्छेदकावच्छिन्नानि तत्समुदायस्य कालिकसम्बन्धेनाधिकरणत्वं प्रयोजकमुपगम्यते । तादृशकार्यानुत्पादे तादृशाधिकरणत्वाभावः । तथा च तत्पटत्वावच्छिन्नोत्पादाधिकरणक्षणपूर्वक्षणे तत्पटत्वाश्रयनिष्ठानि यावन्ति तत्तत्सम्बन्धावच्छिन्नानि कार्यत्वानि तेषां स्वावच्छेदकतत्तत्तन्त्वनुयोगिकसमवायावच्छिन्नतत्पटत्वावच्छिन्नाधिकरणेषु तादात्म्येन वृत्तित्वविशिष्टा ये तादृशकार्यतानिरूपितकारणतावन्तस्तत्तन्तुचरमसंयोगादयः तत्समुदायस्य कालिकेनाधिकरणत्वं वर्तत इति प्रयोजकत्वोपपत्तिः । न च पूर्वक्षणोत्तरक्षणयोर्वर्तमानकार्योत्पादतादृशाधिकरणत्वयोरसम्बद्धतया प्रयोज्यप्रयोजकभावानुपपत्तिः, द्विक्षणात्मककालेन सम्बन्धस्य सम्पादनीयत्वात् । कार्याधिकरणेऽसम्बद्धकारणसमुदायव्युदासाय कारणतावच्छेदकसम्बन्धेन कार्याधिकरणवृत्तित्वविशिष्टत्वं प्रवेशितम् । अत एव कालिकेनाधिकरणत्वपर्यन्तमपि । इत्थमेव च विभिन्नकार्यतावच्छेदकसम्बन्धककारणानां कालिकेन परस्परापेक्षत्वं कार्यजनने उपपद्यते । न चैवं यत्किंचिद्व्यक्तिनिरूपितसामग्रीविरहकाले सामान्यधर्मावच्छिन्नं व्यक्त्यन्तरमपि नोत्पद्येतेति वाच्यम् । तादृशाधिकरणतानामन्यतमत्वेन उत्पादप्रयोजकत्वं तादृशाधिकरणत्वाभावकूटस्य च कार्यानुत्पादप्रयोजकत्वमित्यदोषात् ।

केचित्तु तद्धर्मावच्छिन्नोत्पत्तौ तद्धर्मावच्छिन्ननिरूपितसामग्री तदभावे तदभावकूटश्च प्रयोजकः । तद्धर्मावच्छिन्नसामग्री च तद्धर्माश्रयनिष्ठयत्किंचिदेकसम्बन्धावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकनिखिलधर्मावच्छिन्नसमुदायः । तथा च समवायस्य नानात्वे तत्तत्तन्त्वनुयोगिकतत्तत्समवायावच्छिन्ननिरूपितकारणतावच्छेदकतत्तत्तन्तुत्वारम्भकसंयोगत्वाद्यवच्छिन्नसमुदायस्य प्रत्येकतन्तौ सत्त्वात्तदभावकूटस्य चान्यत्रैव सत्त्वान्नानुपपत्तिः । संसर्गतावच्छेदकस्य विशिष्य प्रवेशात्ऽशुद्धसमवायावच्छिन्नायास्तत्तत्तन्त्वनुयोगिकसमवायावच्छिन्नायाश्च कार्यताया लाभान्नारम्भकसंयोगादिविरहकाले पटापत्तिः । न चैवमपि द्वित्रितन्तुषु संयुक्तेषु तत्तन्त्वनुयोगिकसहस्रतन्तुकपटापत्तिरिति वाच्यम् । चरमपटध्वंसस्य सहस्रतन्तुकपटकारणीभूतस्य विरहादेव तदानीमापत्तिविरहात् । तद्धर्मावच्छिन्नत्वमप्रवेश्य तद्धर्माश्रयनिष्ठत्वस्य कार्यतायां प्रवेशोऽपि जन्यद्रव्यत्वावच्छिन्ननिरूपितकारणतावच्छेदकविजातीयसंयोगत्वा-

## ❀ जागदीशी ❀

**संभवात्। न चैवं तादृशसमवायेन स्वानधिकरणतन्तुषु तत्पटस्यानुत्पादेऽपि समवायमात्रेण तत्पटोत्पादो दुर्वार इति वाच्यम्। समवायमात्रस्य तादृश-**

## ❀ काशिकानन्दी ❀

वच्छिन्नस्यारम्भक संयोगाख्यस्य उक्तध्वंसस्य च सहकारित्वलाभाय। समवायस्य नानात्व-
विरहे तु संसर्गतावच्छेदकस्य विशिष्यानिवेशे तत्सम्बन्धावच्छिन्नकार्यतेत्यनेनापरापरतन्त्वनु-
योगिकसमवायावच्छिन्नकार्यतापि ध्रियेतेति तन्निरूपितकारणतावच्छेदकापरापरतन्तुत्वाद्यव-
च्छिन्नसमुदायस्य कुत्राप्यवर्त्तमानतया तत्पटत्वावच्छिन्नोत्पत्तिर्दुर्घटा स्यादेवेति तन्नानात्व-
मतावलम्बनम्। तदैक्ये तु तद्धर्मवद्यत्किंचिदेकव्यक्तिनिरूपिततत्सम्बन्धावच्छिन्नयत्किं-
चिदेकाधिकरणताघटिता यावत्यः कारणतास्तत्र तदवच्छेदकावच्छिन्नसमुदायस्यैव तेन सम्ब-
न्धेन तद्धर्मावच्छिन्नोत्पादप्रयोजकत्वम्। सामान्याधिकरणता तु नास्त्येवेति वदन्ति।
तन्न, न चैवमित्याद्युत्तरग्रन्थविरोधापत्तेः, एकसम्बन्धेन कार्योत्पादकसामग्र्याः सम्ब-
न्धान्तरेण कार्योत्पादकसामग्रीसापेक्षत्वानुपपत्तेश्च।

ननु तत्तत्तन्त्वनुयोगिकसमवायेन तत्पटत्वावच्छिन्नं प्रति तत्तत्तन्तुत्वेन हेतुत्वमिव
यद्विशेषयोरितिन्यायेन शुद्धसमवायेन तत्पटत्वावच्छिन्नं प्रति तन्तुत्वेनापि हेतुत्वम्। तथा
च तत्पटानधिकरणतन्तुषु तत्पटोत्पादो दुर्वारः। न च सामान्यसामग्र्या कार्ये जननीये
यावद्विशेषसामग्र्यन्यतमस्यापेक्षणात् तत्पटानधिकरणतन्तुषु विशेषसामग्रीभूततत्तत्तन्तुत्वाद्य-
वच्छिन्नतादात्म्यविरहात् कथमापत्तिरिति वाच्यम्। यतः सामान्यसामग्र्या कार्यजनने
विशेषसामग्र्याः कालिकत्वमेव अपेक्ष्यते न तु सामान्यसामग्रीदेशवृत्तित्वमपि। प्रागभिहि-
तप्रयोज्यप्रयोजकभावानुरोधेनैककाले तदपेक्षाया एव सिद्धेः। न च प्रागुक्तप्रयोज्यप्रयोजक-
भावेन कार्यस्य कालनियन्त्रणमेव स्यान्न तु देशनियन्त्रणमिति स्वीक्रियमाणे घटादीनां
तन्त्वादिष्वपि उत्पत्तिः स्यादिति वाच्यम्। स्वघटितसामग्रीघटकस्वेतरनिखिलकारणकालो-
नायाः कारणतावच्छेदकसम्बन्धेन कारणतावच्छेदकावच्छिन्नसत्तायाः कार्यतावच्छेदक-
सम्बन्धेन कार्यतावच्छेदकावच्छिन्नसत्तानियामकतया घटादीनां तन्त्वादिषु उत्पत्तेरप्रसक्तेः।
एवं च यदा तत्पटत्वावच्छिन्नोत्पादकनिखिलसामग्रीसमवधानं तदा तत्पटानधिकरणतन्तु-
ष्वपि समवायेन तत्पटत्वावच्छिन्नसत्ताप्रयोजकस्य समवायसम्बन्धावच्छिन्नतत्पटत्वावच्छिन्न-
कार्यतानिरूपितकारणतावच्छेदकतन्तुत्वावच्छिन्नस्य तादृशकारणतावच्छेदकतादात्म्यसम्ब-
न्धेन सत्त्वात्तत्पटानधिकरणतन्तुषु तत्पटोत्पादो दुर्वार एवेत्याशङ्कां निषेधति—न चेति।
**तादृशसमवायेन** = तत्तत्तन्त्वनुयोगिकसमवायेन। **स्वानधिकरणतन्तुषु** = तत्पटान-
धिकरणतन्तुषु। **अनुत्पादेपीति**। तत्सम्बन्धेन तद्धर्मावच्छिन्नसत्तायां तत्सम्बन्धावच्छिन्न-
तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकसम्बन्धधर्मावच्छिन्नकारणसत्तायाः नियामक-
त्वात् तत्तत्तन्त्वनुयोगिकसमवायेन तत्पटसत्तानियामकतत्तत्तन्तुत्वावच्छिन्नस्य तादात्म्येन तत्पटा-
नधिकरणे विरहादिति भावः। **समवायमात्रेण** = शुद्धसमवायेन। **दुर्वार इति**। समवा-
यावच्छिन्नतत्पटत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतन्तुत्वावच्छिन्नस्य समवायेन तत्र
सत्त्वादिति भावः।

❀ जागदीशी ❀

कार्यतानवच्छेदकतया तत्सम्बन्धेनान्यत्र पटोत्पत्त्यसंभवादिति भावः।

यत्तु समवायेन तत्पटत्वावच्छिन्नं प्रत्येव तत्तत्तन्तुत्वेन हेतुत्वम्, तावत्तन्तुनिष्ठसहस्रत्वादिसंख्याया एव कारणताघटकसम्बन्धत्वेन व्यभिचाराऽसंभवादिति; तत्तुच्छम्, यस्य तन्तोर्द्वितीयक्षणे एव तन्त्वन्तरसंयोगोत्पत्त्या

❀काशिकानन्दी ❀

तन्तुत्वेन तत्पटत्वेन सामान्यतो न कार्यकारणभावो मानाभावात्। न च यद्विशेषयोरितिन्यायेन तत्सिद्धिः, पटत्वेन तन्तुत्वेनैव ततः कार्यकारणभावसिद्धेः पटत्वावच्छिन्नस्योपादाने च पटत्वावच्छिन्नोत्पत्तिस्तत्रेष्टैवेति समाधत्ते—समवायमात्रेति (पृ० २६८) शुद्धसमवायेत्यर्थः। तादृशकार्यतानवच्छेदकतया = तत्पटत्वावच्छिन्नकार्यतानवच्छेदकतया। एवं तत्पटत्वस्य शुद्धसमवायावच्छिन्नकार्यतानवच्छेदकतयेत्यपि द्रष्टव्यम्।

वस्तुतस्तु कारणतावच्छेदकसम्बन्धेन कारणतावच्छेदकावच्छिन्नसत्तामात्रस्य स्वेतराखिलकारणकालीनस्य कार्यतावच्छेदकसम्बन्धेन कार्यवत्ताप्रयोजकत्वोपगमे यत्किंचिद्विशेषसामग्रीकाले सामान्यसामग्र्या निखिलकारणेषु सामान्यधर्मावच्छिन्नकार्योत्पादो दुर्वारः स्यात्। अतस्तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नकार्यीयतत्तदधिकरणतायां तादृगाधिकरणताघटिता यावत्यः कारणतास्तदवच्छेदकावच्छिन्नसमुदायवत्त्वं सम्बन्धान्तराद्यवच्छिन्नतत्कार्यीयाधिकरणतान्तरघटितकारणतावच्छेदकावच्छिन्नैकाधिकरणप्रत्यासन्नसमुदायानां समकालीनमेव प्रयोजकमित्येवावगन्तव्यम्। सामान्यसम्बन्धधर्मावच्छिन्नाधिकरणता च नातिरिक्तेति सिद्धान्तलक्षणे प्रपञ्चितम्। तथा च पटत्वेन तन्तुत्वेन सामान्यतः कार्यकारणभावेऽपि समवायावच्छिन्नपटत्वावच्छिन्नाधिकरणतायास्तत्तत्तन्त्वनुयोगिकसमवायावच्छिन्नतत्पटत्वावच्छिन्नाधिकरणतायाश्चाऽभिन्नतया तद्घटितकारणतावच्छेदकावच्छिन्नसमुदायस्य तत्पटानधिकरणतन्तुषु विरहान्नान्यत्र कार्योत्पादापत्तिः। अधिकरणतान्तरघटितकारणतावच्छेदकावच्छिन्नसमुदायकालीनत्वप्रवेशाच्च त्रिचतुरेषु तन्तुषु संयुक्तेषु न सहस्रतन्तुकपटस्योत्पादापत्तिः। एवं प्रयोजनान्तरमपि तस्योह्यम्। इत्थं च सामान्यतस्तत्कार्योत्पादं प्रत्यपि कार्यतावच्छेदकसम्बन्धेन तत्कार्यीया या या अधिकरणतास्तत्प्रत्येकघटितकारणतावच्छेदकावच्छिन्नानामेकाधिकरणप्रत्यासन्नानां यावन्तः समुदायाः कालिकेन तद्वत्त्वमेव प्रयोजकमित्यलमधिकेन।

समवायेन तत्पटत्वावच्छिन्नं प्रत्येवेति। एवकारेण तत्तत्तन्त्वनुयोगिकसमवायेन तत्पटत्वावच्छिन्नं प्रति कारणत्ववारणम्। तावत्तन्तुनिष्ठेति। यावत्सु पटस्तावत्तन्तुनिष्ठेत्यर्थः। सहस्रत्वादिसंख्याया इति। तथा च समवायेन तत्पटत्वावच्छिन्नं प्रति स्वनिष्ठसहस्रत्वविशेषणत्वसम्बन्धेन तत्तत्तन्तूनां कारणत्वम्। स्ववृत्तिसहस्रत्वं च सहस्रतन्तौ वर्तत इति प्रत्येकतन्तूनामेव तादृशसम्बन्धेन सहस्रतन्तौ सत्त्वान्न व्यभिचार इति भावः। स्ववृत्तितन्तुत्ववत्त्वस्य सम्बन्धत्वे तादृशतन्तुत्वं तत्पटानधिकरणतन्तुष्वपीति दोषतादवस्थ्यमित्यतः सहस्रत्वपर्यन्तम्। तत्रापि स्वसहिततत्पटानधिकरणनवनवत्यधिकनवशततन्तौ स्ववृत्तिसहस्रत्वादिसंख्यायाः सत्त्वात्तद्दोषतादवस्थ्यमित्यतः तावत्तन्तुनिष्ठेति सहस्रत्वविशेषणम्।

❀ जागदीशी ❀

तृतीयक्षणे सहस्रतन्तुकपटोत्पत्तिस्तत्रैव तन्तौ व्यभिचारतादवस्थ्यात्। सहस्रत्वादिसंख्यायाः समानाधिकरणायावदेकत्वसापेक्षतया द्रव्यस्य'त्पत्तिद्वितीयक्षणे तदसंभवात्।

केचित्तु यावन्तः कार्यतावच्छेदकधर्मावच्छिन्नास्तत्प्रत्येकस्य यत्किंचिदाश्रयनिष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव कारणताघटकम्। तथा च

❀ काशिकानन्दी ❀

सहस्त्वं च नाना इति न दोषः। तदसंभवात्= सहस्रत्वसंख्यात्मकसम्बन्धाऽसंभवात्।

ननु कार्यकालवृत्तितयैव सामानाधिकरण्यावदेकत्वापेक्षेति नानुपपत्तिः। न चैवमपि अपेक्षाबुद्धिविरहादेव न सहस्त्रत्वोत्पत्तिसंभवः सर्वत्रेति वाच्यम्। योगिनामपेक्षाबुद्धिमादायैव तादृशदोषस्याप्यसंभवात्। न च विषयानपेक्षयोग्यपेक्षाबुद्धेः संख्याकारणत्वं नास्तीति वाच्यम्। सर्गाद्यकाले द्व्यणुकोत्पत्तिसम्पादनाय योग्यपेक्षाबुद्धेरपि संख्याकारणत्वावश्यकत्वात्। तत्र निखिलपरमाणुभिर्लौकिकसन्निकर्षाऽसंभवेन योगजसन्निकर्षस्यैव वक्तव्यत्वाच्च। एवं तुरीतन्तुसंयोगादिकं विना पटोत्पत्त्यसंभवेन यत्क्षणे तन्तुरुत्पन्नस्तदुत्तरं तुरीप्रभृतीनां कारणीभूतानां कारणतावच्छेदकसंयोगसम्बन्धवत्त्वादिभिस्तदुत्तरं पटोत्पत्तिरिति वक्तव्यं, तथा च तृतीयक्षणे पटोत्पत्तिरसिद्धैवेति चेद्?

न, सर्गाद्यकालेऽनन्यगत्या योग्यपेक्षाबुद्धेः संख्याहेतुभूतायाः कल्पनेऽपि अन्यत्र सर्वत्र योगिनां तादृशापेक्षाबुद्धिकल्पने मानाभावात्। न ह्यत्रापि अन्यथानुपपत्त्या योग्यपेक्षाबुद्धिकल्पनमिति शक्यते वक्तुम्। स्ववृत्तिसहस्रत्वादिमत्त्वसम्बन्धेन कारणताया अनिर्णीतत्वात्। न चापेक्षाबुद्धिविरहे संख्याऽज्ञानेनाऽपार्वज्ञापत्तिरिति शङ्क्यम्। अपेक्षाबुद्धेः संख्यां प्रत्येव हेतुत्वात्। संख्याप्रत्यक्षस्य लौकिकसन्निकर्षेण योगजसन्निकर्षादिना वा एव समुत्पादात्। नापि तुरीवेमादीनां तन्तुभिः सह संयोगं विना पटोत्पत्त्यसंभवेन तृतीयक्षणे पटोत्पत्तिरेवासिद्धेति दोषः। यत्र महापटोत्पत्त्युत्तरमेकतन्तुलेशमात्रं खण्डितस्तत्र तत्तन्तुनाशात् खण्डतन्तूत्पत्त्या खण्डपटोत्पत्तिसत्त्वात् तत्र तुरीतन्तुसंयोगादीनामनुपयोगात्।

कारणताघटकम्=अनन्यथासिद्धनियतपूर्ववर्त्तित्वघटकम्। अत्र हि नियतत्वं नाम व्यापकत्वम्। व्यापकत्वं च तदधिकरणीभूतानि यावन्ति तावन्निखिलनिष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमित्येकः पक्षः। स्वविशिष्टान्यधर्मवत्त्वमिति यावत्। वैशिष्ट्यं च स्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धेन। स्वाधिकरणयत्किंचिद्व्यक्तिवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वमित्यपरः पक्षः। स्वविशिष्टधर्मवत्त्वमिति यावत्। वैशिष्ट्यं च स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसम्बन्धेन। अत्र च द्वितीयोक्तव्यापकत्वमेव कारणताघटकम्। एवं च तत्पटं प्रति तत्तत्तन्तूनां न व्यभिचारः। तत्पटाधिकरणायां तन्तौ तदात्म्येन तत्तन्तुविरहेऽपि तत्पटीययत्किंचिदधिकरणपदेन तत्तन्तोरपि धर्तुं शक्यतया तत्रैव तत्तन्तोः तादात्म्येनाभावविरहादभावान्तरप्रतियोगितानवच्छेदकत्वस्य तत्तन्तुत्वे सुवचत्वादिति तदाह—तथा चेति। अन्योन्याभावघटितं वा व्यापकत्वं निवेष्टव्यम्। तेन तद-

## ❀ जागदीशी ❀

समवायेन तत्पटत्वावच्छिन्नं प्रत्येव तादात्म्येन तत्तत्तन्तुत्वेन हेतुत्वं सुघटम् । तत्पटाश्रयीभूततत्तत्तन्तौ तत्तत्तन्तुभेदस्याऽसत्त्वात् । एतेन संयोगादिकं प्रत्यपि कर्मादेः कारणत्वं व्याख्यातम् । न चैवं द्वित्त्वणस्थायिद्रव्येऽपि द्वित्वाद्युत्पत्तिः स्यात् । द्रव्यान्तरैकत्वमादायोक्तक्रमेण सामग्रीसत्त्वादिति वाच्यम् । इष्टत्वात् । यावत्त्वप्रवेशस्तु वह्नित्वावच्छिन्नं प्रत्येव तृणत्वादिना हेतुत्ववारणार्थम् । न चैवं कार्यसमानाधिकरणवृत्तिधर्मवत्त्वमेव कारणत्वे निवेश्यताम्,

## ❀ काशिकानन्दी ❀

ऽप्रतियोगितानवच्छेदकतन्तुत्वप्रमेयत्वादिकमादाय न दोषः । एतेन = निरुक्तव्यापकत्व-घटितकारणत्वनिर्वचनेन । संयोगादिकमिति । एकद्रव्यनिष्ठकर्मणा जन्यसंयोगादिक-मित्यर्थः । व्याख्यातमिति । द्विधा हि संयोगोत्पत्तिः । एका एकद्रव्यकर्मजन्या । अपरा द्रव्यद्वयकर्मजन्या । एवं च यत्र एकस्मिन्नेव श्येनादौ कर्मणा श्येनपर्वतादिसंयोग उत्पन्न-स्तत्र संयोगं प्रति कर्मणः कारणत्वमिति सिद्धान्तभङ्गः । संयोगाधिकरणे पर्वते कर्मविरहेण कर्मणः संयोगव्यभिचारित्वेन कारणत्वायोगादिति पूर्वपक्षः । कर्मत्वे संयोगाधिकरणं यद्यत् तत्तन्निष्ठाभावप्रतियोगितानवच्छेदकत्वं नापेक्षितम् । तस्य कारणत्वाघटकत्वात् । किन्तु संयोगाधिकरणयत्किंचिन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमेव । अस्ति च तत् कर्मत्वे । संयोगाधिकरणश्येननिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य तत्र सत्त्वात् । यद्यपि उभयकर्मजन्यसंयोगेऽपि व्यभिचारोऽस्त्येव । तत्तन्निष्ठकर्मणः परस्मिन्नभावात् । तथापि संयोगत्वेन कर्मत्वेन सामान्यकार्यकारणभावे न व्यभिचारस्तत्र संभवति । उभयत्र कर्म-सत्त्वात् । तत्तद्द्रव्यानुयोगिकसंयोगं प्रति च तत्तद्द्रव्यनिष्ठकर्म कारणमिति विशे-षकार्यकारणभावे च न व्यभिचार इत्यत एकद्रव्यकर्मजन्यसंयोगे व्यभिचारोऽस्मभिर्व्याख्यात इति द्रष्टव्यम् । एवं = कार्याधिकरणयत्किंचिन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वस्यैव कारणताघटकत्वे । द्वित्वाद्युत्पत्तिः स्यादिति । चिरोत्पन्नद्रव्यान्तरगतैकत्वमादायेत्यादिः । द्वित्वाधिकरणे द्वित्वणावस्थायिनि द्रव्ये प्रथमक्षणे गुणोत्पादविरहेण एकत्वस्याभावात् एकत्वस्य द्वित्वकारणीभूतस्य तत्र व्यभिचारेऽपि चिरोत्पन्नद्रव्यगतं यदेकत्वं तदादायैव चिरोत्पन्नद्रव्य-द्वित्वणावस्थायिद्रव्ययोर्द्वित्वोत्पत्तिः संभवति । द्वित्वस्य द्विनिष्ठतया स्वाधिकरणचिरोत्पन्नद्रव्यनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वस्यैकत्वत्वे सत्त्वेन कारण-सत्त्वादिति तदाह— द्रव्यान्तरैकत्वमिति । चिरपूर्वोत्पन्नद्रव्यगतैकत्वमित्यर्थः । यावन्तः कार्यतावच्छेदकधर्मावच्छिन्ना इत्यत्र यावत्पदोपादानफलमाह— यावत्त्वेति । हेतुत्ववा-रणार्थमिति । अन्यथा यत्किंचिद्वह्न्यधिकरणे तृणे तादात्म्येन तृणसत्त्वात् वह्नित्वेन तृणत्वेन कार्यकारणभावः स्यात् । तदुक्तौ च वह्नित्वावच्छिन्ना निखिलवह्नयो न तृणे इति न तृणत्वेन वह्नित्वावच्छिन्ननिरूपितकारणताप्रसक्तिरिति भावः । कार्यतावच्छेदक-व्यापकीभूताधेयतानिरूपिताधिकरणतावन्निष्ठेत्यादि तु फलितम् । तेन तत्पटत्वावच्छिन्ने यावत्त्वविरहेऽपि न क्षतिः । कार्यसमानाधिकरणवृत्तिधर्मवत्त्वमेवेति । एवकारेण

❀ दीधितिः ❀

**देक एव प्रागभावः कल्प्यते । स च स्वाश्रय एव प्रतियोगिजनक इति**

❀ जागदीशी ❀

अन्यथासिद्ध्यनिरूपकत्वदलेनैव व्यापकतानवच्छेदकान्तरव्युदाससंभवादिति वाच्यम् । व्यभिचारग्रहाऽप्रतिबध्यतया तस्य कारणतास्वरूपत्वाऽयोगादित्याहुः ।

ननु क्लृप्तापि प्रागभावव्यक्तिः कथं नान्यत्र कार्यमर्जयति इत्यत आह स चेति । सामानाधिकरण्यप्रत्यासत्त्यैव तस्य हेतुत्वादिति भावः । नन्वेवमपि द्वितन्तुकपटादौ न तत्सिद्धिः तत्रातिरिक्तस्य प्रागभावधर्मिणः कल्पनास-

❀ काशिकानन्दी ❀

यावत्पदस्य व्यापकत्वपर्यन्तगमनस्य चायुक्तत्वमुच्यते । नन्वेवं घटादिसमानाधिकरणरासभादीनामपि कारणत्वापत्तिः । तेषां व्यापकत्वविरहेऽपि सामानाधिकरण्यसंभवादित्यत आह—अन्यथासिद्धीति । व्यापकतानवच्छेदकान्तरेति । व्यापकतानवच्छेदकीभूतरासभत्वादिरूपधर्मान्तरेत्यर्थः । व्युदाससंभवादिति । अन्यथा त्वन्मतेऽपि घटत्वावच्छिन्नाधेयतानिरूपितकपालत्वावच्छिन्नाधिकरणतावति यत्किंचित्कपाले परम्परया रासभादेः सत्त्वेन कारणत्वापत्तिर्दुर्वारा स्यादिति भावः । व्यभिचारग्रहाऽप्रतिबध्यतयेति । व्यभिचारग्रहः कपालोघटव्यभिचारीत्यादिव्यभिचारग्रहो न प्रतिबध्यो यस्य तद्भावेनेत्यर्थः । व्यभिचारग्रहप्रतिबन्धकज्ञानविषयस्यैव कारणत्वम् । न हि सामानाधिकरण्यप्रतीतिर्व्यभिचारज्ञानप्रतिबन्धिका । तस्य = समानाधिकरणवृत्तिधर्मवत्त्वस्य । आहुरिति । अत्रारुचिबीजन्तु अत्र मते वह्नित्वावच्छिन्ननिखिलवह्न्यधिकरणाऽप्रसिद्ध्या इन्धनत्वादिनापि कारणत्वं न स्यात् । एवं घटत्वावच्छिन्नं प्रति दण्डत्वादिना । कार्यतावच्छेदके स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतावच्छेदकत्वसामान्यतोऽधिकरणतावच्छेदकत्वयोर्व्यतिरेकस्तस्य निखिलतदधिकरणपदेन विवक्षितत्वे तृणत्वेन वह्नित्वावच्छिन्नं प्रति कारणत्वं दुरपनयम् । किं च स्वाधिकरणयत्किंचिदेकतन्तुघटितस्वानधिकरणतन्तुसमुदाये तत्पटोत्पत्तिर्दुर्वारा । एवं सहस्रतन्तुकपटस्य द्विसहस्रतन्तावपीति ।

क्लृप्ता = धर्मिग्राहकमानेन कारणविधया सिद्धा । प्रागभावव्यक्तिः = तत्पटादिप्रागभावव्यक्तिः । अन्यत्र = तत्पटानधिकरणतन्त्वादौ । अर्जयति = जनयति । सामानाधिकरण्यप्रत्यासत्त्यैव = स्वरूपसमवायघटितसामानाधिकरण्यप्रत्यासत्त्यैव । न तु समानसम्बन्धित्वमात्रप्रत्यासत्त्येति भावः । तादात्म्येन कार्यं प्रति प्रतियोगितासम्बन्धेन प्रागभावस्य कारणत्वेन एकप्रतियोगिकप्रागभावस्यापरजनकत्ववारणेऽपि समवायादिना तत्पटाद्यनधिकरणेषु तत्पटोत्पत्तिवारणं न संभवति । किं च कार्यपूर्वक्षणे प्रतियोगिविरहेण प्रतियोगित्वसम्बन्धेन कारणत्वं दुर्घटमेवेति सामानाधिकरण्यप्रत्यासत्त्यैव कार्यकारणभावोऽङ्गीकार्यं इत्यभिप्रायः । तस्य = प्रागभावस्य । न तत्सिद्धिः = न प्रागभावकारणकत्वसिद्धिः । तत्र = द्वितन्तुकपटादिस्थले । प्रागभावधर्मिणः = प्राग-

❀ दीधितिः ❀

नातिप्रसङ्गः। इत्थं चानेकत्र प्रागभावसिद्धौ प्रागभावत्वेन प्रति-

❀ जागदीशी ❀

पेक्ष्य क्लृप्ततन्तुसंयोगव्यक्तेरेव लाघवेन हेतुत्वौचित्यादित्यत आह इत्थं चेति। कार्योत्पादनियामकतया चेत्यर्थः। प्रागभावत्वेनेति। तत्तत्प्राग-भावव्यक्तिषु अभावत्वाऽसिद्धौ—

❀ काशिकानन्दी ❀

भावात्मकस्य कारणत्वधर्मिणः। लाघवेनेति। प्रागभावकल्पनं, तत्रानन्यथासिद्धत्वकल्पनं, नियतपूर्ववर्त्तित्वकल्पनं च प्रागभाववादिमते प्रसज्यते। परेषां च तन्तुद्वयसंयोगस्य तत्र नियतपूर्ववर्त्तित्वस्य च सिद्धत्वाद् अनन्यथासिद्धत्वमात्रं कल्पनीयमिति महल्लाघवमिति भावः। अभावत्वासिद्धाविति। तत्तत्पटादिकारणतया वस्तुमात्रं सिद्ध्येन्न त्वभावत्वमपि तत्र।

ननु कल्प्यमानकारणान्तरस्य नित्यत्वे घटोत्पत्तिकालेऽपि कारणसमुदायसत्त्वादुत्पन्न-पुनरुत्पादवारणाय तस्यानित्यत्वं स्वीकरणीयम्। एवं च सति अनुगतनाशकलाभाय तस्य सप्रतियोगिकत्वमपीत्यर्थादभावत्वं तस्यायाति। न च सप्रतियोगिकत्वेन कथमनुगत-नाशकलाभ इति वाच्यम्। स्ववृत्तिप्रतियोगिकत्वसम्बन्धेन कालत्वेन तन्नाशकत्वोपपत्तेः ताहशकालश्च द्विक्षणात्मकः प्रागभावप्रतियोग्युभयाधिकरणम्। न च स्थूलकालमादाय प्रतियोग्युत्पत्तेश्चिरं प्रागेव प्रागभावो नश्येदिति वाच्यम्। ध्वंसविशिष्टान्यत्वस्यापि काल-विशेषणत्वात्। वैशिष्ट्यं च स्वप्रतियोग्यधिकरणत्वस्ववृत्तिप्रतियोगिकध्वंसवत्त्वोभयसम्बन्धे-न। त्रिक्षणाद्यात्मककालस्तु न धर्तुं शक्यः तस्य विशिष्टत्वात्। पूर्वक्षणध्वंसवैशिष्ट्यस्यैव तत्र सत्त्वात्। स्वप्रतियोगिप्रथमक्षणाधिकरणत्वस्य स्ववृत्तिद्वितीयक्षणध्वंसस्य त्रिक्षणात्म-ककालवृत्तित्वादिति चेद्?

न। उत्पन्नपुनरुत्पादप्रसङ्गवारणाय प्रागभावस्यानित्यत्वं न स्वीकरणीयम्। उत्पन्नपुन-रुत्पादापत्त्यसंभवस्य "प्रतिबन्धकत्वेनापी"त्यपिकारव्याख्यानावसरे प्रागेव तर्कालङ्कारैः स्फुटमभिधानात्। अस्तु वा तदनित्यत्वम। तथापि स्वप्रयोज्यकार्यप्रयोजकसामग्र्येव तन्ना-शिका। न च प्रागभावघटितसामग्र्याः कथं प्रागभावनाशकत्वमिति वाच्यम्। ध्वंसमात्रं प्रत्येव प्रतियोगिनो निमित्तकारणतायाः सर्वैरङ्गीकारेण ताहशदोषाऽऽशङ्कानवका-शात्। न च सामग्री नाम कारणसमुदायः। नहि तद्गतः कश्चिदनुगतधर्मः, एक-विशिष्टापरापरविशिष्टकारणत्वस्य विशेषणविशेष्यभावव्यत्यासेन नानाधर्मत्वादिति वाच्यम्। भवतु तावदेवं, तथापि स्ववृत्तिकार्यकत्वसम्बन्धेन निरुक्तध्वंसविशिष्टान्यकाल एव तन्नाशकः। न च कार्यत्वस्याननुगततयाऽनुगतनाश्यनाशकभावो न सिद्ध्य-तीति प्रागभावविशिष्टो यो ध्वंसविशिष्टान्यसमयस्तत्त्वेन प्रागभावनाशकत्वं युक्तम्। प्रागभाववैशिष्ट्यं स्वाश्रयत्व-स्वप्रतियोग्याश्रयत्वोभयसम्बन्धेनेति वाच्यम्। ईदृशप्रागभाव-विशिष्टसमयस्य सर्वदैव सत्त्वात्कस्यापि प्रागभावस्याद्यावधिस्थितेर्दुर्वचतापत्तेः। नाशक-

### ❀ दीधितिः ❀

**योगिजनकत्वाद् द्वितन्तुकेऽपि तत्सिद्धिरिति चेत् ? त्रिचतुरेष्वेव तन्तुषु उत्पन्नेषु संयुक्तेषु च तत्पटोत्पत्तिप्रसङ्गः ।**

### ❀ जागदीशी ❀

**ताद्रूप्येण हेतुत्वाभिधानमनुचितमिति तु विभावनीयम् ।**

**प्रागभावस्वीकारेऽपि तत्तत्तन्तुव्यक्तीनां तत्तच्चरमतन्तुसंयोगव्यक्तीनां वा तत्पटं प्रति विशिष्य हेतुत्वस्याऽऽवश्यकत्वे कृतं प्रागभावकल्पनयेत्याशयेन समाधत्ते त्रिचतुरेष्वेवेति असमवायिकारणसम्पत्त्यर्थमाह संयुक्तेषु चेति। त्रितन्तुकस्य चतुस्तन्तुकस्य वा पटस्यावश्यमुत्पत्तेः पटसामान्यस्यापत्त्यसंभवादाह तत्पटेति। सद्वतादितन्तुकपटोत्पत्तिप्रसङ्ग इत्यर्थः। प्रागभावादिघटिताया स्तत्पटसामग्र्यास्तदानीमपि सत्त्वादिति भावः ।**

### ❀ काशिकानन्दी ❀

सत्त्वात् । यदि च तत्प्रागभावविशिष्टसमयस्य तत्प्रागभावनाशकत्वमित्युच्यते तदाननुगमः समानः। न च स्वरूपेण प्रागभावनाशोत्पत्तिं प्रति ध्वंसविशिष्टान्यसमयस्य स्ववृत्तिप्रागभावप्रतियोगिमत्त्वसम्बन्धेन स्ववृत्तिप्रतियोगिकप्रागभाववत्त्वसम्बन्धेन वा हेतुत्वोपगमान्न सर्वेषां प्रागभावानां युगपन्नाशापत्तिः । उत्पत्स्यमानतन्त्वादिनिष्ठप्रागभावनाशप्रयोजकतत्तत्क्षणप्रत्यासन्नकालस्य कालान्तरे देशान्तरे चासंभवादिति वाच्यम्। एवमपि घटे श्यामरूपप्रागभावनाशकाले उत्पत्स्यमानरक्तिमरूपीयप्रागभावस्यापि नाशः स्यादित्यनुगतनाश्यनाशकभावो दुर्वच एव नाशकतावच्छेदकगौरवमपि तत्तद्व्यक्तित्वपर्यवसाने नास्त्येवेति दिक्।

ताद्रूप्येण = अभावत्वेन रूपेण । तत्तत्तन्तुव्यक्तीनां तत्तच्चरमतन्तुसंयोगव्यक्तीनां वेति। अत्र वाकारश्चकारार्थे। तत्तच्चरमतन्तुसंयोगादीनां तन्तुद्वयमात्रवर्त्तिनां समवायेन पटव्यभिचारितया तत्तत्तन्त्वनुयोगिकसमवायस्यैव कार्यतावच्छेदकताया वाच्यत्वात् इतरतन्तुषु पटोत्पत्तौ तत्संयोगस्य हेतुत्वायोगात् । न च कालिकेन चरमसंयोगव्यक्तेः सहकारिताकल्पनान्न दोष इति वाच्यम्। एवमपि प्रागभावानुपगमे देशनियन्त्रणस्यान्यथा कर्त्तुमशक्यत्वात्। वस्तुतस्तु एवं रीत्या सहस्रतन्तोस्तत्तद्व्यक्तित्वेन हेतुतायां गौरवात्प्रागभावसिद्धिर्दुर्वारा स्यादिति "कृतं प्रागभावकल्पनये"त्युत्तरग्रन्थविरोधः स्यात्। अतः स्वाधिकरणवृत्तिसहस्रत्वादिसंख्यासम्बन्धेन चरमसंयोगस्य हेतुत्वमभिप्रेतमिति यथाश्रुतार्थ एव वाकारः। न चानुत्पन्नसहस्रत्वतन्तौ पटो नोत्पद्येतेति वाच्यम्। इष्टत्वात्। क्षणविलम्बस्याकिंचित्करत्वात्। एवमेवाग्रे खण्डपटध्वंसस्यैतादृशसम्बन्धेन हेतुत्वव्यवस्थापनमिति ध्येयम्। यत्किंचित्पटध्वंसस्यापि सहस्रतन्तुकपटहेतुत्वोपगमे द्वितन्तुकपटस्य नापत्तिरतस्त्रितन्तुकपर्यन्तम् । तदानीमपि = त्रिचतुरादितन्तुसंयोगदशायामपि । सत्त्वादिति। त्रिचतुरादितन्तुष्वित्यादिः ।

❀ दीधितिः ❀

तावत्तन्तुवृत्तेः पटस्य कतिपयविरहे कथमुत्पत्तिरिति चेन्न, का-

❀ जागदीशी ❀

यद्यपि सर्वत्रैव खण्डपटध्वंसस्य महापटहेतुतया त्रिचतुरादितन्तुकपटस्य ध्वंसविरहादेव त्रिचतुस्तन्तुसयोगदशायां न सहस्रादितन्तुकपटोत्पाद इति चरमतन्तुसंयोगादेस्तत्र विशिष्य हेतुत्वे मानाभावः। न च खण्डपटध्वंसस्येव चरमसंयोगव्यक्तीनामपि विनिगमनाविरहेण तत्र हेतुत्वमिति वाच्यम्। चरमसंयोगोत्पत्त्यनन्तरमेव खण्डपटध्वंसदशायामेव महापटोत्पत्तिप्रसङ्गेन खण्डपटध्वंसस्यावश्यं महापटहेतुत्वात्। तथापि त्रिचतुरादितन्तुकखण्डपटध्वंसस्यैव स्वसमानाधिकरणसहस्रत्वादिसंख्यासम्बन्धेन सहस्रादितन्तुकमहापटं प्रति हेतुत्वादेव स्वानधिकरणतन्तुषु तत्पटानुत्पत्तिसंभवे प्रागभावकल्पने मानाभाव इत्यत्र तात्पर्यम्।

शङ्कते तावदिति। विनेति (पृ० २७६) तन्तुसंयोगयोः तन्तुत्वविलक्षणसंयो-

❀ काशिकानन्दी ❀

सिंहावलोकनन्यायेन चरमसंयोगव्यक्तीनां तत्पटं प्रति विशिष्य हेतुत्वमिति स्वयं प्रागभिहिते दोषं प्रदर्शयति—यद्यपीति। सर्वत्रैवेति। क्रमेण तन्तुसंयोगानामुत्पत्त्या यत्र महापटोत्पत्तिस्तत्रेत्यर्थः। तेन युगपत्सहस्रतन्तूनां संयोगेन पटोत्पादस्थले खण्डपटध्वंसस्य महापटहेतुत्वविरहेऽपि नाऽसंगतिः। महापटहेतुतयेति। अन्यथा सत्यपि खण्डपटे महापटः स्यात्। तथा चैकाधिकसहस्रतन्तुषु सहस्रं पटाः स्युः। यस्मै च सहस्रं पटा देयास्तस्मै एकाधिकसहस्रतन्तुकपटप्रदानेन पुमान् कृतकृत्यश्च स्यात्। न च खण्डपटात्यन्ताभाव एव महापटहेतुः स्यादिति वाच्यम्। यत्र त्रयो वा चत्वारो वा तन्तवो युगपद्योजितास्तत्र तादृशसंयोगोत्पत्तिकाले खण्डपटसामान्याभावस्य तेषु विद्यमानतया तदुत्तरं महापटोत्पादापत्तेः। न च तावत्तन्तुगतसहस्रत्वादिमत्त्वसम्बन्धेन खण्डपटात्यन्ताभावस्य हेतुत्वान्नदोषः। अन्येषां तन्तूनामनुत्पन्नतया तादृशसहस्रत्वसंख्याया एव तदानीं विरहादिति वाच्यम्। नवनवत्यधिकनवशततन्तुकपटोत्पत्त्यनन्तरमुत्तरक्षणे एकतन्तुसंयोगाद्विनापि तादृशपटध्वंसं सहस्रतन्तुकपटोत्पादापत्तेः। संयोजनीयतन्त्वन्तरे खण्डपटात्यन्ताभावस्य सत्त्वेन तस्य स्वाश्रयगतसहस्रत्वसम्बन्धेन निखिलतन्तुषु वर्त्तमानत्वात्। तत्र = सहस्रतन्तुकपटे। व्यक्तीनामिति। एकस्यैव तन्तोरनेकतन्तुभिः संयोगावश्यकत्वेन बहुवचनम्। महापटोत्पत्तिप्रसङ्गेनेति। तदुत्पत्तावनिष्टापत्तेर्दुर्वचत्वेऽपि विनिगमनाविरहेणोभयोर्हेतुतायामन्वयव्यतिरेकौ ध्वंसस्यैवेति हृदयम्। खण्डपटध्वंसस्यैवेति। एवकारेण चरमसंयोगादेः विशिष्य कारणत्ववारणम्। त्रिचतुरादीत्यादिना चरमखण्डपटध्वंसपरिग्रहः। स्वसमनाधिकरणेति। स्वं—खण्डपटध्वंसः। स्वाधिकरणानुयोगिकसमवायस्य सम्बन्धत्वे प्रागुक्तव्यभिचारो द्रष्टव्यः। स्वानधिकरणेति। तत्पटानधिकरणेत्यर्थः।

तन्तुसंयोगयोरिति। तन्तुश्च संयोगश्च तयोः। तन्तुत्वविलक्षणसंयोगत्वाभ्या-

❀ दीधितिः ❀

र्यानुत्पादस्य विना कारणविरहमनभ्युपगमात् । सामग्रीसत्त्वे अग्रिमक्षणे कार्यसत्त्वस्याऽऽवश्यकत्वाच्च । तत्पटप्रागभावाश्रययावत्तन्तुत्वेन तत्पटजनकत्वमिति चेत् ? अवच्छेदककोटौ प्रागभावस्य प्रवेशाऽप्रवेशयोः कारणत्वे प्रमाणाभावः । परस्परासंयुक्तेषु कतिपयतन्तुषु

❀ जागदीशी ❀

गत्वाभ्यां पटं प्रति हेतुत्वेन तदवच्छिन्नविरहस्याऽसंभवादिति भावः । कार्यानुत्पादप्रयोजकस्याभावमुक्त्वा कार्योत्पादप्रयोजकस्य सत्त्वमाह सामग्रीति । पुनः शङ्कते तत्पटेति । यावत्तन्तुत्वेन हेतुत्वाऽसंभवादाश्रयान्तम् । तत्पटप्रागभावाश्रयस्य कस्यचित्तन्तोः सत्त्वादतिप्रसङ्गतादवस्थ्यमतो यावदिति । प्रवेशेत्यादि । प्रवेशे कारणतावच्छेदकतयाऽन्यथासिद्धत्वम् । अप्रवेशे तु वस्तुगत्या तत्पटप्रागभावाश्रयाणामेव तन्तूनां तावत्तन्तुत्वेन हेतुत्वेन प्रागभावस्य हेतुत्वे मानाभाव इत्यर्थः । ननु माभूत् प्रागभावस्य हेतुत्वं, कारणतावच्छेदकतयैव तत्सिद्धिर्भविष्यतीत्यत आह परस्परेति । तत्पटप्रागभावाश्रययावत्तन्तूनां तदानीमनपा-

❀ काशिकानन्दी ❀

मिति । पूर्वोक्ताभ्यां यथासंख्यमन्वयः । पटं प्रति = तत्पटं प्रति । तदवच्छिन्नविरहस्य= तन्तुत्वावच्छिन्नविरहस्य विलक्षणसंयोगत्वावच्छिन्नविरहस्य च । असंभवादिति । त्रिचतुरेषु तन्तुषूत्पन्नेषु संयुक्तेषु चेत्यादिः । कार्यानुत्पादप्रयोजकस्येति । तन्तुत्वावच्छिन्नाभावः, विलक्षणसंयोगत्वावच्छिन्नाभावश्च तत्पटानुत्पादप्रयोजकः, तस्येत्यर्थः । कार्योत्पादप्रयोजकस्येति । तन्तुत्वावच्छिन्नतादृशसंयोगत्वावच्छिन्नयोस्तत्पटोत्पादप्रयोजकत्वम् । सत्त्वमाहेति । आवश्यकत्वादित्यनेन सामग्र्यां कार्यव्याप्यत्वकथनात्तेन सामग्र्यां कार्योत्पादप्रयोजकत्वं सूचयतीति भावः ।

हेतुत्वाऽसंभवादिति । भाविभूतदेशान्तरीयनिखिलतन्तूनामेकत्राऽसंभवादिति भावः । आश्रयाणामिति । तदुक्तौ प्रागभावाश्रयतन्तुविशेषा एव ध्रियेरन्निति भावः । सत्त्वादिति । त्रिचतुरादितन्तुमात्रस्थले इत्यादिः । अतिप्रसङ्गेति । त्रिचतुरादितन्तुषु सहस्रतन्तुकपटोत्पादात्मकातिप्रसङ्गेत्यर्थः । अन्यथासिद्धत्वमिति । घटं प्रति दण्डत्वादिवदिति भावः । वस्तुगत्येत्यादि । तत्पटप्रागभावेति उपलक्षणतया प्रवेशः । तथा च कारणीभूतान् तन्तून् तत्तत्तन्तुत्वेनोपादाय तावत्तन्तुत्वेन हेतुत्वं वक्तव्यम् । तावत्त्वस्यैकस्याभावेन तद्व्यक्तित्वेन प्रवेशे व्यभिचाराऽभावादिति भावः । तत्सिद्धिः = प्रागभावसिद्धिः । नन्वनुपदमुक्तमवच्छेदकतया न प्रागभावस्य प्रवेश इति किमनुरोधेनावच्छेदकतया तत्सिद्धिरधुनोच्यत इति चेन्न । तावत्त्वादीनां बुद्धिविषयत्वादिस्वरूपतया नानात्वेन तत्तत्तावत्त्वेन कारणत्वेऽनन्तकार्यकारणभावापत्तिरिति प्रागभावसमनियततावत्त्वेन प्रागभाववत्त्वेनैव वा हेतुत्वं वक्तव्यम् । तथा चावच्छेदकतया प्रागभावसिद्धेरप्रत्यूहत्वात् । दीधितौ परस्परेति ।

❀ दीधितिः ❀

तत्पटो जायेत। न च तत्पटप्रागभावव्याप्ययावत्संयोगानामपि जनकत्वम्। कतिपयतन्तुसंयोगेष्वतीतेषु अनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात्। तत्पटप्राभावमपेक्ष्य स एव पटो लघीयान्।

❀ जागदीशी ❀

यादिति भावः। तत्पटप्रागभावव्याप्येति। तत्पटप्रागभावानधिकरणाऽवृत्तीत्यर्थः। संयोगस्त्वारम्भको ग्राह्यः। तेन तत्पटप्रागभाववन्मात्रवृत्तीनामनारम्भकसंयोगान्तराणां तत्पटपूर्वमसत्त्वेऽपि न क्षतिः। तत्प्रागभावसामानाधिकरण्यस्य तत्पटानाधारतन्तुवृत्तिपटान्तरारम्भकातीतसंयोगसाधारणत्वाद् व्याप्यपर्यन्तानुसरणम्। तन्तुसंयोगेष्विति। पटारम्भकेष्वित्यादिः। ननु तत्पटप्राक्क्षणवृत्तित्वेनापि संयोगानां विशेषणान्नैष दोष इत्यत आह तत्पटेति। तथा च लाघवात् तत्पटव्याप्यताद्दशयावत्तन्तुसंयोगत्वेनैव तत्पटं प्रति हेतुत्वसंभ-

❀ काशिकानन्दी ❀

तावत्तन्तुषूत्पन्नेषु सत्स्वपीत्यादिः। तत्पटोत्पत्त्यनन्तरं तत्पटप्रागभावविरहेऽपि तावत्तन्तुसंयोगानां विद्यमानतया स्वाभाववद्वृत्तितया कस्यापि संयोगस्य तत्पटप्रागभावव्याप्यत्वं दुर्घटमतो व्याचष्टे—तत्पटप्रागभावानधिकरणेति। एवं च तत्पटोत्पादानन्तरं तत्पटप्रागभावविरहेऽपि तत्पटप्रागभावाधिकरणभिन्नत्वं न तत्तत्तन्तूनां, भेदस्य व्याप्यवृत्तित्वादिति न दोष इति भावः। अनारम्भकसंयोगान्तराणामिति। यावदन्तर्गतानामिति शेषः। तत्पटहेतुभूताः सर्वे तन्तव एकस्मिन् पात्रे यदा निक्षिप्यन्ते तदानीं तेषां परस्परं संयोगा जायन्त एव। भवन्ति च ताद्दशसंयोगास्तत्पटप्रागभावव्याप्याः। परन्तु न ते पटारम्भकाः। तुरीवेमादिसहकारेण जनितविलक्षणसंयोगानामेव पटजनकत्वात्। पटान्तरारम्भकातीतसंयोगेति। यैः किल तन्तुभिः प्रथममेकं पटं विनिर्माय ततश्च कतिपयतन्तून् ततो निष्कास्य कतिपयानपरतन्तून् तैर्मेलयित्वा यत्र पटान्तरं क्रियते तत्रेयं प्रक्रिया ज्ञेया। व्याप्यपर्यन्तेति। एवं च तत्पटप्रागभावानधिकरणतन्तुष्वपि ताद्दशसंयोगसत्त्वात्तस्य तत्प्रागभावाऽव्याप्यतया न दोष इति भावः।

दीधितौ अतीतेषु अनागतेषु वेति। प्रथमं तावत् सहस्रतन्तुभिरेकः पटः कृतः। पश्चाच्च तान् तन्तून् विश्लेष्य तैरेव तन्तुभिः पटान्तरं क्रियते। पुनश्च तान् तन्तून् विश्लेष्य तैरेव तन्तुभिः पटान्तरं करिष्यते। ताद्दशस्थले प्रथमपटीयसंयोगानां भविष्यत्पटीयसंयोगानां च मध्यपटीयप्रागभावव्याप्यत्वमक्षतमेव। परन्तु ताद्दशनिखिलसंयोगानां कार्यनियतपूर्ववर्तित्वविरहेण व्यभिचार इति भावः।

तत्पटप्राक्क्षणेति। तत्पटाऽव्यवहितप्राक्क्षणेत्यर्थः। एवं च नातीतानागतसंयोगानादाय दोष इति भावः। लाघवादिति। तत्पटः तत्पटप्रागभावश्च तेष्वेव तन्तुषु। तत्र तत्पटप्रागभावत्वं नाम तत्पटविशिष्टप्रागभावत्वम्। तेन च रूपेण तत्प्रवेशापेक्षया तत्पट-

## ❀ दीधितिः ❀

यावत्त्वाऽनिरुक्तेश्च ।

## ❀ जागदीशी ❀

वाद् अवच्छेदकतयापि न प्रागभावसिद्धिरिति भावः । ननु तत्पटस्येव तन्नियतसंख्याविशेषस्यापि उक्तक्रमेणावच्छेदकत्वे विनिगमनाविरहाल्लघुरपि तत्पटो नावच्छेदकः, किन्तु तत्प्रागभाव एव, धर्मिग्राहकप्रमाणेन तथैव तस्य सिद्धेरत आह यावत्त्वेति । तथा च तादृशसंयोगनिष्ठं यावत्त्वमपि अपेक्षाबुद्धिविषयत्वमेव । तच्चापेक्षाबुद्धिव्यक्तीनां भेदान्नानेत्यनन्तकार्यकारणभावगौरवे ण्यर्थमतिरिक्तप्रागभावस्यावच्छेदकतया कल्पनमिति भावः ।

## ❀ काशिकानन्दी ❀

प्रवेश एव लघुरिति भावः । तत्पटव्याप्यत्वं तत्पटानधिकरणाऽवृत्तित्वम् । तन्नियतसंख्याविशेषस्य = तत्पटनियतसहस्रत्वादिसंख्याविशेषस्य । भूतभाविसंख्यावारणाय—विशेषेति । न च तत्पटसमनियतसंख्यात्वेन तस्याप्यवच्छेदकत्वे क्षतिविरहः । लाघवेन तत्पटस्यैवावच्छेदकत्वसिद्धेरिति भावः । उक्तक्रमेण = लाघवेन । अवच्छेदकत्वे = कारणतावच्छेदकत्वे । लघुरपि = तत्पटविशिष्टप्रागभावत्वापेक्षया लघुभूततत्पटत्वेन विशिष्टोऽपि । नावच्छेदकः=न कारणतावच्छेदकः । तत्प्रागभाव एव=तत्पटप्रागभाव एव । ननु तत्पटप्रागभावसिद्धावपि तत्तत्संख्यादिभिः सह तस्य विनिगमनाविरहः कुतो नेत्यत आह—धर्मिग्राहकेति । अवच्छेदकत्वधर्मितया प्रागभावग्राहकमानेनेत्यर्थः । तथैव = अवच्छेदकत्वेनैव । तस्य = प्रागभावस्य । ननु अपेक्षाबुद्धिविषयत्वं यावत्त्वमिति यावत्त्वाऽनिरुक्तिकथनमयुक्तमित्यत आह— तथा चेति । तादृशसंयोगेति । तत्पटप्रागभावव्याप्यसंयोगेत्यर्थः । अपेक्षाबुद्धिविषयत्वमिति । अपेक्षाबुद्धिविशेषविषयत्वमित्यर्थः । अपेक्षाबुद्धिविशेषश्च तावत्संयोगविषयकापेक्षाबुद्धिव्यक्तिः । अन्यथा तन्निर्वचनाऽसंभवात् । न च तत्पटप्रागभावव्याप्यत्वविशिष्टसंयोगत्वव्यापकबुद्धिविषयत्वं तादृशयावत्त्वमित्यदोष इति वाच्यम् । तावत्संयोगतदितरवस्तूभयगततादृशविषयत्वस्यापि तादृशसंयोगत्वव्यापकतया तादृशयावत्त्वेन वस्तूनामेकत्राऽसंभवात् । बुद्धिविषयतात्वेन यत्किंचित्संयोगविषयकबुद्धिविषयताया अपि तादृशसंयोगत्वव्यापकत्वाच्च । न च तत्पटप्रागभावसमनियतत्त्वतत्पटप्राक्क्षणवृत्तित्वैतदुभयविशिष्टसंयोगत्वसमनियतबुद्धिविषयत्वमेव यावत्त्वम् । उभयत्र समनियतत्वांशे व्यापकत्वघटकस्वाधिकरणवृत्तित्वं निरवच्छिन्नविशेषणतयेति न दोष इति वाच्यम् । कस्यापि संयोगस्य तत्पटप्रागभावसमनियतत्वविरहात् । न च तत्पटप्रागभावसमनियततावच्छेदकतत्पटविशिष्टसंयोगत्वसमनियतबुद्धिविषयत्वमेव तथेति वाच्यम् । समनियततावच्छेदकान्तवैयर्थ्यात् । तथा च प्रागभावानावश्यकमेव । न च सामानाधिकरण्यसम्बन्धेन तत्पटप्रागभावः, अव्यवहितप्राक्क्षणवृत्तित्वसम्बन्धेन तत्पटः, समवायेन संयोगत्वमित्येतत्त्रितयसमनियतबुद्धिविषयत्वमेव यावत्त्वमिति वाच्यम् । तत्पटस्येव तत्पटोत-

## ❀ जागदीशी ❀

अत्र वदन्ति । यत्र क्रमेण तन्तूनां तत्संयोगानां वा जननोत्तरं पटस्योत्पादस्तत्र प्रागेव तत्पटस्योत्पादवारणार्थं चरमस्य तन्तोस्तत्संयोगस्य वा विशिष्य हेतुत्वावश्यकत्वे तेनैवोदासीनतन्तुषु तत्पटोत्पत्तिवारणेऽपि यत्र समस्ततन्तुषु एकदैवोत्पन्नेषु संयुक्तेषु च पटस्योत्पत्तिस्तत्र तत्पटस्यान्यत्रोत्पादवारणार्थं प्रागभावः कारणतया कल्प्यते । तत्तत्तन्तुसंयोगानां विशिष्य हेतुत्वकल्पनया तद्वारणे गौरवात् । न हि तत्रापि तत्पटोत्पत्तेः पूर्वं तत्पटारम्भकतत्तत्तन्तुषु द्रव्यारम्भकसंयोगः, येन तदानीं तत्पटस्योत्पादवारणाय विशिष्य संयोगानां हेतुत्वमावश्यकं स्यात् । न च तत्पटवत्त्वेनैव तादृशपटं प्रति तन्तूनां तादात्म्येन हेतुत्वान्नान्यत्र तस्योत्पाद इति वाच्यम् । कार्यवत्त्वेन कारणताया मन्यथासिद्धेः । अन्यथा

## ❀ काशिकानन्दी ❀

त्रिकालोत्पत्तिकसंख्याविशेषाणामपि अवच्छेदककोटिप्रवेशप्रोव्येणानन्तकार्यकारणभावस्य दुर्वारत्वेन तदपेक्षया तत्तद्बुद्धिविषयत्वेन संयोगानां कारणत्वसिद्धेरिति भावस्तदाह—तच्चेति (पृ० २७८) अपेक्षाबुद्धिविशेषविषयत्वं चेत्यर्थः ।

प्रागभावं साधयितुमुपन्यस्यति—अत्र वदन्तीति । दीधिकारोक्तिमनुवदति यत्रेत्यादि । तेनैव = चरमसंयोगादेर्विशिष्य हेतुत्वेनैव । तत्पटोत्पत्तिवारणेऽपीति । न च निखिलतन्तुषु चरमसंयोगविरहेण कालिकेन कार्यकारणभावावश्यकत्वे पुनर्देशनियमाय तत्रापि प्रागभावः कल्पनीय इति वाच्यम् । प्रागुक्तोत्तरत्वात् । अन्यत्र = तत्पटानधिकरणतन्तुषु । उत्पादवारणार्थमिति । अत्र हि सर्वेषामेव तन्तूनां तन्तुसंयोगानां च चरमत्वादेकतरस्य विशिष्य कारणत्वं दुर्वचमेव । एवं च तन्तुत्वेन तत्पटत्वेन हेतुत्वस्याऽऽवश्यकत्वे स्वानधिकरणतन्तुषु पटोत्पादो दुर्वार इति तदर्थं प्रागभावः कल्पनीय इत्यर्थः । ननु तत्तत्तन्तुसंयोगत्वादिना विशिष्य कारणत्वं ब्रूम इति न स्वानधिकरणतन्तुषु स्वोत्पादापात इत्यत आह तत्तत्तन्तुसंयोगानामिति । तद्वारणे = अन्यत्रोत्पादवारणे । ननु तत्पटोत्पत्तेः प्राक् तेषु तन्तुषु तत्पटातिरिक्तखण्डपटात्मकद्रव्यजनकसंयोगस्य जातत्वेन तादृशखण्डपटोत्पत्तिकाले एव तत्पटोत्पत्तिः स्याद्, प्रागभावस्य तन्तुत्वावच्छिन्नस्य च सत्त्वादिति तद्वारणार्थं तत्तत्संयोगत्वेन हेतुत्वमगत्या सर्वैरेव स्वीकार्यमित्याशङ्कयाह—न हीति । द्रव्यारम्भकसंयोगः = तत्पटातिरिक्तखण्डपटात्मकद्रव्यारम्भकसंयोगः । तेषां तन्तूनां तदानीमेवोत्पन्नतया संयोगान्तरशङ्कानवकाशादिति भावः । आवश्यकं स्यादिति । सति हि द्रव्यान्तरजनकसंयोगे तादृशद्रव्यान्तरोत्पादकाले तत्पट आपद्येत सामान्यकारणसत्त्वात् । तदेव नास्तीति भावः । तत्पटवत्त्वेन = प्रतियोगिव्यधिकरणतत्पटाभावाभाववत्त्वेन । तेन तत्पटोत्पत्तिपूर्वं तन्तुषु तत्पटवत्त्वविरहेऽपि न तेन रूपेण कारणत्वक्षतिः । तादृशपटं प्रति = सहसूतन्तुकपटं प्रति । अन्यत्र = तत्पटानधिकरणतन्तुषु । तत्र तन्तुतादात्म्यसत्त्वेऽपि निरुक्ततत्पटवत्तन्तुतादात्म्यविरहादिति भावः । अन्यथा = कार्यवत्त्वेन कारणतयामन्यथासि-

## ❀ जागदीशी ❀

द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चाक्षुषवद्द्रव्यत्वादिनैव हेतुत्वसंभवे उद्भूतरूपादीनामहेतुत्वापत्तेः। समस्तस्वारम्भकतन्तुसंयोगनाशान्नष्टस्यापि पटस्य पुनः स्वारम्भकतन्तूत्पत्तिप्रसङ्गेन तत्तदारम्भकसंयोगव्यक्तीनां विशिष्य तत्पटं प्रति हेतुत्वकल्पने महागौरवापत्तेश्च। अस्माकं तु प्रागभावविरहादेव नष्टस्य पुनर्नोत्पादः।

यत्तु युगपदुत्पन्नैः संयुक्तैश्च सहस्रतन्तुभिर्जनितस्य पटस्यान्यत्रोत्पत्तिवारणार्थं तावत्तन्तुपर्याप्तायास्तत्पटारम्भकसंयोगसमकालोत्पन्नसंख्याव्यक्तेरेव तत्पटं प्रति विशिष्य हेतुत्वं युक्तं, तावतैव तदानीमन्यत्र कालान्तरे वा तावत्तन्तुषु तत्पटस्योत्पादवारणादिति। तत्तुच्छम्। यस्य तन्तोर्द्वितीयक्षण एव तन्त्वन्तरसंयोगोत्पत्त्या तृतीयक्षणे सहस्रतन्तुकपटोत्पत्तिस्तत्रैव तन्तौ

## ❀ काशिकानन्दी ❀

द्विविरहे। चाक्षुषवद्द्रव्यत्वादिनेति। आकाशपरमाण्वादीनां चाक्षुषवारणाय उद्भूतरूपस्य चाक्षुषकारणत्वं स्वीक्रियते। तदनर्थकम्। चाक्षुषप्रत्यक्षवद्द्रव्यत्वेन तादात्म्येन चाक्षुषं प्रति कारणत्वेनैवानर्थवारणात्। परमाण्वादीनां चाक्षुषवद्द्रव्यानात्मकत्वात्। ननु उद्भूतत्वस्य जातित्वे उद्भूतरूपत्वेनापि हेतुत्वमवारणीयम्। अपि च कार्यवत्त्वेन कारणत्वं स्वीकर्तुं सन्नद्धेन मया चाक्षुषवद्द्रव्यत्वेन हेतुतायामपि इष्टापत्तिः क्रियेतेत्यत आह-समस्तेति। यत्किंचित्स्वारम्भकतन्तुसंयोगनाशान्नष्टस्य पुनरुत्पादवारणार्थं नष्टसंयोगव्यक्तेस्तद्व्यक्तित्वेन तत्पटं प्रति हेतुत्वोपगमो लघीयानित्यत:—समस्तेति। एवं च युगपत् स्वारम्भकसंयोगेषु नष्टेषु सत्सु पुनस्तत्पटोत्पादवारणाय विनिगमनाविरहेण तावन्निखिलतन्तुसंयोगानां तत्तद्व्यक्तित्वेन हेतुत्वं वक्तव्यम्। तत्पटोत्पत्तिपूर्वक्षणे तत्पटविरहेण प्रतियोगिव्यधिकरणतत्पटाभावाभाववत्त्वेनैव तन्तूनां कारणताया उक्ततया तेन रूपेण तन्तूनां तत्पटनाशोत्तरमपि सत्त्वेन सामग्रीसत्त्वेन कार्यानुत्पादस्योपायान्तरेण सम्पादयितुमशक्यत्वात्। तत्पुनः तत्तत्संयोगत्वेन कारणत्वकल्पनेन गौरवमापतितम्। कालिकेन च तत्तत्संयोगत्वेन कार्यकारणभावो नान्यथा सुवचः, पुनश्च देशनियमाय तत्पटवत्त्वेन तन्तूनां कारणत्वमिति महागौरवापत्तिरित्यर्थः। न च प्रतियोगिव्यधिकरणस्वाभावाभाववत्त्व-स्वाऽव्यवहितपूर्वक्षणवृत्तित्वोभयसम्बन्धेन तत्पटवत्त्वेनैव कारणत्वमास्तामिति वाच्यम्। कार्याऽव्यवहितपूर्ववर्त्तित्वादेः कारणतावच्छेदककोटावप्रवेशादिति दिक्। अस्माकं तु इति। तत्पटनाशोत्तरमिति शेषः। प्रागभावेनि। तत्पटप्रागभावेत्यर्थः।

अन्यत्र = तत्पटानधिकरणतन्तुषु। संख्याव्यक्तेः = सहस्रत्वादिसंख्याव्यक्तिविशेषस्य। अन्यदोत्पन्नसंख्यायाः कारणत्वायोगात् तदारम्भकसंयोगसमकालेति। कालान्तरे वेति। संख्याव्यक्तेः द्वित्रिक्षणमात्रवर्तिनः कालान्तरे विरहादोष इति भावः। तृतीयक्षणे तु सहस्रत्वादिसंख्योत्पादसंभवाद्—द्वितीयक्षणे एवेति।

❀ जागदीशी ❀

व्यभिचारात्। सहस्रत्वादिसंख्यायाः समानाधिकरणयावदेकत्वसापेक्षतया द्रव्योत्पत्तिद्वितीयक्षणे तदसंभवात्। किंच तादृशसंख्याव्यक्तीनां तत्तद्व्यक्तित्वेन तत्पटं प्रति हेतुत्वेऽनन्तकार्यकारणभावापत्तिः, तावत्तन्तुपर्याप्तत्वादृशसंख्यात्वेन हेतुत्वे च महागौरवमतस्तत्पटप्रागभावव्यक्तिरेव तत्पटहेतुतया कल्पयितुमुचिता,

❀ काशिकानन्दी ❀

व्यभिचारात् = व्यतिरेकव्यभिचारात्। तदसंभवात् = सहस्रत्वादिसंख्याया असंभवात्। प्रथमं द्रव्योत्पत्तिः तत एकत्वात्मकगुणोत्पत्तिः तत एव च तत्सापेक्षसहस्रत्वाद्युत्पत्तिसंभवः। एवं च तृतीयक्षणोत्पन्नसंख्यायास्तृतीयक्षणोत्पाद्यकार्यहेतुत्वमसंभवीति भावः। ननु तत्र योगिनां विषयनिरपेक्षापेक्षाबुद्धिमादायैव द्वितीयक्षणे सहस्रत्वादिसंख्यासंभवः समानाधिकरणयावदेकत्वस्य कार्यकालवृत्तितयैवापेक्ष्यत्वम्। किंच तन्तुभिः सह तुरीवेमादिसंयोगं विना पटानुत्पत्तेस्तृतीयक्षणे पटोत्पत्तिरसिद्धैव, चतुर्थक्षणे पटोत्पत्तावपि तृतीयक्षणे सहस्रत्वसंख्यायास्तत्र सुलभतया न दोष इत्यत आह—किं चेति। तादृशसंख्याव्यक्तीनां = सहस्रतन्तुगतसहस्रत्वसंख्याव्यक्तिनाम्। अनन्तेति। योगिनामन्यपुरुषाणाञ्चापेक्षाबुद्धिभेदेन सहस्रत्वसंख्यानामानन्त्यात् कारणतावच्छेदकानन्त्यप्रयुक्तकार्यकारणभावानन्त्यम्। ननु तादृशसहस्रतन्तुपर्याप्तसंख्यात्वेन तद्रूपसकलसहस्रत्वानामनुगमान्नानन्तकार्यकारणभाव इत्यत आह—तावदिति। महागौरवमिति। अयं भावः—तावत्तन्तुपर्याप्तत्वं यदि तावत्तन्तुनिष्ठपर्याप्तिप्रतियोगित्वं तदा द्वौ द्वौ तन्तू युगलत्वेनोपदाय युगलसहस्रमिति प्रतीत्या द्विसहस्रतन्तुषु पटोत्पत्तिः स्यात्। तावत्तन्तुभिन्नाऽवृत्तित्वस्य पर्याप्तिविशेषणत्वे तावत्तन्तुभिन्नत्वं तावत्तन्तुभेदकूटवत्त्वं तत्र भेदानां विशेषणविशेष्यभावव्यत्यासेन कार्यकारणभावबाहुल्यम्। यदि च यां कांचित्सहस्रत्वव्यक्तिमादाय तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वं विवक्षितं तदा सहस्रत्वव्यक्त्यन्तरावच्छिन्नानुयोगिकपर्याप्तिप्रतियोगित्वेन हेतुत्वं विनिगमनाविरहाद् वारयितुमशक्यमिति अनन्तकार्यकारणभावतादवस्थ्यम्। न चोपलक्षणत्वं पर्याप्त्यंशे तद्व्यक्त्यवच्छिन्नानुयोगिताकत्वस्येति युक्तम्। पर्याप्तत्वेन पर्याप्तिनिवेशे पर्याप्त्यन्तरमादाय स्वानधिकरणतन्तुषु पटोत्पादस्य दुर्वारतापत्तेः। न च सहस्रतन्तुगतानां यावत्सहस्रत्वानामेकैव पर्याप्तिरिति तादृशपर्याप्तिविशेषप्रतियोगित्वेन सहस्रत्वानुगमसंभव इति वाच्यम्। तथा सति संख्यासामान्यस्यैकैव पर्याप्तिरिति स्वीकारापत्तेः। अपरवस्तुगतसंख्याया वस्त्वन्तरेऽप्रतीतेस्तत्प्रतियोगिकपर्याप्तिविरहेणापि वारयितुं शक्यत्वाद्। अन्यथा तवापि भूतसहस्रत्वव्यक्तेरधुना तन्तुषु सत्त्वापत्तेः। ननु तन्तुसहस्रं तन्तुयुगलसहस्रमिति विलक्षणप्रतीतेरनुयोगित्वं सहस्रत्वेनेव तन्तुत्वादिनाप्यवच्छिन्नं वक्तव्यम्, एवं च युगलत्वादिवारकनिवेशान्तरेण प्रागुक्तदोषानवकाश इति चेन्न। एवमपि तत्तत्तन्तुत्वावच्छिन्नानुयोगिकत्वस्य पर्याप्तिविशेषणीभूतस्य विशेषणविशेष्यभावव्यत्यासो दुर्वार एव; एवं तावत्तन्तुपर्याप्तसंख्यात्वापेक्षया तत्तत्संख्याव्यक्तित्वस्य लघुन एवकारणतावच्छेदकत्वं स्यात्। न च विनिगमनाविरहेणानन्तकार्यकारणभावगौरवमुक्तमिति

❀ जागदीशी ❀

कारणतयैव धर्मिग्राहकमानसिद्धायास्तस्याः पदार्थान्तरेण सार्धं विनिगमनाविरहस्यासंभवादिति दिक्।

[नव्यास्तु प्रागभावानङ्गीकारे चतुर्थक्षणवृत्तिध्वंसप्रतियोगिन्या अपेक्षाबुद्धिव्यक्तेस्तृतीयक्षणेऽपि ध्वंसः स्यात्। न च द्वित्वप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वं वाच्यम्। तथा सति चतुर्थक्षणेऽपि ध्वंसो न स्यात्। चक्षुःसन्निकर्षादिरूपद्वित्वनिर्विकल्पकसामग्र्यास्तदानीं सत्त्वात्। प्रागभावस्वीकारे तु द्वित्वनिर्विकल्पकात् प्राक् तदभावस्यैव प्रतिबन्धकत्वाददोष इत्यपि वदन्ति।]

❀ काशिकानन्दी ❀

वाच्यम्। तावत्तन्तुपर्याप्तसंख्यात्वेन हेतुनास्वीकारेऽपि तत्तत्संख्याव्यक्तित्वेन हेतुताया वारयितुमशक्यत्वात्। आनन्त्यभयान्न तथा हेतुतेति चेन्न। भयमात्रस्याकिंचित्करत्वाद्। अन्यथा आनन्त्यभयादेवैकसहस्रत्वव्यक्तित्वेनैव हेतुता न तु व्यक्त्यन्तरत्वेनेत्येव किं न ब्रूयाः।

नन्वेवं प्रागभावस्यातिरिक्तस्य सिद्धावपि तस्यापि संख्याव्यक्तिभिः सह कुतो न विनिगमनाविरहः, कार्यकारणभावानन्त्यभयमात्रस्याकिंचित्करताया उक्तेरत आह—धर्मिग्राहकेति। तावत्पर्यन्तं हि देवदत्तभ्रातृतनया देवदत्तधने ममाधिकृतिर्ममाधिकृतिरिति विवदन्ते यावद्देवदत्तस्य साक्षादङ्गभूर्न भवति तद्वदिति भावः। एवं सिद्धस्यापि कारणतया वस्तुनः अभावत्वे सप्रतियोगिकत्वे च प्रमाणं चिन्त्यम्। तादात्म्येन कार्योत्पादे प्रतियोगित्वसम्बन्धेन प्रागभावस्य कारणतास्वीकारे तत्पटानधिकरणतन्तुषु तत्पटोत्पादस्यावारणादिति विभावनीयम्।

चतुर्थेति। प्रथममपेक्षाबुद्धिः ततो द्वित्वोत्पत्तिः ततो द्वित्वनिर्विकल्पकं ततोऽपेक्षाबुद्धिनाश इति क्रमः। ध्वंसः स्यादिति। इष्टापत्तिस्तु न। द्वित्वनिर्विकल्पककालेऽपेक्षाबुद्धिध्वंसे तज्जन्यद्वित्वस्यापि नाशाच्चतुर्थक्षणे तत्सविकल्पकप्रत्यक्षानुपपत्तेः। प्रत्यक्षं प्रति कार्यकालवृत्तितया विषयस्य हेतुत्वोपगमात्। अपसिद्धान्तापत्तेश्च। द्वित्वप्रत्यक्षेति। द्वित्वनिर्विकल्पकप्रत्यक्षेत्यर्थः। वाच्यमिति। तथा च तृतीयक्षणे द्वित्वनिर्विकल्पकोत्पादेन तत्पूर्वक्षणे तत्सामग्रीरूपप्रतिबन्धकसद्भावादेव न द्वित्वनिर्विकल्पककालेऽपेक्षाबुद्धिनाश इति भावः। न स्यादिति। प्रागभावानुपगमेन तदितरनिखिलकारणस्य तदानीं सद्भावादिति भावः। न च प्रतिबन्धकीभूतकार्यस्य द्वित्वप्रत्यक्षकाले अभावविरहात् कथं सामग्रीसमवधानं तदेति वाच्यम्। कार्यादेः प्रतिबन्धकत्वविरहेऽपि उत्पन्नपुनरुत्पादाऽप्रसक्तेः प्रागुपपादितत्वात्। तदाह—चक्षुरिति। तदभावस्यैव=द्वित्वनिर्विकल्पकप्रागभावस्यैव। वदन्तीति। अत्रारुचिबीजन्तु योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमेन प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिस्ततो द्वित्वनिर्विकल्पकमितिक्रमे अपेक्षाबुद्धेस्तृतीयक्षणनाशप्रयोजकीभूतविशेषगुणान्तरस्य द्वितीयक्षणे विरहादेव तृतीयक्षणे न तन्नाशापत्तिरिति तदर्थं प्रागभावस्वीकारो विफलः। न च योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नविशेषगुणनाश्यत्वनियमोपगमे सुषुप्तिप्राक्कालोत्पन्नज्ञानादेरविनाशप्रसङ्ग इति वाच्यम्। तत्र गत्यन्तरविरहेणा-

❀ दीधितिः ❀

एतेन त्रित्वाद्युत्पत्तिव्यवस्थापितेति ।

❀ जागदीशी ❀

समवायिनो द्रव्यस्य असमवायिकारणानामेकत्वानां निमित्तकारणस्य चापेक्षाबुद्धेरविशेषात् क्वचिदेव तत्तत्त्रित्वादिकं जायते क्वचिन्नेति नियमो न स्यादतो यावति तत्तत्त्रित्वादिप्रागभावः तावत्येव तत्तत्त्रित्वाद्युत्पत्तिरिति तत्तत्त्रित्वाद्युत्पत्तिनियामकतयैव प्रागभावसिद्धिरित्याचार्यमतं निरस्यति एतेनेति । कस्यचित्समवायिनः तदेकत्वस्य वा तत्र विशिष्य हेतुताध्रौव्ये तद्विरहादेवान्यत्र तत्त्रित्वाद्युत्पत्त्यसंभवे प्रागभावे मानाभावेनेत्यर्थः । द्वित्व-

❀ काशिकानन्दी ❀

दृष्टविशेषस्य दोषविशेषस्य वा तन्नाशकत्वस्वीकारेऽपि क्षत्यभावात् । द्वित्वनिर्विकल्पकप्रागभावस्य अपेक्षाबुद्धिनाशप्रतिबन्धकत्वापेक्षया द्वित्वादिनिर्विकल्पकस्य विशिष्यापेक्षाबुद्धिनाशहेतुत्वोपगमेनैवोपपत्तिसंभवे प्रागभावसिद्ध्यसंभवाच्चेति । नव्यास्त्वित्यादिवदन्तीत्यन्तः क्षेपः ।

**समवायिनो द्रव्यस्येति** । तत्तत्त्रित्वादिसमवायिकारणस्य द्रव्यत्वेन द्रव्यस्येत्यर्थः । अविशेषादिति सम्बन्धः । **असमवायिकारणानामेकत्वानामिति** । अस्याप्यविशेषादित्यनेन सम्बन्धः । **निमित्तकारणस्य**=तत्तत्त्रित्वादिनिमित्तकारणस्य । **अविशेषादिति** । यत्रोत्तरं तत्तत्त्रित्वाद्युत्पत्तिस्तत्र तदन्यत्र च निरुक्तकारणानामविशेषादित्यर्थः । **कस्यचिदिति** । एकस्येति शेषः । **उत्पत्तिप्रसङ्गेनेति** । कारणसमवधानादिति भावः । **तदेकत्वस्य**=चरमसमवायिगतैकत्वस्य । **तत्र**=तत्तत्त्रित्वादौ । **विशिष्येति** । स्वाश्रयानुयोगिकसमवायेन तत्तत्त्रित्वादिकं प्रतीति यावत् । **तद्विरहादेव**=चरमैकत्वादिविरहादेव । **अन्यत्र**=तत्त्रित्वानधिकरणद्रव्ये । **मानाभावेनेत्यर्थ इति** । न च यत्र क्रमेणैकत्वादीनामुत्पत्तिस्तत्र तत्त्रित्वादिकं प्रति चरमतदेकत्वेन कारणतया तद्विरहेणापरत्र द्रव्यान्तरे तत्त्रित्वोत्पत्तिवारणसंभवेऽपि तस्मिन्नेव द्रव्ये कालान्तरभावित्रित्वं तदानीमेव कुतो नोत्पद्यते एकत्वस्य बुद्धिभेदेनाभेदात् कालान्तरभावि त्रित्वं प्रत्यपि तस्यैव हेतुत्वादिति वाच्यम् । प्रागभावमङ्गीकुर्वतां मतेऽपि कालान्तरभावित्रित्वप्रागभावस्य तदानीं सत्त्वेन तदुत्पत्तेर्दुर्वारतया तत्तदपेक्षाबुद्धित्वेन विशिष्य कारणताया अवश्यवक्तव्यतया तत एवास्माकमपि दोषवारणसंभवात् ।

इदन्तु बोध्यम् । यत्र प्रथमम् अयमेकः (१) अयमेकः (२) अयमेकः (३) अयमेकः (४) इत्याद्याकारकसमूहालम्बनात्मकापेक्षाबुद्धिः तत्रोत्तरक्षणे एकं परित्यज्य शेषेषु इमे त्रय इति चतुर्षु च इमे चत्वार इत्याकारकप्रत्यक्षं तत्र तादृशत्रित्वं चतुर्थेऽपि विसृष्टे कुतो नोत्पद्यते । द्रव्याणां प्रागुत्पन्नतया एकत्वादिकारणसमुदायस्य तदपेक्षाबुद्धेश्च सत्त्वात् । तथा च तत्र चतुर्थे तादृशत्रित्वप्रागभावो नास्तीत्यत एव न तत्र त्रित्वोत्पत्तिरिति वक्तव्यमत आचार्यमतं युक्तमेवेति ।

## ❀ जागदीशी ❀

स्थलेऽतिरिक्तप्रागभावधर्मिणः, तत्रानन्यथासिद्धत्वनियतपूर्ववर्त्तित्वयोश्च कल्पनामपेक्ष्य समवायिनश्चरमैकत्वस्य वाऽनन्यथासिद्धत्वकल्पनं लघीय इति द्वित्वानुरोधान्न प्रागभावः सिद्ध्यतीत्यतस्त्रित्वपर्यन्तानुसरणम्।

केचित्तु तत्त्वज्ञानिनः शुकादेः सत्यामपि विहितनिषिद्धक्रियायां धर्माधर्मयोरनुत्पादात्तज्जनकतया तत्त्वज्ञानप्रागभावः सिद्ध्यति। न चोत्तरत्रऽपि तत्त्वज्ञाने तादृशज्ञानान्तरप्रागभावसत्त्वात्तदानीं धर्माद्युत्पत्तिप्रसङ्गः। समानकालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तत्त्वज्ञानशून्यत्वेन प्राग-

## ❀ काशिकानन्दी ❀

द्वित्वाद्युत्पत्त्यनुरोधेनैव प्रागभावः कुतो न साधितः त्रित्वादिपर्यन्तं किमर्थमित्याशङ्कां समाधत्ते—द्वित्वस्थले इति। तत्र=अतिरिक्ते प्रागभावे। समवायिनः=समवायिकारणस्य द्रव्यद्वयस्य। अयमर्थः—द्वित्वकारणतया प्रागभावसिद्धिर्न भवति। प्रागभावः, तत्रानन्यथासिद्धत्वं, नियतपूर्ववर्त्तित्वं च तथा सति कल्पनीयं भवति। प्रागभावविरहे च द्रव्यद्वयस्यैव कारणत्वस्वीकारेण तत्र द्रव्यद्वयेऽनन्यथासिद्धत्वमात्रं कल्पनीयमिति लाघवम्। द्रव्यद्वये नियतपूर्ववर्त्तित्वस्य सिद्धत्वात्। धर्मिणोऽपि सिद्धत्वात्। त्रित्वस्थले तु द्रव्यत्रयेऽनन्यथासिद्धत्वं कल्पनीयम्, प्रागभावमतेऽपि प्रागभाव-तद्धर्मिकानन्यथासिद्धत्व-नियतपूर्ववर्तित्वानि कल्पनीयानीति कल्पना तुल्या। तथापि विनिगमनाविरहेण प्रागभावोऽपि सेत्स्यति। चतुष्ट्वादिस्थले तु चतुर्षु अनन्यथासिद्धत्वं कल्पनीयमिति तदपेक्षया प्रागभाववादिनः स्फुटं लाघवमिति। चरमैकत्वस्य वेति। इदं सिद्धान्तमनुसृत्य। चरमैकत्वस्य विशिष्य कारणत्वं स्वीकृत्यैव त्रित्वाद्युत्पत्तिस्थलेऽपि प्रागभावस्य निरसनीयतया द्वित्वोत्पत्तिस्थलेऽपि तत्कारणतयैव प्रागभावनिरसने द्वित्वपरित्यागे बीजाभावापत्तेः।

तज्जनकतया=धर्माधर्मजनकतया। सिद्ध्यतीति। शुकादीनां तु तत्त्वज्ञानेन तत्सामग्र्या वा तत्त्वज्ञानप्रागभावस्य नष्टतया धर्माधर्मकारणीभूतस्य तत्त्वज्ञानप्रागभावस्य विरहेणैव सत्यामपि विहितनिषिद्धक्रियायां न धर्माधर्मोत्पत्तिः। "नैनं कृताऽकृते तपतः" "नैव तस्य कृतेनार्थो नाऽकृतेनेह कश्चन" इत्यादिश्रुतिस्मृतिभ्यः। कृतं नाम विहितकर्म। अकृतं नाम निषिद्धकर्म। तादृशज्ञानान्तरप्रागभावसत्त्वात्=तत्त्वज्ञानान्तरप्रागभावसत्त्वात्। ज्ञानस्य त्रिक्षणवृत्तिध्वंसप्रतियोगितया नैकं तत्त्वज्ञानं मोक्षपर्यन्तम्। तथा च एकस्मिँस्तत्त्वज्ञाने नष्टे तत्त्वज्ञानान्तरं शुकादीनामुत्पद्यत एवेति तत्त्वज्ञानकालेऽपि तत्त्वज्ञानप्रागभावो वर्त्तत इति तत एव धर्माधर्माद्युत्पत्तिदुर्वारेत्यर्थः। समाधत्ते—समानकालावच्छिन्नेति। तथा च तत्त्वज्ञानकाले तत्त्वज्ञानान्तरप्रागभावसत्त्वेऽपि तादृशप्रागभावो नोक्तसम्बन्धेन तत्त्वज्ञानशून्यत्वविशिष्ट इति न तादृशप्रागभावस्य धर्माधर्मादिजनकत्वमिति भावः। एकात्मवृत्तित्वसम्बन्धेन तत्त्वज्ञानस्य तत्त्वज्ञानानुत्पत्तिकालेऽपि तत्त्वज्ञानप्रागभावे सत्त्वादस्माकमपि धर्माधर्माद्युत्पत्तिर्न स्यादिति—समानकालावच्छिन्नेति। न चैवं शुकादीनां सुषुप्त्यादिसमये तत्त्व-

❀ काशिकानन्दी ❀

ज्ञानप्रागभावस्य तत्त्वज्ञानवैशिष्ट्याभावाद् धर्माधर्माद्युत्पत्तिः स्यादिति वाच्यम् । तदानीं विहितनिषिद्धक्रियाया विरहेणैवापत्त्यसंभवात् । न च व्युत्थितिकालेऽपि यत्किंचित्क्षणे तत्त्वज्ञानं नोत्पन्नं तदानींतनतदीयक्रियायाः फलजनकत्वं स्यादिति वाच्यम् । इष्टत्वात् । न चैवं मोक्षस्य दौर्लभ्यं स्यात् । तस्यापीष्टत्वात् । मनुष्याणां सहस्रेषु कस्यचिदेव मोक्षात् । अपि च पश्चादुत्पन्नतत्त्वज्ञानेनैव पूर्वं कर्मजन्यपुण्यपापविनाशः संभवति । "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे" "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते" इत्यादिश्रुतिस्मृतिभ्यः । शुकादितत्त्वज्ञानसमानकालीनत्वस्यैवास्मदादितत्त्वज्ञानप्रागभावे सत्त्वादस्मदादीनामपि विहितनिषिद्धक्रियातो धर्माधर्माद्युत्पत्तिर्न स्यादत एकात्मवृत्तित्वेति । तथा च समानकालावच्छिन्नत्वैकात्मवृत्तित्वोभयसम्बन्धेन तत्त्वज्ञानाभावविशिष्टप्रागभावस्य धर्माधर्मादिजनकत्वमिति फलितम् । भेदस्य व्याप्यवृत्तित्वे तादृशोभयसम्बन्धेन तत्त्वज्ञानस्योत्पत्स्यमानतया तत्त्वज्ञानविशिष्टान्यत्वस्य प्रागभावेऽसंभवेन धर्माधर्माद्युत्पादानापत्तेः । न च प्राथमिकतत्त्वज्ञानीयप्रागभावस्यैव निरुक्तोभयसम्बन्धेन तत्त्वज्ञानविशिष्टान्यत्वं सुलभम् । तत्त्वज्ञानतत्प्रागभावयोरेककालाऽवृत्तित्वात् । तथा च द्वितीयादितत्त्वज्ञानीयप्रागभावस्य निरुक्तोभयसम्बन्धेन तत्त्वज्ञानविशिष्टान्यत्वविरहेऽपि प्राथमिकतत्त्वज्ञानप्रागभावमादायैवास्मदादीनां धर्माधर्माद्युत्पत्तिः संभवतीति वाच्यम् । एवं सति एकवारं तत्त्वज्ञाने समुत्पन्ने पश्चान्मिथ्याज्ञानोत्पादे तत्त्वज्ञानानुत्पादे वा सत्यपि विहितकर्मादिभिर्धर्माधर्मानुत्पादापत्तेः प्राथमिकतत्त्वज्ञानप्रागभावस्य नष्टत्वात् पाश्चात्यतत्त्वज्ञानीयप्रागभावानां तत्त्वज्ञानविशिष्टान्यत्वविरहात् । यदि च "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतिबोधितश्रवणमननपूर्वकनिरन्तराभ्यासात्मकनिदिध्यासनजन्यात्मविषयकविलक्षणतत्त्वदर्शनस्यैव तत्त्वज्ञानपदवाच्यतया तदुत्तरं च "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति श्रुतिप्रामाण्येन मिथ्याज्ञानस्य तत्प्रयोजककर्मणश्च विनाशेन पुनर्न मिथ्याज्ञानोत्पत्तिरिति एकवारतत्त्वज्ञानानन्तरं विहितनिषिद्धक्रियादिभिः फलं नोत्पद्यत एवेत्युच्यते तदा तु निरुक्तोभयसम्बन्धेन तत्त्वज्ञानविशिष्टान्यत्वप्रवेशोऽपि कर्तुं शक्यः । एवं च शुकादीनां यत्किंचित्क्षणे तत्त्वज्ञानविरहेऽपि तदानींतनक्रियाया न धर्माधर्मजनकत्वमपीति विभावनीयम् ।

ननु तत्त्वज्ञानसामान्यप्रागभाव एव निवेश्यतां किं तत्त्वज्ञानाभावविशिष्टतत्त्वज्ञानप्रागभावस्य धर्मादिकारणत्वकल्पनेन । एकस्मिँस्तत्त्वज्ञाने उत्पन्ने तत्त्वज्ञानसामान्यप्रागभावस्य विरहादेव पुनर्धर्माद्युत्पत्त्यसंभवादिति चेन्न । पुरुषान्तरीयतत्त्वज्ञानसाधारणतत्त्वज्ञानसामान्यप्रागभावस्य कुत्राप्यसंभवात् । ध्वंसप्रागभावीयप्रतियोगितयोर्धर्मानवच्छिन्नत्वाच्च । एतेन तत्पुरुषीयतत्त्वज्ञानत्वावच्छिन्नप्रागभावस्य तदीयधर्माधर्मादिजनकत्वोक्त्या नोक्तदोषप्रसरः । तदीयतत्त्वज्ञानत्वावच्छिन्नप्रागभावस्य तदीयैकतत्त्वज्ञानोत्तरमसंभवात् तत्पूर्वं च तत्संभवादित्यपि निरस्तम् । किं च पुरुषभेदेन कार्यकारणभावानन्त्यम् । अस्माकं तु समवायेन धर्माधर्मौ प्रति स्वसमानकालीनत्वस्वाधिकरणात्मवृत्तित्वोभयसम्बन्धेन तत्त्व-

## ❀ जागदीशी ❀

भावस्य विशेषणीयत्वात्। न चैवं निरुक्तप्रत्यासत्त्या तत्त्वज्ञानाभावविशिष्टप्रागभावत्वेनैव हेतुत्वमुपेयम्। तत्त्वधीप्रागभावत्वप्रवेशे गौरवात्। तथाचाऽऽद्यतत्त्वज्ञानकालोत्पन्नात्मगुणान्तरप्रागभावानामपि हेतुत्वापत्तिरिति वाच्यम्। तादृप्येण हेतुतायामिष्टत्वात्। न चोक्तक्रमेण तत्त्वधीप्रागभावस्य हेतुतामपेक्ष्य लाघवाद् मिथ्याज्ञानजन्यवासनाया एव धर्मादिहेतुत्वं युक्तमिति वाच्यम्। आत्मधर्मिकगौरत्वस्थूलत्वादिप्रकारकत्वलक्षणस्य मिथ्याज्ञानवासनात्वस्य नानात्वेन गुरुत्वेन च तादृप्येण धर्माद्यजनकत्वात्। न

## ❀ काशिकानन्दी ❀

ज्ञानविशिष्टान्यतत्त्वज्ञानप्रागभावत्वेन स्वरूपेण कारणतया न कार्यकारणभावानन्त्यमिति ध्येयम्।

निरुक्तप्रत्यासत्त्या = समानकालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन। तत्त्वज्ञानाभावविशिष्टप्रागभावत्वेनैवेति। न च तत्त्वज्ञानाभावविशिष्टाभावत्वेनैव कारणत्वमास्ताम्। किं प्रागभावत्वेनापि तन्निवेशेन। एवं च प्रागभावसिद्धिरपि दुर्लभेति वाच्यम्। अधिकरणभेदेनाभावभेदविरहेण अस्मदादिनिष्ठाभावस्य शुकादिनिष्ठाभावस्य चैकतया अस्मदादौ तत्त्वज्ञानविरहविशिष्टाघटाभावादेः शुकादावपि सत्त्वेन तेषामपि धर्माधर्माद्युत्पादापत्तेः। किं च विनिगमनाविरहेण तत्त्वज्ञानाभावविशिष्टगुणादीनामपि कारणत्वप्रसक्तिः। अस्माकं तु धर्मिग्राहकमानेन कारणत्वेनैव प्रागभावसिद्धिरिति नेतरैर्विनिगमनाविरहप्रसक्तिः किं च पुत्रादिकृतवृषोत्सर्गात्परमनिर्वाणं प्राप्तस्य धर्माद्युत्पादापत्तिः। एतेन तत्त्वज्ञानाभावस्यैककारणत्त्वमस्त्वित्यपि प्रत्युक्तम्। गौरवादिति। प्रतियोगितासम्बन्धेन तत्त्वज्ञानविशिष्टप्रागभावत्वस्यैव तत्त्वज्ञानप्रागभावत्वस्वरूपत्त्वादिति भावः। आद्यतत्त्वज्ञानकालोत्पन्नेति। द्वितीयादितत्त्वज्ञानकालोत्पन्नगुणान्तरप्रागभावस्य तत्त्वज्ञानाभावविशिष्टत्वविरहात् तत्त्वज्ञानविशिष्टान्यत्वविरहाद्वा न तस्य कारणत्वप्रसक्तिरिति सूचयितुमाद्येति। हेतुत्वापत्तिः = धर्माधर्मजनकत्वापत्तिः। तादृप्येण = तत्त्वज्ञानाभावविशिष्टप्रागभावत्वेन रूपेण। हेतुतायां = धर्मादिहेतुतायाम्। लाघवादिति। अतिरिक्तप्रागभावात्मकधर्मिकल्पनाऽभावप्रयुक्तलाघवादित्यर्थः। मिथ्याज्ञानजन्यवासनाया इति। न च मिथ्याज्ञानस्यैव हेतुत्वमास्तां किं मिथ्याज्ञानजन्यवासनाया हेतुत्वेनेति वाच्यम्। घटादिविषयकयथार्थज्ञानकालीनविहितादिकर्मणां धर्माद्यजनकत्वापत्तेः। नैयायिकमते घटादिविषयकज्ञानस्य यथार्थस्य मिथ्याज्ञानत्वविरहेण तदानीं धर्मादिजनकमिथ्याज्ञानविरहात्। तत्त्वज्ञानानन्तरं तु मिथ्याज्ञानजन्यवासना अपि नश्यन्त्येव। नातस्तत्त्वज्ञानोत्तरमपि धर्माद्युत्पादापत्तिः। न च तत्त्वज्ञानोत्तरमपि गौरमात्मानमवेदिषं रज्जुं सर्पमवेदिषमित्यादिस्मरणदर्शनाद् मिथ्याज्ञानजन्यवासना तदानीमपि तिष्ठतीति वाच्यम्। तादृशस्मरणस्य मिथ्याज्ञानविषयकानुव्यवसायजन्यवासनाजन्यत्वात्। सर्पत्वादिभानस्य तु प्रागनुभूतयथार्थसर्पादिविषयकज्ञानजन्यवासनयाप्युपपत्तेः। गुरुत्वेन चेति।

❀ जागदीशी ❀

चोक्तक्रमेण तत्त्वज्ञानत्वमपि आत्मधर्मिकदेहान्यत्वादिप्रकारकत्वमेवेति तद्वच्छिन्नशून्यप्रागभावत्वेनापि हेतुत्वेऽननुगमो गौरवं चेति वाच्यम् । मानसत्वव्याप्यस्य मुक्तिजनकतावच्छेदकवैजात्यस्यैव तत्त्वज्ञानपदेनोपलक्षणात् । न च मिथ्याज्ञानजन्यवासनाया अपि धर्मादिजनकत्वं भावनात्वव्याप्यवैजात्यविशेषेणैव वक्तव्यमतो न गौरवमिति वाच्यम् । मिथ्याज्ञानोत्तरं तादृशवासनोत्पत्तिदशायामपि धर्माद्युत्पादाद् भावनात्वव्याप्यवैजात्येन हेतुत्वाऽसंभवादित्याहुः । तेषां धर्माधर्मोत्पादनियामकत्वेन वस्त्वन्तरसिद्धावपि तत्र तत्त्वज्ञानप्रागभावत्वादिसिद्धौ प्रमाणमनुचिन्तनीयम् ।

❀ काशिकानन्दी ❀

मिथ्याज्ञानजन्यवासनात्वस्य जन्यत्वघटिततया गुरुत्वम् । वासनात्वेन हेतुत्वे तत्त्वज्ञानोत्तरमपि तत्त्वज्ञानजनितवासनासंभवेन धर्माद्युत्पादापत्तेरिति भावः । देहान्यत्वादिप्रकारकत्वमिति । अहं न देहः न चक्षुरित्याद्याकारकज्ञानत्वमित्यर्थः । अननुगममात्रस्योभयमतसाधारणत्वादाह – गौरवं चेति । अतिरिक्तप्रागभावकल्पनापातप्रयुक्तगौरवं चेत्यर्थः । आत्मविषयकचाक्षुषाद्यसंभवादाह — मानसत्वव्याप्येति । तत्त्वज्ञानत्वस्य जातित्वसाधकप्रमाणेन वैजात्यं विशेषयति — मुक्तिजनकतावच्छेदकेति । उपलक्षणात् = प्रतिपादनात् । अत एवा"त्मावारे द्रष्टव्य" इत्यादिश्रुतिसार्थक्यमपि । अन्यथा अहं जानामि अहमिच्छामीत्येवमात्मविषयकसाक्षात्कारस्याधुनापि सत्त्वात्तदादेशानर्थक्यं स्यात् । तथा च तत्र दृशिधातोर्विलक्षणज्ञानमर्थः । तच्च श्रवणमनननिदिध्यासनसाध्यं विजातीयमेवेति भावः । हेतुत्वाऽसंभवादिति । कार्यनियतपूर्ववर्त्तिन एव कारणतया मिथ्याज्ञानाव्यवहितोत्तरजायमानधर्मादिकं प्रति तत्समकालोत्पद्यमानवासनाया हेतुत्वासंभवादित्यर्थः । आहुरित्यनेनारुचिः सूचिता । तद्बीजन्तु मिथ्याज्ञानोत्तरं क्षणविलम्बेन धर्माद्युत्पादेऽपि क्षतिविरहः । न च मिथ्याज्ञानाव्यवहितोत्तरक्षणध्वंसप्रतियोगिकर्मणः सफलत्वं न स्यात् । तृतीयक्षणे फलोत्पादं प्रति तस्य हेतुत्वाऽसंभवादिति वाच्यम् । एवमपि पूर्वकालोत्पन्नमिथ्याज्ञानजन्यवासनाया एव तदानीं धर्मादिजनकत्वं संभवति । जननमरणधारानादितया तत्पूर्वतत्पूर्वादिक्रमेणानवस्थायां दोषाभावात् । अत एव मिथ्याज्ञानजन्यवासनात्वेन हेतुत्वमभिहितम् । इतरथा मिथ्याज्ञानत्वेनैव हेतुत्वं ब्रूयात् । किं च महाप्रलयानभ्युपगन्तृमतेऽनन्तकालपर्यन्तस्थायिनामपि प्राणिनां स्वीकर्त्तव्यतया तेषु तत्त्वज्ञानप्रागभावसत्त्वे मानभावान्मिथ्याज्ञानजन्यवासनात्ववैजात्येनैव धर्मादिहेतुत्वं वक्तव्यम् । किं च उक्तपत्यासत्त्या तत्त्वज्ञानाभावविशिष्टज्ञानत्वेनैव कारणत्वमस्तु । अज्ञानपूर्वकं कृतानां बहूनां कर्मणां धर्माधर्माद्यजनकत्वस्य प्रसिद्धतया ज्ञाने धर्माधर्मादिजनकत्वसिद्धौ निरुक्तज्ञानत्वेन कारणतायाः कल्पयितुं शक्यत्वात् । यत्किञ्ज्ञानदशायामेव गङ्गास्नानादितोऽपि धर्माद्युत्पत्तिः । न तु मूर्च्छितस्य गङ्गायां स्नावनेन तदुत्पत्तिः । अत एव परमनिर्वाणोत्तरं न पुत्रादिकृतवृषोत्सर्गात् पितॄणां धर्माद्युत्पत्तिः । अन्यथा तत्त्वज्ञानाभावविशिष्टप्रागभावत्वेन हेतुत्वे यत्किञ्चिद्योगि-

❀ दीधितिः ❀

परे पुनरिहेदानीं घटध्वंस इतिवदिहेदानीं घटप्रागभाव इति साधारणमेव लोकानां प्रत्यक्षं कल्पयन्तस्तद्बलेन प्रागभावं सामान्यलक्षणां च व्यवस्थापयन्तो वर्णयन्तिः—"अव्याप्यवृत्तेः कार्यस्य द्वितीयक्षणे,

❀ जागदीशी ❀

ननूक्तक्रमेण सिद्धस्यापि प्रागभावस्य प्रतियोगिहेतुत्वं नागतमत आह वर्णयन्ति-अव्याप्यवृत्तेरित्यादि। द्वितीयक्षणे इति। उत्पत्तिवारणायेत्यन्वयः। तथा चाग्रावच्छेदेनोत्पन्नायाः संयोगव्यक्तेः द्वितीयादिक्षणे पुनरुत्पादः स्यात्। मूलाद्यवच्छेदेन तदभावस्य सत्त्वात्, कार्यस्य प्रतिबन्धकत्वाऽसंभवात्। अग्रावच्छिन्नतत्तत्संयोगं प्रति अग्रावच्छेद्यत्वविशिष्टतत्तत्संयोगाभावत्वेन हेतुतायां च गौरवात्, तत्तत्संयोगं प्रति तत्तत्संयोगप्रागभावत्वेनैव हेतुत्वं युक्तमिति भावः। ननु घटादिसंयोगसामान्यं प्रत्येव समानावच्छेदकत्वप्रत्यासत्त्या घटादि-

❀ काशिकानन्दी ❀

प्रभृत्यपेक्षाबुद्धिजन्यद्वित्वादिप्रागभावस्य तत्तत्पवनपरमाण्वादिसंयोगादिप्रागभावस्य च निर्वाणमुक्तेऽपि सत्त्वात्तदुत्पादापत्तेः। तत्त्वज्ञानविशिष्टान्यप्रागभावत्वेन कारणत्वमिति मतेऽपि तत्त्वज्ञानध्वंसाभावस्यैव धर्मादिजनकत्वं युक्तम्। प्राथमिकतत्त्वज्ञानकालोत्पन्नधर्मादेर्द्वितीयतत्त्वज्ञानेनैव नाशसंभवात्। तत्त्वज्ञानाभावस्यापि धर्मादिकारणत्वाच्च। तावतापि प्रागभावतद्धर्मिकानन्यथासिद्धत्वनियतपूर्ववर्त्तित्वानां कल्पनामपेक्ष्य क्लृप्तयोरनन्यथासिद्धत्वमात्रकल्पने लाघवात्।

उक्तक्रमेण=घटप्रागभावइत्यादिलौकिकप्रत्यक्षबलेन। नागतमिति। किन्तु घटाभावत्वेनैव कारणत्वं, घटे उत्पन्ने सति सामग्र्यास्तदानीमपि वर्त्तमानतया पुनर्घटोत्पत्तिप्रसङ्गेन प्रथमघटस्य प्रतिबन्धकत्वावश्यकत्वादित्यभिमानः।

तदभावस्य=संयोगाभावस्य। तत्तत्संयोगं प्रति=शाखाद्यवच्छेदेन तत्तद्गगनादिसंयोगं प्रति। तेन श्येनादिसंयोगं प्रति कार्यकालवृत्तितया तत्तत्क्रियादेर्हेतुत्वोपगमेनैवोपपत्तौ प्रागभावत्वेन हेतुत्वाभावे दोषाऽप्रसक्तावपि न क्षतिः। गगनादिसंयोगस्य वृक्षाद्युत्पत्तिद्वितीयक्षणे एवोत्पद्यमानतया तत्र क्रियायाः कारणत्वविरहात्। वस्तुतस्तु कार्यकालवृत्तितया तत्तत्क्रियादेर्हेतुत्वेन उत्पन्नपुनरुत्पादवारणेऽपि विनिगमनाविरहेण प्रत्यक्षसिद्धस्य तत्तत्संयोगप्रागभावस्यापि हेतुत्वं दुरपह्नवमेवेति कार्यकालवृत्तितया तत्तत्क्रियादेर्हेतुत्वमेवागतिकगतितयाऽसिद्धमिति ध्येयम्।

समानावच्छेदकत्वप्रत्यासत्त्येति। अवच्छेदकतासम्बन्धेन घटादिसंयोगं प्रति अवच्छेदकतासम्बन्धेन तदभावः कारणम्। मूलाद्यवच्छेदेन तत्तत्संयोगाभावस्य सत्त्वेऽपि अवच्छेदकतासम्बन्धेन शाखायां संयोगाभावविरहादेव न अवच्छेदकतासम्बन्धेन तत्र संयोगोत्पत्तिः।

❀ दीधितिः ❀

**धारावहनस्थले च प्राथमिकनिर्विकल्पकस्य चतुर्थक्षणे उत्पत्तिवारणाय**

❀ जागदीशी ❀

संयोगसामान्याभावस्य हेतुत्वं वाच्यमतो न गौरवम्। न चैवमपि प्रत्यक्षसिद्धं प्रागभावमादाय विनिगमनाविरहः। तस्य घटसंयोगप्रागभावत्वेन हेतुत्वे संयोगान्तरप्रागभावमादायैवोत्पन्नस्यापि तस्य पुनः प्रसङ्गात्। तद्घटसंयोगव्यक्तौ तत्तत्संयोगव्यक्तिप्रागभावत्वेन हेतुत्वे चानन्तकार्यकारणभावापत्तिगौरवस्यैव विनिगमकत्वादित्यत आह धारावहनेति। ननु तत्तत्संयोगात्य-

❀ काशिकानन्दी ❀

न चेति। विनिगमनाविरह इत्यन्वयः। तस्य=घटसंयोगप्रागभावस्य। तस्य=घटसंयोगस्य। गौरवस्यैवेति। यद्यपि घटीयसंयोगसामान्याभावस्य घटादिसंयोगं प्रति हेतुत्वोपगमेऽपि शाखावच्छेदेनैकघटसंयोगव्यक्तिसत्त्वे घटान्तरसंयोगो नोत्पद्येत। अवच्छेदकतासम्बन्धेन घटीयसंयोगसामान्याभावस्य तत्र विरहात्। तत्तद्घटीयसंयोगाभावस्य हेतुत्वे चानन्तकार्यकारणभावस्तुल्य एव। तथापि निरवच्छिन्नावच्छेदकतासम्बन्धेन घटादिसंयोगसामान्याभावस्य हेतुत्वोक्त्या न दोषः। शाखादीनां न निरवच्छिन्नावच्छेदकत्वम्। तत्तदुपशाखयावच्छेदात्। उपशाखाया अपि अणुकादिभिरवच्छेदादिति निरवच्छिन्नावच्छेदकत्वस्य परमाणावेव लाभः। साक्षात्परम्परासाधारणं चावच्छेदकत्वमभ्युपगम्यते। एवं च यत्परमाण्ववच्छेदेन वृत्ते घटसंयोगः, न हि तत्परमाण्ववच्छेदेन घटान्तरसंयोगसंभवः। मूर्तसंयोगानां समानपरमाण्ववच्छेदेन सत्त्वास्वीकाराद्। एवं चैकस्यामेव शाखायां परमाण्वन्तरावच्छेदेन घटसंयोगसत्त्वेऽपि तत्परमाण्वच्छेदेन तत्सामान्याभावः सुलभ एवेति नानुपपत्तिः।

यद्यपि चैवमपि शाखावच्छेदेनोत्पद्यमानः कपिसंयोगो मूलावच्छेदेनाप्युत्पद्येत। संयोगाभावस्याऽविशिष्टत्वात्। तत्तसंयोगं प्रति तत्तदवच्छेदकतासम्बन्धेन संयोगाभावस्य हेतुत्वे च गौरवं स्फुटम्। प्रागभाववादिनां पुनः प्रागभावस्य प्रादेशिकतया वक्ष्यमाणतया अवच्छेदकतासम्बन्धेन तत्तसंयोगं प्रति अवच्छेदकतासम्बन्धेन तत्प्रागभावस्य कारणतया न दोषप्रसक्तिः। न ह्यत्यन्ताभावः संयोगोत्पत्तेः प्राक् किंचिद्देशमात्रवृत्तिः।

तथापि तत्तत्संयोगं प्रति तादात्म्येन तत्तच्छाखामूलादेरपि कारणत्वान्न दोषः। न चैवमनन्तकार्यकारणभावस्य तौल्याद् अवच्छेदकतासम्बन्धेन प्रागभावस्यैव हेतुत्वं सिद्ध्येदिति वाच्यम्। शाखावच्छिन्नत्वावच्छिन्नं प्रति तादात्म्येन शाखायाः कारणत्वमित्येवं कार्यकारणभावकल्पने लाघवसत्त्वात्। अनन्तानां घटगगनादिसंयोगव्यक्तित्वानां कार्यतावच्छेदकत्वे गौरवात्। एतेन वृक्षगतश्येनादिसंयोगस्यावच्छेदकतासम्बन्धेन शाखादाविव श्येनचरणादावपि सत्त्वाद् व्यभिचार इति निरस्तम्। शाखानिष्ठावच्छेदकतायाः कार्यतावच्छेदकत्वसंभवाच्चेति दिक्।

❀ दीधितिः ❀

एकावच्छेदादिना कार्याभावस्य, उत्तरज्ञानाभावस्य च कारणत्वं

❀ जागदीशी ❀

न्ताभावस्य निरवच्छिन्नविशेषणतयैव तत्तत्संयोगं प्रति हेतुत्वं वाच्यमतः स्थलान्तरमनुसरति धारावहनेतीत्यप्याहुः।

धारावहनेत्युक्त्या जनकीभूतात्ममनःसंयोगादिव्यक्तीनां चतुर्थक्षणे सत्त्वमावेदितम्। तेन तत्तत्कारणव्यक्त्यभावप्रयुक्तायाः कार्यानुत्पत्तेर्नावसरः। सविकल्पकस्य स्वकारणीभूततत्तद्विशेषणज्ञानव्यक्त्यभावादेव चतुर्थक्षणे नोत्पादः संभवतीत्यतो निर्विकल्पकपर्यन्तानुसरणम्। आंशिकनिर्विकल्पकस्यापि विशेषणज्ञानसापेक्षत्वात् प्राथमिकेति। तेन सप्रकारान्यज्ञानलाभः। द्वितीयतृतीयक्षणयोः स्वात्मककार्येण प्रतिबन्धसंभवाच्चतुर्थक्षण इत्युक्तम् न च तत्तन्निर्विकल्पकं प्रति तत्तत्समकालोत्पन्नध्वंसविशेषस्यैव प्रतिबन्धकत्वं

❀ काशिकानन्दी ❀

निरवच्छिन्नविशेषणतयैवेति। संयोगाभावस्तु वृत्त्यवृत्तिर्न निरवच्छिन्नवृत्तिक इति नोत्पन्नपुनरुत्पादः। इत्यप्याहुरिति। अत्रारुचिबीजं तु तत्तत्संयोगात्यन्ताभावस्य निरवच्छिन्नविशेषणतया तत्तत्संयोगं प्रति हेतुत्वेऽनन्तकार्यकारणभावप्रसक्तिरिति विनिगमनाविरहालाघवाच्च प्रागभावस्य हेतुत्वं स्यात्। घटादिसंयोगत्वावच्छिन्नं प्रति निरवच्छिन्नविशेषणतया घटादिसंयोगत्वावच्छिन्नाभावत्वेन हेतुत्वे एकदेशावच्छेदेनावयविनि घटसंयोगोत्पादानन्तरं देशान्तरावच्छेदेन तस्मिन् घटान्तरसंयोगो नोत्पद्येतेति। स्वप्रागभावातिरिक्तनिखिलकारणानां तृतीयक्षणे सत्त्वमावेदयितुं धारावहनपर्यन्तमित्याह—धारेति। चतुर्थक्षणे संयोगान्तरोत्पादे मानाभाव इति भावः।

तत्तद्विशेषणज्ञानव्यक्त्यभावादेवेति। धारावहनस्थले पञ्चमक्षणे उत्पद्यमानसविकल्पकस्य द्वितीयक्षणे उत्पादवारणाय प्रागभाववादिभिरपि तत्तद्विशेषणज्ञानव्यक्तित्वेन तत्तद्विशिष्टज्ञानत्वेन हेतुत्वं वाच्यमिति द्वितीयक्षणोत्पन्नसविकल्पकस्य चतुर्थक्षणे नोत्पादापत्तिः। तत्कारणीभूतप्राथमिकविशेषणज्ञानव्यक्तिविरहादिति भावः।

आंशिकेति। यत्र प्रथमं निर्विकल्पकं ततः सविकल्पकनिर्विकल्पकोभयात्मकसमूहालम्बनं तादृशनिर्विकल्पकस्य प्रथमनिर्विकल्पकीयचतुर्थक्षणे नापत्तिः। तादृशसमूहालम्बनकारणीभूततत्तद्विशेषणज्ञानविरहादिति भावः। स्वात्मककार्येणेति। प्रथमनिर्विकल्पकस्य प्रथमक्षणे द्वितीयक्षणे च वर्त्तमानतया तस्यैव प्रतिबन्धकत्वं संभवति। तृतीयक्षणीयज्ञाने द्वितीयक्षणीयस्यापि प्रतिबन्धकत्वसंभवाद्। तत्तत्समकालेति। तत्त-

(टि०) दीधितौ— एकावच्छेदादिना कार्याभावस्येति। इदं स्वद्वितीयतृतीयक्षणादौ स्वोत्पत्तिवारणाय प्रागुक्तदोषद्वयसमाधानम्। आद्ये शाखाद्यवच्छेदेन संयोगाद्यभावः, द्वितीये तत्तच्छरीरावच्छेदेन निर्विकल्पकाभावः स्वात्मककार्यभावः।

❀ जागदीशी ❀

तदुत्पत्तिकालपर्यन्तस्थायिद्वित्वविशेषस्य वा जनकत्वमस्तु न तु कार्याभावस्योत्तरज्ञानाभावस्य च द्वयोर्हेतुत्वमतो न गौरवमिति वाच्यम् ।

❀ काशिकानन्दी ❀

निर्विकल्पकसमकालेत्यर्थः । एवं चोत्तरत्र कदापि न तदुत्पत्तिप्रसङ्गः । ध्वंसस्यानन्तकालपर्यन्तस्थायित्वादिति भावः । नन्वेवं सति प्रतिबन्धकाभावस्य कार्यकालवृत्तितया कारणत्वोपगमेन निर्विकल्पकमेव नोत्पद्येत । स्वकालोत्पन्नध्वंसस्यैव प्रतिबन्धकीभूतस्य सत्त्वात् । न च स्वध्वंसस्यैव प्रतिबन्धकत्वमिति वाच्यम् । एवमपि द्वितीयतृतीयक्षणयोः स्वोत्पत्तेर्वारयितुमशक्यत्वात् । यद्यपि स्वजन्यकार्याभावस्य स्वहेतुत्वोक्त्या न कस्यापि दोषस्य प्रसक्तिः । द्वितीयतृतीयक्षणे स्वजन्यसविकल्पकस्यैव कार्यकालवृत्तितया प्रतिबन्धकत्वाद् । तदुत्तरं स्वध्वंसस्यैव स्वकार्यस्य स्वप्रतिबन्धकत्वसंभवः । तथापि यत्र स्वोत्पत्तिद्वितीयक्षणे स्वकार्यं किमपि नोत्पन्नं तत्र द्वितीयक्षणे स्वोत्पत्तिर्दुर्वारैवेत्याशङ्क्याह—द्वित्वविशेषस्य वा जनकत्वमिति । स्वद्वितीयादिक्षणपर्यन्तस्थायित्वे द्वितीयक्षणे पुनः स्वोत्पत्तिः स्यात्, कारणसत्त्वादित्यतः—तदुत्पत्तिकालपर्यन्तस्थायीति । इदं च कार्यकालवृत्तितया द्वित्वस्य हेतुत्वमित्यभिप्रायेण । अन्यथा स्वोत्पत्तिपर्यन्तस्थायिनोऽपि स्वद्वितीयक्षणे स्वोत्पादकत्वप्रसङ्गेन उत्पन्नपुनरुत्पादवारणं न स्यात् ।

न च स्वोत्पत्तेः प्राक् स्वोत्पत्तिकालं कस्य ध्वंसस्योत्पत्तिः पूर्वक्षणं वा कस्य द्वित्वादेरित्यनिर्णयेन व्यभिचारसन्देहेन ध्वंसाभावादेः कारणत्वकल्पनमेवासंभवि । स्वस्य स्वध्वंसस्य स्वक्षणे स्वतृतीयक्षणे चेत्पत्तेर्निर्णीततया तदभावस्य कारणत्वकल्पनं च सम्भवि तथा च कथमियमाशङ्केति वाच्यम् । स्वोत्पत्त्युत्तरमेव व्यभिचारसन्देहाभावेन कारणत्वकल्पनासंभवात् । निर्विकल्पकस्य सविकल्पकज्ञानादिकार्यानुमेयस्योत्पत्तिपूर्वं कारणतायाः केनापि निर्णेतुमशक्यत्वात् । द्वयोरिति । ननूत्तरज्ञानाभावमात्रस्य कारणत्वमास्तां किं कार्याभावस्य तथात्वकल्पनेनेति । दीधितिरपि अव्याप्यवृत्तिस्थलीयदोषवारणायैकावच्छेनेति, निर्विकल्पकस्थलीदोषवारणायोत्तरज्ञानाभावस्येतीत्येव व्याख्यायताम् । न चोत्तरज्ञानत्वं स्वाधिकरणकालध्वंसाधिकरणोत्पत्तिकज्ञानत्वम् । तथा च कार्योत्पत्तिद्वितीयादिक्षणोत्पत्तिकमेव ज्ञानं लभ्यं स्यात् । तथा च प्रथमक्षणे प्रतिबन्धकविरहाद् द्वितीयक्षणे उत्पन्नपुनरुत्पादः स्यादिति वाच्यम् । कार्यकालवृत्तितया प्रतिबन्धकत्वस्वीकारेणादोषात् । न च स्वोत्पत्तिद्वितीयक्षणे न किमपि ज्ञानमुत्पन्नं तत्र स्वस्य स्वद्वितीयक्षणे पुनरुत्पादापत्तिरिति वाच्यम् । स्वोत्पादकसामग्रीविरहादेव तत्र स्वोत्पत्त्यसंभवात् । न च तत्तत्संयोगादिदशायामेव यत्र द्वितीयक्षणे प्रतिबन्धकविशेषवशात्सविकल्पकं नोत्पन्नं किन्तु तृतीयक्षणे सविकल्पकमुत्पद्यते तत्र दोषः । येन प्रतिबन्धकविशेषेण तत्र सविकल्पकं नोत्पन्नं तदभावस्य विशिष्य निर्विकल्पकं प्रत्यपि हेतुत्वोक्त्यैव दोषवारणसंभवादिति चेत् ! सत्यम् । कार्यकालवृत्तितया

---

( टि० ) उत्तरज्ञानाभावस्येत्यत्रापि एकावच्छेदादिनेति योज्यम् । अन्यथा घटाद्यवच्छेदेन उत्तरज्ञानाभावसत्त्वेन दोषात् । अधिकमुपर्युक्तम् ।

❀ दीधितिः ❀

वाच्यम् । तथा च लाघवात् प्रागभावस्य तत्त्वं कल्प्यते । स्वभावा-

❀ जागदीशी ❀

तादृशध्वंसानां द्वित्वादीनां च बहूनां विनिगमकाभावेन तथात्वकल्पनामपेक्ष्य लाघवेनैकस्यैव तन्निर्विकल्पकप्रागभावस्य तन्निर्विकल्पकहेतुत्वेन कल्पनार्हत्वात् । अतीन्द्रियस्य निर्विकल्पकप्रागभावस्य प्रमाणान्तराऽसिद्धतया तेन सार्धं विनिगमकाभावस्य वक्तुमशक्यत्वादिति भावः ।

ननु तत्तत्संयोगप्रागभावस्य लाघवेन हेतुत्वसिद्धावपि मूलावच्छेदेन जायमानश्येनसंयोगः कुतो नाग्रावच्छेदेन जायते । स्वरूपसम्बन्धेन तत्तत्प्रागभावस्योभयावच्छेदेनाविशिष्टत्वादत आह स्वभावेत्यादि । तथा च प्रागभावस्यावच्छिन्नवृत्तितैव संयोगावच्छिन्नवृत्तितानियामिका

❀ काशिकानन्दी ❀

प्रतिबन्धकत्वमभिप्रेत्यैतद्ग्रन्थव्याख्याने एकावच्छेदादिना कार्याभावस्याव्याप्यवृत्तिकार्यं प्रति कारणत्वकथनमयुक्तं स्यात् । स्वस्यैव स्वप्रतिबन्धकत्वे स्वयमनुत्पादापत्तेः । एवं स्थिते सति उत्तरज्ञानाभावापेक्षया लाघवात् स्वध्वंसाभावस्यैव कारणत्वं युक्तम् । स्वाधिकरणकालध्वंसाधिकरणक्षणोत्पत्तिकत्वविशिष्टज्ञानत्वावच्छिन्नाभावत्वेन स्वध्वंसविशिष्टज्ञानत्वावच्छिन्नाभावत्वेन वा हेतुत्वे गौरवापत्तेः । उत्तरक्षणत्वस्योत्पत्तेर्वाऽप्रवेशे केवलोत्तरकालवृत्तित्वप्रवेशे स्थूलकालं स्वद्वितीयक्षणपर्यन्तस्थायिनमादाय पूर्वक्षणोत्पन्नज्ञानस्यापि प्रतिबन्धकत्वापत्तेः, अपेक्षाबुद्धिद्वितीयक्षणे निर्विकल्पकोत्पत्त्यङ्गीकर्तृमते तदनुपपत्तेश्चेति । स्वध्वंसविशिष्टज्ञानाभावस्य कारणत्वे स्वध्वंसस्य प्रतियोगिविशेषणतयावश्यप्रवेशे लाघवेन तदभावस्यैव कारणतौचित्यादिति ध्येयम् ।

तादृशध्वंसानां = निर्विकल्पकसमकालोत्पन्नध्वंसानाम् । तथात्वकल्पनामिति । प्रतिबन्धकत्वकल्पनां कारणत्वकल्पनां च । तादृशध्वंसानां प्रतिबन्धकत्वकल्पना द्वित्वादीनां कारणत्वकल्पनेति विवेकः । ननु प्रागभावस्यापि द्वित्वविशेषादिभिः सह कुतो न विनिगमनाविरह इत्यत आह—अतीन्द्रियस्येति । निर्विकल्पकस्यातीन्द्रियतया तत्प्रागभावोऽप्यतीन्द्रिय एव । प्रमाणान्तराऽसिद्धतयेति । इदानीं घटप्रागभाव इतिवत् निर्विकल्पकप्रागभाव इत्याकारकप्रत्यक्षाऽसंभवादिति भावः । अशक्यत्वादिति । लाघवेन कारणतया प्रागभावकल्पने धर्मिग्राहकतादृशप्रमाणेन कारणतयैव तस्य सिद्धेरिति भावः । तत्तत्प्रागभावस्य = तत्तच्छ्येनादिसंयोगप्रागभावस्य । उभयावच्छेदेन = शाखावच्छेदेन मूलावच्छेदेन च । अविशिष्टत्वात् = अविशेषात् । अवच्छिन्नवृत्तितैव = शाखामूलाद्यवच्छिन्नवृत्तितैव । संयोगावच्छिन्नवृत्तितानियामिका = संयोगस्य शाखाद्यवच्छेदेन वृत्तिताप्रयोजिका । यदवच्छेदेन प्रागभावस्तदवच्छेदेनैव संयोगाद्युत्पादो नान्यावच्छेदेनेति भावः । ननु कारणस्य अवच्छिन्नवृत्तितामात्रं

❀ दीधितिः ❀

धीन[त्व]ाच्च तत्प्रादेशिकऽत्वात् प्रदेशनियमः संयोगादीनामि"ति ।

❀ जागदीशी ❀

समानावच्छेदकत्वप्रत्यासत्त्यैव तस्य प्रतियोगिहेतुत्वादिति भावः ।

अत्र कल्पयन्त इत्यनेन साधारणप्रत्ययस्यासत्त्वमावेदितम् । वर्णयन्तीत्यनेन च निर्विकल्पकसामान्यं प्रति ज्ञानत्वेनैव प्रतिबन्धकत्वकल्पनया चतुर्थक्षणे पुनर्निर्विकल्पकाऽसंभवात्—

❀ काशिकानन्दी ❀

न कार्यस्यावच्छिन्नवृत्तित्वे प्रयोजकं, तथा सति कपालद्वयसंयोगस्यावच्छिन्नवृत्तितया घटस्याप्यवच्छिन्नवृत्तितापत्तेः अत आह—समानेति । प्रत्यासत्त्यैवेति । तथा चावच्छेदकताप्रत्यासत्त्या कार्यकारणभावस्वीकारादेव कार्यस्यावच्छिन्नवृत्तितालाभः । कपालसंयोगस्तु समवायेन घटं प्रति समवायेनैव कारणमिति न घटस्यावच्छिन्नवृत्तिताप्रसक्तिरिति भावः । तस्य = संयोगादिप्रागभावस्य । प्रतियोगिहेतुत्वात् = संयोगादिहेतुत्वात् ।

चतुर्थक्षणे निर्विकल्पकाऽसंभवादिति । स्वस्य स्वातिरिक्तस्य च निर्विकल्पकस्योत्पत्त्यसंभवादित्यर्थः । न चैवं पञ्चमक्षणे कथं विशिष्टबुद्ध्यन्तरमिति वाच्यम् । धारावाहिकस्थले चतुर्थक्षणे एव विशिष्टबुद्ध्यन्तरस्वीकारात् तस्यैव पञ्चमक्षणेऽपि सत्त्वसंभवात् । तृतीयक्षणवृत्तिविशेषणज्ञानेनैव तत्संभवात् । न च तृतीयक्षणे विशिष्टज्ञानमेवेति वाच्यम् । विशिष्टज्ञानस्यापि विशेषणविषयकत्वाऽक्षतेः । न च निर्विकल्पकं प्रति ज्ञानत्वेन प्रतिबन्धकत्वेन प्रथमं घटघटत्वयोर्निर्विकल्पकोत्तरं घटत्वविशिष्टघटविषयकबुद्ध्युत्पत्तेस्तदुत्तरक्षणे तत्काले वा निर्विकल्पकान्तराऽसंभवेन तृतीयचतुर्थपञ्चमक्षणेषु पटत्वेन पटज्ञानमपि नोत्पद्येतेति वाच्यम् । इष्टत्वात् । षष्ठक्षणे एव पटत्वप्रकारकप्रत्यक्षस्वीकारात् । पटत्वप्रकारकप्रत्यक्षं प्रति स्मृत्यादिसाधारणविशेषणज्ञानस्य हेतुत्वस्वीकारे तृतीयक्षणोत्पन्नविशेषणस्मरणेन सन्निकृष्टपटस्य पटत्वप्रकारेण चतुर्थक्षणे प्रत्यक्षसंभवाच्च । भवतु वा तन्निर्विकल्पकं प्रति स्वविषयविषयकज्ञानत्वेनैव प्रतिबन्धकत्वम् । एवमपि अतीन्द्रियतत्प्रागभावकल्पनाऽप्रसक्तिरेव । न च निर्विकल्पकं प्रति ज्ञानत्वेन निरुक्तज्ञानत्वेन वा प्रतिबन्धकत्वे स्वयं स्वप्रतिबन्धकतया तन्नोत्पद्येत । कार्यकालवृत्तितया प्रतिबन्धकाभावस्य हेतुत्वादिति वाच्यम् । सर्वत्र प्रतिबन्धकाभावस्य कार्यकालवृत्तित्वेन हेतुतायाः पक्षताप्रकरणे निरस्त-

---

( टि० ) ननु संयोगादिप्रागभावो मूलाद्यवच्छेदेनापि वर्त्तत इति शाखाद्यवच्छेदेन जायमानः संयोगो मूलेऽपि कुतो नोत्पद्यत इत्यत आह—दीधितौ तत्प्रादेशिकत्वादिति । प्रागभावस्यावच्छिन्नवृत्तित्वात् । शाखावच्छेदेन जायमानसंयोगप्रागभावस्य शाखावच्छेदेनैव वर्त्तमानत्वात् प्रदेशनियमः=शाखाद्यवच्छिन्नत्वनियम इत्यर्थः । ननु तस्यावच्छिन्नवृत्तित्वमेव कथमित्यत आह स्वभावेति । स्वभावतः एव संयोगादिप्रागभावस्याऽवच्छिन्नवृत्तिता, न तु किंचिदितराधीना तथेत्यर्थः ।

❀ दीधितिः ❀

अन्ये तु सर्वत्र तत्तत्संख्याविशेषाणां विशिष्य हेतुत्वोपगमेनै-

❀ जागदीशी ❀

-तस्य तदुत्तरज्ञानस्य च अभावद्वयं तत्र कारणं न वाच्यमित्यस्वरसः सूचितः।

तत्तत्संख्याविशेषाणामिति। सहस्रतन्तुकपटादौ चरमतन्तुसंयोगोत्प-त्तिकालीनस्य सहस्रत्वादिसंख्याविशेषस्यैवाऽन्ततः परमेश्वरीयापेक्षाबुद्धिज-न्यस्य सामानाधिकरण्यप्रत्यासत्त्या हेतुत्वाङ्गीकारेणैव स्वानधिकरणतन्तुषु तत्पटस्यानुत्पादसंभवेऽपीत्यर्थः। यस्य तन्तोर्द्वितीयक्षणे एव तन्त्वन्तरसंयोगो-त्पत्त्या तृतीयक्षणे सहस्रतन्तुकपटोत्पत्तिः तत्रैव तन्तौ व्यभिचारात् सहस्रत्वा-दिसंख्याया हेतुत्वमसंभावितम्। एकत्वान्यसंख्यामात्रस्यैव सामानाधिकरण्ये-

❀ काशिकानन्दी ❀

-त्वात्। अन्यथा सिद्ध्यभावस्य पक्षतात्वे अनुमित्यात्मकसिद्धेरेव स्वयं स्वप्रतिबन्धकता-पत्तेः। वस्तुतस्तु दीधितिकृन्मते कार्यकालवृत्तितया प्रतिबन्धकत्वमेव नास्ति मण्युत्पत्तिकाले दाहोत्पत्तिप्रसङ्गस्य मणेरिव मणिसामग्र्या अपि दाहं प्रति प्रतिबन्धकत्वस्वीकारेणैव वारणादित्यन्यत्र प्रपञ्चितम्।

तस्य=स्वात्मकनिर्विकल्पकस्य। तदुत्तरज्ञानस्य=निर्विकल्पकोत्तरज्ञानस्य। निर्विकल्पकध्वंसस्येति वा। तत्र=निर्विकल्पके। न वाच्यमिति। नन्वेवं क्रमेणात्र दोषवारणेऽपि अव्याप्यवृत्तिसंयोगादेः प्रदेशनियमाय तत्प्रागभावहेतुत्वमावश्यकम्। अत्य-न्ताभावस्य मूलाद्यवच्छेदेनापि वर्त्तमानतया शाखाद्यवच्छेदेनोत्पद्यमानस्येनादिसंयोगस्य मूलावच्छेदेनाप्युत्पादप्रसक्तेः। प्रागभावस्य तु शाखामात्रवृत्तितया समानावच्छेदकताप्रत्या-सत्त्या कार्यकारणभावे दोषाभावादिति चेन्न। अवच्छेदकतासम्बन्धेन तत्तत्संयोगं प्रति तादात्म्येन तत्तच्छाखात्वेनापि कारणतेत्यादिकस्य प्रागेव प्रपञ्चितत्वात्।

यत्तु यावदवच्छेदकेषु संयोगस्तावदवच्छेदकवृत्तिसंख्याविशेषस्य हेतुत्वकल्पनया न संयोगादीनामन्यावच्छेदादिनोत्पादप्रसक्तिरिति भट्टाचार्यैरुक्तं, तत्तुच्छम्, अपेक्षाबु-द्धिभेदेन संख्यानामानन्त्येन विनिगमनाविरहेण तावत्स्वनन्यथासिद्धत्वकल्पनापेक्षयाऽतिरि-क्तप्रागभावस्यैव कल्पनार्हत्वात्।

अन्ततः=योगिनामप्यपेक्षाबुद्धिविरहे। हेतुत्वाङ्गीकारेणेति। न च सहस्रत्वादि-संख्याया व्यासज्यवृत्तेः प्रत्येकस्मिन्नवृत्तेः कथं ततः स्वानधिकरणतन्तुषूत्पत्तिवारणमिति वाच्यम्। समवायसम्बन्धेनैव तस्य हेतुत्वात्। सहस्रत्वादिसंख्या तु समवायेन न व्यास-ज्यवृत्तिः किन्तु पर्याप्त्यैव। व्यभिचारादिति। उत्पन्नद्रव्यं क्षणमगुणमितिन्यायेनै-कक्षणपर्यन्तं गुणोत्पत्त्यसंभवेन द्वितीयक्षणे एव एकत्वात्मकगुणोत्पत्तिः। तदुत्तरक्षणे च तत्सापेक्षसहस्रत्वसंख्योत्पत्तिरिति। चतुर्थक्षणे पटोत्पत्तिं प्रति सहस्र-त्वसंख्याया हेतुत्वसंभवेऽपि तृतीयक्षणे यत्र पटोत्पत्तिस्तत्र व्यतिरेकव्यभिचार इति भावः।

❀ दीधितिः ❀

व तत्तद्द्रव्योत्पादनियमसंभवेऽपि युगपदुत्पन्नेषु नित्येषु च

❀ जागदीशी ❀

यावदेकत्वसापेक्षतया द्रव्योत्पत्तिद्वितीयक्षणे तदसंभवात्, पुरुषकालभेदेन सहस्रत्वादीनामनन्तत्वेनानन्तकार्यकारणभावापत्तिगौरवं चेति द्रव्योत्पादनियानकत्वेनापि प्रागभावः कल्पयितुमुचित एवेत्याशयेनोक्तं संभवेऽपीति । क्रमोत्पन्नस्थले कस्याश्चित्समवायिव्यक्तेः तदेकत्वस्य वाऽनुत्पत्तिदशायामपि कारणान्तरसत्त्वमादाय प्रागभाववादिनामपि त्रित्वोत्पत्तिप्रसङ्गादुत्पत्स्यमानसमवायिव्यक्तेः तदेकत्वस्य वा विशिष्य हेतुताध्रौव्ये प्रागभावकल्पनं व्यर्थमतो युगपदुत्पन्नपर्यन्तानुसरणम् ।

❀ काशिकानन्दी ❀

तदसंभवात् = सहस्रत्वादिसंख्याऽसंभवात् । ननु कार्यकालवृत्तितया समानाधिकरणयावदेकत्वानां सहस्रत्वसंख्यायामपेक्षा । अपि च तन्तूत्पत्तितृतीयक्षणे न पटोत्पत्तिसंभवः । तुरीतन्तुसंयोगोत्तरमेव तन्तूनां संयोगेन पटोत्पत्तेरिति तावत्पर्यन्तं सहस्रत्वसंख्याऽप्युत्पत्स्यत एवेति नानुपपत्तिरित्यत आह—पुरुषकालभेदेनेति । यत्र पञ्चमषष्ठादिक्षणेषु पटोत्पत्तिस्तत्र क्षणभेदेनैकपुरुषीयापेक्षाबुद्धीनामपि अनेकासामुत्पत्तेस्ततोऽपि संख्यानन्त्यमित्याशयेन कालपदमप्युपात्तम् । द्रव्योत्पादनियामकत्वेनापि = सहस्रादितन्तुकपटोत्पादनियामकत्वेनापि । इत्याशयेनेति । संभवपदमनास्थासूचकमिति भावः । समवायिव्यक्तेरिति । ननु चरमसमवायिव्यक्त्युत्पत्तिद्वितीयक्षणे एव त्रित्वाद्युत्पत्तिप्रसङ्गः । चरमसमवायिव्यक्तिसत्त्वात् । न वा तदिष्टम् । एकत्वान्यसंख्यायाः समानाधिकरणयावदेकत्वसापेक्षतया चरमसमवाय्युत्पत्तिक्षणे तत्रैकत्वविरहादित्याशङ्कयास्तु तर्हि चरमैकत्वस्यैव विशिष्य कारणत्वमित्याशयेनाह—तदेकत्वस्य वेति । चरमसमवायिगतैकत्वस्य वेत्यर्थः । कारणान्तरसत्त्वमादायेति । द्रव्यत्वेन द्रव्यस्य एकत्वत्वेनैकत्वस्यापेक्षाबुद्धेश्च सत्त्वमादायेत्यर्थः । प्रागभाववादिनामपीति । अस्ति हि तत्र प्रागभावोऽपि समवाय्यन्तरोत्पादानन्तरं त्रित्वादेस्तत्रोत्पत्स्यमानत्वादिति भावः । तदेकत्वस्य = उत्पत्स्यमानसमवायिव्यक्तिगतैकत्वस्य । विशिष्येति । ननु चरमैकत्वस्यैकस्यामेवव्यक्तौ सत्त्वाद् व्यभिचारः । स्वाश्रयानुयोगिकत्वविशिष्टसमवायेन त्रित्वोत्पत्तिहेतुत्वे तदुत्पत्तिविरहकालेऽपि अन्यव्यक्त्यनुयोगिकसमवायेन त्रित्वोत्पत्तिर्दुर्वारा स्यात् । न च स्वाश्रयवृत्तित्रित्वसंख्यासम्बन्धेनैकत्वस्य कारणतया न व्यभिचार इति वाच्यम् । त्रित्वस्य तदानीमनुत्पन्नतया तद्घटितसम्बन्धस्य कारणतावच्छेदकत्वाऽसंभवादिति चेन्न । स्वाश्रयवृत्तिविषयताविशेषसम्बन्धेन हेतुत्वोक्त्याऽदोषात् । विषयताविशेषश्च तादृशसमवायित्रयविषयकज्ञाननिरूपितः । वस्तुतस्तु चरमैकत्वादेः स्वाश्रयानुयोगिकसमवायेन त्रित्वादिहेतुत्वम् । न चैवमन्यव्यक्तिषु कार्योत्पादापत्तिः । चरमैकत्वादेः सहकारिणो विरहाद् । एतच्च प्रागेवास्माभिः स्पष्टीकृतम् ।

❀ दीधितिः ❀

त्रित्वाद्युत्पत्तिनियामकत्वेन प्रागभावः कल्प्यत इत्याहुः ।

❀ जागदीशी ❀

पूर्वोक्तयुक्त्या द्वित्वोत्पादनियामकत्वेन प्रागभावाऽसिद्धेराह त्रित्वादीति। नियामकत्वेनेति। अन्यथा युगपदुत्पन्ननिष्ठत्रित्वादेः स्वानधिकरणेष्वपि द्रव्येषु उत्पादप्रसङ्गात्। न चापेक्षाबुद्धिव्यक्तेरेव विशिष्य हेतुत्वान्नातिप्रसङ्गः। स्वानाश्रयमादायाऽपेक्षाबुद्धेरपि त्रित्वजनकत्वदर्शनात्। न च तत्तद्व्यक्तिनिष्ठैकत्वान्यसंख्यासामान्यं प्रति तत्तद्व्यक्तिनिष्ठविशेष्यत्वसम्बन्धेन एकत्वप्रकारकत्वेनैवापेक्षाबुद्धेर्जनकत्वं, प्रकारान्तरेणानुगमाऽसंभवात्। तथा च

❀ काशिकानन्दी ❀

पूर्वोक्तयुक्त्या = आचार्यमतव्याख्यानावसरोक्तयुक्त्या । द्रव्यद्वयेऽनन्यथासिद्धत्वकल्पनस्य प्रागभाव-तन्नियतपूर्ववर्त्तित्वाऽनन्यथासिद्धत्वैतत्त्रितयकल्पनापेक्षया लघुत्वादिति युक्त्येति यावत्। द्रव्यद्वये नियतपूर्ववर्त्तित्वं स्वरूपसत्त्वं च सिद्धमेवेति न तत् कल्प्यम्। युगपदुत्पन्ननिष्ठत्रित्वादेः = युगपदुत्पन्नघटाद्यात्मकद्रव्यत्रयगतत्रित्वादेः । स्वानधिकरणेषु = तादृशत्रित्वानधिकरणेषु पटादिषु । न चेति । नातिप्रसङ्ग इत्यन्वयः। अपेक्षाबुद्धौ नियतपूर्ववर्त्तित्वं सिद्धम्। अनन्यथासिद्धत्वमात्रं तु तत्र प्रकल्प्य दोषो वारणीयः। अपेक्षाबुद्धित्वेन हेतुत्वस्य तत्र सर्वैरपि स्वीकारेपि तद्व्यक्तित्वेन तत्र हेतुत्वं कल्प्यमेव। नातिप्रसङ्गः = न स्वानधिकरणेषु त्रित्वाद्युत्पादप्रसङ्गः । स्वानाश्रयेति । स्वम्—अपेक्षाबुद्धिः, तदाश्रयः आत्मा, तदनाश्रयो घटादिः तमदाय घटादिषु त्रित्वमपेक्षाबुद्धिर्जनयति इति अनाश्रयाऽविशेषेण सर्वत्रैव सा त्रित्वमुत्पादयेदिति कथं तया देशनियमसंभव इति भावः। न च तर्हि कार्यकारणभाव एव कथमुपपद्यतामिति वाच्यम्। कालिकेन त्रित्वाद्युत्पत्तौ कालिकेन तत्तदपेक्षाबुद्धेर्हेतुत्वात्। तथा चापेक्षाबुद्धिपूर्वं त्रित्वाद्युत्पत्तिविरहप्रयोजकत्वमपेक्षाबुद्धौ न तु देशनियामकत्वम्। न च घटादेः कालिकेन स्वाश्रयतया स्वानाश्रयत्वं तस्य कथं कथितमिति वाच्यम्। समवायेन स्वानश्रयेतितदर्थात्। अपिकार आदायेत्यनन्तरं योज्यः। क्वचित्स्वानाश्रयघटादिकमादायापि अपेक्षाबुद्धेस्त्रित्वादिजनकत्वादित्यर्थः। स्वाश्रये अहं च स च स च वयं त्रय इत्यादौ इत्यपिकारसंगतिः।

ननु न समवायेन कालिकादिना वाऽपेक्षाबुद्धेः कारणत्वं किन्तु विशेष्यताविशेषेणेत्याशङ्क्य निषेधति न चेति। एकत्वान्येति। एकत्वसंख्यां प्रत्यपेक्षाबुद्धेरहेतुत्वादिति भावः। त्रित्वादिसंख्याया व्यक्तित्रयनिष्ठत्वेन एकत्वप्रकारकापेक्षाबुद्धेर्वक्ष्यमाणसम्बन्धेन त्रिषु असंभवेन व्यभिचारः स्यादित्यतस्तत्तद्व्यक्तीति। समवायः कार्यताघटकसम्बन्धो बोध्यः। पर्याप्तेरेकव्यक्तिवृत्तित्वाभावात्। तत्तद्व्यक्तिनिष्ठविशेष्यत्वसम्बन्धेन = तत्तद्व्यक्तिवृत्तित्वविशिष्टविशेष्यतात्वावच्छिन्नसम्बन्धेन। एकत्वप्रकारकत्वेनेति। अयमेकः अयमेकः अयमेकः इत्याद्याकारकज्ञानं ग्राह्यम्। प्रकारान्तरेणानुगमाऽसम्भवादिति। न च एकत्वान्यसंख्यासामान्यं प्रति विशेष्यतात्वावच्छिन्नसम्बन्धेना-

❀ जागदीशी ❀

तत एवैकनिष्ठत्रित्वादेरन्यत्र द्रव्येऽनुत्पत्तिसंभव इति वाच्यम्। पुरुषत्रयाणां घटादिभिन्नद्रव्यधर्मिकैकत्वज्ञानत्रयादपि तेषु त्रित्वोत्पत्तिप्रसङ्गेनापेक्षाबुद्धेस्ताद्रूप्येणाऽहेतुत्वादिति भावः।

❀ काशिकानन्दी ❀

पेक्षाबुद्धिः कारणमित्येव वक्तव्यम्। एकत्वादिनिष्ठप्रकारतानिरूपितविशेष्यताया नानात्वेऽपि विशेष्यतात्वेन तस्याः संसर्गत्वसंभवादिति वाच्यम्। अयमेकः अयमेकः अयमेकः घटः पटश्चेत्याद्याकारकसमूहालम्बनमादाय घटपटादावपि त्रित्वोत्पत्तिप्रसङ्गात्। तदीयविशेष्यताया घटपटयोरपि सत्त्वात्। न च स्वनिरूपितैकत्वनिष्ठप्रकारतानिरूपितविशेष्यतात्वेनैव संसर्गत्वमित्यदोषः। घटादिनिष्ठविशेष्यतायास्तत्र घटत्वादिनिष्ठप्रकारतानिरूपितत्वमेव न त्वेकत्वनिष्ठप्रकारतानिरूपितत्वमिति वाच्यम्। अयमेकः (१) अयमेकः (२) अयमेकः (३) अयमेकः (४) इत्येवं चतुर्षु एकत्वप्रकारकसमूहालम्बनोत्तरं इमे त्रयः इमे चत्वारः इत्येवं ज्ञानं तत्र तिसृषु त्रित्वस्य चतुर्षु चतुष्ट्वस्य चोत्पन्नतया तादृशत्रित्वस्य तदनधिकरणे चतुर्थे समुत्पादापत्तेः। अस्माकं तु चतुर्थसमवेतत्वविशिष्टतत्त्रित्वमप्रसिद्धम्। चतुर्थसमवेतत्वविशिष्टचतुष्ट्वस्य प्रसिद्धत्वेऽपि तत्र तदुत्पत्तिरिष्टैव। न वा एतत्समवेतत्वविशिष्टत्रित्वस्य चतुर्थे आपत्तिः। एतद्व्यक्तिनिष्ठविशेष्यतासम्बन्धेन निरुक्तापेक्षाबुद्धेरेव तत्र हेतुतया चतुर्थे तेन सम्बन्धेन तद्विरहात्। घटादिभिन्नद्रव्यधर्मिकेति। घटपटाद्यात्मकविभिन्नद्रव्यधर्मिकेत्यर्थः। एकैकपुरुषस्यैकैकधर्मिकेति यावत्। एकत्वज्ञानेति। अपेक्षाबुद्ध्यात्मकं तु ज्ञानं ग्राह्यम्। ताद्रूप्येण=एकत्वप्रकारकत्वेन। अहेतुत्वादिति। न चैकपुरुषीयत्वं निवेश्यमित्यदोषः। त्रयाणामपि पुरुषाणामेकैकत्वात्। न च तत्पुरुषीयापेक्षाबुद्धेर्जनकत्वं वाच्यमतो न दोषः। एवं सति पुरुषान्तरीयापेक्षाबुद्धितः त्रित्वाद्यनुत्पादापत्तेः। न च तत्पुरुषीयज्ञानमात्रजन्यतत्तद्व्यक्तिनिष्ठसंख्यासामान्यत्वस्य कार्यतावच्छेदकत्वं वाच्यमिति नोक्तदोषावसर इति वाच्यम्। तथा सति महागौरवापत्तेः। तदपेक्षया प्रागभावकल्पनस्यैव लघुत्वात्।

ननु द्रव्यद्वयेऽपेक्षाबुद्धिकाले भावित्रित्वं तत्रोत्पद्येत। तद्व्यक्तिनिष्ठविशेष्यतासम्बन्धेन निरुक्तापेक्षाबुद्धेस्तत्र सत्त्वात्। प्रागभाववादिनां प्रागभावस्यापि सत्त्वात्। न च चरमैकत्वस्य विशिष्य कारणत्वोक्त्या न दोष इति वाच्यम्। द्रव्यत्रयोत्पत्तेश्चिरकालानन्तरं यत्र द्रव्यद्वये एवापेक्षाबुद्धिर्जाता तत्रैव भावित्रित्वस्योत्पादापत्तेः। एवं च तत्तदपेक्षाबुद्धेस्तत्तत्त्रित्वादिकं प्रति कारणत्वं वाच्यम्। एवं च पुरुषत्रयीयप्रागुक्तापेक्षाबुद्धितो न त्रित्वोत्पत्तिप्रसक्तिः, न वा प्रागभावकल्पनावश्यक्यम्। तत्तद्व्यक्तिनिष्ठतत्तत्त्रित्वादिकं प्रति तत्तद्व्यक्तिनिष्ठविशेष्यतासम्बन्धेन एकत्वप्रकारकतत्तदपेक्षाबुद्धित्वेन हेतुत्वेन कुत्रापि व्यभिचाराऽप्रसक्तेः। कालिकसम्बन्धेन तत्तत्त्रित्वादिकं प्रति कालिकेन तत्तदपेक्षाबुद्धेः कालनियमाय हेतुत्वमङ्गीकृत्य पुनर्देशनियमाय तत्तत्त्रित्वादिकं प्रति तत्तत्प्रागभावत्वेन हेतुत्वे गौरवात्।

यत्तु एकत्वान्यसंख्यात्वस्यैव कार्यतावच्छेदकत्वादुक्तस्थले द्वित्वोत्पत्तिसत्त्वेनैकत्वान्य-

## ❀ जागदीशी ❀

'अन्ये तु' इत्यस्वरसबीजं तु द्रव्यान्तरकर्माधीनस्यैकनिष्ठसंयोगादेरन्यत्रोत्पत्तिवारणार्थमवश्यं तत्तद्द्रव्यसमवेतकार्यत्वाद्यवच्छिन्नं प्रति तत्तद्द्रव्यत्वेन हेतुत्वं वाच्यमतस्तदन्यत्वादेवान्यत्र न तदीयत्रित्वाद्युत्पादः, किं तत्तत्त्रित्वाद्यन्तर्भावेणानन्तप्रागभावहेतुत्वेन।

## ❀ काशिकानन्दी ❀

संख्योत्पादात्को नामानुयोगः। त्रित्वत्वं तु न कार्यतावच्छेदकमिति न तदापत्तिरिति। तदसत्। त्रित्वानुत्पादप्रयोजकविरहेण तदुत्पत्तेर्वारयितुमशक्यत्वात्। सामग्रीसत्त्वात्। अन्यथा उत्तरकालेऽपि त्रित्वं नोत्पद्येतेति चेद्?

अत्राहुः। सहस्रत्वादिसंख्यास्थले तत्तद्व्यक्तिसमवेतत्वविशिष्टसहस्रत्वादिसंख्यात्वस्य कार्यतावच्छेदकतया सहस्रकार्यकारणभावस्वीकारापेक्षया कालिकेन तादृशसहस्रत्वं प्रति कालिकेन तदपेक्षाबुद्धेः कारणत्वं, समवायेन तत्प्रति च स्वरूपेण प्रागभावः कारणमित्येवं प्रागभावमङ्गीकृत्य कार्यकारणभावद्वयस्वीकार एव साधीयानिति।

द्रव्यान्तरकर्माधीनेति। अन्यत्रेतिवक्ष्यमाणपदबोध्यद्रव्यादन्यद् द्रव्यं द्रव्यान्तरम्, तथा च तत्तत्संयोगानधिकरणद्रव्यान्यद्रव्यस्य तादृशद्रव्ययोर्वा यत् कर्म तदधीनेत्यर्थः। एकनिष्ठेति। तत्तत्संयोगानधिकरणान्यनिष्ठेत्यर्थः। अन्यत्र = तत्तत्संयोगानधिकरणद्रव्येषु। द्रव्यद्वयस्य यः स्वीयकर्मजन्यसंयोगः तस्य तादृशद्रव्यद्वयान्यद्रव्येषूत्पत्तिवारणार्थमिति समुदयार्थः। तत्तद्द्रव्यसमवेतकार्यत्वाद्यवच्छिन्नं प्रति तत्तद्द्रव्यत्वेन हेतुत्वमिति। न च तत्तत्संयोगत्वावच्छिन्नं प्रति तत्तद्द्रव्यत्वेन कारणत्वमस्त्विति वाच्यम्। संयोगस्य द्विष्ठतया अन्यतरस्य कारणत्वेऽन्यतरस्मिन् व्यभिचारापत्तेः। अत एव संयोगत्वावच्छिन्नं प्रत्यपि न कर्मत्वेन कारणत्वम्। एकद्रव्यकर्माधीनसंयोगाधिकरणे कर्मविरहिणि व्यभिचारात्। एवं च तत्तत्समवेतत्वविशिष्टसंयोगादिकं प्रत्येव कारणत्वे वक्तव्ये विभागादिकमादायानेककार्यकारणभावकल्पनापेक्षया तत्तद्द्रव्यसमवेतकार्यत्वावच्छिन्नं प्रत्येव तत्तद्द्रव्यत्वेन कारणत्वं सिद्ध्यति। न च कार्यत्वस्य कार्यतावच्छेदकत्वं न संभवति। अवच्छेद्यावच्छेदकयोरैक्यप्रसङ्गाद्। तत्तद्द्रव्यसमवेतत्वमात्रमवच्छेदकमस्त्वित्यपि न युक्तम्। द्रव्यत्वसत्त्वादिनित्यवस्तुष्वपि तत्तत्द्द्रव्यसमवेतत्वसत्त्वेन तस्य कार्यतावच्छेदकत्वाऽसंभवात्। प्रागभावप्रतियोगित्वात्मककार्यत्वमवच्छेदकमित्यपि न युक्तम्। प्रागभावाङ्गीकारापातादिति वाच्यम्। उक्तैक्यप्रसङ्गस्याऽकिंचित्करत्वात्। घटाभावीयप्रतियोगितावान् नास्तीत्यादिप्रतीतौ प्रतियोगित्वस्य प्रतियोगितावच्छेदकत्ववद्। किं च किंचिद्देशानवच्छिन्नवृत्तिताकाभावीयकालिकसम्बन्धावच्छिन्नप्रतियोगित्वरूपकार्यत्वस्य अनन्यथासिद्धनियतोत्तरवर्त्तित्वरूपकार्यतावच्छेदकत्वं संभवति। घटादीनामुत्पत्तिपूर्वं कालिकेनाभावः किंचिद्देशानवच्छिन्नवृत्तिताकः। न च प्रागभावस्य ध्वंसकाले किंचिद्देशानवच्छिन्नवृत्तिककालिकसम्बन्धावच्छिन्नाभावसत्त्वात्तत्साधारणोक्तकार्यत्वस्य जन्यतावच्छेदकत्वं न संभवतीति वाच्यम्। प्रागभावस्य निरस्यमानत्वात्। यदि च प्रागभावस्य संप्रति निरस्य-

❀ जागदीशी ❀

न च कार्यत्वस्येव कालिकसम्बन्धेन घटत्वपटत्वादिमत्त्वस्यापि विनिगमनाविरहेण कार्यतावच्छेदकेऽनुप्रवेशादनन्तकार्यकारणभावावश्यकत्वमिति वाच्यम् । समवेतत्वकालिकोभयसम्बन्धेन तत्तद्द्रव्यवत्त्वावच्छिन्नं प्रत्येव तत्तद्द्रव्यत्वेन हेतुत्वस्योक्तत्वात् । नित्यवृत्तिधर्मस्यापि जन्यतावच्छेदकत्वपक्षे तत्तद्व्यक्तिसमवेतत्वावच्छिन्नं प्रत्येव तत्तद्व्यक्तित्वेन हेतुत्वसंभवाच्चेति द्रष्टव्यम् ।

❀ काशिकानन्दी ❀

मानत्वेऽपि अनिरस्ततया अजन्यसाधारणधर्मस्य कार्यतानवच्छेदकत्वनतेन व्यभिचारसन्देहो दोष इत्युच्यते तदा ध्वंसविशिष्टत्वं कार्यत्वं वक्तव्यम् । वै० स्ववृत्तित्व-स्वप्रतियोगिकालनिरूपितकिंचिद्देशानवच्छिन्नवृत्तिताकाभावीयकालिकसम्बन्धावच्छिन्नप्रतियोगित्वोभयसम्बन्धेन । वस्तुतस्तु अखण्डोपाधिरूपं कार्यत्वमवच्छेदकमित्यभिप्रायेण ग्रन्थः । अत एवाग्रे विनिगमनाविरहेण कालिकेन घटत्वादेरवच्छेदकत्वापत्तिकथनसंगतिः । अन्यथा लाघवादेव घटत्वादेः कार्यतावच्छेदकत्वकथनौचित्यादित्यपि वदन्ति ।

कालिकसम्बन्धेन घटत्वेति । कालिकसम्बन्धेन घटत्वादेर्जन्यमात्रवृत्तितया घटत्वादेरपि कार्यत्वसमनियतत्वादिति भावः । अनन्तकार्यकारणभावेति । कार्यतावच्छेदकानन्त्यप्रयुक्तानन्तकार्यकारणभावेत्यर्थः । समवेतत्वकालिकोभयसम्बन्धेनेति । समवेतत्वसम्बन्धेन तद्द्रव्यस्य द्रव्यत्वसत्त्वादावपि नित्यपदार्थे सत्त्वात्तेन सम्बन्धेन द्रव्यत्वादेः कार्यतावच्छेदकत्वं न संभवतीत्यतः कालिकेति । तथा च द्रव्यत्वादेर्नित्यतया तत्र कालिकायोगान्नानुपपत्तिः । कालिकसम्बन्धमात्रोक्तौ तेन सम्बन्धेन तद्द्रव्यवत्त्वस्य तद्द्रव्याऽसमवेतकार्येऽपि सत्त्वात्तदवच्छिन्नाधिकरणे तद्द्रव्यस्य व्यभिचारः स्यादतः समवेतत्वेति । अत्र च द्रव्यान्तरवत्त्वेन न विनिगमनाविरहः । द्रव्यान्तरस्य समवेतत्वकालिकोभयसम्बन्धेन द्रव्यान्तरसमवेतसंयोगादावेव सत्त्वेन एतद्द्रव्यवत्त्वसमनैयत्याभावात् । प्रकृते च समवेतत्वकालिकोभयसम्बन्धेन एतद्द्रव्यवत्त्वस्यैतद्द्रव्यगतसंयोग-त्रित्वादावेव सत्त्वेन तत्प्रति च एतद्द्रव्यस्य तादात्म्येन हेतुतया न स्वानधिकरणद्रव्येषु स्वोत्पत्तिप्रसक्तिः । नित्यवृत्तिधर्मस्यापीति । नित्येषु द्रव्यत्वसत्त्वादिषु वृत्तिमतस्तत्तद्द्रव्यसमवेतत्वादेरित्यर्थः । जन्यतावच्छेदकत्वपक्षे इति । अतिरिक्तवृत्तिधर्मेऽपि स्वरूपसम्बन्धरूपावच्छेदकत्वस्वीकारे इत्यर्थः । तत्तद्व्यक्तिसमवेतत्वावच्छिन्नमिति ।

ननु तत्तद्व्यक्तिनिरूपितवृत्तित्वस्य वस्तुभेदेन भिन्नतया नानुगतकार्यतावच्छेदकत्वम् । एवं च तत्तद्द्रव्यसमवेतत्वापेक्षया तत्तत्संयोगत्वादेरेव कार्यतावच्छेदकत्वं युक्तम् । तथा च सति त्रित्वाद्युत्पादनियामकतया प्रागभावसिद्धिर्निष्प्रत्यूहा । न च वृत्तिभेदेऽपि वृत्तिताया ऐक्यमेव लाघवात् स्वीक्रियत इति न दोषः । अधिकरणैक्येन तन्निरूपितवृत्तित्वैक्यस्य युक्तत्वादिति वाच्यम् । एवं सति आधेयैक्येन लाघवादधिकरणताया अप्यैक्यस्य सुवचतया संयोगाधिकरणताया वस्तुद्वयनिष्ठाया एकतया तत्तद्द्रव्यनिष्ठाधिकरणतानिरूपितस-

❀ काशिकानन्दी ❀

मवायसम्बन्धावच्छिन्नवृत्तित्वविशिष्टस्य संयोगादेः तत्तद्द्रव्यातिरिक्तद्रव्येऽपि सत्त्वेन व्यभिचारस्य दुर्वारतापत्तेः। न च तत्तद्द्रव्यसमवेतसंयोगाद्यधिकरणताया तत्तद्द्रव्यान्तरे सत्त्वेऽपि तत्तद्द्रव्यसमवेतत्वावच्छिन्नसंयोगादिनिष्ठाधेयतानिरूपिताधिकरणताया द्रव्यान्तरे विरहान्न दोषः। कार्यतावच्छेदकावच्छिन्नाधिकरणे कारणाभावे एव व्यभिचारादिति वाच्यम्। यतः किमिदं तत्तद्द्रव्यसमवेतत्वं नाम। तत्तद्द्रव्यनिष्ठाधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वमिति चेत्तर्हि तत्तद्द्रव्यनिष्ठा या अधिकरणता;—तद्द्रव्य-तदन्यद्रव्योभयनिष्ठा संयोगाधिकरणता तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वं लब्धम्। तदवच्छिन्नाधेयतानिरूपिताधिकरणत्वं तदन्यद्रव्ये केन वार्यताम्। न च तद्द्रव्यनिष्ठत्वे सति तदितरद्रव्याऽनिष्ठा या अधिकरणता तादृशाधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिता सेति वाच्यम्। आधेयैक्येनाधिकरणतैक्ये संयोगाधिकरणताया एकतया द्विष्ठतया च तद्द्रव्यमात्रनिष्ठाधिकरणतानिरूपितवृत्तितायाः संयोगेऽसंभावितत्वात्। न च द्विष्ठाधिकरणतैव गृह्यते। सा तु तद्द्रव्यनिष्ठत्वविशिष्टा सती। तथा च तद्द्रव्यनिष्ठत्वविशिष्टाधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वमेव तदिति वाच्यम्। किमिदं तत्तद्द्रव्यनिष्ठत्वविशिष्टत्वं नाम। तदपि उक्तदिशैव परिष्क्रियतां, तत्रैवोक्तदोषा एवावलोक्यन्ताम्। न च तत्तद्व्यक्त्यनुयोगिकसमवायावच्छिन्नवृत्तित्वमेव तत्तद्व्यक्तिसमवेतत्वमिति वाच्यम्। तत्तद्व्यक्त्यनुयोगिकत्वं हि तत्तद्व्यक्तिनिष्ठानुयोगिताकत्वम्।। तत्र समवायस्याभेदेन तन्निरूपितानुयोगिताया भेदे मानाभावेन तद्दोषतादवस्थ्यमेव। तत्र भेदस्वीकारे वृत्तितया किमपराद्धम्। तस्माद् अधिकरणताया भेदोऽङ्गीकार्यः। तथा च सति एकस्यैव संयोगस्य द्रव्यद्वयेऽधिकरणताद्वयसत्त्वेन तद्द्रव्यनिष्ठाधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वावच्छिन्नसंयोगनिष्ठाधेयतानिरूपिताधिकरणताया द्रव्यान्तरे विरहान्न तद्द्रव्यस्य व्यभिचारः। इत्थं च सति वृत्तिभेदेन वृत्तिताया अपि भेदसिद्धेः प्रागुक्तदोषतादवस्थ्यादिति चेन्न। वृत्तिभेदेनवृत्तिताभेदसत्त्वेऽपि तद्द्रव्यनिष्ठाधिकरणतानिरूपितवृत्तितात्वेन तासामनुगमेनाऽदोषात्।

अथैकाधिकरणनिष्ठा अधिकरणता आधेयभेदेन भिन्ना न वा। यदि भिन्ना तदा तद्द्रव्यनिष्ठैकैकाधिकरणतानिरूपितवृत्तितात्वं न तादृशनिखिलवृत्तितासु इति उक्तदोषतादवस्थ्यम्। यदि अभिन्ना तदा आधेयैक्येनाधेयताया अप्यैक्यावश्यकत्वाद् संयोगनिष्ठाधेयतानिरूपिताधिकरणत्वं द्रव्यान्तरे दुर्वारमेव। न हि तद्द्रव्यनिष्ठाधिकरणतानिरूपितैकव्यक्तिवृत्तिवृत्तितात्वावच्छिन्नत्वकथनमात्रेण तद्वारणसंभव इति चेन्न। अधिकारणत्वाधेयत्वादीनामैक्येऽपि तन्निष्ठनिरूप्यत्वनिरूपकत्वादेर्भेदस्वीकारात्। तत्राप्येका सामान्यतो निरूप्यता तत्तदधिकरणतात्वाद्यवच्छिन्ना। अपराश्चाधिकरणतादिस्वरूपाः नाना। तथा च तत्तद्व्यक्तित्वावच्छिन्नधिकरणतात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकत्वेन रूपेण वृत्तितानामनुगमान्न दोषः। कार्यतावच्छेदकतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणतांवति कारणविरहे एव व्यभिचारात्। संयोगनिष्ठद्रव्यद्वयवृत्त्यधिकरणताद्वयनिरूपितवृत्तिताया ऐक्येऽपि

❀ दीधितिः ❀

यत्तु ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहो न तदुपस्थितिं विनेति। न चेच्छाकृतिकाले ज्ञानेच्छासाक्षात्कारौ; योग्यविशेष-

❀ जागदीशी ❀

मिश्रोक्तं सामान्यप्रत्यासत्तौ युक्त्यन्तरमुपन्यस्य दूषयति यत्त्वित्यादि। ज्ञानेच्छेति। ज्ञानेच्छयोरिच्छाकृत्योश्चेत्यर्थः। तदुपस्थितिमिति। इच्छोपधायकज्ञानस्य कृत्युपधायकेच्छायाश्चोपस्थितिं विनेत्यर्थः। न चेति। इच्छाकाले ज्ञानस्य कृतिकाले चेच्छाया न साक्षात्कार इत्यर्थः। ज्ञानसंस्कारयोरेकदोत्पाद द्वयोग्येत्युक्तम्। योग्यत्वं च वेगाऽवृत्तिप्रत्यक्षजातिमत्त्वम्। तेन निर्विकल्पकद्वयस्यापि नैकदोत्पत्तिः। इत्थं च ज्ञानसंयोगयोरुक्तयोग्यतावतोर्यौगपद्येन व्यभिचारः स्यादत उक्तं विशेषेति। रूपरसयोर्योग्यविशेषगुणयो-

❀ काशिकानन्दी ❀

तन्निष्ठनिरूपकताया भिन्नतया तद्द्रव्यत्वावच्छिन्नाधिकरणताया एव तद्द्रव्यनिष्ठाधिकरणतात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणात्वेनादोषः।

ननु यत्किंचिज्ज्ञानेच्छयोरुपस्थितिमात्रस्यापेक्षितत्वे इच्छानुत्पादस्थले ज्ञानस्य कृत्यनुत्पादस्थले चेच्छायाः प्रत्यक्षं संभवतीति तदर्थं सामान्यप्रत्यासत्तेरनुपयोग इत्यत आह इच्छोपधायकेति। कार्यकारणभावग्रहं प्रति कार्यकारणयोरन्वयव्यतिरेकग्रहस्य कारणतया ज्ञानसत्त्वे उत्तरक्षणे इच्छा ज्ञानविरहे नेत्याद्याकारकान्वयव्यतिरेकग्रहे कार्योपधायकव्यक्तिघटितस्यैवान्वयस्यावगाहनीयतया कार्यकारणभावग्रहाय तत्तज्ज्ञानादिव्यक्तिग्रह आवश्यक इति भावः। न साक्षात्कार इति। ज्ञानोत्तरमिच्छोत्पादस्थले ज्ञानतृतीयक्षणे एव ज्ञानस्य, एवमिच्छोत्तरं कृत्युत्पादस्थले इच्छातृतीयक्षणे एवेच्छायाश्च ध्वंसेन तत्तृतीयक्षणे विषयविरहादेव न तत्साक्षात्कारसंभवः। कार्यकालवृत्तितया विषयस्य हेतुत्वादिति भावः। वेगाऽवृत्तीति। वेगावृत्तिर्या प्रात्यक्षिकजातिस्तद्वत्त्वम्। तादृशी च जातिः ज्ञानत्वेच्छात्वादिः। अदृष्टद्वयस्य यौगपद्यानापत्तिवारणाय—प्रत्यक्षेति। अत एव वेगाऽवृत्तिपदमपि। अन्यथा प्रात्यक्षिकगुणत्वसत्त्वादिकमादाय तद्दोषतादवस्थ्यात्। गुणत्वव्याप्यप्रत्यक्षजातिमत्त्वमित्युक्तेऽपि संस्कारद्वयस्य संस्कारज्ञानायोर्वा यौगपद्यानापत्तिः। गुणत्वव्याप्यीभूताया संस्कारत्वात्मिकाया जातेः वेगात्मकसंस्कारस्य प्रत्यक्षतया प्रत्यक्षत्वात्। तादृशजातेश्च भावनाख्यसंस्कारे सत्त्वात्। जीवनयोनियत्नस्तु नाङ्गीक्रियत इति हृदयम्। तदङ्गीकारे तु जीवनयोनिकृत्यन्यत्वमपि विशेषणं देयम्।

ननु प्रत्यक्षविषयत्वमेव योग्यत्वम्। तत एव संस्कारज्ञानाद्योर्यौगपद्यानापत्तिवारणसंभवादत आह—तेनेति। अन्यथा निर्विकल्पकस्य प्रत्यक्षाऽविषयतया तेषां यौगपद्यं स्यादिति भावः। यौगपद्येनेति। सर्वमूर्तद्रव्यसंयोगस्यात्मनि सत्त्वादिति भावः।

❁ दीधितिः ❁

गुणयौगपद्यस्यात्मनि निषेधात् । अतो ज्ञानाद्यन्तरसाक्षात्कार एव ज्ञान-

❁ जागदीशी ❁

घटादौ युगपदुत्पादादुक्तमात्मनीति । विभिन्नावच्छेदेन सुखदुःखयोर्यौगपद्य-स्वीकारे एकावच्छेदेनेति पूरणीयम् ।

केचित्तु विशेषगुणपदं सविषयकविशेषगुणपरं वाच्यम् । एवं चात्मपदं शरीरार्थकं, तेन कायव्यूहदशायां सौभरीप्रभृतेर्नानाशरीरावच्छेदेन ज्ञानादे-र्यौगपद्येऽपि न क्षतिरित्याहुः ।

❁ काशिकानन्दी ❁

विभिन्नावच्छेदेन = पादशिरआद्यवच्छेदेन । एकावच्छेदेनेति पूरणीयमिति । इदं तु चिन्त्यते । एवमात्मनीति व्यर्थम् । रूपरसादीनां निरवच्छिन्नवृत्तितया एकावच्छेदेन तद्वृत्तित्वाऽप्रसिद्ध्यैव तद्यौगपद्यनिषेधाभावात् । न चाऽऽम्रफलादावेकावच्छेदेनाम्लरस-स्यापरदेशावच्छेदेन मधुररसस्य चानुभूयमानतया रसादेः सावच्छिन्नवृत्तिकत्वमावश्यकम् । अन्यथा चित्ररसस्वीकारापत्तेरिति वाच्यम् । तत्रावयवगतरसस्यैवानुभूयमानतयाऽवयविनि रसाभावेऽपि क्षत्यभावात् । अवयविप्रत्यक्षानुरोधेन चित्ररूपाङ्गीकारेऽपि चित्ररसाङ्गीका-रस्यानावश्यकत्वाद् । रसनेन्द्रियस्य द्रव्याऽग्राहकत्वाद् । अवयवाश्च त्र्यणुकादयः । नातः परमाणुगतरसाऽप्रत्यक्षदोषः । न च स्पर्शस्याऽव्याप्यवृत्तित्वमावश्यकम् । लौहदण्डादा-वेकदेशावच्छेदेनोष्णस्यापरदेशावच्छेदेन शीतस्य चानुभवादिति वाच्यम् । औष्ण्यशैत्य-योरग्निजलगतगुणत्वात्तदौपाधिकत्वयैव तस्य तत्र प्रतीतेः । नापि शब्दद्वयस्यैकावच्छेदेनो-त्पादात्तदर्थमात्मनीतीति वाच्यम् । एककालावच्छेदेनैकदेशावच्छेदेनैकस्यैव शब्दस्यो-त्पादात् । संयुक्तवर्णोच्चारणस्थलेऽप्यर्धमात्राकालव्यवायसत्त्वाद् । एकवीणावच्छेदेन नानाशब्दा उत्पद्यन्त इति चेद् ? एकशरीरावच्छेदेन सुखदुःखादीनि नाना उत्पद्यन्त इत्यपि तुल्यम् । एतेन चित्रस्पर्शानङ्गीकारेण कठिनत्वसुकुमारत्वादीनां सावच्छिन्नवृत्तिकत्वं वदन्तोऽपि समाहिताः । एकावच्छेदेन स्पर्शद्वयाऽसंभवात् ।

इदं तु तत्त्वम् । येषां मते चित्ररूपमपि नास्ति रूपस्याप्यव्याप्यवृत्तित्वोपगमात् तन्मते आत्मनीति सार्थकम् । आम्रफलादावेकावच्छेदेन हरितवर्णकठिनस्पर्शयोः एवं पीतवर्णसुकुमारस्पर्शादीनां च संभवादिति ।

शरीरार्थकमिति । सप्तम्यर्थोऽवच्छेद्यत्वमित्यपि बोध्यम् । एकशरीरावच्छेदेनेति समुदितार्थः । कायव्यूहदशायाम् = अनेकशरीरधारणदशायाम् । सौभरी नाम कश्चन ऋषिः । आहुरिति । अत्र योग्यपदस्य प्रत्यक्षविषयत्वमात्रार्थत्वे निर्विकल्पकयोरपि यौगपद्यं स्यात् । प्रत्यक्षविषयजातिमत्त्वार्थकत्वे संस्कारज्ञानाद्योरप्ययौगपद्यापत्तिः । वेगाऽवृत्तिताहश-जातेः प्रवेशे सविषयकत्वप्रवेशो विफलः । न च रूपादीनां यौगपद्यवारणाय तदावश्यकम् । आत्मपदेनैव तद्वारणात् । न च शरीरार्थकत्वात् कथं तद्वारणमिति वाच्यम् । शरीरे सविषयकगुणद्वयस्याऽप्राप्ततया तद्यौगपद्यनिषेधस्य त्वन्मतेऽपि विफलतया शरीरावच्छेदेना-

❀ दीधितिः ❀

त्यादिना इच्छादिजनकज्ञानादिकं गृह्णातीत्यभ्युपेयमिति । तन्न । पौर्वापर्यपरिचये धर्मिस्वरूपग्रहेऽपि कारणत्वग्रहाऽसंभवात् इच्छाकृत्यनुत्पादस्थले ज्ञानेच्छयोः साक्षात्कारात् ज्ञानेच्छासामान्यव्यतिरेकनियतेच्छाकृतिव्यतिरेकग्रहे मनसा कार्यकारणभावग्रहस्य अवश्याभ्युपेयत्वात् ।

❀ जागदीशी ❀

इच्छादिजनकेति । इच्छाद्युपधायकेत्यर्थः ।

ननु ज्ञानादाविच्छादेः स्वरूपयोग्यत्वस्य फलोपधायकत्वस्य वा ग्रहार्थं ज्ञानत्वादिसामान्यप्रत्यासत्तिरभ्युपेयते ? तत्र नाद्य इत्याह पौर्वापर्येत्यादिना । ग्रहाऽसंभवादिति अवश्यमभ्युपेयत्वादित्यत्र हेतुः । इच्छाकृतीति । इच्छानुत्पादस्थलेज्ञानस्य कृत्यनुत्पादस्थले चेच्छायाः साक्षात्कारादित्यर्थः । मनसेति ।

❀ काशिकानन्दी ❀

त्मन्येव यौगपद्यस्य निषेद्धव्यत्वात् । किं च विभिन्नावच्छेदेनात्मनि सुखदुःखोत्पादानुरोधेन एकावच्छेदेनेति पूरणीयम् । तथा च तत एव कायव्यूहदशायां विभिन्नशरीरावच्छेदेन ज्ञानोत्पादेऽपि न क्षतिरिति अस्वरसोऽत्रानुसन्धेयः ।

ज्ञानत्वेन रूपेण इच्छानुपधायकज्ञानेऽपि ज्ञानजनकत्वसत्त्वात्तत्प्रत्यक्षस्य च सुकरत्वादाह इच्छाद्युपधायकेत्यर्थ इति । इच्छादेः स्वरूपयोग्यत्वस्येति । इच्छादिनिरूपितस्वरूपयोग्यताया इत्यर्थः । फलोपधायकत्वस्य = फलवैशिष्ट्यस्य । ज्ञानादाविच्छादेरित्यनुषज्यते । नाद्यः = न स्वरूपयोग्यत्वग्रहार्थं सामान्यप्रत्यासत्त्यभ्युपगमः ।

दीधितौ—पौर्वापर्येति । न हि सामान्यतो दण्डत्वेन दण्डानां घटत्वेन घटानां च ज्ञानमात्रेण दण्डघटयोः कार्यकारणभावग्रहो दृष्टो यावद्दण्डे घटाव्यवहितपूर्ववर्तित्वं न ज्ञायते । एवं प्रकृतेऽपि इच्छाद्यव्यवहितपूर्ववर्तित्वं ज्ञानादौ ज्ञायेत तदा कार्यकारणभावग्रहो भवेत् । न हि सामान्यलक्षणासहस्रेणापि ज्ञानेच्छादीनामव्यवहितपूर्वोत्तरभावो ज्ञातुं शक्येतेति कथमत्र कार्यकारणभावग्रहः । एवं चोपायान्तरेणाऽत्र अन्वयव्यतिरेको ज्ञातव्य इति तत एव कार्यकारणभावग्रहसंभवे व्यर्था सामान्यलक्षणेति भावः । ननु किं तदुपायान्तरं येन ज्ञानेच्छादीनामन्वयव्यतिरेकज्ञानं कार्यकारणभावज्ञानं च भवतीत्यत आह—इच्छाकृत्येत्यादि । साक्षात्कारादिति व्यतिरेकग्रहे हेतुः । ज्ञानेच्छासामान्यव्यतिरेकनियतेच्छाकृतिव्यतिरेकग्रहे इति । ज्ञानेच्छासामान्यव्यतिरेकनियतत्वेन इच्छाकृतिव्यतिरेकस्य ग्रहे सतीत्यर्थः । ज्ञानेच्छासामान्यव्यतिरेके इति सप्तम्यन्तपाठे तु ज्ञानेच्छासामान्यव्यतिरेके सति नियतस्येच्छाकृतिव्यतिरेकस्य ग्रहे इत्येवमुक्तार्थ एव तात्पर्यं बोध्यम् ।

ननु ज्ञानोत्पत्त्यनन्तरमिच्छोत्पत्तौ सत्यां तदुत्तरं केवलमिच्छाया एव प्रत्यक्षाद् ज्ञानस्य चाऽप्रत्यक्षात् तयोर्व्यभिचारग्रहात् कथं ज्ञानादिसामान्यव्यतिरेकनियतत्वेन इच्छादि-

# यत्तु पाकादौ चिकीर्षा सुखादौ इच्छा न स्यात्,

❀ जागदीशी ❀

कारणत्वनिविष्टसमस्तवस्तूपस्थिताविल्यादिः। तथा च फलानुपधायके एव ज्ञानदाविच्छादिस्वरूपयोग्यत्वस्यान्वयव्यतिरेकाभ्यां मनसा ग्रहसंभवादिच्छा-

❀ काशिकानन्दी ❀

व्यतिरेकस्य ग्रहः। न च इच्छाकाले ज्ञानस्य वर्त्तमानतया ज्ञानस्यापि तृतीयक्षणे प्रत्यक्षात्र तयोर्व्यभिचारज्ञानसंभवः, विषयस्य कार्यकालवृत्तितया प्रत्यक्षहेतुत्वानुपगमादिति वाच्यम्। एवं सति यत्र ज्ञानेच्छाकृतयः क्रमिकाः तत्र कृतिक्षणे इच्छासत्त्वाद् कृतिद्वितीयक्षणे इच्छायाः प्रत्यक्षं भवेत्। ज्ञानस्य च कृतिक्षणे विरहेण कृतिद्वितीयक्षणे तत्प्रत्यक्षं न भवेदिति तयोर्व्यभिचारज्ञानाद् ज्ञानव्यतिरेकनियतत्वेनेच्छाव्यतिरेकग्रहो दुर्वचः इति चेन्न, यतो न प्रत्यक्षाभावमात्रेण व्यभिचारः शक्योऽध्यवसातुम्। न हि दण्डविरहवति कपाले दृष्ट्वा घटं, दण्डव्यभिचारं घटेऽध्यवस्यति कश्चित्। किन्तु कार्योत्पत्त्यव्यवहितपूर्वक्षणे तदभावज्ञानादेव व्यभिचारनिश्चयः। तच्च न वृत्तम्। यत्र च ज्ञानाभावग्रहः तत्रेच्छाभावोऽपि गृह्यत एव न तु इच्छा तत्र गृह्यते। एवं यत्रेच्छाभावो गृह्यते तत्र कृत्यभावोऽपि गृह्यत एव। तथा च ज्ञानाभावनियतत्वेनेच्छाभावस्य, इच्छाभावनियतत्वेन कृत्यभावस्य च ग्रहणेन व्यतिरेकव्याप्तिग्रहो भवत्येव।

ननु एवमपि यत्रेच्छाकृतिप्रत्यक्षं तत्र पूर्वं ज्ञानमभून्न वेति संशयसंभवात्कथं ज्ञानादिव्यतिरेकनियतत्वेनेच्छादिव्यतिरेकग्रह इति चेन्न, पश्चादुत्पत्स्यमानस्मरणान्यथानुपपत्त्या ज्ञानाभावसंशयानवसरात्। एवं चाऽन्यत्र ज्ञानादिविरहस्थले व्यतिरेकसहचारग्रहः सुकर एव।

ज्ञानेच्छाकृतीनां क्रमिकत्वे कुत्रापि ज्ञानादिसाक्षात्काराऽसंभवेन प्रतियोगिज्ञानाभावादभावज्ञानमपि न स्यादिति ज्ञानाद्यभावनियतत्वेनाभावग्रहोऽपि न संभवतीत्यत उक्तं दीधितौ— ज्ञानेच्छयोः साक्षात्कारादिति। अथवा स्वरूपयोग्यत्वं कुत्र ज्ञाने गृह्यत इति जिज्ञासायामुक्तं— ज्ञानेच्छयोः साक्षात्कारादिति। (पृ० ३०३) ज्ञानादिव्यतिरेकनियतत्वेन इच्छादिव्यतिरेकग्रहे सति पुनरिच्छाप्रत्यक्षे तेन ज्ञानाद्यनुमानादन्वयग्रहोऽपिसुघटः। एवं चान्वयव्यतिरेकग्रहे सति अनुपस्थिते कारणत्वस्य स्वरूपयोग्यत्वस्य वा ग्रहाऽसंभवेऽपि उपस्थिते स्वरूपयोग्यत्वज्ञानमपि सुलभमिति भावः। तदाह टीकायां कारणत्वनिविष्टसमस्तवस्तूपस्थिताविल्यादिः, तथा चेत्यादिना। कारणत्वनिविष्टेति। कारणत्वघटकीभूतव्याप्त्याद्युपस्थिताविल्यर्थः। अन्वयव्यतिरेकानन्यथासिद्धत्वादीनां ज्ञानत्वावच्छिन्ने ग्रहे सतीति यावत्। फलानुपधायके इति। इच्छाद्यनुत्पादस्थलीयसाक्षात्कारविषयीभूतज्ञानादावित्यर्थः। अन्वयव्यतिरेकाभ्यामिति। यत्र वह्न्यभावतत्र

❀ मणिदीपिनी ❀

सामान्यलक्षणं प्रकारान्तरेण साधयतां मतमाह—यत्त्विति। पाकादौ चिकीर्षा=पाकादिविषयकचिकीर्षा। सुखादाविच्छा=सुखादिविषयकेच्छा।

सिद्धे इच्छाविरहाद्, असिद्धस्याज्ञानात्, तस्मात्

❋ दीधितिः ❋

कृत्यनुत्पादस्थले ज्ञानेच्छयोः, कृत्यनन्तरमिच्छाकृत्योः समूहालम्बन-

❋ जागदीशी ❋

धूपधायकज्ञानादिव्यक्तीनामनुपस्थितावपि न क्षतिरिति भावः।

द्वितीयमभिप्रेत्याह कृत्यनुत्पादस्थले इति। ज्ञानेच्छयोः समूहालम्बनसाक्षात्कारस्य संभवादिति योजना। न चेच्छोत्तरं ज्ञानस्य न साक्षात्कारः, कार्यसहभावेन विषयस्य हेतुत्वादिति वाच्यम्। अनुमित्याद्युत्तरमपि परामर्शादेरनुव्यवसायात् सर्वत्र विशिष्य विषयस्य तथा हेतुत्वाऽसंभवात्। न

❋ काशिकानन्दी ❋

धूमाभाव इत्येवं व्यतिरेकव्याप्तिग्रहे सति ततो धूमदर्शनोत्तरं वह्न्यनुमितौ सत्यां वह्निधूमयोरन्वयग्रहोऽपि यथा भवति तद्वत् यत्र ज्ञानादिव्यतिरेकस्तत्रेच्छाव्यतिरेक इत्येवं व्याप्तिग्रहस्तत्रेच्छादिदर्शनेन ज्ञानाद्यनुमानेन तदीयान्वयव्याप्तिग्रहः संभवतीति भावः।

परे तु कारणत्वग्रहाऽसंभवादिति दीधितौ अन्वयांशस्य कारणताग्राहकस्योपगमे इति पूरयित्वा मनसेत्यस्यानन्तरं चान्वयांशग्रहनिरपेक्षेणैवेति शेषं संपूर्य व्यतिरेकसहचारग्रहेणैव कार्यकारणभावग्रहसंभवः ज्ञानेच्छासामान्यव्यतिरेकग्रहस्थले इच्छाकृतिव्यतिरेकस्य नियमतो ग्रहसंभवादिति दीधितिं व्याचख्युः।

संभवादिति। यत्र प्रथमं ज्ञानोत्पत्तिः तत इच्छोत्पत्तिः, तत्र प्रथमोत्पन्नज्ञानस्य इच्छाकाले सत्त्वेन तदुभयस्य तदुत्तरक्षणे प्रत्यक्षसंभवादित्यर्थो योजनालभ्यः। न साक्षात्कार इति। तृतीयक्षणे एव ज्ञानेच्छयोः समूहालम्बनात्मकानुव्यवसायो वाच्यः। तृतीयक्षणे च प्रथमक्षणोत्पन्नज्ञानस्य ध्वंस एव स्यादिति विषयविरहेण कथं नाम साक्षात्कारसंभव इति भावः। ननु द्वितीयक्षणे विषयसत्त्वादेव तृतीयक्षणे तत्प्रत्यक्षसंभवः। कार्याव्यवहितपूर्वक्षणे एव कारणापेक्षणादित्यत आह कार्यसहभावेनेति। तथा = कार्यसहभावेन। हेतुत्वाऽसंभवादिति। अनुमित्युत्तरक्षणे परामर्शध्वंसात् कार्यसहभावेन तस्य हेतुत्वं न संभवतीति भावः। न च परामर्शस्य न तत्रानुव्यवसाय इति वाच्यम्। एवं सति परामर्शस्य कुत्राप्यनुव्यवसायानापत्तेः। परामर्शोत्तरक्षणेऽनुमितेरवश्यंभावित्वात्। वह्निव्याप्यधूमवत्त्वज्ञानोत्तरानुमितिमानहमित्यनुभवस्य सर्वजनानुभविकत्वाच्च।

❋ मणिदीपिनी ❋

सिद्धे=निष्पन्ने। इच्छाविरहादिति। न हि सिद्धं पाकं पुनश्चिकीर्षति कश्चित्, न वा प्राप्तं सुखं पुनर्वाञ्छति कोऽपि। तत्र पुनरनुत्पादबुद्धिसत्त्वात्। ननु सिद्धविषयकेच्छा मास्तु असिद्धविषयकेच्छा तु स्यादित्यत्राह—असिद्धस्येति। अनुत्पन्नस्येत्यर्थः। अज्ञानादिति। सामान्यलक्षणाऽनङ्गीकारादिति शेषः। तद्धर्मावच्छिन्नविषयकेच्छां प्रति

# सुखत्वादिना ज्ञातेषु सर्वेषु सिद्धं विहाय असिद्धे

## ❀ जागदीशी ❀

चेच्छायाः साक्षात्कारस्य ज्ञानत्वांशे निर्विकल्पकतया जनकतावच्छेदकरूपेण फलोपधायकव्यक्तिग्रहाऽसंभवस्तदवस्थ इति वाच्यम्। अभावत्वादेरिव ज्ञानत्वादेः सविकल्पकैकवेद्यत्वात्। निर्विकल्पकोत्तरमौपनयिकस्य ज्ञानस्य ज्ञानत्वविशिष्टज्ञानबोधस्य संभवाच्चेति भावः। नन्वेवमपि ज्ञानस्य कृत्युपधायकत्वग्रहः सामान्यप्रत्यासत्तिं विना दुर्घटः। इतिपर्यन्तं फलोपधायकज्ञानव्यक्ते-

## ❀ काशिकानन्दी ❀

इच्छायाः साक्षात्कारस्य = इच्छाज्ञानयोः समूहालम्बनात्मकसाक्षात्कारस्य। निर्विकल्पकतयेति। निर्विकल्पकज्ञानस्यैव प्रथमं संभवादिति भावः। जनकतेति। ज्ञानत्वात्मकं यदिच्छाजनकतावच्छेदकं तत्प्रकाकरकस्य इच्छारूपफलोपधायकज्ञानव्यक्तिविशेष्यकग्रहस्याऽसंभव इत्यर्थः। ज्ञानत्वांशे निष्प्रकारकतयैवेति भावः। सविकल्पकैकवेद्यत्वात् = सविकल्पकज्ञानमात्रविषयत्वात्। ज्ञानत्वादिविषयकनिर्विकल्पकं न भवत्येवेति तृतीयक्षणे एव ज्ञानत्वप्रकारकज्ञानविषयकज्ञानमेव संभवतीति भावः।

ननु दृष्टान्तस्यैवासिद्धिः। अभावत्वस्यापि निर्विकल्पकवेद्यत्वोपगमात्। अन्यथा सर्वत्रैव तथात्वसंभवेन प्राभाकरा एव विजयेरन्। विशिष्टप्रत्यक्षं प्रति विशेषणज्ञानत्वेन कारणतायाः प्राक् साधितत्वाच्चेत्यत आह—निर्विकल्पकोत्तरमिति। औपनयिकस्य = ज्ञानत्वविषयकनिर्विकल्पकात्मकज्ञानप्रत्यासत्तिजन्यस्य। ज्ञानत्वविशिष्टज्ञानबोधस्य=ज्ञानत्वविशिष्टज्ञानप्रकारकानुव्यवसायात्मकस्य। एवं च विषयस्य तदानीं विरहेऽपि न क्षतिः।

ननु तत्प्रकारकप्रत्यक्षं प्रत्येव तद्विषयकज्ञानस्य हेतुतया ज्ञानत्वस्य भानेऽपि ज्ञानस्य कथं भानम्। न च ज्ञानप्रकारकज्ञानसामग्र्यैव ज्ञानभानं स्यात्तत्रैव ज्ञानत्वस्यापि भानं स्यादिति वाच्यम्। स्वरूपतो ज्ञानप्रकारकज्ञानाऽसंभवाज्ज्ञानत्वावच्छिन्नप्रकारताकमेव वाच्यम्। तादृशज्ञानं प्रति च ज्ञानत्वविशिष्टज्ञानस्य कारणतया तदभावादेव तस्याप्यनुपपत्तेरिति चेन्न। विषयानुपधानेन ज्ञानप्रत्यक्षानुपगमेन ज्ञानत्वांशे निर्विकल्पकमपि ज्ञानांशे घटादिसंसर्गावगाह्येवेति घटविषयकत्वादिना ज्ञानप्रकारकबोधसामग्रीसत्त्वेन ततो भासमानज्ञानांशे एव ज्ञानत्वभानसंभवादिति भावः। यद्वा ज्ञानमुख्यविशेष्यक एव बोधः। न च बाधज्ञानाऽप्रतिबध्यस्य ज्ञानमित्याकारकज्ञानस्याऽसंभव इति वाच्यम्। ज्ञानमिच्छाकारणमित्यादिग्रहस्यैव संभवात्। तस्य ज्ञानं नेच्छाकारणमितिबाधग्रहप्रतिबध्यत्वादिति।

## ❀ मणिदीपिनी ❀

तद्धर्मावच्छिन्नधर्मिकेष्टसाधनतेष्टत्वान्यतरज्ञानस्य हेतुत्वादिति च पूरणीयम्। ननु सामान्यलक्षणया सिद्धस्यापि ज्ञानात् कथं तत्रेच्छेत्यत आह—सिद्धं विहायेति।

इच्छा भावतीत्यभ्युपेयम्; तन्न, असिद्धस्याज्ञा-

❀ दीधितिः ❀

साक्षात्कारस्य, स्मरणेन च ज्ञानानुमानस्य च संभवात्। विंशत्यङ्गुल्यवच्छेदेन युगपद्विंशतिप्रयत्नोत्पादवद् इच्छाकृतिकाले ज्ञानोत्पादस्याविरोधात्।

❀ जागदीशी ❀

रसत्त्वेन तदुत्तरं तद्ग्रहाऽसंभवादत आह स्मरणेन चेति। तथा चेदं स्मरणं ज्ञानजन्यं स्मृतित्वादित्यादिक्रमेण पक्षधर्मताबलात् कृतिफलोपधायकज्ञानव्यक्तिमनुमाय पश्चात्तत्र कृतिकारणत्वग्रहः करणीय इति भावः। ननु यत्रोपेक्षात्मकेन ज्ञानेन कृतिर्जनिता तत्र तेन स्मरणानुत्पत्त्या स्मृत्या तदनुमानमसंभवीत्यत आह विंशतीति। व्यासङ्गानुरोधाद् ज्ञानयोरेवात्मनि यौगपद्यं नेष्यते न तु विशेषगुणमात्रस्येत्याशयः। न चैक एव प्रयत्नस्तत्र विंशत्यङ्गुल्यवच्छेदेनोत्पद्यत इति वाच्यम्। अङ्गुलिचेष्टानां तारतम्यानुभवेन यत्नवैलक्षण्यस्याऽऽवश्यकत्वादिति भावः।

❀ काशिकानन्दी ❀

तदुत्तरं = कृत्युत्तरम्। तद्ग्रहाऽसंभवात्=कृत्युपधायकत्वग्रहाऽसंभवात्। कृतिकाले विषयविरहेण ज्ञानत्वज्ञानविषयकनिर्विकल्पकस्याप्यसंभवेन तदुत्तरमुपनीततयापि ज्ञानभानाऽयोगादिति भावः। स्मृतित्वादित्यादीत्यादिपदेन घटविषयकस्मरणमिदं घटविषयकज्ञानजन्यं तादृशस्मृतित्वादित्यादि ग्राह्यम्। दृष्टान्तस्तु इच्छाद्यनुत्पादस्थलीयघटविषयकज्ञानजन्यस्मृत्यादिः सुलभः। ननु साध्यज्ञानार्थमेव सामान्यलक्षणाऽपेक्षितेत्यत आह— पक्षधर्मताबलादिति। कृतिफलोपधायकेति। कृत्यात्मकं यद् ज्ञानस्य फलं तदुपधायकेत्यर्थः। अत्रोक्तानुमानेन कृतिफलोपधायकत्वेन ज्ञानग्रहाऽसंभवात्—व्यक्तीत्युक्तम्। तत्र = कृतिफलोपधायकज्ञानव्यक्तौ। तेन = उपेक्षात्मकज्ञानेन। तदनुमानम्=उपेक्षात्मकज्ञानव्यक्त्यनुमानम्। व्यासङ्गानुरोधात् = कार्यान्तरपरित्यागेनैककार्यपरत्वानुरोधात्। तत्र=विंशत्यङ्गुलीषु चेष्टोत्पादस्थले। तारतम्यानुभवेन = वैलक्षण्यानुभवेन। यत्नवैलक्षण्यस्यावश्यकत्वादिति। नन्वेकस्यैव यत्नस्य नानविधचेष्टोत्पादकत्वमस्तु किं यत्नवैलक्षण्योपगमेन। न चाऽविशेषात् सर्वविधाश्चेष्टाः सर्वास्वङ्गुलीषु उत्पद्येरन्निति वाच्यम्। प्रयत्ननानात्वस्वीकारेऽपि सर्वास्वङ्गुलीषु अविशेषेण सर्वासां कृतीनामेवोत्पादापाताच्चत एव चेष्टानियमस्याप्यसंभवात्। न च कृतिजनकचिकीर्षाणां नानात्वेन न दोषः। चिकीर्षाणामपि यौगपद्योपगमादिति वाच्यम्। यतोऽवच्छेदकतासम्बन्धेन चिकीर्षाया अवच्छेदकतासम्बन्धेन कृतिजनकत्वं वाच्यम्। अवच्छे-

नेऽपि सिद्धगोचरज्ञानादेव इच्छाप्रवृत्तिस्वाभाव्या-

❀ जागदीशी ❀

नन्विदं गोपदशक्यतावच्छेदकं गोत्वादित्यत्र तादात्म्येन, अयं सास्नावान् गोत्वादित्यत्र च समवायेन गोत्वहेतौ गवेतराऽवृत्तित्वविशिष्टसकलगोवृत्तित्व-रूपस्य गोत्वत्वस्य व्याप्यतावच्छेदकतया तदन्तर्गतसकलगोग्रहार्थं सामान्य-

❀ काशिकानन्दी ❀

दकत्वं च सर्वासां चिकीर्षाणां सर्वास्वङ्गुलीषु समानमिति ततो नियमाऽसंभव एव। न च चिकीर्षाऽपि अवच्छेदकतासम्बन्धेन सर्वास्वङ्गुलीषु नोत्पद्यते। किन्तु तत्तद्विजातीयचिकीर्षा अवच्छेदकतया तत्तदङ्गुलीष्वेवेति वाच्यम्। तत्रैव नियमाकस्य दुर्वचत्वाद् विजातीयचिकीर्षायाः तत्तदङ्गुल्यन्तरेऽनुत्पादप्रयोजकविरहात्; न चावच्छेदकतासम्बन्धेन कृतिं प्रति अवच्छेदकतासम्बन्धेन चिकीर्षासहिता तत्तदङ्गुली तादात्म्येन कारणमिति नानियम इति वाच्यम्। एवं सति समवायेन अवच्छेदकतया वा चेष्टां प्रत्येवावच्छेदकतासम्बन्धेन कृतिसहकृततत्तदङ्गुलीत्वेन कारणत्वसंभवेन कृतिनानात्वकल्पनवैफल्यात्। न चाऽवच्छेदकतासम्बन्धेन कृतिं प्रति चेष्टागोचरकृतिसाध्यत्वप्रकारकेच्छायाः स्वीयचेष्टोत्पत्तिनिष्ठविशेष्यतानिरूपिताधेयतासम्बन्धावच्छिन्नप्रकारताविशिष्टावच्छेदकतासम्बन्धेन हेतुत्वोक्त्या न दोषः। विजातीयचेष्टां कृत्या साधयामीत्यादिचिकीर्षाया चेष्टोत्पत्तिनिष्ठविशेष्यतानिरूपिता आधेयत्वसम्बन्धावच्छिन्ना प्रकारता तत्तदङ्गुलीनिष्ठेति वाच्यम्। विजातीयचेष्टानिष्ठस्वसाध्यत्वप्रकारकेच्छीयचेष्टोत्पत्तिनिष्ठनिशेष्यतानिरूपिताधेयत्वसम्बन्धावच्छिन्नप्रकारताविशिष्टावच्छेदकतासम्बन्धेन एकस्याः कृतेरेव कारणत्वसंभवादिति चेन्न। समवायसम्बन्धेन अवच्छेदकतासम्बन्धेन वा चेष्टां प्रति धर्मितासम्बन्धेन कृतेः कारणत्वात्। अङ्गुलौ चेष्टां करोति इत्यादिप्रत्ययात् धर्मिताख्यविषयताविशेषोङ्गुलौ स्वीक्रियते। एवं कपाले घटं करोतीत्यादिप्रत्यानुरोधेन कपालादावपि। एवं च प्रकृते कृतेरैक्ये धर्मितासम्बन्धेन तस्याः सर्वास्वङ्गुलीषु वर्त्तमानत्त्वात् प्रत्येकासु विलक्षणा चेष्टा नोत्पद्येत। अस्माकं तु समवायसम्बन्धादिना तत्तच्चेष्टां प्रति धर्मितासम्बन्धेन तत्तत्कृतित्वेन हेतुत्वान्न कोऽपि दोषः। अवच्छेदकतावैशिष्ट्यस्य धर्मितायां निवेशान्न व्यभिचार इति दिक्।

प्रकारान्तरेण सामान्यलक्षणां साधयतः प्रगल्भस्य मतमाशङ्कते—नन्विति। इदमिति। गोत्वम् इदमा परामृश्यते। इत्यत्र तादात्म्येनेति। गोत्वहेताविति परेणान्वयः। सास्नावानिति। समवेतत्वसम्बन्धेन सास्नायाः, तादात्म्येन सास्नावतो वा साध्यत्वम्। तदन्तर्गतेति। व्याप्यतावच्छेदकीभूतगोत्वत्वान्तर्गतेत्यर्थः। सकलगोग्रहार्थमिति। व्याप्यतावच्छेदकप्रकारेण हेतोः पक्षवृत्तित्वज्ञानस्यानुमितिहेतुत्वादिति भावः। न च

❀ मणिदीपिनी ❀

इच्छाप्रवृत्तिस्वाभाव्यात्=इच्छायाः प्रवृत्तेश्च यत्स्वाभाव्यं स्वस्य भावः उत्पत्तिः स्वभावस्तदेव स्वाभाव्यं तस्मात्। ज्ञानादितिपंचम्यर्थप्रयोज्यत्वस्य स्वाभा-

दसिद्धे तयोरुत्पत्तेः। न चातिप्रसङ्गः। समानप्रका-

❀ दीधितिः ❀

गोत्वे च गोनिष्ठात्यन्ताभावाऽप्रतियोगित्वेन समवेतत्वेन च

❀ जागदीशी ❀

प्रत्यासत्तिरावश्यकीति प्रगल्भमतं निरस्यति गोत्वे चेति। गोपदशक्यतावच्छेदकत्वस्य साध्यतायां समवेतत्वविशिष्टगवेतराऽसमवेतत्वमात्रं गोरूपादौ व्यभिचारीत्यतो गोनिष्ठेत्यादि। गोनिष्ठाभावस्य प्रतियोगित्वं येन तदन्यत्वमिति व्युत्पत्त्या गोनिष्ठान्योभावप्रतियोगितावच्छेदकान्यत्वे सतीत्यर्थः। तेन, गोत्वस्यापि गोनिष्ठविशिष्टोभयाभावादिप्रतियोगित्वेऽपि न हेत्वप्रसिद्धिः। अवच्छेदकत्वं तु निरवच्छिन्नं समवायसम्बन्धावच्छिन्नं च ग्राह्यमतो नोक्तदोषतादवस्थ्यम्। गगनादौ व्यभिचारवारणार्थमाह समवेतत्वेन चेति।

❀ काशिकानन्दी ❀

सास्नादिव्याप्यत्वेन रूपेण गोत्वादिग्रहस्याप्यनुमितिहेतुतया व्याप्यतावच्छेदकप्रकारकपक्षवृत्तित्वज्ञानमनावश्यकमिति वाच्यम्। मीमांसकमतानुरोधेनैतदुक्तेः। तैरेव सामान्यलक्षणायाः प्रतिरोधात्। सास्नादिव्याप्यगोत्ववानित्याद्याकारकपरामर्शस्थले गोत्वस्वभानाच्चेति। व्यभिचारि = व्यभिचारितावच्छेदकम्। तेन न तादात्म्येन हेतुताविरोधः। गोनिष्ठान्योन्याभावेति। तत्तद्गोरूपवान्नेति भेदस्यापरापरेषु गोषु सत्त्वान्न किमपि गोरूपं गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकम्। विशिष्टोभयाभावादीति। नीलविशिष्टगोत्वं नास्ति, गोत्वघटोभयं नास्तीत्यादिप्रतीतिसाक्षिकाभावादीत्यर्थः। अवच्छेदकत्वं = गोनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वम्। निरवच्छिन्नं = किंचिद्धर्मानवच्छिन्नम्। नोक्तदोषः = न नीलगौर्नेत्यादिप्रतीतिसिद्धनीलत्वविशिष्टगोत्वाद्यवच्छिन्नभेदमादाय हेत्वप्रसिद्धिदोषः। अत्यन्ताभावनिवेशेऽपि निरवच्छिन्नत्वस्य प्रतियोगित्वविशेषणान्नैतद्दोषसंभव इति तु न शङ्क्यम्। अत्यन्ताभावीयप्रतियोगितायाः किंचिद्धर्मावच्छिन्नत्वनियमाद्। तादात्म्येन गोत्वविशिष्टभेदस्य गवि सत्त्वाद् हेत्वप्रसिद्धितादवस्थ्यमतः समवायसम्बन्धावच्छिन्नमिति। कालिकेन गोरूपस्य निखिलगवि सत्त्वाद् व्यभिचारवारणायेति तु न सत्। तत्तद्गोरूपस्य विभिन्नकालीनगवि विरहात्। समवेतत्वेन चेतीति। समवायसम्बन्धावच्छिन्ननिरवच्छिन्न-

❀ मणिदीपिनी ❀

व्यपदार्थोत्पत्तावन्वयः। तयोः = इच्छाप्रवृत्त्योः। उत्पत्तेरिति। सिद्धविषयकज्ञानस्येच्छाप्रवृत्तिप्रयोजकत्वे तत इच्छाप्रवृत्ती अवश्यं भवतः। तत्र सिद्धे इच्छाद्यसंभवेनासिद्धे एव तयोः पर्यवसानमिति भावः। नन्वेवमितरविषयकज्ञानस्येतरविषयकेच्छाप्रयोजकत्वे घटत्वेन घटज्ञानात्पटत्वेन पटविषयकेच्छादिरपि स्यादित्यत आह—न चातिप्रसङ्ग इति। समानेत्यादि। पाकाभावे द्वेषस्यापि पाकविषय-

# रकत्वेन ज्ञानेच्छाकृतीनां कार्यकारणभावात् ;

## ❀ काशिकानन्दी ❀

प्रकारताश्रयत्वार्थकमिति शेषः। तेन गोनिष्ठान्योन्याभावीयप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकताया घटत्वादावेव सत्त्वात्तद्विरहिणि गोरूपादौ न व्यभिचारतादवस्थ्यम्। न चैवमित एव गोरूपादिवारणे गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वदलं विफलमिति वाच्यम्। सौरमेयीत्व-वृषभत्वादिजातौ व्यभिचारवारणाय तद्दलसार्थक्यात्। अत एव गोरूपादावित्यत्र आदिपदमुपात्तम्। न च गगनादावतिव्याप्तेर्निरवच्छिन्नप्रकारताश्रयत्वविवक्षणेनैव वारणात् समवायसम्बन्धावच्छिन्नप्रकारतापर्यन्तमनर्थकमिति वाच्यम्। अखण्डोपाधिषु व्यभिचारवारणाय तत्सार्थक्यात्। भेदत्वाद्यात्मकाखण्डोपाधीनां गवेतरस्मिन् भेदेऽपि स्वरूपेणैव वृत्तितया असमवेतत्वाद् गोनिष्ठभेदीयप्रतियोगितानिरूपितसमवायावच्छिन्नावच्छेदकताशून्यत्वाद् निरवच्छिन्नप्रकारताश्रयत्वाच्च समवायसम्बन्धावच्छिन्ननिरवच्छिन्नप्रमीयप्रकारताश्रयत्वपर्यन्तौचित्यात्।

केचित्तु गवेतरत्वव्यापकभेदप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतावत्त्वमेव समवेतत्वविशेषितगवेतरासमवेतत्वन्नाम। सौरमेयीत्ववृषत्वादिषु व्यभिचारवारणाय गोनिष्ठेत्यादिदलम्। अविशेषितमित्यादिदीधितेस्तु यथाश्रुतं गवेतरासमवेतत्वं व्याप्यतावच्छेदकमित्यर्थः। न च समवायसम्बन्धावच्छिन्नत्वमपि न देयम्, गगनादेर्निरवच्छिन्नावच्छेदकताविरहेणैव वारणसंभवादिति वाच्यम्। अखण्डोपाधिषु व्यभिचारप्रसक्तेः। न च गोत्वद्रव्यत्वोभयावच्छिन्नभेदं गवेतरत्वव्यापकीभूतमुपादाय द्रव्यत्वादौ व्यभिचारः, तत्र गोत्वद्रव्यत्वोभयपर्याप्तनिरवच्छिन्नैकावच्छेदकत्वोपगमादिति वाच्यम्। गोत्वस्यैव लाघवेन तत्रावच्छेदकत्वाद्। न च गेवतरत्वव्यापकगोजलान्यतरत्वपृथिवीत्वैतदुभयावच्छिन्नभेदप्रतियोगितानिरूपितपृथिवीत्वनिष्ठनिरवच्छिन्नावच्छेदकतामादाय व्यभिचार इति वाच्यम्। सावच्छिन्नच्छेदकत्वाऽनिरूपकप्रतियोगितावच्छेदकताया विवक्षणेन दोषाभावादिति दिगिति प्राहुः।

यत्तु जातिवृत्तित्वविशिष्टं समवेतत्वं, जातिप्रतियोगिकसमवायावच्छिन्नवृत्तित्वं वा समवेतत्वमित्यनेन विवक्षितमिति, तन्न, आद्ये जातिवृत्तित्वविशिष्टवृत्तित्वस्य जातिवृत्तित्व-

## ❀ मणिदीपिनी ❀

केच्छाजनकत्वात्पाकविषयकज्ञानविरहकाले द्वेषवशादिच्छोत्पद्येतेति पाकत्वप्रकारकज्ञानस्य पाकत्वप्रकारकेच्छाहेतुत्वम्। एवं पाकत्वप्रकारकज्ञानविरहे तद्विषयककृत्यसंभवात्तत्रापि तथा हेतुत्वमिति समानप्रकारकत्वेन ज्ञानेच्छाकृतीनां कार्यकारणभावः। प्रमेयत्वप्रकारकघटादिविषयकज्ञानादपि घटत्वप्रकारकेच्छाऽदर्शनान्न समानविषयकतया कार्यकारणभावश्च। एवं च समानप्रकारकत्वेनैव कार्यकारणभावे सिद्धे पाकत्वादिना सिद्धपाकादिविषयकज्ञानमेव पाकत्वादिनाऽसिद्धपाकविषयकेच्छां

# न तु समानविषयकत्वेनापि; क्वचिदप्यकल्पनात्;

❀ दीधितिः ❀

विशेषिमविशेषितं वा गवेतराऽसमवेतत्वं व्याप्यतावच्छेदकं, न तु सकलगोवृत्तित्वविशेषितम्। सामान्यलक्षणयाऽपि ग्रहीतुमशक्यत्वात्।

न तु समानविषयकत्वेनापीति। स्यादेतद्, समानप्र-

❀ जागदीशी ❀

सास्नादेः साध्यतायां गवेतराऽसमवेतमात्रस्यैव समवायेन हेतुत्वसंभवादाह अविशेषितं वेति। नत्विति। न तु तत्तदनन्तव्यक्तिवृत्तित्वविशेषितमित्यर्थः। अशक्यत्वादिति। तत्तद्व्यक्तित्वेनानन्तगोव्यक्तीनामेकदाऽनुपस्थिते-रिति भावः।

नैयायिकः शङ्कते स्यादेतदिति। एतद्दूषणं स्यादित्यर्थः। समानेति। रजतत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानत्वेन समवायप्रत्यासत्त्या रजतत्वप्रका-

❀ काशिकानन्दी ❀

वैशिष्ट्यस्यैव वा गवेतराऽसमवेतत्वविशेषणेनैवोपपत्तेः समवायावच्छिन्नवृत्तित्वपर्यन्तानर्थ-क्यात्, द्वितीयेऽपि समवायत्वेन तत्प्रवेशोऽफलः।

नित्यत्वविशिष्टसमवेतत्वं नित्यप्रतियोगिकसमवायावच्छिन्नवृत्तित्वं वा समवेतत्वमिति तु उपादातुं शक्यम्। अखण्डोपाधिवारकतया समवायनिवेशसार्थक्यसंभवात्।

गवेतराऽसमवेतमात्रेति। गोरूपादिसाधारणेत्यादिः। अविशेषितमिति। गोनिष्ठा-त्यान्तऽभावाऽप्रतियोगित्वेन समवेतत्वेन चाविशेषितमित्यर्थः। वृत्तित्वविशेषमिति। गोत्वत्वमिति शेषः। अनुपस्थितेरिति। गोत्वेन रूपेणैवोपस्थितेरिति भावः। न च गोत्वेन रूपेण निखिलगोनिरूपितवृत्तित्वज्ञानमेवापेक्षितं न तु तत्तद्व्यक्तित्वेन तत्तद्व्यक्तिवृत्ति-त्वज्ञानमिति वाच्यम्। गोत्वनिष्ठाधेयतानिरूपिताया गोनिष्ठाधिकरणताया गोत्वानवच्छि-न्नतया तथाप्रत्ययाऽसंभवात्। निखिलगोनिष्ठाया गोत्वावच्छिन्नाधिकरणताया एकतया विनापि सामान्यलक्षणां तन्निरूपितवृत्तित्वग्रहसंभवाच्च।

रजतत्वावच्छिन्नेति। रजतं मदिष्टसाधनमित्याद्याकारकेष्टसाधनताज्ञानत्वेनेत्यर्थः। समवायप्रत्यासत्त्या=समवायघटितसामानाधिकरण्यप्रत्यासत्त्या। ननु रजतत्वप्रकारक-ज्ञानत्वेनैव समवायप्रत्यासत्त्या तादृशेच्छाप्रयोजकत्वं कुतः परित्यक्तमित्यत आह—रजत-त्वप्रकारकेच्छासामान्यमिति। तत्प्रकारकज्ञानत्वेन=रजतत्वप्रकारकज्ञानत्वेन।

* मणिदीपिनी *

जनयेत्। न वाऽतिप्रसङ्गः घटत्वपटत्वयोर्भिन्नत्वादिति किं सामान्यलक्षणयेत्यर्थः। क्वचिदपीति। समानविषयकत्वेन कार्यकारणभावस्येत्यादिः। अकल्पनात्=

# समानविषयकत्वे सत्यपि समानप्रकारकज्ञानाभावे-

## ❀ जागदीशी ❀

रकेच्छां प्रति प्रयोजकत्वे इत्यर्थः। रजतत्वप्रकारकेच्छासामान्यं प्रति तत्प्रकारकज्ञानत्वेन हेतुतायां मानाभावेन यथाश्रुताऽसंगतेः। रजतानयनत्वादिप्रकारकप्रवृत्तिं प्रत्येव रजतत्वादिप्रकारकत्वेनोपादानप्रत्यक्षस्य हेतुत्वादिति ध्येयम्। रजतत्वादिपदं सुखत्वादेरुपलक्षकम्। सुखादेः स्वतः प्रयोजनतया समानप्रकारकत्वेनैव तत्र ज्ञानेच्छयोः कारणत्वकार्यत्वसंभवादित्यपि कश्चित्।

वस्तुतो यद्धर्मिकेष्टसाधनताज्ञानं तत्रैव यदभावे द्वेषस्तत्रापीच्छा जायत इति सर्वत्र फलान्यगोचरेच्छायां नेष्टसाधनताज्ञानापेक्षेति स्वयमेव बौद्धाधिकारे व्यवस्थापितम्। तथा च यत्र विनश्यदवस्थेनैव रजताभावधर्मिकद्विष्टसाधनताज्ञानेन रजताभावे द्वेषो जनितस्तत्रोत्तरकालमज्ञातेऽपि रजते रजतत्वप्रकारेणेच्छापत्तिरतः सामान्यतो रजतत्वप्रकारकेच्छायां रजतत्वप्रकारकज्ञानत्वेनापि हेतुत्वान्तरमावश्यकमतः समानप्रकारतामात्रेणेत्यादिकं यथाश्रुतमेव सम्यगिति प्रतीमः।

## ❀ काशिकानन्दी ❀

ननु रजतत्वप्रकारकज्ञानं रजतत्वप्रकारककृतिं प्रति प्रयोजकमित्यभिमत्य समानप्रकारत्वेनेत्युक्तं दीधितिकारेणेत्याशङ्क्य तदपि निरस्यति—रजतानयनत्वेति। एवं च रजतानयनत्वप्रकारककृतौ रजतत्वप्रकारकज्ञानं कारणमिति तत्रापि समानप्रकारकत्वं दुर्घटमिति भावः। प्रवृत्तिं=कृतिम्।

रजतत्वादिपदमिति। आदिना तादृशप्रकाराश्रय इत्यादौ तादृशादिपदम्। स्वतः प्रयोजनतयेति। न तु पाकादिवत् सुखादिप्रयोजनाधीनप्रयोजनमिति भावः। तत्रेति। त्रलर्थो विषयत्वम्। सुखविषयकज्ञानेच्छयोरित्यर्थः। अत्रापि सुखं मदिष्टमित्येवमिष्टत्वप्रकारकज्ञानस्यैवेच्छाहेतुत्वे समानप्रकारत्वं दुर्घटमित्यरुचेराह—कश्चिदिति। यदभावे=पुत्रदारागृहसुवर्णरजतसुखाद्यभावे। द्वेषः=द्विष्टसाधनताज्ञानमूलकः द्वेषः। तत्रापि=पुत्रदारादिष्वपि। सुखाद्यात्मकमुख्यफलविषयकेच्छायां तद्धर्मिकेष्टसाधनताज्ञानस्य सर्वमतेनाहेतुत्वादाह—फलान्येति। विनश्यदवस्थेनेति। अविनश्यदवस्थद्विष्टसाधनताज्ञानसत्त्वे तस्य रजतत्वेन रजतविषयकतया द्वेषकालस्थायितया च द्वेषोत्पत्त्युत्तरक्षणीयेच्छाप्रयोजकत्वं संभवतीति विनश्यदवस्थपर्यन्तम्। तथा च विनश्यदवस्थद्विष्टसाधनताज्ञानोत्तरं द्वेषोत्पादकाले रजताभावधर्मिकद्विष्टसाधनताज्ञानात्मकरजतत्वप्रकारकज्ञानस्य नष्टतया रजतस्य तदानीमज्ञाततया अज्ञातेऽपि तस्मिन्ननुभवविरुद्धेच्छोत्पादापत्तिरिति भावः। सामान्यत इति। रजतधर्मिकेष्टसाधनताज्ञानाऽव्यवहितोत्तरेच्छातादृशेष्टसाधनताज्ञाना-

## ❀ मणिदीपिनी ❀

अक्लृप्तत्वात्। अकल्पने हेतुमाह—समानेति। समानविशेष्यकत्वे सत्यपीत्यर्थः।

नेच्छाकृत्योरभावात् । तस्यावश्यकत्वेन गौरवाच्चेति

❀ दीधितिः ❀

मात्रस्य प्रयोजकत्वे क्वचिदेव रजतत्वप्रकारिकेच्छा क्वचिन्नेति नियमो न स्यात् ।

❀ जागदीशी ❀

क्वचिदेवेति । रजतत्ववत्तया निश्चिते धर्मिणीत्यर्थः । क्वचिद् = गृहीरजतत्वाऽसंसर्गके घटादौ । नियमो न स्यादिति । तथा च रजतत्वप्रकारकज्ञानात् घटादेरपि तत्प्रकारकेच्छापत्तिरिति भावः । ननु तत्पुरुषीयरजतत्वप्रकारकेच्छासामान्यं प्रत्येव तत्पुरुषीयरजतत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानत्वेन हेतुत्वं, तत्र च कार्यस्य विशेष्यत्वं कारणस्य तु स्वप्रकारीभूतरजतत्वा-

❀ काशिकानन्दी ❀

दीनां विशेषतः कार्यकारणभावाच्च न इष्टसाधनताज्ञानादिविरहकाले इच्छापत्तिरिति ।

रजतत्ववत्त्वेति । रजतत्वप्रकारकनिश्चयविशेष्यीभूतधर्मिणीत्यर्थः । गृहीतरजतत्वाऽसंसर्गके = इदं न रजतमित्याद्याकारकज्ञानविषयीभूते । तत्प्रकारकेच्छापत्तिरिति । रजतत्वप्रकारकरजतविशेष्यकज्ञानोत्तरं नेदंरजतमितिज्ञानविषयीभूतघटे रजतत्वप्रकारकेच्छोत्पत्तिर्न दृश्यत इति समानविशेष्यकतया ज्ञानेच्छादीनां कार्यकारणभाव आवश्यकः । न च रजतत्वप्रकारकघटविशेष्यकेच्छायां दोषविशेषस्यापि हेतुतया तद्विरहादेव नेच्छोत्पत्तिः यत्र तु दोषस्तत्र शुक्त्यादौ रजतत्वप्रकारकेच्छा जायत एवेति वाच्यम् । अननुगतदोषविशेषाणां कारणत्वकल्पनापेक्षया समानविशेष्यतयाऽपि कार्यकारणभावस्वीकारस्यैवौचित्यादिति भावः । नन्विति । रजतत्वप्रकारकरजतविशेष्यकज्ञानोत्तरं न रजतत्वप्रकारकघटविशेष्यकेच्छोत्पत्तिः । स्वप्रकारीभूतरजतत्वाश्रयत्वसम्बन्धेन रजतत्वप्रकारकज्ञानस्य घटे विरहाद् विशेष्यतासम्बन्धेन घटे रजतत्वप्रकारकेच्छाप्रयोजकसामग्रीविरहात् । समवायसम्बन्धेन तादृशेच्छां प्रति समवायसम्बन्धेन निरुक्तेष्टसाधनताज्ञानस्य कारणत्वोक्तौ तत्तत्पुरुषीयत्वनिवेशाभावेन लाघवेऽपि रजतत्वप्रकारकरजतविशेष्यकज्ञानोत्तरजायमने-

❀ मणिदीपिनी ❀

इच्छाकृत्योरभावादिति । प्रमेयत्वादिना घटादिविषयकज्ञानोत्तरं घटत्वेन तद्विषयकेच्छाऽदर्शनादन्वयव्यभिचारादिति भावः । ननु समानप्रकारकत्वेन कार्यकारणभावे समानविशेष्यकत्वमपि प्रवेशनीयमत आह—तस्येति । सामानप्रकारकत्वेन कार्यकारणभावस्येत्यर्थः । गौरवादिति । समानविशेष्यकत्वप्रवेशे इत्यादिः ।

❀ दीधितिः ❀

**तादृशप्रकाराश्रय एव तदुत्पादोपगमे कथमरजते रजतत्वप्रकारिकेच्छा**

❀ जागदीशी ❀

श्रयत्वं प्रत्यासत्तिरतो घटादौ न रजतत्वप्रकारकेच्छेत्यत आह तादृशप्रकारेति । [ ज्ञानप्रकारीभूतरजतत्वाश्रय एवेत्यर्थः ]। कथमिति । तथा च शुक्त्यादिधर्मिकरजतत्वप्रकारकेच्छायां व्यभिचारादुक्तक्रमेण हेतुत्वमसंभवीति भावः ।

ननु तद्धर्मिकरजतत्वप्रकारकेच्छायां तद्धर्मिकरजतत्वाऽसंसर्गग्रहस्याऽभावोऽपि हेतुर्वाच्य इति इच्छायां न विशेष्याऽनियमः । न च गुरूणां रजतधर्मिकरजतत्वाऽसंसर्गग्रहस्याऽप्रसिद्ध्या रजतत्वप्रकारेण तत्रेच्छा न स्यात् । कारणबाधादिति वाच्यम् । रजतान्यधर्मिकेच्छायामेवोक्तक्रमेण

❀ काशिकानन्दी ❀

च्छायाः घटादावुत्पत्तिवारणार्थमेवैतादृशनिवेश इति भावः । दीधितौ—तादृशप्रकाराश्रये=रजतत्वादिप्रकारकज्ञानीयप्रकारीभूतरजतत्वाद्याश्रये । तदुत्पादोपगमे=रजतत्वप्रकारकेच्छोत्पादोपगमे । जागदीश्यां व्यभिचारादिति । यस्य पुंसः शुक्तिं दृष्ट्वा रजतमिदमिति ज्ञानोत्तरं रजतत्वप्रकारकशुक्तिविशेष्यकेच्छा समुत्पन्ना तत्र तादृशेच्छा विशेष्यतासम्बन्धेन शुक्तौ वर्त्तते, न पुनस्तत्र रजतत्वप्रकारकज्ञानं स्वप्रकारीभूतरजतत्वाश्रयत्वसम्बन्धेन वर्त्तत इति व्यतिरेकव्यभिचार इत्यर्थः । न च रजतत्वप्रकारकेच्छां प्रति रजतत्वप्रकारकज्ञानस्यं स्वीयरजतत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनैव हेतुत्वमास्ताम् । तादृशविशेष्यतायाः शुक्तौ सत्त्वादिति वाच्यम् । तथा सति असिद्धपाकादिविषयकेच्छानुपपत्तेः । पाको मदिष्टसाधनमित्यादिज्ञानीयपाकत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः सिद्धपाक एव सत्त्वात् । ननु स्वीयेष्टसाधनत्वनिष्ठप्रकारतानिरूपितविशेष्यत्व-तदवच्छेदकान्यतरत्वसम्बन्धेन कारणत्वान्न दोषः । न चैवमपि रजतत्वप्रकारकभाविशुक्तिविशेष्यकेच्छा न स्यादिति वाच्यम् । सामान्यलक्षणामङ्गीकुर्वतां मतेऽपि रजतत्वेन शुक्तिभ्रमोत्तरं भाविशुक्तिविषयज्ञानाऽसंभवेन तद्विषयकेच्छाया वक्तुमशक्यत्वादिति चेत् ? न, तथा सति संसर्गाननुगमः स्यात् । किं च यत्र रजते नेदं रजतमिति बाधग्रहस्तत्रापीच्छोत्पादापत्तिः । रजतं मदिष्टसाधनमिति ज्ञानविशेष्यतावच्छेदकरजतत्वस्य तत्रापि सत्त्वादिति भावः ।

ननु रजतत्वप्रकारकेच्छायां रजतत्वप्रकारकज्ञानमेव समवायप्रत्यासत्त्या कारणम् । रजतत्वप्रकारकघटादिधर्मिकेच्छायां घटधर्मिकरजतत्वाऽसंसर्गाग्रहस्यापि हेतुत्वाच्च न नेदं रजतमित्येवं घटे रजतत्वबाधकाले तद्धर्मिकरजतत्वप्रकारकेच्छा, तादृशबाधविरहकाले घटेऽपि तादृशीच्छा इष्टैवेति शङ्कते नन्विति । ननु असंसर्गाग्रहस्यापि स्वातन्त्र्येण हेतुत्वे रजतधर्मिकरजतत्वप्रकारकेच्छा न स्यात् । रजतत्वरजतयोरसंसर्गस्याऽप्रसिद्धतया भ्रममनङ्गीकुर्वतां गुरूणां रजतधर्मिकरजतत्वाऽसंसर्गऽग्रहाऽप्रसिद्ध्या तदभावस्याप्यप्रसिद्धेरित्याशङ्कां निषेधति—न चेति । अप्रसिद्ध्येति । न च रजतानुयो

## ❀ काशिकानन्दी ❀

र्मिकरजतत्वाऽसंसर्गस्याऽप्रसिद्धावपि घटादौ प्रसिद्धं रजतत्वाऽसंसर्गमादायैव रजतेऽपि रजतत्वाऽसंसर्गग्रहाभावः सुलभ इति वाच्यम् । तथा सति घटो न रजतमिति रजतत्वाऽसंसर्गग्रहकाले इदं रजतमित्याकारकज्ञानादिच्छोत्पत्त्यनापत्तेः । तस्मात्तत्तद्धर्मिको यो रजतत्वाऽसंसर्गस्तद्ग्रहाभावस्यैव हेतुत्वं वाच्यमित्यप्रसिद्धिः स्यादेव ।

यत्तु रजतत्वाद्यसंसर्गग्रहविषयव्यावृत्तस्तदभाव एव रजतत्वादिप्रकारकेच्छाविषयत्वनियामक इति नाऽप्रसिद्ध्यादिदोषः । घटे रजतत्वाद्यसंसर्गस्य प्रसिद्धतया तद्ग्रहविषयीभूतघटव्यावृत्तस्य तदग्रहविषयत्वाभावस्य रजते सत्त्वात् । तथा हि रजतत्वाद्यसंसर्गो घटे प्रसिद्धः तदग्रहविषयत्वमपि तत्रैव प्रसिद्धम् । इदं रजतमित्याकारकघटधर्मिकरजतत्वप्रकारकज्ञानकाले रजतत्वाऽसंसर्गाऽग्रहविषयत्वस्य घटे सत्त्वात् तदभावश्च रजत इति । घटधर्मिकेदंनरजतमित्याकारकज्ञानोत्तरं च न घटे रजतत्वप्रकारकेच्छा । तत्र रजतत्वाऽसंसर्गाग्रहविषयत्वाभावस्यैव विरहेण विशिष्टविषयत्वाभावस्य सुतरां विरहादिति गदाधरीयमतम् ।

ननु घटे इदंरजतमित्याकारकभ्रमोत्तरं रजतत्वप्रकारकेच्छा न स्यात् । पुमन्तरीयघटधर्मिकरजतत्वाऽसंसर्गग्रहविषयत्वस्य घटे वर्त्तमानतया तन्निष्ठरजतत्वाऽसंसर्गाग्रहविषयत्वाभावस्य रजतत्वाद्यसंसर्गग्रहविषयव्यावृत्तत्वविरहात् । न च तत्पुरुषीयरजतत्वाऽसंसर्गग्रहविषयव्यावृत्तत्वं निवेशनीयमिति न दोष इति वाच्यम् । कालान्तरीयतत्पुरुषीयनेदंरजतमितिज्ञानविषयत्वस्य घटे संभवेन तथाप्यनिर्वाहात् । न च तत्पुरुषीयतत्कालीनरजतत्वाऽसंसर्गग्रहविषयव्यावृत्तत्वं निवेश्यमिति न दोषः । यत्पुरुषस्य यत्काले नेदंरजतमित्याकारककिंचिद्धर्मिकरजतत्वाऽसंसर्गग्रहो नास्ति तस्य तदानीन्तनघटविषयकरजतमिदमित्याकारकज्ञानादिच्छानापत्तेः । तत्पुरुषीयतत्कालीनरजतत्वाऽसंसर्गग्रहविषयत्वाऽप्रसिद्धेः । न च तत्पुरुषीयरजतत्वाऽसंसर्गग्रहविषयतायां यत्कालीनत्वयद्वृत्तित्वोभयाभावस्तत्कालावच्छिन्नतद्वृत्तितावत्तदग्रहविषयत्वाभावस्य नियामकत्वोक्त्या न दोष इति वाच्यम् । यादृशतृणव्यक्तित्वाऽसंसर्गग्रहो यत्पुरुषस्य कदापि न जातस्तत्रैवाऽप्रसिद्धेर्दुर्वारत्वादिति चेद् ?

न, रजतत्वतादृशतृणव्यक्तित्वाद्यसंसर्गग्रहविषयतायां यत्कालीनत्वयत्पुरुषीयत्वयद्वृत्तित्वैतत्त्रितयाभावः तत्कालावच्छिन्नतद्वृत्तितावद्रजतत्वाऽद्यसंसर्गाऽग्रहविषयत्वाभावस्तत्पुरुषीयरजतत्वदिप्रकारकेच्छानियामकः । पुरुषान्तरीयतत्तृणत्वाऽसंसर्गाऽग्रहविषयतायां तत्पुरुषीयत्वादिविरहमादाय दोषवारणम् । यादृशतृणव्यक्तिर्द्दिनत्रयाद्यवस्थायिनी एकेनैव पुंसा विलोकिता तत्र पुरुषान्तरीयाऽसंसर्गग्रहस्याप्यप्रसिद्धत्वेऽपि ईश्वरादिज्ञानीयतत्तृणत्वाऽसंसर्गग्रहविषयतामादायैवोपपत्तिः । तत्तृणत्वाऽसंसर्गस्य वस्त्वन्तरे सत्त्वेन तद्विषयकत्वस्येश्वरज्ञानादावक्षतेरिति तन्मतनिष्कर्षः ।

तन्न शोभनम् । रजतं दृष्ट्वा यस्य इदं न रजतमित्याकारकज्ञानमुत्पन्नं तस्य तद्धर्मिकरजतत्वप्रकारकेच्छोत्पादापत्तेः । रजतत्वाऽसंसर्गग्रहविषयतायां तत्पुरुषीयत्वतत्कालीनत्वयोः सत्त्वेऽपि रजतवृत्तित्वाभावात् रजतत्वासंसर्गग्रहविषयव्यावृत्ततादृशविषयत्वाभावात्मकप्रयोजकसत्त्वाद् । न च इदं न रजतमित्याकारकज्ञाने इदमा रजतस्यैव

## ❀ काशिकानन्दी ❀

उल्लिख्यमानतया तादृशज्ञानविषयतायां रजतवृत्तित्वमप्यक्षतमेवेति वाच्यम् । यतः भ्रमानङ्गीकर्तॄणां गुरूणां रजतत्वाऽसंसर्गनिष्ठप्रकारतानिरूपितविशेष्यताया रजते वक्तुमशक्यतया ज्ञानद्वयमेव तत्राङ्गीकार्यम् । तत्र रजतत्वाऽसंसर्गविषयकं स्मरणात्मकं ज्ञानं इदमंशे प्रत्यक्षात्मकं च । तादृशस्मरणात्मकज्ञानविषयत्वस्य रजतेऽसंभव एव । न चैकमेव ज्ञानं रजतत्वाऽसंसर्गग्रहांशे स्मृत्यात्मकमन्यांशे प्रत्यक्षात्मकमिति शक्यं वक्तुम् । स्मृतित्वप्रत्यक्षत्वयोः सांकर्यप्रसङ्गात् । घटघर्मिकेदं न रजतं रजतं चेत्याकारक समूहलम्बनमादाय रजतत्वप्रकारकेच्छाविरहप्रसङ्गाच्च । समूहालम्बनविलक्षणविषयताप्रवेशे उक्तस्थले दोषतादवस्थ्यप्रसङ्गाच्च । रजतत्वाऽसंसर्गनिष्ठप्रकारतानिरूपितज्ञानीयविशेष्यताया एव समूहालम्बनविलक्षणविषयतापदेन घर्त्तव्यतया रजतं दृष्ट्वा इदं न रजतमिति यद् ज्ञानं तदीयविशेष्यताया रजतेऽसंभवेन तत्पुरुषीयत्वतत्कालीनत्वतद्वृत्तित्वैतत्त्रितयाभावस्य तादृशविषयतायामक्षतत्वाद् । अस्माकं तु रजतत्वाऽसंसर्गग्रहसाकाङ्क्षेत्यादिवक्ष्यमाणकल्पेन दोषवारणम् ।

इदं तु तत्वम् । आकाङ्क्षाया धर्मधर्मिणोर्विशेषणविशेष्यभावस्वरूपत्वमुपगम्य प्राभाकरमतमुपपादयतां गदाधरभट्टाचार्याणां मते उक्तनिवेशः संभवत्येव । तैर्ज्ञानद्वयीयविषयतयोरपि निरूप्यनिरूपकभावस्य प्रामाण्यवादादौ उक्तत्वात् । न चैवं भ्रमाभ्युपगमापत्तिर्गुरूणां, तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानस्यैव भ्रमत्वादिति वाच्यम् । तदभाववन्निष्ठतज्ज्ञानीयविशेष्यतायाः प्रवेश्यत्वात् । उक्तस्थले ज्ञानद्वयस्यैवोपगमात् । न चैवमपि रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानस्य भ्रमत्वापत्तिः । तत्र रजतत्वरङ्गत्वयोः सन्निकृष्टतया प्रत्यक्षत्वेन समूहालम्बनात्मकैकज्ञानोपगमसंभवात् । तत्रापि ज्ञानद्वयं स्वीकृत्य भ्रमत्वखण्डनं तु प्रतिवादिविरुद्धमेव वक्तव्यमितिहठमात्रैकनिबन्धनं निर्युक्तिकत्वादिति वाच्यम् । यतस्तत्रापि रङ्गत्वरजतत्वयोर्न प्रत्यक्षं दोषवशात् किन्तु स्मरणमेव । अत एव तत्रैवैकतरस्य प्रमायां जातायां सत्यामुभयमपीदं रजतं, रङ्गत्वं नात्र पश्यामीत्याद्यनुव्यवसाय उपपद्यते । न हि दोषविशेषस्य रङ्गत्वप्रत्यक्षप्रतिबन्धकत्ववद् दोषविशेषान्तरस्य रङ्गत्वलौकिकप्रत्यक्षहेतुत्वमिति केनाप्युपगम्यते, येन रजते रङ्गत्वभ्रमप्रयोजकदोषोऽपि रङ्गत्वप्रत्यक्षहेतुरिति वक्तुं शक्येत । न च जपाकुसुमसन्निहितस्फटिकमणौ लौहित्यप्रतीतेस्तत्र भ्रमत्वस्वीकारापत्तिः । तत्र सर्वैरेव स्फटिकाभिहतचक्षूरश्मेः पुष्पे परावृत्तस्य लौहित्येन सह सन्निकर्षोपगमात्तत्प्रत्यक्षस्यावश्यकत्वादिति वाच्यम् । अस्त्वेवं तथापि न भ्रमत्वस्वीकारापत्तिः । यतस्तत्सम्बन्धेन तदभाववति तन्निष्ठप्रकारतानिरूपिततत्सम्बन्धनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यताशालिज्ञानत्वमेव भ्रमत्वम् । गुरुभिस्तु स्फटिकं लोहितमित्यादिस्थलेषु सर्वत्र लौहित्यप्रकारतानिरूपितविशेष्यतायाः स्फटिके उपगमेऽपि लौहित्यप्रकारतानिरूपितसांसर्गिकविषयतानिरूपितविशेष्यताया अनुपगमात् । अत एवाऽसंसर्गाग्रह इति निगद्यते । न च स्फटिकं समवायेन लौहित्यवदित्याकारकप्रत्यक्षस्थले का गतिरिति वाच्यम् । यतस्तत्र न समवायेन लौहित्यं प्रकारः ।

❀ जागदीशी ❀

हेतुत्वोपगमात्। रजतत्वाऽसंसर्गसाकाङ्क्षतत्तद्धर्मिकज्ञानाभावस्यैव वा हेतुत्वा-

❀ काशिकानन्दी ❀

अपि तु लौहित्यसमवाय एव। तस्य च स्फटिकेऽसंसर्गाग्रह इति। एवमेव भ्रमसामान्य-स्थले रीतिरनुसन्धेयेति। तर्कालङ्कारैस्तु पुनः आकाङ्क्षायाः पदार्थान्तरत्वस्य स्वयमेवाग्रे कथयिष्यमाणतया ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावस्याऽस्वीकृतत्वादुक्तनिवेशो नाद्रियन्ते स्मेत्यवगन्तव्यम्।

हेतुत्वोपगमादिति। तथा च रजतधर्मिकरजतत्वप्रकारकेच्छास्थले रजतत्वप्रकारक-ज्ञानमात्रं कारणम्। रजतान्यधर्मिकरजतत्वप्रकारकेच्छां प्रति च रजतत्वप्रकारकज्ञानं, तद्धर्मिकरजतत्वाऽसंसर्गाऽग्रहश्चेति द्वयं कारणमिति विशिष्यैव कार्यकारणभावो वाच्य-इति भावः।

नन्वेवमेकस्मिन् रजते इदं रजतमितिज्ञानं रजतान्तरे च इदं न रजतमित्याकारकं ज्ञानं तत्र रजतान्तरविशेष्यिकापि रजतत्वप्रकारिका इच्छा उत्पद्येत। न च तत्र रजतधर्मिकाऽ-संसर्गग्रहाभावस्य कारणत्त्वमपि शक्यं वक्तुम्। रजतधर्मिकरजतत्वाऽसंसर्गाऽप्रसिद्धेः। न च रजतान्तरधर्मिकरजतत्वप्रकारकेच्छा तत्रेष्टेति वाच्यम्। तथा सति तदानयने प्रवृत्त्यापत्तेः। न च रजतत्वप्रकारकेच्छां प्रति रजतत्वसंसर्गज्ञानमपि कारणमित्यदोष इति वाच्यम्। तथा सति शुक्तिधर्मिकरजतत्वसंसर्गाऽप्रसिद्ध्या तत्र रजतत्वप्रकारकेच्छा-नापत्तेरिति चेन्न। रजतत्वप्रकारकेच्छासामान्यं प्रति रजतत्वसंसर्गग्रहस्य कारणत्वाऽसंभ-वेऽपि रजतधर्मिकरजतत्वप्रकारकेच्छायां रजतत्वसंसर्गज्ञानस्यापि कारणत्वसंभवेन तत्रो दोषवारणात्। शुक्तिधर्मिकरजतत्वप्रकारकेच्छायां रजतत्वाऽसंसर्गाऽग्रहस्यैव हेतुत्वात्। नेदं रजतमितिज्ञानकाले रजते रजतत्वसंसर्गानवगाहनान्न तत्रेच्छा। न चैवं भाविपाके इच्छा न स्यात्। भाविनि तस्मिन् पाकत्वसंसर्गग्रहविरहादिति वाच्यम्। पाकत्वावच्छिन्न-यत्किंचित्पाकधर्मिकपाकत्वसंसर्गग्रहस्यैव ताहशेच्छाप्रयोजकत्वोपगमात्। च चैवं नेदं रज-तमितिज्ञानविषयीभूतरजतधर्मिकेच्छाया अपि दुर्वारतापत्तिः। यत्किंचिद्रजतधर्मिकरजतत्व-ज्ञानस्य तत्र सत्त्वादिति वाच्यम्। ज्ञायमानरजतधर्मिकरजतत्वप्रकारकेच्छां प्रत्येव रज-तत्वसंसर्गज्ञानस्य कारणान्तरताया वक्तव्यत्वादित्यलम्।

अनुगतकार्यकारणभावलाभायाह—रजतत्वाऽसंसर्गेति। रजतत्वप्रकारकतत्तद्-धर्मिकेच्छां प्रति रजतत्वाऽसंसर्गसाकाङ्क्षतत्तद्धर्मिविषयकज्ञानं कारणमित्यर्थः। घटो न र-जतमितिज्ञानस्थले रजतत्वाऽसंसर्गसाकङ्क्षो घटो घटविषयकज्ञानं वा। ताहशज्ञानाभावस्य तदानीं विरहान्न घटधर्मिकरजतत्वप्रकारिकेच्छा। शुक्ताविदं रजतमिति यद् ज्ञानं तद् न रजतत्वाऽसंसर्गसाकाङ्क्षमिति रजतत्वाऽसंसर्गसाकाङ्क्षशुक्तिधर्मिकज्ञानाभावस्य सत्त्वाच्छुक्तौ रजतत्वप्रकारिकेच्छा। रजतं दृष्ट्वा यः पुरुषः इदं न रजतमिति प्रत्येति तत्र रजतधर्मिकज्ञानं रजतत्वाऽसंसर्गसाकाङ्क्षमिति न तदभावात्तत्रेच्छा। आकाङ्क्षा च

❀ दीधितिः ❀

अनुपस्थिते चाऽसंसर्गाऽग्रहोऽपि न नियामकः। वस्तुतोऽसंसर्गाऽग्रहमपेक्ष्य लघीयसस्तद्विषयतामात्रस्यैव नियामकत्वमुचितम्। सामान्य-

❀ जागदीशी ❀

दृत आह अनुपस्थिते चेति । तथा च यत्र घटादौ रजतत्वाऽसंसर्गग्रहः, तत्र रजतत्वप्रकारकेच्छानुत्पादेप्यनुपस्थितयावद्वस्तुषु तादृशीच्छा दुर्वारा, तेषु रजतत्वाऽसंसर्गज्ञानविरहस्य स्वतः सिद्धत्वादिति भावः। एकधर्मिकरजतत्वप्रकारकज्ञानदशायां यत्र यत्र रजतत्वाऽसंसर्गज्ञानस्य विरहः तेषु भाविष्विवाज्ञातेष्वपि जायत एव रजतत्वप्रकारकेच्छेति यदि ब्रूयात्तदाह वस्तुत इति। नियामकत्वमिति। कारणतावच्छेदकीभूयेत्यादिः। इच्छायां धर्मिभाननियमार्थं तत्तद्धर्मिविशेष्यकरजतत्वप्रकारकेच्छायां तत्तद्धर्मिकरजतत्वाऽसंसर्गग्रहाभावत्वेन कारणत्वमपेक्ष्य तत्तद्धर्मिकेच्छायां तत्तद्धर्मिकेष्टसाधनताज्ञानत्वेनैव लाघवाद्धेतुत्वं युक्तमित्यर्थः। तथा च भाविरजतधर्मिकेच्छाजननार्थमवश्यमपेक्षणीयस्य भाविरजतधर्मिकज्ञानस्य प्रकारान्तरेणाऽसंभवादवश्यं सामान्यलक्षणा

❀ काशिकानन्दी ❀

पदार्थान्तरमिति वक्ष्यति। सा च इदंनरजतमित्यादिज्ञानकाले इदन्त्वावच्छिन्ने तद्विषयकज्ञाने वा वर्त्तते नान्यत्रेति ध्येयम्। गृहीतरजतत्वाऽसंसर्गके घटादौ रजतत्वप्रकारकेच्छानुत्पादप्रयोजकस्य रजतत्वाऽसंसर्गाग्रहाभावस्य सत्त्वेऽपि अनुपस्थितवस्तुषु तत्प्रयोजकत्वं दुर्घटमिति दीधित्याशयं स्फुटयति—तथा चेति । तादृशीच्छा = रजतत्वप्रकारकेच्छा। तेषु = अनुपस्थितयावद्वस्तुषु । तादृशीच्छा दुर्वारेत्यत्रेष्टापत्तिमाशङ्कते—एकधर्मिकेति। तेषु इति। अज्ञातेष्वपीत्यन्वयः। तत्र दृष्टान्तः— भाविष्विवेति। भाविधर्मिकेच्छानुरोधात् सामान्यलक्षणाविद्वेषिणा तद्धर्मिकज्ञानसहिताऽसंसर्गग्रहाभावस्य हेतुत्वं वक्तुमशक्यमिति दृष्टान्तार्थः। तत्तद्धर्मिविशेष्यकेति। घटादिविशेष्यकेत्यर्थः । तत्तद्धर्मिकेति। घटादिधर्मिको यो रजत्वाऽसंसर्गस्तद्ग्रहाभावत्वेनेत्यर्थः। लाघवादिति। रजतादिधर्मिकेष्टसाधनताज्ञानविरहकाले रजतत्वाऽसंसर्गाग्रहसत्त्वेऽपि इच्छानुत्पादाद् रजत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानत्वेन कारणत्वमवश्यं वक्तव्यम्। असंसर्गाग्रहस्य च पृथक् कारणत्वं वक्तव्यमिति गौरवम्। तदपेक्षया तत्तद्धर्मिकेष्टसाधनताज्ञानत्वेनैव कारणत्वं युक्तम्। न च धर्मिणामानन्त्यात्तत्प्रयुक्तगौरवम्। त्वन्मतेऽपि तत्तद्धर्मिकरजतत्वाऽसंसर्गाग्रहस्यैव हेतुतया अनन्तधर्मिणां कारणतावच्छेदकविधया प्रवेशस्य तुल्यत्वादिति भावः। ननु भवतु तत्तद्धर्मिकेष्टसाधनताज्ञानत्वेनैव तत्तद्धर्मिकरजतत्वप्रकारकेच्छाकारणत्वम्। ततः किमायातमत आह—तथा चेति । प्रकारान्तरेण = सामान्यलक्षणाऽऽलम्बनातिरिक्तप्रकारेण। तत्तद्धर्मिकेष्टसाधनताज्ञानस्य तत्तद्धर्मिकरजतत्वप्रकारकेच्छाप्रयोजकत्वे द्रव्यत्वेन रजते

### ❁ दीधितिः ❁

तश्च तदिच्छायां व्यवस्थितहेतुभावस्य तद्विषयकज्ञानस्य तत्प्रकारकत्व-

### ❁ जागदीशी ❁

वाच्येति निगर्वः। नन्वेवं द्रव्यत्वेन रजतधर्मिकेष्टसाधनताज्ञानादपि रजतत्वप्रकारेण तत्रेच्छा स्यादत आह सामान्यतश्चेति। संवादिविसंवादीच्छासाधारण्येनेत्यर्थः। तदिच्छायां = तद्विषयकेच्छायाम्। तत्प्रकारकत्वमिति। तथा च रजतत्वप्रकारेण तत्तद्धर्मिकेष्टसाधनताज्ञानत्वेन रजतत्वप्रकारकतत्तद्धर्मिकेच्छां प्रति हेतुत्वान्नातिप्रसङ्ग इति भावः।

### ❁ काशिकानन्दी ❁

इष्टसाधनताज्ञानाद्रजतत्वप्रकारकतद्धर्मिकेच्छा समुत्पद्येतेति शङ्कते—नन्वेवमिति। एवं = तद्धर्मिकेष्टसाधनताज्ञानत्वेनैव तद्धर्मिकरजतत्वप्रकारकेच्छाहेतुत्वे। द्रव्यत्वेनेति। द्रव्यं मदिष्टसाधनमित्याकारकज्ञानादित्यर्थः। तत्र = रजते। स्यादिति। रजतधर्मिकरजतत्वप्रकारकेच्छाकारणीभूतस्य रजतधर्मिकेष्टसाधनताज्ञानस्य सत्त्वादिति भावः। तद्विषयकेच्छायां = रजतविषयकेच्छायाम्। रजतत्वप्रकारेणेति। अथ किमिदं रजतत्वप्रकारेण तत्तद्धर्मिकेष्टसाधनताज्ञानत्वं नाम। न च रजतत्वनिष्ठप्रकारतानिरूपिततत्तद्धर्मिनिष्ठविशेष्यताकत्वम्। शुक्तौ रजतत्वप्रकारकेच्छानापत्तेः। रजतत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः प्रभाकरैः शुक्तावनङ्गीकारात्। न च रजतत्वप्रकारकत्वे सति शुक्तिविशेष्यकं ज्ञानं तथेति वाच्यम्। शुक्तिर्मदिष्टसाधनं रजतं चेत्याकारकसमूहालम्बनमादाय शुक्तौ रजतत्वप्रकारकेच्छापत्तेः। ननु रजतत्वावच्छिन्नविशेष्यतानिरूपितत्वे सति तत्तद्धर्मिनिष्ठविशेष्यतानिरूपितं यदिष्टसाधनत्वनिष्ठप्रकारत्वं तन्निरूपकज्ञानस्य शुक्तौ रजतत्वप्रकारकेच्छोत्पादकत्वान्न दोषः, रजतमिदंमदिष्टसाधनमित्याकारकशुक्तिविषयकज्ञानीयरजतत्वनिष्ठप्रकारता यथा इदन्त्वावच्छिन्नविशेष्यतानिरूपिता तथा रजतत्वावच्छिन्नरजतनिष्ठविशेष्यतानिरूपितापि सा। न च रजतशुक्तीमदिष्टसाधनेइतिज्ञानानन्तरं रजतत्वेन शुक्तिविषयकेच्छापत्तिरिति वाच्यम्। तत्र रजतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतायाः शुक्तित्वावच्छिन्नविशेष्यतानिरूपितप्रकारतायाश्च भिन्नत्वात्। अत एव रजतम् इदं च मदिष्टसाधनमिति ज्ञानस्य रजतमिदंमदिष्टसाधनमितिज्ञानस्य च परस्परवैलक्षण्यमिति चेद्? तथा सति इष्टसाधनत्वाभाववति शुक्तौ इष्टसाधनत्वप्रकारकज्ञानस्वीकारे भ्रमाङ्गीकारापत्तेरिति;

मैवम् रजतत्वसंसर्गसाकाङ्क्षतत्तद्धर्मिविशेष्यकेष्टसाधनताज्ञानत्वस्य तथात्वात्। शुक्ताविदं रजतमिति यद् ज्ञानं तत्र शुक्तिज्ञानं रजतत्वसाकाङ्क्षम्। आकाङ्क्षा च पदार्थान्तरमित्युक्तम्। तथा च रजतत्वसंसर्गसाकाङ्क्षत्वे सति इष्टसाधनतासंसर्गसाकाङ्क्षं यद् धर्मिविषयकं ज्ञानं रजतत्वप्रकारकेच्छायास्तद्धर्मिविशेष्यकत्वनियमः। नैयायिकमतानुसारेण तु रजतत्वावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकज्ञानस्यैव कारणत्वमिति द्रष्टव्यम्।

❀ दीधितिः ❀

मवच्छेदकं कल्प्यते लाघवात्। अस्तु वा समानप्रकारकत्वेन व्यवस्थिते

❀ जागदीशी ❀

नन्वेवं संवादीच्छास्थल एव तत्तदनन्तधर्म्यन्तर्भावेणानन्तकार्यकारणभावापत्तिरतः सामान्यतो रजतधर्मिकरजतत्वप्रकारकेच्छायां रजतत्वप्रकारेण रजतधर्मिकेष्टसाधनताज्ञानत्वेन हेतुत्वमस्तु। तथा चातीतरजतगोचरज्ञानादेव भाविरजतव्यक्ताविच्छासंभवात् कृतं सामान्यलक्षणया। विसंवादीच्छास्थले तु तत्तद्धर्म्यन्तर्भावेणानन्तकार्यकारणभावोऽनन्यगत्यैव सर्वैरभ्युपेतव्य इत्यस्वरसादाह अस्तु वेति। तथा च धर्मिमात्रस्याऽप्रवेशेनातिलाघवात् तत्पुरुषीयरजतत्वप्रकारकेच्छां प्रति तदीयरजतत्वावच्छिन्नविशेष्यताकेष्टसाधनताज्ञानत्वेनैव हेतुत्वमस्तु, समानविशेष्यतायाः प्रत्यासत्तित्वादेकैकधर्मिकज्ञाना-

❀ काशिकानन्दी ❀

संवादीच्छास्थले एवेति। एवकारोऽप्यर्थे। सामान्यत इति। रजतत्वातिरिक्ताऽप्रकारेणेत्यर्थः। रजतंमेभूयादित्याद्याकारिकायामिति यावत्। विशेषतस्तु इदं रजतं मे भूयादित्याद्याकारिकेच्छायामिदंरजतंमदिष्टसाधनमिति ज्ञानस्यैव हेतुत्वम्। तेन रजतं मदिष्टसाधनमितिज्ञानानन्तरमिदंनरजतमितिज्ञानविषयीकृतरजतमिदन्त्वेनावगाह्य इदंरजतंमेभूयादितीच्छानुत्पादेऽपि न क्षतिः। रजतधर्मिकेष्टसाधनतेति। यत्किंचिद्रजतधर्मिकेष्टसाधनतेत्यर्थः। कारणतावच्छेदकसम्बन्धस्तु स्वप्रकारीभूतरजतत्वाश्रयत्वम्।

ननु रजतत्वप्रकारेण रजतधर्मिकेष्टसाधनताज्ञानं रजतत्वप्रकारेण रजतधर्मिकेच्छायां हेतुरित्येवंविधकार्यकारणभावेन रजतज्ञानोत्तरम् अरजतविषयकरजतत्वप्रकारकेच्छाया वारणेऽपि शुक्तिधर्मिकरजतत्वप्रकारकेच्छासम्पत्त्यर्थं कारणान्तरं गवेषणीयम्। एवं घटादिधर्मिकरजतत्वप्रकारकेच्छासम्पत्त्यर्थमपि पृथक् पृथक् कार्यकारणभावो वाच्यः। न च रजतान्यधर्मिकरजतत्वप्रकारकेच्छां प्रति रजतान्यधर्मिकरजतत्वप्रकारकज्ञानत्वेनानुगतकार्यकारणभावः संभवतीति वाच्यम्। शुक्तौ रजतत्वभ्रमानन्तरं घटधर्मिकरजतत्वप्रकारकेच्छापत्तेः। न चाऽसंसर्गाऽग्रहोऽपि कारणमिति वाच्यम्। शुक्तिधर्मिकाऽसंसर्गाग्रहसत्त्वात्। सामान्यतोऽसंसर्गग्रहाभावत्वेन हेतुत्वे शुक्तिधर्मिकरजतत्वप्रकारकेच्छापि नोत्पद्येत। घटधर्मिकाऽसंसर्गग्रहसत्त्वात्। तत्तद्धर्मिकाऽसंसर्गाग्रहत्वेन हेतुत्वेऽननुगमोऽज्ञातनिखिलाऽरजतधर्मिकरजतत्वप्रकारकेच्छापत्तिर्गौरवं चेति तत्तद्धर्मिकरजतत्वप्रकारकज्ञानत्वेन कारणत्वं वक्तव्यम्। तथा च प्रमास्थले कथंचिदनुगमकरणेऽपि भ्रमस्थलेऽननुगमो दुर्वार एवेत्यत आह—विसंवादीति। सर्वैरभ्युपेतव्य इति। न ह्येतावता प्रमास्थलेऽपि अननुगतकार्यकारणभाव एवाङ्गीकर्त्तव्य इति राजाज्ञेति भावः। ननु रजतत्वेन रजतज्ञानोत्तरं रजतत्वेन घटादिविषयकेच्छावारणमेतेन कथमायातमित्यत आह—समानविशेष्यताया इति।

❀ दीधितिः ❀

कार्यकारणभावेऽतिप्रसङ्गभङ्गाय सामानाधिकरण्यमिव समानविषयकत्व-

❀ जागदीशी ❀

दन्यधर्मिकेच्छानुत्पत्तेः संभवादिति अकामेनापि सामान्यलक्षणा स्वीकार्या तां विना भाविरजतादिज्ञानाऽसंभवेन तत्रेच्छानुत्पत्तिप्रसङ्गादित्याशयः। न चात्रानन्तपुरुषान्तर्भावादनन्तकार्यकारणभावतादवस्थ्यमिति वाच्यम्। रजतत्वप्रकारेण तत्तत्पुरुषधर्मिकविसंवादीच्छानुरोधेन विषयविधया पुरुषव्यक्तीनां निवेशस्य पूर्वकल्पेऽप्यावश्यकत्वादिति भावः। सामानाधिकरण्यमिवेति—परमते दृष्टान्तः। तथा च समानप्रकारतामात्रेण हेतुतावादिभिः

❀ काशिकानन्दी ❀

तथा च रजतत्वेन रजतज्ञानस्य विशेष्यतासम्बन्धेन घटे विरहादेव न घटे रजतत्वप्रकारकेच्छेति भावः। तां विना = सामान्यलक्षणां विना। तत्र = भाविरजतादौ। इच्छानुत्पत्तिप्रसङ्गादिति। सामान्यलक्षणाविरहे शिषौ भाविरजतविषयकज्ञानाऽसंभवेन विशेष्यतासम्बन्धेन रजतत्वप्रकारकज्ञानस्य भाविरजते विरहेण भाविरजतधर्मिकेच्छाप्रयोजकालाभादिति भावः। ननु समानविशेष्यताप्रत्यासत्त्या कार्यकारणभावाङ्गीकारे तत्पुरुषीयत्वं कार्यकारणभावावच्छेदककोटौ प्रवेशनीयमिति पुरुषानन्त्येन कार्यकारणभावानन्त्यं दुर्वारम्। अतः समवायेन रजतत्वप्रकारकरजतविशेष्यकेच्छां प्रति समवायेन रजतत्वप्रकारकरजतविशेष्यकज्ञानं कारणम्। एवं घटादिकमप्यन्तर्भाव्य कार्यकारणभावो वक्तव्यः। पुरुषानन्त्यप्रवेशप्रयुक्तगौरवविरहात्। न चात्र तत्तद्धर्मिनिवेशप्रयुक्तगौरवं दुर्वारमेव। रजतत्वप्रकारेण घटविषयकज्ञानोत्तरं रजतत्वप्रकारेण पटादिविषयकेच्छोत्पत्तिवारणाय तत्तद्धर्मिनिवेशस्याऽऽवश्यकत्वादिति वाच्यम्। एवमपि तव पुरुषानन्त्यप्रयुक्तानन्तकार्यकारणभावः, मम धर्म्यानन्त्यप्रयुक्तानन्तकार्यकारणभाव इत्युभयोस्तत्र तुल्यत्वात्। परं सामान्यलक्षणाकल्पनप्रयुक्तगौरवं त्वन्मतेऽतिरिच्यत इति वरं समवायप्रत्यासत्त्यैव कार्यकारणभावः सामान्यलक्षणाऽस्वीकारश्चेत्याशङ्कां निराकरोति—न चेति। घटादिधर्मिकरजतत्वप्रकारकेच्छायां घटादिधर्मिकरजतत्वप्रकारकज्ञानत्वेन समवायप्रत्यासत्त्या कारणत्वमितिमते तत्तत्पुरुषधर्मिकरजतत्वप्रकारकज्ञानत्वेन तत्तत्पुरुषधर्मिकेच्छात्वेनापि कार्यकारणभावस्याऽऽवश्यकतया तत्तदनन्तपुरुषाणामपि धर्मिविधया प्रवेशः, घटादीनां चातिरिक्त इति समवायप्रत्यासत्त्या कार्यकारणभावे एवातिगौरवमित्याशयेन समाधत्ते—रजतत्वप्रकारेणेति। सामानाधिकरण्यस्य समानविशेष्यकत्वस्य चोभयोः प्रत्यासत्तित्वमनावश्यकमत आह—परमते दृष्टान्त इति। एवं च समानविषयकत्वमपीत्यत्रापिकारो न सामानाधिकरण्यसमुच्चयार्थः, किन्तु प्रत्यासत्तिसमुच्चयार्थः। सामानाधिकरण्यं परमते यथा प्रत्यासत्तिः तथा समानविषयकत्वमस्माकमपि प्रत्यासत्तिरित्यर्थलाभस्तदाह—तथा चेति। परमतमेव स्फुटयति—समानप्रकारतेति। मात्रपदेन पुरुषधर्म्यनन्तर्भावः।

## ❀ जागदीशी ❀

परैर्यथा एकस्य पुंसो ज्ञानादन्यस्येच्छोत्पादवारणार्थं सामानाधिकरण्यं प्रत्यासत्तिरुच्यते तथैवास्माभिरपि एकधर्मिकज्ञानादन्यधर्मिकेच्छोत्पादवारणार्थं समानविशेष्यत्वं प्रत्यासत्तिः स्वीक्रियतेति भावः।

प्राञ्चस्तु रजतत्वप्रकारकेच्छासामान्यं प्रत्येव रजतत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानत्वेन हेतुत्वम् तत्र चैकस्य पुंसो रजतत्वप्रकारेण ज्ञानादन्यस्य तादृशेच्छापत्त्या यथा सामानाधिकरण्यं प्रत्यासत्तिस्तथा एकधर्मिकज्ञानादन्यधर्मिकेच्छोत्पत्तिप्रसङ्गेन समानविशेष्यत्वमपि तथेति यथाश्रुतमेव ग्रन्थमाहुः; तन्न, समानविशेष्यत्वप्रत्यासत्त्या हेतुतायां तत्पुरुषीयत्वस्यावश्यं निवेशनीयत्वात्। अन्यथा रजतत्वेन रजतधर्मिकेष्टसाधनताज्ञानवतोऽपि पुंसः शुक्तिधर्मिकरजतत्वप्रकारकेच्छोत्पत्तिप्रसङ्गात् पुरुषान्तरीयरजतत्वप्रका-

## ❀ काशिकानन्दी ❀

समानविषयकत्वमपीत्यत्रापिकारस्य सामानाधिकरण्यसमुच्चयार्थकत्वं व्याचक्षाणानां प्राचीनानां मतमाह—प्राञ्चस्त्विति। प्रत्येवेति। एवकारः तत्पुरुषीयत्वस्य तत्तद्धर्मिकत्वस्य च कार्यकारणभावावच्छेदककोटौ प्रवेशव्युदासाय। प्रत्यासत्तिद्वयफलमाह—तत्र चेत्यादि। न च प्रत्यासत्तिभेदेन कार्यकारणभावभेद आवश्यक इति वाच्यम्। तथापि तत्तत्पुरुषादिप्रवेशेनानन्तकार्यकारणभावकल्पनापेक्षया लाघवमक्षुण्णमेव। समवायेनात्मनि इच्छोत्पत्तौ च विषयप्रत्यासन्नसामग्र्याः सहकारित्वाच्च न दोष इति भावः। अन्यथेति। यत्रैकस्य पुंसः रजतत्वप्रकारकरजतविशेष्यकं ज्ञानमपरस्य च रजतत्वप्रकारकशुक्तिविशेष्यकं तत्र भ्रमावतः रजतत्वप्रकारकशुक्तिविशेष्यकेच्छाप्युत्पद्येत, भ्रमवतश्च रजतत्वप्रकारकरजतविशेष्यिकापीच्छोत्पद्येत। समवायेन रजतत्वप्रकारकेच्छाकारणीभूतरजतत्वप्रकारकज्ञानस्योभयस्मिन् पुरुषे समवायेन सत्त्वात्। विषयतया रजतत्वप्रकारकज्ञानस्य शुक्तौ रजते चेच्छोत्पादप्रयोजकस्य च सत्त्वात्। न चैकमेव ज्ञानं तत्पुरुषे समवायेन वर्त्तमानं तत्पुरुषे समवायेनेच्छां प्रति, रजतादौ वर्त्तमानं च तत्रेच्छां प्रति कारणमिति न दोष इति वाच्यम्। एकत्वस्य कारणतावच्छेदककोटावप्रवेशात्। न च समवायेन स्वविशेष्यविशेष्यताकरजतत्वप्रकारकेच्छां प्रति समवायेन रजतत्वप्रकारकज्ञानस्य हेतुतया न दोष इति वाच्यम्। स्वत्वस्याननुगतत्वात्। एतेन विशेष्यतया स्वसमवायिसमवेतेच्छायां ज्ञानस्य कारणत्वमित्यप्यपास्तम्। तस्मात् परस्परपुरुषीयज्ञानमादायातिप्रसक्तिवारणात्र तत्पुरुषीयत्वस्यावश्यं निवेशनीयत्वे पुनर्व्यर्थ एव समवायघटितप्रत्यासत्त्या कार्यकारणभाव इति भावः। इदमुपलक्षणम्। योगिनामन्ततः ईश्वरस्य भाव्यादिनिखिलरजतपाकादिज्ञानसत्त्वाद् यत्किंचिद्रजतपाकादिज्ञानवतो भाविरजतपाकादीच्छासंभवात् सामान्यप्रत्यासत्तेरसिद्धिरपि बोध्या।

अत्र यद्यपि समवायविशेष्यत्वान्यतरसम्बन्धावच्छिन्नस्वाभावावच्छिन्नभेदाधि-

❀ दीधितिः ❀

मपि प्रत्यासत्तिः । असंसर्गाग्रहादेः कारणतामपेक्ष्य समानविषयत्व-स्यावच्छेदककोटिनिवेशोऽपि लघीयान् ।

❀ जागदीशी ❀

रकज्ञानस्य विशेष्यतासम्बन्धेन शुक्तौ सत्त्वादिति दिक् ।

स्वत्वस्यानुगतत्वे रजतत्वप्रकारकेच्छासामान्यं प्रत्येव स्वसमानविशेष्यकरजतत्वप्रकारकज्ञानत्वेन हेतुत्वं प्राच्यैरुक्तमपि सम्यक् । विशेष्यनियमार्थमसंसर्गाग्रहादेः कारणत्वकल्पनामपेक्ष्य लाघवादित्याह असंसर्गाग्रहादेरित्यादिना । आदिना भेदाऽग्रह-व्यावर्त्तकधर्माग्रहादेः परिग्रहः । समानविषयत्वस्य = स्वसमानविशेष्यकत्वस्य । निवेशोऽपीति । अपिना अनुगता-

❀ काशिकानन्दी ❀

करणपर्याप्तिधर्मत्वसम्बन्धेन रजतत्वप्रकारकेच्छां प्रति समवायविशेष्यत्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावावच्छिन्नभेदपर्याप्तधर्मत्वसम्बन्धेन तत्प्रकारकज्ञानस्य, तादृशस्वाभावावच्छिन्नभेदत्वसम्बन्धेनैव वा रजतत्वप्रकारकेच्छां प्रति तादृशस्वाभावावच्छिन्नभेदत्वसम्बन्धेन रजतत्वप्रकारकज्ञानस्य कारणत्वोक्त्या न दोषप्रसक्तिः । एकस्य शुक्तिविशेष्यकमपरस्य रजतविशेष्यकं च रजतत्वप्रकारकज्ञानं यत्र, तत्र प्रमातुर्न शुक्ताविच्छापत्तिः । समवायेन प्रमातरि विषयतया शुक्तौ वर्त्तमानेच्छाया स्तादृशान्यतरसम्बन्धेनाभावः प्रमातारं शुक्तिं च वर्जयित्वाऽन्यत्र निखिलजगति वाच्यम् । तदवच्छिन्नभेदश्च प्रमातरि शुक्तौ च । तत्पर्याप्तद्वित्वादौ न रजतत्वेन रजतज्ञानम् । रजत प्रमातृगतद्वित्वविशेषे एव निरुक्तसम्बन्धेन ज्ञानसत्त्वात् । तथापीदृशपरम्परायाः प्रत्यासत्तित्वे मानाभावः । किं च रजतज्ञानोत्तरं रजतत्वेन पुरुषविषयिणी इच्छा स्यात् । न च पुरुषनिष्ठविशेष्यतायाः कार्यतानवच्छेदकतया न तदापत्तिरिति वाच्यम् । तथा सति रजतनिष्ठविशेष्यताया अपि तथात्वाद् रजतेऽपि कथं विशेष्यतेत्यादिकं विचिन्त्य दिगित्युक्तम् ।

विसंवादीच्छास्थले तत्तद्धर्मिकरजतत्वादिप्रकारकेच्छां प्रति तत्तद्धर्मिकरजतत्वप्रकारकज्ञानत्वेन कारणत्वावश्यकतया तत्तद्धर्मिणामवच्छेदककोटिनिवेशेऽपि संवादीच्छास्थले रजतत्वप्रकारेण यत्किंचिद्रजतविषयकज्ञानस्यैव सामान्यतो रजतत्वेन रजतविषयकज्ञानहेतुताया लघुतया तत्तद्धर्मिणामवच्छेदककोटावप्रवेशेन सामान्यलक्षणासिद्धेर्न भविष्यतीत्यन्यथा ग्रन्थाशयं व्याकरोति—स्वत्वस्येति । एवं च विसंवादिस्थले पृथक् कार्यकारणभावं संवादिस्थले पृथक् कार्यकारणभावं चाकल्पयित्वाऽतिलाघवात् रजतत्वप्रकारकेच्छात्वेन स्वसमानविशेष्यकरजतत्वप्रकारकज्ञानत्वेन चैक एव कार्यकारणभावः । तत्र चेच्छाविशेष्यमात्रविरजतज्ञानार्थं सामान्यलक्षणेति भावः । स्वपदग्राह्यं च कार्यत्वेनाभिमततत्तदिच्छा ज्ञेया । अनुगतत्वे इति । अननुगतत्वे तु रजतधर्मिकरजतत्वज्ञानोत्तरं घटधर्मिकरजतत्वप्रकारके-

## ❀ दीधितिः ❀

**कारणयथार्थत्वायथार्थत्वाधीनस्तु कार्यस्य तथाविधो विशेषः।**

## ❀ जागदीशी ❀

नतिप्रसक्तं स्वत्वमेव दुर्वचमित्यस्वरसः सूचितः। ननु यथार्थरजतत्वप्रकारकेच्छात्वाद्यवच्छिन्नं प्रति दोषाद्यभावविशिष्टस्य रजतत्वाऽसंसर्गाग्रहस्य हेतुत्वाद् रजतत्वप्रकारकेच्छासामान्यं प्रत्यपि रजतत्वाऽसंसर्गाग्रहोऽवश्यं हेतुः। यद्विशेषयोरिति न्यायात्। कुतस्तत्कारणतामपेक्ष्योक्तं लाघवमत आह कारणेति। कार्यस्य = इच्छादेः तथा च यथार्थेच्छादिकं प्रत्यपि यथार्थज्ञानादेरेव समानविशेष्यत्वप्रत्यासत्त्या हेतुत्वाद् विशेषतोऽप्यसंसर्गाऽग्रहादेः हेतुत्वमसिद्धमिति भावः।

## ❀ काशिकानन्दी ❀

च्छापत्तिः। समवायेव तादृशेच्छया यत्रोद्भवितव्यं तत्र समवायेन स्वपदग्राह्यरजतत्वप्रकारकरजतविशेष्यकेच्छायाः समानविशेष्यकरजतत्वप्रकारकज्ञानसत्त्वादिति भावः।

दोषकालीनरजतत्वाऽसंसर्गाऽग्रहात्संवादीच्छानुत्पत्तेराह—दोषाद्यभावेति। हेतुत्वादिति। अन्यथा इच्छाया यथार्थत्वायथार्थत्वनियमो न स्यादिति भावः। शुक्तिः रजतं च मदिष्टसाधनमित्याकारकज्ञानस्य इच्छीयशुक्तित्वनिष्ठप्रकारता-शुक्तिनिष्ठविशेष्यता-रजतत्वनिष्ठप्रकारता-रजतनिष्ठविशेष्यतैतच्चतुष्टयप्रयोजकत्वम्। तत्प्रकारकत्व-विशेष्यत्वयोः कार्यतावच्छेदकधर्मसंसर्गत्वात्। तयोर्निरूप्यनिरूपकभावाऽपादकत्वमपि यदि तस्यैव ज्ञानस्य तदाऽविशेषाच्छुक्तिनिष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारताशालिताऽऽपत्तिः रजतनिष्ठविशेष्यतानिरूपितशुक्तित्वनिष्ठप्रकारताशालित्वापत्तिश्च तादृशज्ञानात् स्यात्। एवं रङ्गरजतयोरिमे रजतरङ्गे इतिज्ञानोत्तरजायमानेच्छाया रजतनिष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारताशालित्वादिकं स्यादित्याशयः। ज्ञानगतयाथार्थ्यादिप्रयोजको निरुक्तासंसर्गाग्रह एवेत्यतः सामान्यतः कारणयाथार्थ्यं कार्ययाथार्थ्यप्रयोजकं न संभवतीत्यत आह—तथा चेति। इच्छागतं यत्तद्धर्मनिष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वाद्यात्मकयाथार्थ्यादिकं तत्प्रयोजकं ज्ञानगतं तथाविधयाथार्थ्यादिकमेवेति भावः।

कारणयथार्थत्वाऽयथार्थत्वाधीनं कार्ययाथार्थ्यायाथार्थ्यनित्यभ्युपगम्य संवादीच्छायां दोषाभावस्य विसंवादीच्छायामुपस्थितारजतगतभेदाऽग्रहस्य च वक्ष्यमाणस्य खण्डनेऽपि रजतत्वप्रकारिकायां संवादिन्यामिच्छायां स्वप्रकारीभूतरजतत्ववत्त्वसम्बन्धेन रजतत्वप्रकारकज्ञानस्य कारणत्वं विसंवादिन्यां च तत्तद्धर्मिकरजतत्वप्रकारकज्ञानस्य करणत्वं, सामान्यतश्च रजतत्वप्रकारकेच्छायां समवायप्रत्यासत्त्या रजतत्वप्रकारकज्ञानत्वेन कारणत्वं च यदि वक्ष्यमाणकल्पकतो विवक्षितं स्यात्तदा सामान्यलक्षणासिद्धिर्न स्यादिति उपस्थितमपि कारणयथार्थत्वाऽयथार्थत्वाधीनकार्ययाथार्थ्याऽयाथार्थ्यनियमं परित्यज्य एतेनेतिपदमन्यथा

❀ दीधितिः ❀

**एतेन रजतत्वप्रकारकेच्छायां तत्प्रकारकं ज्ञानं, संवादिन्यां तस्यां दोषाभावसहितं, विसंवादिन्यां तूपस्थितारजतगतभेदाऽग्रह-**

❀ जागदीशी ❀

**एतेन** = समानविशेष्यत्वप्रत्यासत्त्यैवातिप्रसङ्गभङ्गेन। निरस्तमित्यग्रेणान्वयः। तत्प्रकारकज्ञानमिति। तत्प्रकारेणेष्टसाधनताज्ञानमित्यर्थः। हेतुरिति परेणान्वयः। तस्याम् = इच्छायाम्। इदं रजतमितिभ्रमाच्छुक्त्यादौ यथार्थेच्छाप्रसङ्गादाह दोषाभावसहितमिति। तत्प्रकारकज्ञानमित्यनुषज्यते। शुक्त्यादौ रजतभेदग्रहे तद्धर्मिकविसंवादीच्छानुत्पत्तेराह विसंवादिन्यां त्विति। तस्यामित्यनुषज्यते। उपस्थितं यद्रजतं तद्धर्मिकरजतभेदाऽग्रहसहितमित्यर्थः। न चैवं रङ्गे रजतभेदग्रहदशायां शुक्तौ विसंवादीच्छा न स्यादिति वाच्यम्। विसंवादिरजतत्वप्रकारकेच्छात्वेन जन्यता रजतभेदप्रकारकत्वाऽनिरूपितरजतधर्मिताकज्ञानत्वेन हेतुत्वं, समामविशेष्यत्वं प्रत्यासत्तिरित्यत्र तात्पर्यात्।

❀ काशिकानन्दी ❀

व्याचष्टे— समानविशेष्यताप्रत्यासत्त्यैवेति। शुक्त्यादौ यथार्थेच्छाप्रसङ्गादिति। समानविशेष्यकत्वस्यानागतभानानुरोधेन प्रत्यासत्तित्वविरहात् शुक्तौ रजतत्वभ्रमोत्तरं रजतत्ववन्निष्ठविशेष्यतानिरूपितरजतत्वप्रकारताका शुक्तिविषयिणीच्छा स्याद्।

यद्यपि सामान्यलक्षणावादिनामपि शुक्तौ रजतत्वभ्रमोत्तरं रजतत्वेन निखिलरजतज्ञानाद् यथार्थेच्छा तत्र दुर्वारा। न हि रजतत्ववन्निष्ठा शुक्तिवृत्तिर्या विशेष्यता तन्निरूपितरजतत्वप्रकारताकेच्छाऽऽपादयितुं शक्या। आपाद्याप्रसिद्धेः। सफलप्रवृत्तिजनकत्वरूपयाथार्थ्यापत्तिरपीष्टैवोक्तयुक्तेः। तथापि रजतत्वेन शुक्तिभ्रमोत्तरं तृतीयक्षणे एव रजतत्वेन रजतविषयिणीच्छा सामान्यलक्षणावादिनाम्। परेषां तु द्वितीयक्षणे एव स्यात्। न च क्षणविलम्बः शपथनिर्णेय इति वाच्यम्। शुक्तौ रजतत्वभ्रमतृतीयक्षणे यथार्थरजतानयनेऽपि प्रवृत्त्यापत्तेः। सामान्यलक्षणावादिनां तु शुक्तौ रजतत्वभ्रमोत्तरक्षणमिच्छाया एवोत्पद्यमानतया रजतत्वेन निखिलरजतविषयकज्ञानमेव नोत्पद्यत इति दिक्।

एवं = उपस्थिताऽरजतगतरजतभेदसामान्याऽग्रहस्य हेतुत्वे। रङ्गे = त्रपुणि। न स्यादिति। अरजतरङ्गगतभेदग्रहस्य तत्र सत्त्वादिति भावः। तद्धर्मिकरजतत्वप्रकारकेच्छायामेव तद्धर्मिकभेदाग्रहस्य कारणत्वे धर्मिनिवेशापत्तिरिति भावः। विसंवादीति। तथा च विशेष्यतासम्बन्धेन विसंवादिरजतत्वप्रकारकेच्छां प्रति विशेष्यतासम्बन्धेन रजतभेदप्रकारत्वाऽनिरूपितरजतान्यधर्मिताकरजतत्वप्रकारताकज्ञानत्वेन हेतुत्वमिति फलितम्। रङ्गे रजतभेदग्रहसत्त्वेऽपि रजतभेदप्रकारत्वाऽनिरूपिता रजतान्यनिष्ठधर्मिता शुक्तिनिष्ठैव सुलभा तादृशधर्मिताकरजतत्वप्रकारताकज्ञानं विशेष्यतया शुक्तौ वर्त्तत इत्यदोषः।

❁ दीधितिः ❁

सुदितं हेतुरिति परास्तम् । त्वद्दिशापि च संवादिन्याप्युपस्थितरजतभेदा-

❁ जागदीशी ❁

अथाऽन्यथाख्यातिमनङ्गीकुर्वतामस्माकं कूटलिङ्गजनिताद् इदं रजतमित्याकारकज्ञानद्वयादपि यथार्थरजतेच्छोत्पादात्तत्र यथार्थरजतत्वप्रकारकज्ञानत्वेन हेतुत्वं दुर्घटमत आह त्वद्दिशापीति । उपस्थितं यद्रजतं तद्धर्मिकरजतभेदग्रहाभावस्येत्यर्थः । न चैवमेकत्र रजतभेदग्रहेऽपि रजतान्तरे संवादीच्छा न स्यात्, रजतधर्मिभेदग्रहसत्त्वादिति वाच्यम् । संवादिरजतत्वप्रकारकेच्छात्वेन कार्यत्वं; रजतभेदप्रकारत्वाऽनिरूपितरजतधर्मिताकज्ञानत्वेन, रजतभेदनिराकाङ्क्षरजतधर्मिताकज्ञानत्वेन, रजतत्वसाकाङ्क्षरजतधर्मिताकज्ञानत्वेन वा हेतुत्वं; समानविशेष्यता च प्रत्यास-

❁ काशिकानन्दी ❁

अन्यथाख्यातिमनङ्गीकुर्वतामिति । तदङ्गीकुर्वतां तु इदंरजतमित्यादिकमेकमेव ज्ञानम् । कूटलिङ्गजनितादिति । वह्निव्याप्यजलवान् पर्वत इत्याद्यसल्लिङ्गकपरामर्शादिजनिताऽनुमितिः कूटलिङ्गजनिता । असल्लिङ्गकत्वेन च सा पर्वतांशे वह्न्यंशे च विभिन्नज्ञानद्वयात्मिका । प्रकृते च रजतत्वव्याप्यघटत्ववदिदमित्याद्याकारकपरामर्शजनितादित्यर्थः । ज्ञानद्वयादिति । इदमंशे एकं रजतांशे च द्वितीयमिति ज्ञानद्वयात्मकमिदं रजतमित्याकारकम् । तच्च न यथार्थम् । रजतत्ववति रजतत्वप्रकारकत्वानवगाहनात् । ज्ञानद्वयात्मकत्वाद् । यद्यपि पर्वतो वह्निमानित्याद्याकारकसल्लिङ्गकानुमितिस्थलेपि पर्वतांशे प्रत्यक्षत्वं वह्न्यंशेऽनुमितिरिति ज्ञानद्वयत्वं; तथापि तत्र वह्निपर्वतयोः संसर्गावगाहित्वं, न तु कूटलिङ्गकानुमितौ तथेत्येवविशेषोऽवगन्तव्यः । तत्र = यथार्थरजतत्वप्रकारकेच्छायाम् । तद्धर्मिकरजतभेदग्रहाभावस्य = रजतभेदसाकाङ्क्षतद्धर्मिकज्ञानाभावस्य । एकत्रेति । रजते इति शेषः । रजतभेदग्रहेऽपि=रजतभेदभ्रमेऽपि । नेदंरजतमित्याकारकभ्रमेऽपीति यावत् । तेनान्यथाख्यातिमनङ्गीकुर्वतां नेदंरजतमित्यस्य ज्ञानद्वयात्मकत्वेऽपि न क्षतिः । रजतधर्मिकभेदेति । उपस्थितेत्यादिः । रजतभेदेति । तथा चैकत्रोपस्थितरजते रजतभेदग्रहसत्त्वेऽपि उपस्थिते रजतान्तरे रजतभेदग्रहविरहेण रजतभेदप्रकारत्वाऽनिरूपितोपस्थितरजतान्तरधर्मिताकज्ञानमादायैव रजतान्तरे संवादीच्छेति भावः । नन्वेवं सति यस्मिन् रजते रजतभेदग्रहस्तद्धर्मिकरजतत्वप्रकारिकेच्छापि स्यात् रजतभेदप्रकारत्वाऽनिरूपितरजतान्तरधर्मिताकज्ञानस्य सत्त्वात् । तत्तद्धर्मिकत्वस्य प्रवेशयितुमशक्यत्वादित्यत आह—रजतभेदनिराकाङ्क्षेति । एवं च रजतान्तरस्य तज्ज्ञानस्य वा रजतभेदनिराकाङ्क्षतया तद्धर्मिकरजतत्वप्रकारिकेच्छा भवति । न तु यत्र रजतभेदग्रहस्तद्धर्मिका । तादृशरजतस्य तज्ज्ञानस्य वा रजतभेदसाकाङ्क्षत्वात् । लाघवादाह—रजतत्वसाकाङ्क्षेति । नेदंरजतमितिज्ञाने इदन्त्वेनावगाह्यमानरजतज्ञानं न रजतत्वसाकाङ्क्षमिति बोध्यम् । ननु केयमा-

❀ दीधितिः ❀

ग्रहस्यैव हेतुत्वौचित्यात्। दोषाणां रजतभेदग्रहप्रतिबन्धकानामभावमपेक्ष्य लघुत्वात्।

❀ जागदीशी ❀

त्तिरित्यत्र तात्पर्यात्। आकाङ्क्षा च परेषां पदार्थान्तरम्। क्वचिज्ज्ञानद्वयस्थलेऽपि। तेन रजत एव नेदं रजतमिति भ्रमात्मकज्ञानद्वयादपि न संवादीच्छा। न वा कूटलिङ्गकपरामर्शोत्तरोत्पन्नस्य प्रमास्थानाभिषिक्तस्य इदं रजतमितिज्ञानद्वयस्योत्तरं संवादीच्छानुत्पत्तिरिति ध्येयम्। हेतुत्वेति। प्रयोजकत्वेत्यर्थः। तेन भेदाऽग्रहस्य कारणतावच्छेदकत्वेऽपि न क्षतिः। औचित्यादिति। अन्यथाख्यातिवादिनां पुनरस्माकं लाघवाद्विशिष्टज्ञानमेव हेतुरित्याशयः। औचित्ये हेतुमाह दोषाणामित्यादि। अभावमपेक्ष्येति। न च भेदाऽग्रहस्येव भेदव्याप्यवत्ताग्रहाणां भेदावच्छेदकवत्ताग्रहणां चाभावस्य हेतुतायाः कल्पनीयत्वात्तवापि गौरवं समानमिति वाच्यम्। संवादिरजतेच्छां प्रति रजत-

❀ काशिकानन्दी ❀

काङ्क्षा ? या क्वचिद् वर्त्तते क्वचिन्न वर्त्तत इत्यत आह-- आकाङ्क्षा चेति। सा च यदि विषयवृत्तिस्तदाऽव्याप्यवृत्तिपदार्थः इदं रजतमित्याद्याकारकज्ञानकालीनः। ज्ञानवृत्तिश्चेदव्याप्यवृत्तिरेव। क्वचित् = नैयायिकानां भ्रमस्थले इदं रजतमित्यादौ प्रमास्थले च तथाऽऽकारे। क्वचित्तु न इदं रजतं चेत्यादिज्ञानद्वयस्थले। स्थलेऽपीति। सा वर्त्तत इति शेषः। आकाङ्क्षाघटितलक्षणप्रयोजनमाह—तेनेति। ज्ञानद्वयादिति। रजते रजतभेदाभावाद्, अन्यथाख्यात्यनङ्गीकाराच्च नेदं रजतमित्यत्र ज्ञानद्वयम्। इदमंशे प्रत्यक्षं रजतभेदांशे स्मरणात्मकमिति। न संवादीच्छेति। तत्र रजतस्य तज्ज्ञानस्य वा रजतत्वसाकाङ्क्षताविरहादिति भावः। न वेति। संवादीच्छानुत्पत्तिरित्यन्वयः। तत्र रजतस्य रजतत्वसाङ्क्षत्वादिति भावः। कारणतावच्छेदकत्वेऽपीति। भेदाऽग्रहविशिष्टतत्प्रकारकज्ञानस्यैव कारणत्वादिति भावः। विशिष्टज्ञानमिति। रजतत्वविशिष्टज्ञानमित्यर्थः।

दीधितौ— रजतभेदेति। शुक्त्यादिषु रजतभेदग्रहस्य ये प्रतिबन्धकास्ते दोषाः। तेषां च रजतभेदग्रहप्रतिबन्धकत्वेनानुगमः। रजते तु रजतत्वग्रहप्रतिबन्धका दोषाः। न च संवादीच्छायां रजतत्वग्रहप्रतिबन्धकानामभावस्यैव प्रयोजकत्वमिति वाच्यम्। शुक्तौ रजतत्वभ्रमदशायां संवादीच्छोत्पादापत्तेरिति भावः।

भेदावच्छेदकवत्ताग्रहाणामिति। यदवच्छेदेन भेदग्रहस्तादृशधर्मवत्ताग्रहाणामित्यर्थः। पृथिवीत्वं रजतभिन्नवृत्ति, पृथिवीत्ववच्चेदमित्यादिग्रहाणां चेत्यर्थः। चरमकल्पे इति। द्वितीयकल्पे तु रजतभेदनिराकाङ्क्षरजतधर्मिताकज्ञानत्वेनैव रजतभेदव्याप्यादिधर्म-

❀ दीधितिः ❀

अत्राहुः। सिद्धे एव सुखे सुखत्वेन द्वेषोऽच्छा। लाघवात्तत्प्रकार-

❀ जागदीशी ❀

त्वसाकाङ्क्षरजतधर्मिताकज्ञानत्वेन हेतुत्वमित्युक्तचरमकल्पे भेदव्याप्यावत्ता-ग्रहस्य हेतुत्वाभावेऽपि क्षत्यभावादिति भावः।

सिद्धे इति। उत्पन्न इत्यर्थः। सुखादाविच्छा न स्यादिति मूलश्रवणादाह-सुख इति। ननूत्पन्नसुखे सिद्धत्वनिर्णयेन प्रतिबन्धात् कथमिच्छोत्पत्तिरत आह लाघवादिति। तत्तद्धर्मिकेच्छायां तत्तद्धर्मिकसिद्धत्वनिश्चयत्वेन प्रतिब-न्धकत्वे धर्मिभेदेन गौरवादित्यर्थः। तत्प्रकारकेच्छायामिति। तद्धर्मविशि-ष्टोद्देश्यताकेच्छायामित्यर्थः। तेन सुखत्वावच्छेदेन सिद्धत्वग्रहेऽपि सुख-हेतुः पटो जायतामित्यादेः सुखत्वादिप्रकारकेच्छाया उत्पादः।

❀ काशिकानन्दी ❀

निराकाङ्क्षरजतधर्मिताकज्ञानत्वेनापि कारणताया वक्तव्यतया चरमेति। भेदव्याप्यव-त्ताग्रहस्येति। अग्रहस्येति च्छेदः। रजतभेदव्याप्यधर्मवत्तासाकाङ्क्षरजतधर्मिताकज्ञानस्य रजतत्वसाकाङ्क्षत्वाभावात्। तयोः परस्परं विरोधादिति भावः।

रजतपरित्यागे बीजमाह—मूलश्रवणादिति। तत्तद्धर्मिकेति। समवायसम्बन्धेन तत्तद्धर्मिकेच्छां प्रति समवायसम्बन्धेन तत्तद्धर्मिकसिद्धत्वज्ञानं प्रतिबन्धकमित्यर्थः। यद्यपि विशेष्यतासम्बन्धेन तत्पुरुषीयेच्छां प्रति स्वीयसिद्धत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन तत्पुरुषीयसिद्धत्वनिश्चयत्वेन प्रतिबन्धकत्वमित्येव वक्तुमुचितम्। तत्तत्पुरुषघटपटादिरूपान-न्तधर्मिप्रवेशे गौरवात्। एवं च नात्र गौरवस्यापि संभवः। वक्ष्यमाणकल्पे तत्तत्प्रकारान-न्त्येन कार्यकारणभावानन्त्यात्। तत्तत्पुरुषत्वस्यापि क्वचित्प्रकारत्वात्। तथापि विशेष्यता-सम्बन्धेन इच्छासामान्यं प्रति निरुक्तसिद्धत्वज्ञानस्य प्रतिबन्धकत्वे द्रव्यत्वेन रजते सिद्धत्व-ज्ञानोत्तरं रजतत्वेनापि तन्नेच्छा न स्यात्। न चेष्टापत्तिः। तत्तद्दर्शनत्वेन सिद्धत्वज्ञानसत्त्वेऽपि कान्तादर्शनत्वेन रूपेण तेष्वेव दर्शनेषु इच्छोत्पत्तेर्वक्ष्यमाणत्वात्, इष्टापत्तेः कर्तु-मशक्यत्वात्। एवं सति तत्तद्धर्मावच्छिन्नविशेष्यतासम्बन्धेनेच्छां प्रति स्वीयसिद्धत्व-प्रकारतानिरूपिततत्तद्धर्मावच्छिन्नविशेष्यतासम्बन्धेन सिद्धत्वज्ञानस्य प्रतिबन्धकत्वं वाच्यम्। तत्राप्येकपुरुषीयसिद्धत्वज्ञानात्पुरुषान्तरस्येच्छानुत्पत्तिवारणाय तत्तत्पुरुषी-यत्वं निवेशनीयमिति समवायप्रत्यासत्त्या वक्ष्यमाणकार्यकारणभावकल्पापेक्षया गौरवं स्फुटतरमिति द्रष्टव्यम्। दीधितौ तत्प्रकारकेच्छायामिति। समवायेनेत्यादिः। एवं सिद्धत्वज्ञानमेवेत्यत्रापि। टीकायां सुखहेतुः पटोजायतामिति। अत्र वदन्ति। सुखत्वावच्छेदेन सिद्धत्वज्ञाने पटे कथं सुखहेतुत्वज्ञानं स्यात्। न च स्वीयसुखत्वावच्छेदेन सिद्धत्वज्ञानकाले परकीयसुखोत्पादकपटेच्छैव विवक्षितेति वाच्यम्। परकीयसुखोत्पादकत्व-ज्ञानस्येच्छाऽप्रयोजकत्वात्। न च स्वीयसुखत्वावच्छेदेन सिद्धत्वज्ञानेऽपि सामान्यतः सुख-साधनत्वज्ञानं पटे संभवतीति तत एवेच्छोत्पत्तिरिति वाच्यम्। स्वीयसुखत्वावच्छेदेन

❀ दीधितिः ❀

केच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानमेव हि विरोधि।

❀ जागदीशी ❀

तत्रेच्छायां तादृशपटत्वविशिष्टस्यैवोद्देश्यतया विषयत्वात्। उद्देश्यत्वं पुनरिच्छामीत्यनुभवसाक्षिको विषयताविशेषः। मुख्यविशेष्यतानिरूपित-तत्तत्प्रकारकेच्छायामित्यर्थकरणान्नोक्तदोष इति तु न युक्तम्। सुखत्वा-वच्छेदेन सिद्धत्वग्रहेऽपि अहं सुखी स्यामित्याकारकेच्छाप्रसङ्गात्। आत्मत्वा-वच्छेदेन सिद्धत्वनिश्चयदशायामहं सुखी स्यामितीच्छानुत्पादप्रसङ्गाच्चेति ध्येयम्। तत्प्रकारकसिद्धतानिश्चयमात्रस्य विरोधित्वे सिद्धः सुखत्ववांश्च गुणः इत्यादिसमूहालम्बनस्थलेऽपि सुखं जायतामितीच्छा न स्यादत उक्तं तत्प्रकारा-वच्छेदेनेति। तद्धर्मावच्छिन्नविशेष्यताकेत्यर्थः। अवच्छेदकत्वं तु विशेष्यको-टिप्रविष्टतामात्रेण ग्राह्यम्। तेन सुखं सिद्धमित्याकारकस्येव भोजनसुखं सिद्ध-मित्याकारकस्यापि निश्चयस्य सत्त्वे सुखं जायतामितीच्छाया नोत्पादः।

❀ काशिकानन्दी ❀

सिद्धत्वज्ञाने सुखं जायतामित्याकारिका यथेच्छा न भवति तथा सुखसाधनं जायतामिती-च्छाया अप्यनुभवविरुद्धत्वात्। एतेन सुखत्वावच्छेदेन सिद्धत्वज्ञानेऽपि पटादौ सुखं प्रति स्वरूपयोग्यतायाः संभवात्तामादायैवेच्छासंभव इत्यादि प्रत्युक्तम्। पटादौ सुखेच्छाऽधीनाया एवेच्छाया जायमानतया सुखेच्छाविरहे तदधीनेच्छाया अप्यसंभवादिति। तत्रेच्छायां = सुखहेतुः पटोजायतामितीच्छायाम्। उद्देश्यतयेति। अभेदस्तृतीयार्थः। तस्य विषयताया-मन्वयः। ननु मुख्यविशेष्यतानिरूपिततत्तत्प्रकारताकेच्छां प्रति तत्तत्प्रकारावच्छेदेन सिद्धत्वज्ञानं हेतुरस्तु किमुद्देश्यत्वप्रवेशेनेत्यत आह—मुख्येति। अत्र च मुख्यविशेष्यत्वं पटे तन्निरूपितप्रकारत्वं च पटत्वे सुखसाधनत्वे चैव न तु सुखत्वे। इच्छाप्रसङ्गादिति। आत्मन एव तत्र मुख्यविशेष्यतया तन्निरूपितप्रकारतायाः सुखत्वे विरहादिति भावः। अतिप्रसङ्गमुक्त्वा अप्रसङ्गमप्याह—आत्मत्वावच्छेदेनेति। सिद्धत्वनिश्चयेति। आत्मत्वावच्छेदेन सिद्धत्वं चाहमुत्पन्नः नाहमुत्पत्स्य इत्यादिप्रतीत्या विषयीक्रियत एवेति मन्तव्यम्। अनुत्पादप्रसङ्गाच्चेति। आत्मनिष्ठमुख्यविशेष्यतानिरूपितप्रकारतावदात्म-त्वावच्छेदेन सिद्धत्वज्ञानादात्मत्वप्रकारकतादृशेच्छाऽसंभवादिति भावः। ननु तत्प्रकारा-वच्छेदेन सिद्धताज्ञानस्य कुतः प्रतिबन्धकत्वमुक्तम्। तत्प्रकारकसिद्धतानिश्चयत्वोक्तावपि दोषाभावादत आह—तत्प्रकारकेति। सिद्धः सुखत्ववांश्चेति। भवति चासौ सिद्धता-विषयकः सुखत्वप्रकारकश्च। इत्यर्थं इति। तथा च तद्धर्मप्रकारकेच्छां प्रति तद्धर्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञानस्य सामानाधिकरण्यप्रत्यासत्त्या प्रतिबन्धकत्वम्। प्रविष्टतामात्रेणेति। मात्रपदेन तत्पर्याप्त्यधिकरणत्वादिप्रवेशव्युदासः। नोत्पाद इति। न हि नीलघटे प्राप्ते पुनर्घटो मे स्यादितीच्छा। रक्तघटो मे स्यादितिवत् पानसुखं मे स्यादितीच्छायां त्विष्टापत्तिरेव। एवं च न्यूनवारकपर्याप्तिर्निवेशनीयैव। अत्र च सिद्धत्वं

❀ दीधितिः ❀

**न च तत् प्रकृते ; तत्सत्त्वे इच्छोत्पत्तेस्तत्रयाप्यनङ्गीकारात् ।**

❀ जागदीशी ❀

अत एव "प्रीत्या धनलाभेऽपि धनमात्रार्थिनो नेच्छा, किन्तु प्रतिग्रहाद्यधीनधनार्थिन एव, यत्किंचिद्विशेषसिद्धौ सामान्येच्छाविच्छेदादि"ति शब्दमणावप्युक्तम् । न चैवं सुखसामान्यं सिद्धमित्येवं सुखत्वावच्छेदकतामन्तर्भाव्य निश्चयेऽपि भोजनसुखं जायतामितीच्छाप्रसङ्गः । तादृशसुखत्वावच्छिन्ने सिद्धत्वाऽनिश्चयादिति वाच्यम् । तस्यापि स्वातन्त्र्येण तादृशेच्छाविरोधित्वादिति भावः । ज्ञानमिति । निश्चय इत्यर्थः । न चेत्यादि । तत् = सुखत्वावच्छेदेन सिद्धत्वज्ञानम्, प्रकृते = सुखत्वप्रकारकेच्छास्थले नेत्यर्थः । उत्पन्नसुखेषु तत्तद्व्यक्तित्वेनैव

❀ काशिकानन्दी ❀

वर्त्तमानकालीनत्वसम्बन्धित्वं बोध्यम् । तेन ह्यो भोजनसुखं सिद्धं, ह्यः सुखं सिद्धमित्यादिज्ञानसत्त्वेऽपि अधुना सुखविरहकाले सुखं मे जायतामितीच्छोत्पादेऽपि न क्षतिः ।

अत्र चिन्तामणिकृतामनुमतिमाह—अत एवेति । प्रीत्या = सख्यादिवशेन । धनमात्रार्थिनः = धनत्वावच्छिन्नधर्मिकेष्टसाधनतानिश्चयवतः । मात्रपदेन धनविशेषार्थिव्यवच्छेदः । नेच्छा = न धनेच्छा । धनविशेषार्थिनस्तु स्यादेवेत्याह—किन्त्विति । प्रतिग्रहेति । प्रतिग्रहाद्यधीनो यो धनविशेषस्तदर्थिनः प्रतिग्रहाद्यधीनधनत्वावच्छिन्नधर्मिकेष्टसाधनतानिश्चयवत इत्यर्थः । इच्छेत्यनुषङ्गः । प्रतिग्रहाधीनधनेच्छेति तदर्थः । ननु धनसामान्यार्थिनः किमिति धनेच्छा नोत्पन्ना तत्राह—यत्किंचिदिति । भोजनसुखं सिद्धमित्येवं निश्चयसत्त्वेऽपि पानसुखं जायतामितीच्छादर्शनात् यद्धर्मनिष्ठप्रकारताका इच्छा तद्धर्माऽन्यूनवृत्त्यवच्छेदकताकविशेष्यताकसिद्धत्वज्ञानस्येच्छाप्रतिबन्धकत्वं वाच्यम् । एवं सति सुखसामान्यं सिद्धमित्येवं सुखत्वावच्छेदेन सिद्धत्वनिर्णयसत्त्वेऽपि भोजनसुखं जायतामितीच्छाप्रसङ्गः । इच्छीयप्रकारताया भोजनीयत्वसुखत्वोभयनिष्ठत्वात् । न च तद्धर्मनिष्ठप्रकारताकेच्छां प्रति तद्धर्मावच्छिन्नत्वे सति तदितरधर्मानवच्छिन्ना या विशेष्यता तादृशविशेष्यताकसिद्धत्वज्ञानं प्रतिबन्धकमिति न दोषः, पानीयत्वसुखत्वैतदतिरिक्तभोजनीयत्वावच्छिन्नत्वादुक्तस्थलीयविशेष्यताया इति वाच्यम् । एवमपि सुखत्वसामानाधिकरण्येन यस्य सिद्धत्वज्ञानं तस्य भोजनसुखं जायतामितीच्छानापत्तेः । तस्मात्तद्धर्मप्रकारकेच्छायां तद्धर्मावच्छेदेन सिद्धत्वज्ञानस्य प्रतिबन्धकत्वं दीधितिकृदुक्तं यथाश्रुतमेव शोभनमित्याशङ्क्य निराचष्टे—न चेति । भोजनसुखमिति । सुखत्वसामानाधिकरण्येनेच्छामात्रोपलक्षकम् । तादृशसुखत्वावच्छिन्ने सिद्धत्वाऽनिश्चयात् = भोजनसुखत्वावच्छिन्नविशेष्यताकसिद्धत्वाऽनिश्चयात् । तस्यापि = सुखत्वादिरूपसामान्यधर्मावच्छेदेन सिद्धत्वनिश्चयस्यापि । अहं सुखीत्याद्याकारज्ञानमपि सिद्धत्वावगाह्येव स्वसमवेतत्वादेरेव सिद्धत्वस्वरूपत्वात् । इन्प्रत्ययस्य सम्बन्धित्वार्थत्वात् । न च तत् प्रकृत इत्यत्र हेतुः—उत्पन्नेति निश्चयादित्यन्तम् । व्यक्तित्वेनैवेति । एवकारेण

❀ दीधितिः ❀

कथमन्यथा चिरप्रोषितस्याऽज्ञातकान्तामरणस्य तत्कान्तावलोकनादाविच्छा। ज्ञातावलोकनादीनां सिद्धत्वज्ञानात्। अतिरिक्तस्य चाऽसत्त्वादित्यादिबहुतरमूहनीयम्।

❀ जागदीशी ❀

सिद्धत्वनिश्चयात्। सुखत्वमन्तर्भाव्य तत्सुखं सिद्धमित्याकारकनिश्चयसत्त्वे तु सुखान्तरत्वप्रकारेण तत्रेच्छेति भावः। ननु इच्छासामान्यं प्रत्येव समानविशेष्यत्वप्रत्यासत्त्या सिद्धत्वनिश्चयस्य प्रतिबन्धकत्वं, तत्तदनन्तधर्मितावच्छेदकान्तर्भावेण तथात्वे गौरवात्, तत् कुतः सिद्धसुखादाविच्छेत्यत आह कथमिति। अन्यथा=तत्तद्धर्मानन्तर्भावेण विरोधित्वे।

❀ काशिकानन्दी ❀

सुखत्वावच्छेदेन सिद्धत्वनिश्चयाभावः। ननु भोजनसुखं सिद्धमित्यादिनिश्चयसत्त्वे सुखत्वेन रूपेणेच्छाऽदर्शनात् कथं सुखत्वेन रूपेणापि भाविसुखेच्छेत्यत आह—सुखत्वमन्तर्भाव्येति। तत्सुखं=भोजनादिसुखम्। सुखान्तरत्वप्रकारेणेति। सुखान्तरं मे स्यादित्याकारिकेत्यर्थः। तत्र=तत्सुखत्वावच्छेदेन सिद्धत्वनिर्णयस्थले, भाविसुखे इति वाऽर्थः।

नन्विति। द्रव्यत्वप्रकारेण रजतादौ सिद्धत्वनिश्चयदशायां रजतत्वप्रकारेणापि तत्रेच्छा नोत्पद्यत इत्यभिमानः। तत्प्रकारकत्वनिवेशे समानविशेष्यताप्रत्यासत्तिमते तत्तत्पुरुषीयत्वस्यापि निवेशेन विपरीतगौरवादिति ध्येयम्। तथात्वे=प्रतिबन्धकत्वे। गौरवादिति। धर्मितावच्छेदकानां भेदेनानन्तकार्यकारणभावप्रसङ्गात्। समानविशेष्यताप्रत्यासत्तिमतेऽनन्तपुरुषान्तर्भावेणानन्तकार्यकारणभावसत्त्वेऽपि तत्पुरुषत्वस्य क्वचिद्धर्मितावच्छेदकत्वाद् घटत्वादीनामपि तथात्वात् तत्प्रकारकेच्छां प्रति तत्प्रकारावच्छेदेन सिद्धत्वज्ञानस्य प्रतिबन्धकतावादिमते एव गौरवमिति भावः। कुत इति। विशेष्यतासम्बन्धेन सिद्धत्वज्ञानस्येच्छाप्रतिबन्धकीभूतस्य सिद्धसुखादौ सत्त्वादिति भावः। तत्तद्धर्मानन्तर्भावेण=तत्प्रकारानन्तर्भावेण।

दीधितौ— अतिरिक्तस्य=ज्ञातकान्तावलोकनातिरिक्ततदवलोकनस्य। असत्त्वादिति। कान्तायाः मृतत्वादिति भावः। एवं च तत्र सिद्धे एवेच्छेति वक्तव्यम्। अत्र प्रमेयत्वादिना सामान्येन ज्ञाते भविष्यति प्रमेयेऽवलोकनत्वभ्रमादुपपद्यते एवाऽसिद्धेऽपि अवलोकनत्वप्रकारिकेच्छा। तत्र भविष्यत्प्रमेयभानार्थमेव च सामान्यलक्षणाऽपेक्षितेति सामान्यलक्षणावादिनां विभावः। सोऽयुक्तः। द्रव्यादीनि रूपादीनि च कान्तावलोकनान्यानि कान्तान्यद्रव्याद्यवलोकनं च कान्तावलोकनान्यदिति निश्चयदशायां द्रव्याद्यतिरिक्ताऽप्रसिद्ध्या भविष्यत्प्रमेये कान्तावलोकनत्वभ्रमस्य सामान्यलक्षणावादिनापि वक्तुमशक्यत्वात्। न च सामान्यलक्षणाविरहे भविष्यत्प्रमेयाऽज्ञानेन तत्र ज्ञायमानद्रव्येष्वेव कान्तावलोकनान्यत्वं वक्तव्यमिति भविष्यत्प्रमेये कान्तावलोकनत्वभ्रमे बाधकाभाव इति वाच्यम्। तन्मते

❋ दीधितिः ❋

**अथ सिद्धत्वनिश्चयाभावापेक्षया लाघवादसिद्धत्वज्ञानमेव हेतुः। न च सिद्धत्वेन ज्ञाते तत्संभवतीत्यसिद्धत्वज्ञानार्थं सामान्यलक्षणेति**

❋ जागदीशी ❋

नैयायिकः शङ्कते अथेति। यद्यप्यप्रामाण्यज्ञानाभावविशिष्टसिद्धित्वनिश्चयाभावत्वेन हेतुत्वमपेक्ष्याऽसिद्धत्वज्ञानस्य तद्धर्मिकतत्तदप्रमाण्यनिश्चयाभावकूटस्य च प्रत्येकरूपेण हेतुतायामेव गौरवम्। तथापि सिद्धत्वस्येव तद्व्याप्यवत्त्वस्य तदवच्छेदकधर्मवत्त्वस्य च ज्ञाने प्रतिबन्धकत्वाऽकल्पनादेव लाघवम्। सिद्धत्वज्ञानीयतत्तदप्रामाण्यसंशयव्यक्तीनां प्रातिस्विकरूपेणाभावरूपस्य प्रतिबन्धकतावच्छेदकीभूतस्य विशेष्यविशेषणभावेनानन्तकार्यकारणभावकल्पनामपेक्ष्य च लाघवं ग्राह्यम्। सिद्धत्वस्य ज्ञानान्तरमप्रमेत्यादिरूपाऽप्रामाण्यज्ञानसत्त्वेऽपि सिद्धत्वनिश्चयेनेच्छाप्रतिबन्धादप्रामाण्यज्ञानसामान्यस्योत्तेजकत्वाऽसंभवाम्। न च तत्तदप्रामाण्यज्ञानाभावकूटविशिष्ट-

❋ काशिकानन्दी ❋

तदज्ञानादेव तत्र भ्रमाऽसंभवात्। सामान्यलक्षणासत्त्वे द्रव्यत्वादिना भविष्यद्वस्तूनामपि ज्ञाततया तत्र कान्तावलोकनान्यत्वनिश्चयोऽपि सुघट एवेति भावः।

दीधितौ—लाघवादिति। असिद्धत्वसंशयसत्त्वेऽपि इच्छादर्शनादसिद्धत्वज्ञानत्वेनैव हेतुत्वम्। सिद्धत्वसंशयसत्त्वे इच्छाप्रतिबन्धाऽदर्शनाच्चु सिद्धत्वनिश्चयत्वेन प्रतिबन्धकत्वमिति निश्चयत्वप्रवेशेन गौरवं सिद्धत्वज्ञानप्रतिबन्धकत्ववादिमत इत्यादिकं लाघवबीजमनुसंधेयम्। तद्धर्मिकेति। असिद्धत्वज्ञानधर्मिकेत्यर्थः। तद्व्याप्यवत्त्वस्य = सिद्धत्वव्याप्यवत्त्वस्य। असिद्धत्वज्ञानस्येव असिद्धत्वव्याप्यवत्त्वादिज्ञानस्यापि हेतुत्वे दोषान्तरमाह—सिद्धत्वज्ञानीयेति। सिद्धत्वज्ञानधर्मिकेत्यर्थः। सुखंसिद्धमितिज्ञानमप्रमानवेतिसंशयसत्त्वे इच्छोत्पद्यत एव। अप्रामाण्यसंशयेत्युपलक्षणम्। प्रामाण्यसंशयसत्त्वेऽपि इच्छादर्शनेन प्रामाण्यसंशयाभावविशिष्टसिद्धत्वज्ञानस्यैव प्रतिबन्धकताया वाच्यत्वात्। कश्चित्तु अप्रामाण्यसंशयो नाम तद्वति तदभावप्रकारकं न वेत्याकारः। सिद्धत्वं च वर्तमानप्रागभावाऽप्रतियोगित्वं वर्त्तमानकालध्वंसकालानुत्पत्तिकत्वं वा। तथा च वर्त्तमानकालध्वंसोत्पत्तिकत्ववति तादृशध्वंसोत्पत्तिकत्वाभावप्रकारकं न वेत्याकारसंशयापेक्षया वर्त्तमनकालध्वंसोत्पत्तिकत्वाभाववति तादृशध्वंसोत्पत्तिकत्वाभावाप्रकारकं न वेत्याकारप्रामाण्यसंशयस्याभावद्वयघटिततया गुरुतरत्वात्तत्परित्याग इत्याह स्म। संशयेत्यपि आहार्यान्यज्ञानमात्रोपलक्षणम्। अप्रामाण्यनिश्चयसत्वेऽपीच्छादर्शनात्। अनन्तेति। कारणतावच्छेदकभेदेनापि कारणताभेदादिति भावः। नन्वप्रामाण्यज्ञानसामान्याभावस्य प्रतियोगितावच्छेदकत्वान्नानन्तकार्यकारणभावोऽत आह—सिद्धत्वस्येति। विषयत्वं षष्ठ्यर्थः। तस्य ज्ञानान्तरेऽन्वयः। ज्ञानान्तरं च तत्कालीनसिद्धत्वनिश्चयान्यात्मकम्। असंभवादिति। तत्तद्धर्मिकाऽप्रामाण्यज्ञानाभावस्य

❀ दीधितिः ❀

चेन्न, विशेषरूपावच्छेदेन सिद्धत्वेन ज्ञाते एव सामान्यरूपेणासिद्धत्वग्रह-

❀ जागदीशी ❀

सिद्धत्वनिश्चयाभावव्यक्तेरखण्डतद्व्यक्तित्वेनैव हेतुत्वादुक्तगौरवानवकाशः । प्रतियोग्यविशेषिताभावस्य हेतुत्वे तादृशसिद्धत्वनिश्चयाभावसहचरितस्यानतिप्रसक्तस्याभावान्तरस्यापि तत्तद्व्यक्तित्वेन हेतुतापत्तेः । विशिष्टाभावस्य विशेष्यविशेषणाभावानतिरिक्तत्वेऽखण्डाभावव्यक्तित्वाऽसंभवाच्चेत्याशयः ।

असिद्धत्वज्ञानार्थमित्यस्य कोऽर्थः । किं सुखादावसिद्धत्वप्रकारकज्ञानार्थम्, असिद्धत्वविषयकज्ञानार्थं वा ? । नाद्य इत्याह विशेषेति । उत्पन्नसुखेष्वेव तत्तद्व्यक्तित्वेन सिद्धत्वनिश्चयेऽपि सुखत्वेनाऽसिद्धत्वज्ञाने बाधकाभावादिति भावः । ननु विशेषतः सिद्धत्वज्ञानदशायां यत् सामान्यतोऽसिद्धत्वज्ञानं तन्न विशिष्टधीः

❀ काशिकानन्दी ❀

प्रवेशनीयत्वादिति भावः । अखण्डतद्व्यक्तित्वेनैवेति । विशिष्टाभावस्याखण्डतया तद्व्यक्तित्वेनैव तस्य हेतुत्वम् । न तु कारणतावच्छेदककोटौ प्रतियोगिप्रवेशः । प्रतियोगिविशिष्टाभावत्वेन हेतुत्वे एव तस्य तथात्वात् । न चैवमपि विनिगमनाविरहेण विशेषणविशेष्यभावव्यत्यासपरिलब्धानन्ताभावानां तत्तद्व्यक्तित्वेन हेतुत्वं दुर्वारमेवेति वाच्यम् । समनियताभावानामेकतया तद्दोषाभावात् । अभावान्तरस्येति । तत्तदप्रामाण्यज्ञानाभावविशिष्टाऽसिद्धत्वज्ञानसमानाधिकरणतत्समकालोत्पन्नद्वित्वाद्यभावस्येत्यर्थः । समनियताभावानामैक्येन दोषाऽप्रसक्तेराह— सहचरितस्यानतिप्रसक्तस्येति । द्वित्वाद्यभावस्तु द्वित्वाधिकरणघटादौ विरहेण न समनियतः । घटे द्वन्द्वोत्पादापत्तिस्तु न, कारणान्तरविरहात् । ननु प्रतियोगिविशेषिताभावत्वेनैव हेतुत्वम् । न चैवं कार्यकारणभावानन्त्यप्रसङ्गः । कारणताया कारणस्वरूपत्वेनावच्छेदकमेदेऽपि कारणत्वैक्यात् कार्यकारणभावानन्त्यविरहात् । किं च सर्वदैव तादृशद्वित्वाद्युत्पत्तौ मानाभाव एवेत्याशङ्क्याह— विशिष्टभावस्येति । न च विशेषणाद्यभावस्याखण्डत्वाद्विशिष्टाभावस्यापि अखण्डत्वमिति वाच्यम् । एवमपि क्वचिद्विशेषणाभावस्वरूपः क्वचिद्विशेष्याभावस्वरूपः क्वचिदुभयाभावस्वरूप इत्येवं तस्य नानास्वरूपतया कारणैक्यं दुर्घटमेव । तत्तदप्रामाण्यज्ञानाभावरूपविशेषणानन्त्यादिति भावः ।

बाधकाभावादिति । सुखत्वेन सुखेषु सिद्धत्वज्ञानस्यैव प्रतिबन्धकत्वादिति भावः । विशेषतः सिद्धत्वज्ञानदशायामिति । इदं प्रकृतानुरोधेन; विशेषतः सिद्धत्वज्ञानविरहदशायां जायमानस्यापि सिद्धधर्मिक सामान्यतोऽसिद्धत्वज्ञानस्य विशिष्टधीत्वाऽसंभवात् । अनुमित्यादिविषयीभूतभाविसुखधर्मिकसिद्धत्वविषयकसिद्धत्वज्ञानस्य विशिष्टधीत्वसंभवाच्च ।

❀ दीधितिः ❀

संभवात् । तदेकं ज्ञानं ज्ञानद्वयं वेत्यन्यदेतत् । सामान्यलक्षणासहस्रेणाप्यसिद्धत्वस्य ज्ञातुमशक्यत्वाच्च ।

वस्तुतस्तु सामान्यलक्षणां विनापि अयं कालः सुखप्रागभाववान् सुखोत्पादकालीनध्वंसप्रतियोगी वा

❀ जागदीशी ❀

अन्यथाख्यात्यनङ्गीकारात् इत्यत आह तदिति । एकमिति स्वमते । द्वयं वेति परेषाम् । असिद्धत्वसाकाङ्क्षधर्मिज्ञानस्यैवेच्छाजनकतया ज्ञानद्वयेऽपि तत्संभवादिति भावः । द्वितीये त्वाह सामान्येति । सुखत्वादिसामान्यलक्षणायास्तत्राऽसामर्थ्यादिति भावः ।

नन्वेवमिच्छाया अनागतविषयकत्वप्रवादो व्याहन्येतेत्यत आह वस्तुतस्त्विति । वर्त्तमानकालस्य सुखप्रागभाववत्त्वाद्यनुमितौ वर्त्तमानकालवृत्तिप्रागभावप्रतियोगित्वादिलक्षणमसिद्धत्वं सुखस्यापि सुग्रहमित्याशयेनाह—अयं काल इत्यादि । प्रागभावानभ्युपगमे वर्त्तमानकालध्वंसाधिकरणकालोत्पत्तिकत्वमेवासिद्धत्वं वाच्यमतस्तद्ग्रहार्थं साध्यान्तरमाह सुखोत्पादेति ।

❀ काशिकानन्दी ❀

ननु तर्हि सामान्यतोऽपि सिद्धधर्मिकासिद्धत्वग्रहोऽप्रसिद्ध एव स्यादित्यत आह—असिद्धत्वसाकाङ्क्षेति । तादृशसाकाङ्क्षत्वं च सिद्धेष्वपि सुखेषु सुखत्वेन रूपेण स्यादेव । सुखमसिद्धमित्याकारकविशेषणविशेष्यभावापन्नसुखाऽसिद्धत्वविषयकप्रत्ययाद् । द्वितीये=असिद्धत्वविषयकज्ञानार्थमितिपक्षे । असिद्धत्वेन रूपेण भाविसुखानां ज्ञानार्थमिति पक्षे इति यावत् । तत्र=भाविसुखधर्मिकाऽसिद्धत्वभासने । सुखत्वादिसामान्यलक्षणायाः सुखत्वेन सुखानां ज्ञाने एव कारणत्वं न तु असिद्धत्वेन तज्ज्ञाने इति भावः ।

सुखप्रागभाववत्त्वाद्यनुमिताविति । न च साध्याऽप्रसिद्धिः । सुखं प्रागभावप्रतियोगि जन्यत्वादित्याद्यनुमित्या ज्ञातसुखे वर्त्तमानप्रागभावप्रतियोगित्वसिद्धौ यत्किंचित्सुखप्रागभावस्य प्रसिद्धेः । तत्र च सुखप्रागभावत्वात्मकसामान्यरूपेणैव व्यापकत्वज्ञानात् कालत्वहेतुकानुमितौ अपूर्वसुखप्रागभावभानमपि सुघटमेव । सुग्रहमिति । तुल्यवित्तिवेद्यतयेत्यादिः । अनुमाने तुल्यवित्तिवेद्यतया भाने मानभाव इति यदि तदा विपरीतविशेषणविशेष्यभावापन्नतयाऽसिद्धत्वघटकपदार्थनां सिद्धौ ज्ञानप्रत्यासत्तिसहितमनसा असिद्धत्वस्[illegible]ोपपत्तिर्बोध्या । वर्तमानेति । अस्ति हि भविष्यत्सुखे वर्त्तमानकालध्वंसाधिकरणभविष्यत्[illegible]ालवृत्तित्वमित्यसिद्धत्वं तस्य । तद्ग्रहार्थं=वर्त्तमानकालध्वंसाधिकारणकालो-

## ❀ दीधितिः ❀

कालत्वाद् एतादृशकालत्वाद्वा इत्यनुमानादसिद्धसुखस्य तदसिद्धत्वस्य

## ❀ जागदीशी ❀

महाप्रलयमनङ्गीकृत्याह कालत्वादिति। तदङ्गीकारे त्वाह एतादृशेति। सुखोत्पत्तिकालीनध्वंसप्रतियोगिकालत्वादित्यर्थः। अनुमानादिति। प्रयोजकत्वे पञ्चमी। तेनोक्तानुमितेः साक्षादसिद्धत्वानवगाहित्वेऽपि न क्षतिः। तत्सहकारेण मनसैवोत्तरकालमुक्तस्यासिद्धत्वस्य ग्रहसंभवादिति ध्येयम्।

मिश्रास्तु वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वं नासिद्धत्वं, चिरोत्पन्नग्रामादौ तदभावनिश्चयेऽपि इच्छानुभवात्। किन्तु वर्तमानकालावच्छेदेन स्वाऽवृत्तित्वमेव तथा। सुखादिधर्मिकस्ववृत्तित्वप्रकारकतत्कालीनेच्छां प्रति सुखादिधर्मिकतत्तत्कालावच्छिन्नस्वाऽवृत्तित्वप्रकारकज्ञानत्वेन हेतुत्वात्। अत एव सुखं मे जायतामित्याकारोऽपीच्छायाः सर्वजन-

## ❀ काशिकानन्दी ❀

त्पत्तिकत्वात्मकासिद्धत्वग्रहार्थम्। अनङ्गीकृत्येति। कालत्वाधिकरणे महाप्रलये सुखोत्पादकालवृत्तिध्वंसप्रतियोगित्वविरहेण व्यभिचारापातादिति भावः। तदङ्गीकारे = महाप्रलयाङ्गीकारे। सुखोत्पत्तीत्यादि। एवं महापृथिवीकालत्वादेरपि हेतुत्वं बोध्यम्। एवं च हेतुज्ञानायैव सामान्यलक्षणास्वीकारापत्तिर्नेति मन्तव्यम्। उक्तानुमितेः = सुखोत्पादकालीनध्वंसप्रतियोगित्वानुमितेः। साक्षादिति। उक्तानुमित्यात्मकज्ञानप्रत्यासत्तिसहकारेणेति यावत्। परम्परया व्यापकतावच्छेदकत्वस्य कालत्वसुखत्वादावपि सत्त्वेन तेन रूपेणोपस्थितापूर्वकालसुखादीनां वर्त्तमानकालध्वंसाधिकरणकालवृत्तित्वात्मकाऽसिद्धत्वघटकानां तज्ज्ञाने ज्ञानप्रत्यासत्त्या भानसंभावादिति भावः।

तदभावनिश्चयेऽपि = वर्त्तमानकालवृत्तिप्रागभावप्रतियोगित्वाभावनिश्चयेऽपि। इच्छानुभवादिति। कश्चिद्धनी अयं ग्रामो मे भूयादिति इच्छति। न हि ग्रामे वर्तमानप्रागभावप्रतियोगित्वं, ग्रामस्य चिरकालपूर्वमुत्पन्नत्वादिति तदभावनिश्चयः संभवत्येव तस्येति भावः। वर्त्तमानकालावच्छेदेनेति। पूर्वप्राप्तराज्यं पश्चाच्च शत्रुभिराक्रान्तं पुनरपि प्राप्तुमिच्छति राजा। तत्र भूतकालावच्छेदेन सिद्धत्वज्ञानं न प्रतिबन्धकम्। एवं प्राप्ते रज्ये भूतकालावच्छेदेनाऽसिद्धत्वज्ञानं न पुनरिच्छाप्रयोजकमतो वर्त्तमानेत्युक्तम्। स्वाऽवृत्तित्वमिति। स्वं—इच्छाश्रयत्वेनाऽभिमतः पुरुषः। तदवृत्तित्वं च ग्रामादौ स्वीयस्वत्वादिसम्बन्धेन तदसम्बन्धित्वम्। तथा = असिद्धत्वम्। स्ववृत्तित्वेति। वृत्तित्वं सुखादौ समवायेन। तत्कालीनेच्छामिति। इच्छा च सुखं मयि भूयादित्याद्याकारिका; अतएव = स्वत्वघटिताऽसिद्धत्वज्ञानादेव। इत्याकारोऽपीति। अन्यथा नियमेन सुखं जायतामित्येवाऽऽकारः स्यात्। मदंशभासकसामग्र्यभावादिति भावः। सर्वजनसिद्धः इत्याकारोऽपीति योजना। कथं पुनर्मदंशभानमित्युच्यते—

❀ दीधितिः ❀

च ज्ञानं सुलभमेव। निपुणतरमुपपादयिष्यते चेदं शब्दमणिदीधिताविति कृतं पल्लवितेन।

❀ जागदीशी ❀

सिद्धः सम्पद्यते। असिद्धत्वज्ञानस्य जन्यतावच्छेदकतयैव सर्वत्रेच्छायां मदंशोपरागात्। स्ववृत्तित्वं तु सुखादौ स्वसमवेतत्वं, पाकादौ स्वकृतिविषयत्वं, ग्रामादौ स्वीयस्वत्वादिकं यथानुभवमूहनीयम्। सिद्धत्वज्ञानस्य विरोधित्वपक्षे च तत्तत्कालावच्छेदेन स्ववृत्तित्वमेव सिद्धत्वं ग्राह्यमिति प्राहुः।

ननु भाविसुखप्रागभावादिव्यक्तेः पूर्वमज्ञानात् कथं तत्साध्यकानुमितिरत आह निपुणेत्यादि। साध्यतावच्छेदकरूपेणैकव्यक्तिज्ञानादेव पक्षधर्मताबलात्ताद्रूप्येण साध्यान्तरानुमितेः पाकानुमाने सम्पादयिष्यमाणत्वादिति भावः।

अत्र जातिमत्त्वप्रकारेण वह्नेरुपनयदशायां वह्नित्वेन तस्योपनीतप्रत्यक्षानुदयाद् वह्नित्वेन तत्तद्व्यक्त्युपनीतप्रत्यक्षं प्रति वह्नित्वेन तत्तद्व्यक्तेर्ज्ञानमवश्यं हेतुर्वाच्यम्। तथा च तत्रैवाऽवह्निस्थले तत्तद्व्यक्तीनां विशिष्योपादानेऽपि वह्निस्थले वह्नित्वेन यस्य कस्यापि ज्ञानमेव वह्नित्वेन वह्न्युपनीतप्रत्यक्षं प्रति हेतुः कल्प्यते, न तु तत्तद्वह्न्यन्तर्भावेण लाघवादिति वह्नित्वेन

❀ काशिकानन्दी ❀

असिद्धत्वेति। असिद्धत्वज्ञाननिष्ठजनकतानिरूपितजन्यतावच्छेदकविधयैवेत्यर्थः। प्राहुरिति। ग्रामादिविषयकेच्छाया दीधितिकारोक्तदिशाऽनुपपत्तेस्तन्मतापेक्षया प्रकर्षोऽत्र प्रेत्यनेन दर्शितः।

एकव्यक्तिज्ञानेति। यत्किंचिद्वर्त्तमानसुखप्रतियोगिकप्रागभावश्च सुखप्रागभावत्वेनानुभूत एव। ताद्रूप्येण = साध्यतावच्छेदकरूपेण। साध्यान्तरानुमितेरिति। अत्र च सुखप्रागभावत्वेन भाविसुखप्रागभावस्याप्यनुमितौ भानम्।

सामान्यलक्षणां व्यवतिष्ठापयिषुराह—अत्रेत्यादि। उपनयदशायां = प्रत्यक्षसमर्पकज्ञानदशायां—जातिमानित्याकारकज्ञानदशायाम्। तस्य = जातिमत्त्वप्रकारकोपनयविषयीभूतवह्नेः। उपनीतप्रत्यक्षानुदायादिति। वह्निकालीनो धूम इत्याद्याकारकवह्नित्वप्रकारकवह्न्युपनीतप्रत्यक्षानुदयादित्यर्थः। जातिमत्कालीनो धूम इत्यादिरेव प्रत्यय उदेतीति भावः। तथा च = अनुभवबलेन तत्प्रकारकत्वे निवेशिते च। तत्रैव = वह्नित्वप्रकारेणोपनयस्थल एव। अवह्निस्थले = अवह्नेरुपनयस्थले। तत्तद्व्यक्तीनां = गुञ्जादिरूपतत्तद्व्यक्तीनाम्। वह्निस्थले = वह्नेरुपनयस्थले।

❀ जागदीशी ❀

कस्यापि ज्ञानसत्त्वे वह्नित्वेन सकलवह्निप्रत्यक्षं दुर्वारमिति अर्थवशसम्पन्नमेव सामान्यलक्षणायाः प्रत्यासत्तित्वम् । न चैवं वह्नित्वेन तत्तद्गुञ्जोपनीतभानं प्रत्यपि वह्नित्वप्रकारकतत्तद्गुञ्जाज्ञानत्वेन हेतुत्वमपेक्ष्य लाघवेन सामान्यतो वह्निप्रकारकगुञ्जोपनीतप्रत्यक्षं प्रत्येव वह्नित्वप्रकारकगुञ्जाज्ञानत्वेन हेतुत्वकल्पनमेव युक्तमिति वाच्यम् । वह्नित्वेनैकगुञ्जाज्ञानोत्तरं ताद्रूप्येण गुञ्जान्तरोपनीतभानस्यानुभवविरोधित्वादेव तत्तदनन्तगुञ्जान्तर्भावेण हेतुत्वकल्पनात् । प्रकृते च वह्नित्वेनैकवह्नेरुपनयोत्तरं ताद्रूप्येण वह्न्यन्तरोपनीतप्रत्यक्षे बाधकाभावाद् । अन्यथा बाधकबलादेव सामान्यलक्षणाखण्डनसं-

❀ काशिकानन्दी ❀

कस्यापि = यस्य कस्यापि । दुर्वारमिति । वह्नित्वेनैकव्यक्तिज्ञानस्य वह्न्यन्तरोपनीतभासकत्वेऽविशेषेण सकलवह्नीनामेव ततो मानं भवति सैव च सामान्यलक्षणा नामेति भावः । न च सामान्यलक्षणाजन्यज्ञानस्य सामान्याश्रयमुख्यविशेष्यकत्वनियमाद् वह्नित्वानाश्रयधूमादिमुख्यविशेष्यकवह्निकालीनोधूमइत्याकारकज्ञानजनिकायास्तस्याः सामान्यलक्षणात्वं कथमिति वाच्यम् । स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन कार्यत्वमिति नव्यमते मुख्यत्वाऽप्रवेशात् । एवं च तदिन्द्रियकारणकतद्धर्मवत्त्वबोधसामग्र्याः सर्वत्र विरहेऽपि न क्षतिः । मुख्यविशेष्यतया सामान्याश्रयभानस्थले एव तदपेक्षणात् । न च वह्निकालीनोऽयं धूम इत्यादौ वह्नित्वेन निखिलवह्नीनां भाने सर्ववह्निकालीनत्वस्यैतद्धूमे विरहेण तस्य भ्रमत्वापत्तिरिति वाच्यम् । निखिलवह्नीनामेतद्धूमे भानप्रयोजकदोषविरहादेव कालिकेन निखिलवह्नीनां तत्राऽभानाद् । न च वह्नित्वेन यत्किंचिद्वह्निज्ञानोत्तरं वह्नित्वेन वह्न्यन्तरोपनीतभानं कथं ? प्राक् तदनुपस्थितेः, अनुपस्थितस्याऽप्रकारत्वनियमादिति वाच्यम् । तादृशनियमे मानाभावात् । वह्नित्वेन वह्न्युपस्थितिमात्रनियमात् । ननु वह्नित्वेन गुञ्जोपनयस्थलेऽपि यस्याः कस्याश्चिद् गुञ्जाया ज्ञानं कारणमस्तु । तथा च तत्रापि निखिलगुञ्जोपस्थितेः सामान्यस्य स्वानाश्रयप्रत्यक्षं प्रत्यपि हेतुत्वापत्तिः । तथा चाऽपसिद्धान्त इत्यत आह—न चेति । बाधकाभावादिति । न चैवं वह्निकालीनोऽयं धूम इत्यादौ निखिलवह्नीनामेतद्धूमे कालिकेन प्रकारत्वायोगाद् वह्नयो वह्निकालीनधूमश्चेत्याकारताऽनुभवविरुद्धा स्याद् । एवं गन्धकालीनघटइत्यादिचाक्षुषे गन्धमुख्यविशेष्यकत्वापत्तिरिति वाच्यम् । ह्नित्वाद्याश्रयप्रकारकप्रत्यक्षे एव वह्नित्वज्ञानस्य हेतुत्वात् । उपनीतभाने च विशेष्यलौकिकप्रत्यक्षसामग्र्याः सहकारितास्वीकारेण "वह्निमन्तः वह्निकालीनो घटः" "नित्यरसवन्तः नित्यरसकालीनो घट" इत्यादिचाक्षुषाणामपि वह्नित्वनित्यरसत्वादिज्ञानोत्तरमापादनाऽसंभवात् । वह्निकालीनं घटत्वमित्यादौ तु निखिलवह्नीनां भानम् बोध्यम् । बाधकबलादेवेति । वह्नित्वादिना निखिलवह्न्यादिप्रत्यक्षमनुभवविरुद्धमित्येतावतैव सामान्यलक्षणाखण्डनसंभवादिति भावः ।

परसिद्धान्तात्। न च सर्वज्ञत्वे संशयो न स्यादिति दोषः, घटः स इति घटत्वप्रकारकं हि ज्ञानं

❀ दीधितिः ❀

घटः स इत्यादि। संशयसमानाकारो हि निश्चयस्तद्विरोधी। घटो न वेति संशयः कोटितावच्छेदके घटत्वांशे निष्प्रकारकश्च। न च प्रमेयवानिति प्रत्ययस्तथा। अत एव जातिमानितिनिश्चयेऽपि घटो न वेति संशयः। घटत्ववानिति निश्चयस्तु घटेतरावृत्तित्वविशिष्टमवगाहमानो

❀ जागदीशी ❀

भवे साधकाभावोपन्यासानौचित्यादित्यस्मद्गुरुचरणाः। तच्चिन्त्यम्।

ननु प्रमेयत्वप्रकारेण घटत्वज्ञानादुत्पन्नस्य प्रमेयवानिति निश्चयस्यैव विरोधिघटत्वप्रकारकस्य सत्त्वात्कथं घटो न वेत्याकारस्तादात्म्येन घटस्य सन्देह इत्यत आह संशयेति। तद्विरोधी=घटो न वेतिसंशयविरोधी। निष्प्रकारकः=निरवच्छिन्नप्रकारताकः। तेन घटत्वांशे सप्रकारकस्यापि स घटः प्रमेयवानिति निश्चयस्य स घटो न वेत्याकारसंशयस्य विरोधित्वमक्षतम्। नन्वेवमयं घटत्ववानिति निर्णयो घटो न वेति संशयविरोधी न स्यात्, घटत्वांशे घटत्वत्वस्यैव प्रकारत्वादत आह घटत्ववानिति। तथा च तद्वद्वृत्तिधर्मवत्ताज्ञानं तद·

❀ काशिकानन्दी ❀

अत्र विशिष्टवैशिष्ट्यावगाह्यनुभवमात्रे विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुतायां प्रत्यक्षाऽसाधारणकारणताविरहेण सन्निकर्षत्वं तस्य दुर्घटम्। अपि च तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकज्ञानहेतुतायाः प्राक् सिद्धान्तितत्वाद् वह्नित्वप्रकारकज्ञानस्य स्वाश्रयप्रकारकप्रत्यक्षजनने व्याप्यीभूततत्तद्वह्निप्रकारप्रत्यक्षसामग्र्यपेक्षणादपूर्ववह्न्युपस्थापकत्वं दुर्वचं वह्निप्रत्यक्षाऽसाधारणकारणत्वं च। तत्तद्वह्निज्ञानस्यापि तत्प्रयोजकत्वाद्। न चैवं यत्किंचिद्वह्न्यनुभवोत्तरं चिरकालानन्तरं धूमे वह्निकालीनत्वोपनयस्तत्र प्राचीनवह्नेरवगाहितायां भ्रमत्वपत्तिरिति शङ्क्यम्। तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नप्रकारकज्ञानस्य भ्रमत्वेनेदृशदोषानवकाशात्, अनुमानादिनाऽपूर्ववह्न्याद्युपस्थितिसंभवाच्चेत्यादिदूषणमूहनीयमित्याह—तच्चिन्त्यमिति।

विरोधीति। घटोनवेतिसंशयविरोधीत्यर्थः। घटत्वेति। तादात्म्येन घटप्रकारकस्येत्यपि बोध्यम्। तादात्म्येनेति कोटितावच्छेदके घटत्वांशे इति दीधितिमनुसृत्य। निरवच्छिन्नेति। धर्म्यंशे इत्यादिः। तेन घटकालीनप्रमेयवान् स इत्यादेर्व्युदासः। एवं=घटो न वेतिसंशयं प्रति निरवच्छिन्नघटत्वप्रकारताकज्ञानस्यैव विरोधित्वे। तद्वद्वृत्तिधर्मवत्ता·

❀ मणिदीपिनी ❀

परसिद्धान्तात्=मीमांसकसिद्धान्तात्। घटत्वप्रकारकं=निरवच्छिन्नघटत्वप्रका

संशयविरोधि, तच्च न वृत्तं स्वसामग्रीविरहात्। अतो घटत्वादिसकलविशेषज्ञानेऽपि

❀ दीधितिः ❀

घटान्यतासन्देहं विरुणद्धि। पुरुषाऽवृत्तिवक्रकोटरादिनिश्चय इव पुरुषत्वसंशयम्। स्वसामग्रीविरहादिति। घट इति निश्चयं प्रति घटत्वांशे निर्विकल्पकं ज्ञानं कारणम्। जातित्वादिना घटत्वज्ञानेऽपि तदनुदयात्। सामान्यलक्षणायाश्च सामान्यप्रकारकज्ञानजनकत्वनियमाद्,

❀ जागदीशी ❀

भावव्याप्यवत्ताज्ञानविधयैव तद्वत्त्वज्ञानप्रतिबन्धकमिति भावः। ननु प्रमेयत्वसामान्यलक्षणयैव स्वाश्रयस्य घटत्वादेर्निर्विकल्पकं कुतो न जन्यत इत्यत आह सामान्येति। अन्यथा धर्मान्तरज्ञानादपि स्वाश्रयस्य प्रत्यक्षोदयेन व्यभिचारप्रसङ्गादिति भावः। ननु सामान्यस्थले सामान्यप्रत्यासत्ते-

❀ काशिकानन्दी ❀

ज्ञानं = घटेतराऽवृत्तित्वविशिष्टात्मकं यद्घटत्वत्वं तद्वत्ताज्ञानम्। तदभावव्याप्यवत्ताज्ञानविधया = घटेतरत्वाभावव्याप्यवत्ताज्ञानविधया। तद्वत्ताज्ञानप्रतिबन्धकम् = घटेतरत्ववत्ताज्ञानप्रतिबन्धकम्। घटेतरत्वाभावव्याप्यत्वं नाम घटेतरत्वाभावाभाववदवृत्तित्वं, तच्च घटेतरत्ववदवृत्तित्वस्वरूपमेव। घटभेदाभावाभावस्य घटत्वात्यन्ताभावस्वरूपत्ववद् घटभेदस्वरूपताया अभ्युपगमात्। एवं च घटत्ववानिति निश्चयस्य घटेतराऽवृत्तित्वात्मकघटेतरत्वाभावव्याप्यवत्तावगाहितया घटेतरत्वकोटयवगाहिसघटोनवेतिसंशयप्रतिबन्धकत्वं भवति। घटोनवेतिसंशयेन घटत्वात्यन्ताभावावगाहने घटभेदाभावप्रत्ययवद् तद्व्याप्यवत्तानिश्चयस्यापि साक्षाद्विरोधित्वविरहेऽपि क्षत्यभाव एवेति भावः।

दीधितौ घटत्वांशे निर्विकल्पकमिति। घटत्वांशे निरवच्छिन्नप्रकारताकमित्यर्थः। तेन सविकल्पकस्य घटइत्याद्याकारकज्ञानस्य घटइत्याकारकज्ञानान्तरहेतुत्वेऽपि न क्षतिः। टीकायां— स्वाश्रयस्य = प्रमेयत्वाश्रयस्य। कुतो न जन्यत इति। ततश्च विशिष्टज्ञानात् कथं संशय इति भावः। अन्यथा = प्रमेयत्वादिसामान्यलक्षणाया घटत्वादिनिर्विकल्पकजनकत्वे। धर्मान्तरेति। वाच्यत्वद्रव्यत्वादीत्यर्थः। स्वाश्रयस्य = प्रमेयत्वाश्रयस्य। व्यभिचारप्रसङ्गादिति। स्वाश्रयनिर्विकल्पके स्वज्ञानस्य कारणत्वमिति पर्यवसितम्। एवं च प्रमेयत्वज्ञानविरहेऽपि प्रमेयत्वाश्रयस्य वाच्यत्वसामान्यलक्षणया निर्विकल्पकोदयेन

❀ मणिदीपिनी ❀

रकम्। संशयविरोधि=सघटोनवेतिसंशयविरोधि। तच्च=घटः स इति ज्ञानं च। स्वसामग्रीविरहादिति। प्रमेयत्वादिसामान्यलक्षणा हि न तथाविधज्ञानजनिका।

# स घटो न वेति संशय इति ॥

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ सामान्यलक्षणाप्रकरणम् ।

---

❁ दीधितिः ❁

विशिष्टज्ञानसामग्रीसत्त्वात् ॥

इति श्रीमद्रघुनाथशिरोमणिविरचिता सामान्यलक्षणादीधितिः ।

---

❁ जागदीशी ❁

विशिष्टप्रत्यक्षजनकत्वमेव नास्तीत्यत आह विशिष्टधीसामग्रीति ॥

इति श्रीमहामहोपाध्यायजगदीशतर्कालङ्कारविरचितः सामान्यलक्षणादीधितिप्रकाशः ।

---

❁ काशिकानन्दी ❁

व्यतिरेकव्यभिचारप्रसङ्गादित्यर्थः । न च स्वविषयकज्ञानाऽव्यवहितोत्तरस्वाश्रयनिर्विकल्पकं प्रति स्वप्रकारकज्ञानस्य कारणत्वोपगमान्न व्यभिचार इति वाच्यम् । गौरवात्, संशयानुरोधेन तथा कल्पयितुमशक्यत्वाच्चेति भावः । विशिष्टेति । प्रमेयत्वादिविशिष्टेत्यर्थः ।

स्फुलिङ्गमिव तूलशैलमखिलं दहत्युत्करं
यदीयकरुणेक्षणं क्षणकृतं क्षणादेनसाम् ।
समाहितधियोऽधियन्ति हृदि यं सदाख्यं सदा
स दातु सुकृतायनस्त्रिनयनः शिवं धाम नः ॥१॥
छिद्रं छिद्रगवेषणैककुशलैः संदर्श्यतामत्र नः
का चिन्ताऽगणयत्सु सत्स्वपि दृढान्दोषान्गुणग्राहिषु ।
निर्व्याजं मधुपानलुब्धमधुपव्रातेषु शंसत्स्वपि
प्रच्छातामनुशोचति क्वचन किं पद्माकरः पद्मिनीम् ॥२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीनृसिंहगिरिस्वामिपादशिष्यश्रीकाशिकानन्दस्वामिविरचितः सामान्यलक्षणातत्त्वप्रदीपः ।

---

❁ मणिदीपिनी ❁

किन्तु निष्प्रकारकघटत्वादिज्ञानमेवेति भावः । स घटो न वेति । परकीयज्ञानविषये घटत्वादिसंशयस्य स घटो न वेत्याद्याकारस्यानुपपत्तिः प्रागुक्ता नेत्यर्थः ।

येषामेषोऽपारकारुण्यभावो व्याख्यामाख्यापय्य लब्वीमपीमाम्
विद्वत्तोषायाऽकृत व्यापृतं मामात्मानन्दस्वामिपादान् नुमस्तान् ॥१॥

इति सामान्यलक्षणामणिदीपिनी

---

# परिशिष्टम्

—:❀:—

न चासमानाधिकरणयोरपि व्याप्तिपक्षे महानसीयवह्निव्याप्तिः धूमे व्याप्त्यैक्यं विना न संभवति ( पृ० ३ पं० ३० )

न च वह्नित्वावच्छिन्नाधेयताया निखिलवह्नावेकतया वह्नित्वेन महानसीयवह्न्यधिकरणत्वमपि पर्वतेऽक्षतमिति तन्निरूपितवृत्तिताया: पर्वतीयधूमे सत्त्वात्समानाधिकरणवृत्तिधूमत्वादे: व्याप्तित्वमन्तराऽपि असामानाधिकरण्ययोरपि व्याप्तिर्निर्वहतीति कथमेतदिति वाच्यम् । वह्नित्वावच्छिन्नाधेयताया ऐक्ये धूमत्वावच्छिन्नवृत्तिताया अप्यैक्यौचित्याद् व्याप्त्यैक्यपक्ष एवोक्तक्रमेण असमानाधिकरणयोर्व्याप्तिसिद्धे: । व्याप्तेर्नानात्वप्रवादस्य वृत्तित्वादेर्नानात्वनिबन्धनत्वादिति ।

❀ ❀ ❀ ❀

सखण्डे चाखण्डमेव परम्परया सम्बद्धं प्रत्यासत्तिरिति वक्ष्यमाणतया स्वाश्रयसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकवह्निसमानाधिकरणत्वसम्बन्धेन धूमत्वस्य प्रत्यासत्तित्वात् ( पृ० ४ पं० ३ ) ।

ननु धूमसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वात्मकाखण्डभेदस्यैव प्रत्यासत्तित्वसंभवेन धूमत्वस्य प्रत्यासत्तित्वं न युज्यते । अत एव सखण्डे चाखण्डमेवेत्यत्र क्वचिदित्यादिं पूरयित्वा घटाभावादे: स्वयमेव प्रत्यासत्तित्वं जगदीशेनोक्तम् । एवं च धूमत्वेन निखिलधूमानां तत्र भानार्थमपि सामान्यलक्षणा आश्रयवक्ष्यग्रिमपङ्क्तिरप्यसंगता, सामान्याभावबुद्धे: सकलप्रतियोगितदवच्छेदकादिविषयकत्वासिद्धेरग्रे दीधितिकृता वक्तव्यत्वाद् ; धूमसमानधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वत्वेन रूपेण यत्किंचिदवच्छेदकत्वादेरेव भानस्यावश्यकत्वादिति चेद् ?

न, समानाधिकरणयोरेव व्याप्यव्यापकभाव इति कल्पे धूमत्वावच्छिन्ननिरूपितैकाधिकरणताया विरहेण तादृशाखण्डभेदस्यैवाभावात् । अन्यथा धूमत्वेन महानसीयधूमव्यापकताया धूमत्वावच्छिन्नाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वावच्छिन्नभेदरूपाया: पर्वतीयवह्नावपि सत्त्वात्समानाधिकरणयोरेव व्याप्तिरिति पक्षभङ्गापत्ते: । न च महानसीयधूमव्यापकताया: पर्वतीयवह्नौ सत्त्वेऽपि पर्वतीयवह्निसामानाधिकरण्यस्य महानसीयधूमे विरहादेवोक्तपक्षरक्षासंभव इति वाच्यम् । व्यापकनिरूपितस्य सामानाधिकरण्यस्य सम्बन्धानियन्त्रितत्वात् । समानाधिकरणयोरेव व्याप्तिरितिमते असमानाधिकरणयोर्व्याप्यव्यापकभावस्यापि विरहाच्च । किं च तत्तद्वह्निमान्नेतिभेदस्य हेतुसमानाधिकरणतया कथमुक्ताखण्डभेदस्यापि पर्वतीयवह्नौ संभावना । न हि तादृशभेदवारकनिवेशान्तरमेतन्मते आवश्यकम् । तस्माद् धूमसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकभेदेषु अनुगतं स्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकभेदत्वसम्बन्धेन धूमत्वमेव प्रत्यासत्ति: । न चैवं तत्तद्धूमेष्वेव व्यापकत्वात्मकभेदीयप्रतियोगितावच्छेदकत्वसत्त्वेनातिप्रसक्तस्य धूमत्वस्यानवच्छेदकतया प्रतियोगितावच्छेदकांशे उपलक्षणविधयैव भानं वक्तव्यं तथा चापसिद्धान्त इति वाच्यम् । प्रतियोग्यंशे प्रकारतया उपलक्षणीभूतधर्मभानेऽपि प्रतियोगितावच्छेदकांशे तद्भानोपगमात् । अन्यथा समानाधिकरणयोरेव व्याप्तिरितिमते पर्वतादावनुमित्यनुदयप्रसङ्गाद् । ❀ ❀

नन्वित्यादि ( पृ० ६ प० ३१ ) ।

व्यवहारविषयस्यैवानुमितिजनकतावच्छेदकत्वम्, वह्निव्याप्यधूमवान् पर्वत इति शाब्दोत्तरमन्यविधव्याप्तिज्ञानोत्पादककल्पने गौरवादित्याशयेनेयमाशङ्का । ❀ ❀

धूमो महानसीयवह्नेर्व्याप्य इत्यादौ धूमादिपदस्य सकलधूमाद्यर्थकत्वम् ( पृ० ७ प० १५ ) ।

ननु धूमो महानसीयवह्नेर्व्याप्य इति व्यवहारस्य न प्रसक्तिः उद्देश्यतावच्छेदकावच्छेदेन व्याप्यत्वान्वयोपगमात् । महानसीयवह्निसामानाधिकरण्यस्य धूमत्वावच्छेदेन विरहादिति चेद् ? न, व्यापकनिरूपितसामानाधिकरण्यस्य सम्बन्धनियन्त्रितत्वविरहेण महानसीयवह्निसामानाधिकरण्यस्य धूमसामान्ये संभावितत्वात् । किं च महानसीयवह्निर्धूमस्य व्यापक इति व्यवहारः प्राप्नोत्येव महानसीयवह्नित्वावच्छेदेन धूमत्वावच्छिन्नतत्तद्धूमाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्यैवान्वयबोधात् । तथा च तादृशव्यवहारवारणार्थं धूमपदस्य सकलधूमार्थकत्वमावश्यकमेव । एवं च व्यापकसामानाधिकरण्यबोधस्थलेऽपि तथैव बोध उचित इति । ❀ ❀ ❀

किं च जन्यद्रव्यानधिकरणाद्यात्मकप्रलयपूर्वमित्यादि ( पृ० २३ प० ३२ )

प्रकृतकल्पस्य प्राचीनमतावलम्बित्वात्तैस्तैवंविधखण्डप्रलयोपगमाद् । न चाऽव्यवहितपूर्वत्वसम्बन्धेन चाक्षुषं प्रति कालिकेन चक्षुषः कारणत्वमिति वाच्यम् । अव्यवहितपूर्वत्वस्य स्वत्वघटितत्वेनाननुगतत्वादनुगतकार्यकारणभावाऽसंभवात् । तदसंभवे च तादृशकार्यकारणभावे मानाभावत् । न च प्राचीनमते स्वत्वमनुगतमिति वाच्यम् । तस्य निरास्यत्वात् । समवायेन चाक्षुषं प्रति स्वसंयुक्तमनःसंयोगसम्बन्धेन चक्षुषो हेतुत्वसंभवेन गुरुतराव्यवहितपूर्वत्वघटितकार्यकारणभावासिद्धेश्च । ❀ ❀ ❀

साक्षात्करोमीतिप्रतीतिप्रयोजकविषयताकत्वं वा चाक्षुषादौ लौकिकत्वम् ( पृ० २४ प० २४ )

न च शुक्तौ रजतत्वभ्रमोत्तरं रजतं साक्षात्करोमीत्यनुभवात्तादृशप्रतीतिप्रयोजकरजतत्वविषयताया लौकिकत्वं स्यादिति वाच्यम् । उक्तानुव्यवसायस्य भ्रमत्वात् । अत एव नेदं रजतमिति बाधोत्तरमहं रजतत्वं साक्षात्कृतवानितिनानुभवः । अपि तु रजतत्वमभ्रमिषमित्येव । ईश्वरप्रत्यक्षे तादृशविषयतायां मानाभावात्तस्य चाक्षुषाद्यनात्मकत्वाच्च न प्रकृते दोषः । यद्यपि पक्षताजागदीश्यां साक्षात्कारत्वनिरूपितप्रकारता लौकिके इव दोषविशेषजन्येऽपि प्रत्यक्षे वर्तत इत्युक्तं यज्ञपत्युपाध्यायमतनिरासावसरे, तथापि आपाततस्तदुक्तिरुक्तयुक्तेः । तन्मतालम्बने तु वाकारोऽनास्थायाम् । ❀ ❀ ❀

कथं तया तत्प्रत्यक्षमुत्पद्यताम् ( पृ० ७६ प० २१ )

यत्तु तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्यन्तरं घटकालीनो धूम इत्यादिचाक्षुषस्थलेऽक्षतमेव । धूमत्वादीनां स्वीयविशेष्यलौकिकचाक्षुषसामग्री-स्वावच्छिन्नीयविशेष्यलौकिकचाक्षुषसामग्र्येतदन्यतरसहकृतेन चक्षुषा स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वादिसम्बन्धेन सन्निकृष्टानां चाक्षुषजननात्तादृशान्यतरसामग्रीसहकृतचक्षुरात्मकतदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्रीसत्त्वाद । इत्थं चोक्तप्रतिबध्यप्रतिबन्धकभावोऽवश्यकल्पनीय इति ।

तद्वसत्, तद्धर्मनिष्ठप्रकारतानिरूपिततदिन्द्रियकरणकबोधीयलौकिकविषयताप्रयोजकसामग्र्याः सहकारित्वोपगमेनैवेदृशदोषवारणसंभवे निरुक्तगुरुभूतप्रतिबध्यप्रतिबन्धकभावकल्पनाया यथोक्तदिशैव समर्थनीयत्वात्। न च घटत्वादिसामान्यलक्षणाजन्यमानसस्थले लौकिकविषयत्वाभावात्तथाविवक्षा न संभवतीति वाच्यम्। घट इत्येतावन्मात्राकारमानसानुपगमस्योक्तत्वात्। तदुपगमेऽपि घटत्वादिप्रकारतानिरूपितलौकिकचाक्षुषस्पार्शनादिविषयताप्रयोजकसामग्री—घटत्वप्रकारतानिरूपितमानसविशेष्यताप्रयोजकसामग्रीणामन्यतमस्य सहकारित्वोपगमेनैव दोषवारणसंभवात्।

परे तु अन्यत्र तत्तदधिकरणे कार्योत्पत्तिनियमार्थं तत्तदधिकरणप्रत्यासन्नविशेषसामग्र्याः सामान्यसामग्र्यापेक्षणेऽपि सामान्यप्रत्यासत्तिस्थले कार्याश्रयीभूते यत्किंचिद्विषये एव तदिन्द्रियकरणकसामान्यधर्मवत्त्वबोधसामग्र्यपेक्षोपगम्यते फलबलात्। न च धूमत्वेन बाष्पभ्रमस्थले बाष्पप्रत्यासन्नचक्षुःसन्निकर्षादिसत्त्वेऽपि धूमत्वेन निखिलधूमप्रत्यक्षजननाद् दोषविरहकालेऽपि तादृशसामग्रीमादाय निखिलधूमप्रत्यक्षापत्तिरिति वाच्यम्। बाष्पप्रत्यासन्नचाक्षुषसामग्र्या दोषघटिताया एव चाक्षुषप्रयोजकत्वाद्। दोषकाले तस्येष्टत्वात्। दोषविरहकाले च तदभावादेव सामग्र्यसिद्धेः। न चैवमपि यत्किंचिद्धूमादिप्रत्यासन्नसामग्र्या निर्विकल्पकधूमचाक्षुषस्य द्रव्यत्वादिप्रकारकचाक्षुषस्य च जननाद् विशेषसामग्रीत्वविरहात् कथं तदपेक्षेति वाच्यम्। व्याप्यव्यापकभावानापन्नयोरपि अपेक्ष्यापेक्षकभावोपगमात्। किं च दोषाणामननुगततया तत्तद्दोषघटितसामग्र्यास्तत्तद्धर्मप्रकारकचाक्षुषादिकं प्रत्येव प्रयोजकत्वं, न तु निर्विकल्पकं धर्मान्तरप्रकारकसविकल्पकं वा प्रति। तदीयसामग्र्यां तत्तद्दोषस्याऽप्रवेशात्। एवं प्रमास्थलेऽपि तद्धर्मवत्त्वबोधसामग्रीत्वनेन दोषाभावादिघटितसामग्र्यैव वर्त्तव्या। न हि धूमत्वाऽग्रहप्रयोजकदोषाभावघटितसामग्री निर्विकल्पकादौ प्रयोजिका। तत्तद्दोषाभावादेर्निर्विकल्पकादिसामग्र्यघटकत्वात्। निविशतां वा तत्प्रकारकप्रत्यक्षसामान्यकारणतद्विषयकज्ञानस्यापि ज्ञानलक्षणास्थलीयकारणस्य तद्धर्मवत्त्वबोधसामग्र्याम्। एतेन यत्रैक एवानुगतदोषः बाष्पे धूमत्वप्रकारकं धर्मान्तरप्रकारकं च भ्रमं जनयति तत्र तादृशदोषघटितसामग्र्याः धर्मान्तरविषयकज्ञानमात्रकाले धूमत्वप्रकारकज्ञानाऽजनकतया व्याप्यसामग्रीत्वं न निर्वहतीत्यपि निरस्तम्। वस्तुतस्तु धर्मान्तरप्रकारकप्रत्यक्षसामग्रीत्वस्य तत्र सत्त्वेऽपि धूमत्वप्रकारकचाक्षुषत्वाद्यात्मकव्याप्यधर्मावच्छिन्नप्रयोजकत्वमव्यक्षतमेवेति न तद्विषयकज्ञानस्य तादृशसामग्र्यन्तर्भाव एव। तद्धर्मविषयकज्ञानविरहकाले अपेक्षणीयस्य तस्य विरहादेव विशेषसामग्र्या कार्यानुत्पादेन व्यभिचारायोगात्।

अथ तत्सम्बन्धेन तद्धर्मावच्छिन्नोत्पादे तद्धर्माश्रययत्किंचिद्व्यक्तिनिष्ठतत्सम्बन्धावच्छिन्ननिरूपिताधिकरणताघटिता यावत्यः कारणतास्तदवच्छेदकावच्छिन्नसमुदायस्य प्रयोजकत्वं, सम्बन्धांशे पर्याप्तिर्न निवेश्यते। तथा च तादृशसमुदायस्य चक्षुःसन्निकर्षादिविशिष्टधूमादावेव सत्त्वात् कथं कालान्तरीयदेशान्तरीयधूमे प्रत्यक्षोत्पत्तिसंभव इति चेद्? न, सामान्यलक्षणास्थले तत्सम्बन्धेन तद्धर्मावच्छिन्नोत्पादे तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नका-

र्यतानिरूपितकारणतावच्छेदकावच्छिन्नस्य तद्धर्माश्रययत्किंचिद्व्यक्तिनिष्ठसम्बन्धान्तरावच्छिन्ननिरूपिताधिकरणताघटिता यावत्यः कारणतास्तदवच्छेदकावच्छिन्नसमुदायकालीनत्वविशिष्टस्य प्रयोजकत्वोपगमात्। सम्बन्धांशे पर्याप्तिर्निवेश्या। तथा च स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धावच्छिन्नधूमत्वादिप्रत्यक्षत्वाद्यवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधूमत्वज्ञानत्वाद्यवच्छिन्नस्य लौकिकविषयत्वादिसम्बन्धान्तरावच्छिन्ननिरूपिताधिकरणताघटितकारणतावच्छेदकचक्षुःसन्निकर्षत्वदोषविशेषत्वाद्यवच्छिन्नकूटकालीनस्य कारणतावच्छेदकसम्बन्धेन निखिलधूमेषु सत्त्वान्न दोषः। एतदेवाभिसन्धायेदृशप्रतिबध्यप्रतिबन्धकभावो गदाधरभट्टाचार्यैर्नादृत इति कृतं पल्लवितेन। ❀ ❀ ❀

तच्चिन्त्यमिति ( पृ० ७८ प० १ )

निर्विकल्पकविषयत्व-मुख्यविशेष्यत्वान्यतरसम्बन्धेन प्रकारतान्यविषयतासम्बन्धेन वा गन्धादिचाक्षुषं प्रति तादात्म्येन गन्धत्वादिना प्रतिबन्धकत्वे गन्धादिलौकिकप्रकारताकं गन्धवच्चन्दनमित्याद्याकारकचाक्षुषं स्यात्। न च गन्धवच्चन्दनमिति चाक्षुषस्य गन्धांशे चन्दनांशे च लौकिकत्वे समवायस्यापि लौकिकसाक्षात्कारतया तत्कारणगन्धचाक्षुषस्य पूर्वं विरहादेव नापत्तिः, पूर्वं तत्सत्त्वे एवापत्तिरिति तु न देश्यम् प्रतिबन्धकसद्भावादिति वाच्यम्। समवायस्य लौकिकसाक्षात्कारत्वाभावेऽपि क्षतिविरहात्। न च समवायावच्छिन्नगन्धलौकिकसाक्षात्कारताया समवायलौकिकविषयताव्याप्यतया तत्प्रयोजकगन्धलौकिकचाक्षुषं प्रागपेक्ष्यतैवेति वाच्यम्। एवमपि प्रमेयत्वेन निखिलप्रमेयचाक्षुषानुपपत्तेः। यदि च सौरभत्वादिप्रकारकत्वं निवेश्यते तदा गन्धविषयकचाक्षुषनिर्विकल्पकं दुर्वारं स्यात्। तस्माद् लौकिकविषयतासम्बन्धेन गन्धप्रत्यक्षं प्रत्येव तादात्म्येन गन्धस्य प्रतिबन्धकत्वं वाच्यमिति चिन्ताबीजम्। इत्थमुत्तरत्र स्थलविशेषेषु द्रष्टव्यमिति परिशिष्टम्।

---

## १९४६

( १ ) सामान्यलक्षणामभ्युपगच्छतां मते सामान्यशब्दस्य कीदृशोऽर्थोऽभिमतः? एवं लक्षणशब्दस्य कीदृशोऽर्थोऽभिमतः? तस्य स्वरूपार्थकत्वे का क्षतिः? कीदृशश्च कार्यकारणभावः? १२

( २ ) अत्र च कार्यस्य स्वप्रकारीभूततत्तत्सामान्याश्रयनिष्ठविशेष्यत्वं सम्बन्धः कारणस्य तु स्वविषयीभूततत्तत्सामान्याश्रयनिष्ठविषयत्वं प्रत्यासत्तिरतो नातिप्रसङ्ग इति जगदीशः। अत्र जिज्ञास्यते कया रीत्या अतिप्रसङ्गः सम्भवति, कथं वा स वारणीयः? १२

( ३ ) 'यो यत्कालवृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि केचि' दिति दीधितिः। अत्रोभयवृत्तित्वं यदि सम्बन्धसामान्यावच्छिन्नं तदा को दोषः? का वा प्रतिपदव्यावृत्तिः? केचिदित्यनेन वा कीदृशोऽस्वरसः सूचितः। १०

अथवा

तत्त्वज्ञानवतः शुकादेः तत्त्वज्ञानप्रागभावः कया युक्त्या कल्पनीयः? कया युक्त्या वा तादृशप्रागभावस्य पदार्थान्तरत्वं निरसनीयम्?

---

१९४९

( १ ) "अत्र च कार्यस्य स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यत्वं सम्बन्धः कारणस्य तु स्वविषयीभूततत्तत्सामान्याश्रयनिष्ठविषयत्वं प्रत्यासत्तिरतो नातिप्रसङ्ग" इति जगदीशग्रन्थोऽतिप्रसङ्गभङ्गप्रदर्शनपूर्वकं व्याख्येयः । १०

( २ ) अभावनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येनाभावत्वतदन्योभयधर्मावच्छिन्नविषयत्वेन हेतुत्वे जगदीशोक्तनेत्याकारकप्रत्यक्षापादनवारणं सम्भवति न वा ? न सम्भवति चेत्, कथम् ? कथं वा तादृशापादनस्य सयुक्तिकत्वं जगदीशसम्मतम् ? कया रीत्या वा तादृशप्रत्यक्षापादनं वारणीयम् ? १२

अथवा

दुःखात्यन्ताभावस्य घटादिनिष्ठतया दुःखध्वंसस्य चामुक्तपुरुषसाधारणतया मुक्तित्वाऽसम्भवात् अवश्यमकामेनापि दुःखप्रागभाव एव मुक्तितायाः स्वीकरणीयतया दीधितिकृता प्रागभावनिराकरणं कथं नासंगतम् ? कथं वा प्रागभावाऽसत्त्वपक्षे प्रायश्चित्तादौ प्रवर्त्तमानस्य पुरुषस्य प्रवृत्तेः सफलत्वमिति साधूपपादनीयम् ।

( ३ ) सहस्रतन्तुकपटस्यान्यत्रोत्पत्तिवारणाय सहस्रत्वविशिष्टतन्तुत्वेन कारणत्वं कीदृशीं क्षतिमावहति ? कपालद्वयारब्धघटस्यान्यत्रोत्पत्तिवारणायेति वा दीधितिकृता कथं नाभिहितम् ? कया युक्त्या वा निरुक्तस्थले प्रागभावाभावो भवता समर्थनीयः । १२

१९५०

केऽपि चत्वारः प्रश्नाः समाधेयाः ।

( १ ) "तत्प्रकारकप्रत्यक्षत्वावच्छिन्नम्प्रति निर्विकल्पकादिसाधारणतद्विषयकज्ञानत्वेनैव हेतुत्वम् । अत्र च कार्यस्य स्वप्रकारीभूततत्तत्सामान्याश्रयनिष्ठविशेष्यत्वं सम्बन्धः । कारणस्य तु स्वविषयीभूततत्तत्सामान्याश्रयनिष्ठविषयत्वम्प्रत्यासत्तिः" इति जागदीशी । अत्र कार्यकारणभावावच्छेदकधर्मसम्बन्धयोरेकतरमात्रगात्रस्य सामान्यविशेषघटितत्वेऽपि दोषासम्भवेन तयोर्द्वयोर्देहे सामान्यविशेषप्रवेशस्य किम्फलम् ? किं वा दूषणं कारणतावच्छेदकसम्बन्धस्यैव कार्यतावच्छेदकसम्बन्धतायास्स्वीकारे, कारणतावच्छेदकसम्बन्धप्रविष्टचरमविषयतायाः विशेष्यतात्वेनोपादाने च ? १२

( २ ) इन्द्रियविशेषमनन्तर्भाव्य ज्ञानात्मिकायाः सामान्यप्रत्यासत्तेः हेतुतामभ्युपगच्छताम्मते सौरभत्वेन यत्किञ्चित्सौरभज्ञानोत्तरभाविनः सौरभप्रकारकचन्दनचाक्षुषस्य यावत्सौरभमुख्यविशेष्यकत्वापत्तिः कथम्परिहार्या ? कथञ्च प्रतीकार्या घटघटत्वयोर्निर्विकल्पकानन्तरं घटत्वे घटप्रकारकप्रत्यक्षापत्तिः, नियमभङ्गप्रसङ्गस्य सामग्रीसत्त्वे कार्योत्पादाविरोधितायाः सुप्रसिद्धत्वात् । १२

( ३ ) विशेषणज्ञानस्य विशिष्टज्ञानहेतुता मूलकारेण केन प्रकारेण निराकृता ? कथञ्चैतत्पक्षे "जातिमान् घटः" इत्याकारकस्य घटत्वनिष्ठनिरवच्छिन्नप्रकारताकप्रत्यक्षस्योपपत्तिः ? १२

( ४ ) सामान्यलक्षणानिराकरणप्रकरणे प्रतियोगिज्ञानस्याभावप्रत्यक्षं प्रति कारणताया

अपाकरणस्य कः प्रसङ्गः ? एतत्कारणताया अभावे कथं "न" इत्याकारकप्रत्ययस्य पत्तिः ? कया सरण्या च तस्यास्सत्वे तद्वारणम् ?

( ५ ) प्रागभावानभ्युपगमे तत्पटानधिकरणतन्तुषु तत्पटोत्पत्त्यापत्तिर्यया रीत्या दीधि कारेण परिहृता सा "अत्र वदन्ति" इत्यादिना जगदीशेन कया शैल्या समालोचिता ?

## १९५१

( १ ) "तत्रापि तत्तद्व्यक्तिद्वारा प्रत्यासन्नस्य घटत्वादेरेव प्रत्यासत्तित्वादिति" दीधि किन्तात्पर्य्यम् ? एतत्समाधाने च काऽरुचिः ?

( २ ) तत्प्रकारकप्रत्यक्षे तत्प्रकारकज्ञानत्वेन तद्विषयकज्ञानत्वेन वा हेतुत्वमि परीक्ष्यताम् ।

( ३ ) "उत्पन्नस्य पुनरुत्पादप्रसङ्गश्च लाघवात् कार्यादेः प्रतिबन्धकत्वेनापि निर नोयः" इति दीधितेस्तात्पर्यं निरूप्यात्रापिशब्देन कीदृशोऽर्थो ध्वन्यते ? इत्यप्युल्लि ख्यताम् ।

( ४ ) क्षणलक्षणप्रकरणे स्वपूर्वत्वनिर्वचनस्य कुतो नार्थान्तरत्वम् ? कि स्वपूर्वत्वम् ।

( ५ ) कतमां युक्तिमाश्रित्य नव्याः प्रागभावं साधयन्ति ?

अथवा

"अथ सिद्धत्वनिश्चयाभावापेक्षया लाघवादसिद्धत्वज्ञानमेव हेतुः" इति दीधितिः अत्र तद्धर्मिकतत्तदप्रामाण्यनिश्चयाभावकूटस्य प्रत्येकरूपेण हेतुत्वे गौरवं कथमुपेक्षितमि समाधाय नैयायिकमतं स्थाप्यताम् ।

## १९५२

( १ ) तत्पुरुषीयधूमत्वप्रकारकचाक्षुषत्वावच्छिन्नम्प्रति तत्पुरुषीयचक्षुस्सन्निकृष्टधर्मि तत्पुरुषीयचाक्षुषप्रकारतापन्नधूमत्वं हेतुः तत्र तु कार्यस्यालौकिकं मुख्यविशेष्यत्वम् कारण तु समवायः प्रत्यासत्तिरिति जगदीशः। अत्रालौकिकत्व-मुख्यत्व-तत्पुरुषीयत्वनिवेशा फलान्युपपाद्य संयोगाद्येकतरसन्निकर्षस्य निवेशे व्यभिचार उपस्थाप्य निरस्यताम् ।

( २ ) अपेक्षणीयश्च तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्यन्तरमिति दीधितेस्तात्प मुपवर्ण्य 'अत्र केचित्' इत्यादिना तत्राभिहितं मतं निरस्यताम् ।

अथवा

अत एव सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति दीधिते रहस्यं प्रका "अत्रेदं तत्त्व" मित्यादिना किमुक्तं जगदीशेन तदपि निरूप्यताम् ।

( ३ ) अभावबुद्धौ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वं न वे परीक्ष्यताम् ।

( ४ ) अथैवं कपालादौ कथं पटध्वंसादिशून्यताबुद्धिः, अत्यन्ताभावस्य ध्वंसाद्यवि धित्वादिति चेदिति दीधितिः सोपष्टम्भमुपवर्ण्यताम् ।

( ५ ) क्वचिदपि यदीयसमयसम्बन्धे यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्ति तत् तत्समयसम्बन्ध इति दीधितिः सपदकृत्यं व्याख्यायताम् ।

---

